# काव्यशास्त्रविमर्शः

# KĀVYAŚĀSTRAVIMARŚAH

लेखकस्याऽन्या: प्रकाशिता: कृतय:

१. भारतीय संस्कृति के आधार तत्व
२. अलङ्कारशास्त्र का इतिहास
३. वैदिक साहित्य का इतिहास
४. संस्कृत साहित्य का इतिहास
५. पं० अम्बिकादत्त व्यास – एक अध्ययन
६. ऋक्सूक्त-सुधाकर
७. ऋक्सूक्त-संग्रह
८. चतुर्वेद-सूक्त-संग्रह
९. वैदिक-सूक्त-संग्रह
१०. विषविज्ञान
११. पोषण के लिए खनिज और विटामिन
१२. संस्कृत-नाटक-सूक्तितरङ्गिणी
१३. छन्दोऽलङ्कारप्रकाश
१४. प्राचीन कथायें
१५. गढ़वाल के प्रमुख तीर्थ
१६. गढ़वाल के संस्कृत अभिलेख
१७. उदयनचरितम् (संस्कृत उपन्यास)
१८. ध्वन्यालोक व्याख्या
१९. अभिज्ञानशाकुन्तलम् व्याख्या
२०. प्रियदर्शिका व्याख्या
२१. प्रतिमानाटकम् व्याख्या
२२. हर्षचरितम् पञ्चम उच्छ्वास व्याख्या
२३. किरातार्जुनीयम् प्रथम सर्ग व्याख्या
२४. रघुवंशम् द्वितीय वर्ग व्याख्या
२५. रघुवंशम् त्रयोदश सर्ग व्याख्या
२६. कुसुमलक्ष्मी व्याख्या
२७. शिवराजविजय व्याख्या
२८. कुन्दमाला व्याख्या
२९. अस्ति कश्चिद् वागर्थीयम् (संस्कृत नाटक)
३०. संस्कृत नाटकों का भौगौलिक परिवेश
३१. Descriptive Catalogue of Sanskrit Manusripts Part I
३२. Descriptive Catalogue of Sanskrit Manusripts Part II
३३. Descriptive Catalogue of Sanskrit Manusripts Part III
३४. संस्कृत नाटको का वानस्पतिक पर्यावरण
३५. संस्कृत नाटकों का जीव-जगत्
३६. चौरपञ्चाशिका
३७. अस्ति कश्चिद् वाग्विशेष :
३८. अन्त:स्रावी ग्रन्थियां
३९. प्राचीन भारत का सांस्कृतिक इतिहास
४०. तपोवनवासिनी (संस्कृत उपन्यास)
४१. तपोवनवासिनी (हिन्दी उपन्यास)
४२. केदारखण्ड पुराण (चार खण्डों में)
४३. मेघदूतानुशीलनम्
४४. गढ़वाल के प्राचीन अभिलेख एवं उनका ऐतिहासिक महत्त्व
४५. प्राचीन भारत की राजनीतिक एवं प्रशासनिक संस्थायें
४६. विधि पौरुषम् (संस्कृत उपन्यास)
४७. भाग्य और पुरुषार्थ (हिन्दी उपन्यास)
४८. काव्याशास्त्रविमर्श: (संस्कृत)
४९. काव्याशास्त्रविमर्श (हिन्दी)

# काव्यशास्त्रविमर्शः
(संस्कृत)



डा. कृष्णकुमार :
एम.ए. साहित्याचार्यः,
पी-एच.डी.,डी.लिट्.

मयंक प्रकाशन
मिश्रा बाग, हनुमानगढ़ी
कनखल (हरिद्वार)

# काव्यशास्त्रविमर्शः

**KAVYASASTRAVIMARSAH**

(संस्कृत)





प्रकाशकः
सयंक प्रकाशन
मिश्रा बाग, हनुमानगढ़ी
कनखल (हरिद्वार)

१९९९

मूल्य : ४१५.००

कम्प्यूटर कम्पोजिंग एवं मुद्रण
टाईपस्टायलर डी०टी०पी० एण्ड कम्प्यूटर सिस्टम, देहरादून

# काव्यशास्त्रविमर्शः

## प्रस्तावना

भारतवर्षस्य प्राचीनमनीषिभिर्विद्वद्भिः काव्यशास्त्रविद्भिः काव्यशास्त्रप्रवर्तनं निरूपणञ्च यथोज्ज्वलप्रतिभया व्युत्पत्त्या परिश्रमेणाऽभ्यासेन मनोयोगेन च कृतं, गिरा तद्वर्णनं लेखनं प्रशंसनञ्चाऽशक्यमेव। काव्याङ्गानामशेषतो विवेचनं गुणदोषस्वरूपकथनं सर्वाङ्गपूर्णविश्लेषणञ्च संस्कृतभाषायाः काव्यशास्त्रग्रन्थेषु समुपलभ्यते।

आभरताद् वर्तमानसमयपर्यन्तं काव्यसमीक्षायाः यथा वैज्ञानिकरूपेण सुस्पष्टं विकासो भारतवर्षे बभूव, विश्वसाहित्येऽन्यत्र तन्न दृश्यते। तस्य सकलस्य काव्यशास्त्रसाहित्यस्य सर्वेक्षणं विश्लेषणञ्च ग्रन्थेऽस्मिन् स्वल्पकाये स्वल्पविषयया मत्याऽसम्भवे सत्यपि, तत्प्रयासे धाष्टर्यं मया क्रियत एव। महाकवेः कालिदासस्य शब्देषु - मोहादादुडुपेन दुस्तरं सागरं तितीर्षुरस्मि। लेखकस्याऽत्र प्रयासो विद्यते, यत् काव्यसमीक्षाविषये प्राचीनैराचार्यैः काव्यशास्त्रविद्भिः कृतानां प्रयासानां प्रतिपादितानाञ्च सिद्धान्तानामालोक एकस्मिन्नेव ग्रन्थे सङ्ग्रहेण प्रस्तूयेत, येन काव्यशास्त्रस्य शिक्षकाश्छात्राश्च तद्विषयकसाहित्येन परिचिताः सुखेन भवेयुरिति। प्रायशः सर्वेषामेव प्राचीनकाव्यशास्त्रकृतां तद्रचितानाञ्च ग्रन्थानां परिचयोऽस्मिन् ग्रन्थे सन्निविष्टो वर्तते। परमाचार्याणां तेषां ग्रन्थानां तत्र प्रतिपादितानाञ्च विषयाणां विस्तरेणाध्ययनं तु तत्तद्ग्रन्थानां विस्तृताध्ययनेनैव सम्भवति।

विषयस्य प्रस्तवनस्याऽवबोधस्य च सौकर्याय ग्रन्थोऽयं चतुर्षु खण्डेषु विभक्तः। खण्डाश्चाऽध्यायेषु संविभक्ताः सन्ति।

प्रथमखण्डोऽत्र ग्रन्थारम्भपद्धतिं काव्यशास्त्रञ्च सामान्यरूपेण परिचाययति। अयञ्च खण्डो द्वयोरध्याययोर्विभक्तः। काव्यरचनायाः काव्यशास्त्रीयसिद्धान्तविकासस्य च प्रारम्भः कदा केन रूपेण च बभूवेति प्रथमाध्यायस्य विषयः। द्वितीयेऽध्याये प्रथमं तावच्छास्त्रस्य नामकरणविचारो वर्तते, तदनन्तरञ्च काव्यशास्त्रस्याऽन्यैः शास्त्रैः सह सम्बन्धस्य समीक्षाऽस्ति।

द्वितीयखण्डे काव्यशास्त्रकृतां प्राचीनाचार्याणां संक्षिप्तेतिहासेन सह तत्तत्कृतग्रन्थानामपि संक्षिप्तपरिचयो विद्यते। अत्र तत्तदाचार्याणां महत्त्वं जीवनवृत्तं समयञ्च संक्षेपेण लेखकः प्रास्तौत्।

तृतीयखण्डे काव्यात्मतत्त्वसमीक्षा विद्यते। काव्यशास्त्रप्रवर्तनप्रसङ्गे काव्यशास्त्रीया अनेके सम्प्रदाया आविरभवन्। ते काव्यस्य विभिन्नेषु तत्त्वेषु काव्यस्याऽऽत्मत्वं प्रत्यापादयन्। अत्र षट् सम्प्रदायाः काव्यशास्त्रसाहित्ये प्रसिद्धाः -

रससम्प्रदायोऽलङ्कारसम्प्रदायो रीतिसम्प्रदायो वक्रोक्तिसम्प्रदाय औचित्यसम्प्रदायो ध्वनिसम्प्रदायश्च।

सप्ताध्यायात्मकेऽस्मिंस्तृतीये खण्डे सम्प्रदाया एते समुचितं समीक्षिता, अन्तिमश्च निष्कर्षस्तत्र प्रतिपादितः।

चतुर्थः खण्डः काव्यशास्त्रस्य विविधैर्विषयैः सह सम्बद्धो विद्यते। काव्यसमालोचनायै काव्यस्य विविधतत्त्वानां काव्याङ्गानाञ्च विश्लेषणं विधीयते। अस्मिन् खण्डे तान्येव तत्त्वानि विचारविषयाणि वर्तन्ते। कानिचित् तत्त्वानि रसालङ्काररीतिवक्रोक्त्यौचित्यध्वनिरूपाणि तृतीयखण्ड एव समीक्षितानि। षडध्यायात्मकेऽस्मिन् खण्डे चतुर्थेऽवशिष्टतत्त्वानि काव्यप्रयोजनहेतुलक्षणभेद- गुणदोषरूपाणि समीक्ष्यन्ते।

एवमस्मिन् ग्रन्थे नाट्यशास्त्रशब्दव्यापारविषयव्यतिरिक्तानां सर्वेषां काव्याङ्गानां काव्यतत्त्वानां समीक्षा विद्यते। द्वयोरेतयोर्विषययोरतिविस्तारभयात् प्रकृतानुपयोगित्वाद् विषयान्तरभावाच्च न समीक्षणमस्ति। एतयोर्विषययोरध्ययनाय स्वतन्त्रग्रन्थान्तरलेखनापेक्षा विद्यते।

ग्रन्थस्याऽस्य लेखने प्राचीनानामर्वाचीनानाञ्चाऽनेकेषां ग्रन्थानां साहाय्यं लेखके-नाऽङ्गीकृतम्। तेषां विस्तृता सूचिका ग्रन्थस्याऽस्य परिशिष्टेषु वर्तते। तान् सर्वानेवाऽऽचार्यान् ग्रन्थकारांल्लेखकांश्च प्रति लेखकोऽयमतिशयमाभारं कृतज्ञभावञ्चा-ऽभिव्यनक्ति। तेषामध्ययनं विना ग्रन्थस्याऽस्य लेखनं ध्रुवमसम्भवमेवाऽवर्तत।

संस्कृतकाव्यशास्त्रप्राचीनाचार्यचरणेष्वेव लेखकस्येयं कृतिः समर्प्यते, ये स्वप्रखरोज्ज्वल-प्रतिभया व्युत्पत्त्या परिश्रमेण मनोयोगेन च काव्यशास्त्रविविधधाराः प्रावर्तयन्।

ग्रन्थस्याऽस्य गुणदोषविवेचना परीक्षायै विद्वत्प्रतिभानिकषाऽऽधीनतां भजते।

विदुषां वशंवदः

**शारदी पूर्णिमा २०५५**

**दिनांक ४ नवंबर १९९८**

कृष्णकुमारः

# विषय-सूची

प्रशस्तिः ६
प्रस्तावना ७-८
विषय-सूची ९-२६

## प्रथमः खण्डः

**प्रथमोऽध्यायः - काव्यस्य काव्यशास्त्रस्य च प्रादुर्भावः** ३-२०
१. काव्यरचनायाः प्रारम्भिकयुगम् ३
२. लौकिकसंस्कृतभाषायां काव्यरचनायाः प्रारम्भः ८
३. काव्यशास्त्रीयसिद्धान्तानां रचनाया आरम्भः १३
भरतपूर्वकालीनाश्चाऽऽचार्याः
४. निरुक्ते काव्यशास्त्रविवेचनम् १५
५. व्याकरणशास्त्रे काव्यशास्त्रविवेचनम् १७
६. काव्यशास्त्रविकासस्य क्रमविभाजनम् १८
(i) आरम्भिकः कालः १८
(ii) रचनात्मकः कालः १९
(iii) निर्णयात्मकः कालः १९
(iv) व्याख्यात्मकः कालः २०

**द्वितीयोऽध्यायः - शास्त्रस्य नामकरणमन्यशास्त्राणाञ्च प्रभावः** २१-३४
(अ) नामकरणम् २१
१. अलङ्कारशास्त्रम् २१
२. सौन्दर्यशास्त्रम् २३
३. साहित्यशास्त्रम् २४
४. क्रियाकल्पः २६
५. काव्यशास्त्रम् २७
(ब) काव्यशास्त्रेऽन्येषां शास्त्राणां प्रभावः २८
१. काव्यशास्त्रे व्याकरणशास्त्रस्य प्रभावः २९

२. काव्यशास्त्रे न्यायशास्त्रस्य प्रभाव: ३१
३. काव्यशास्त्रे सांख्यशास्त्रस्य प्रभाव: ३२
४. काव्यशास्त्रे मीमांसाशास्त्रस्य प्रभाव: ३२
५. काव्यशास्त्रे वेदान्तस्य (उपनिषदां) प्रभाव: ३४


## द्वितीय: खण्ड:

### काव्यशास्त्रस्य प्राचीना: प्रमुखा आचार्या:


प्रथमोऽध्याय: - भरतो मुनि: ३६-५८
१. भरतस्य महत्त्वम् ३६
२. भरतस्य व्यक्तित्वम् ३७
३. नाट्यशास्त्रस्य संस्करणानि प्रकाशनञ्च ३८
४. नाट्यशास्त्रस्य विकासक्रम: ४०
५. नाट्यशास्त्ररचनासमय: ४५
६. नाट्यशास्त्रस्य विषयवस्तु ४९
७. नाट्यशास्त्रस्य प्राचीनाष्टीका: ५३
द्वितीयोऽध्याय: - मेघावी ५९-६१
तृतीयोऽध्याय: - धर्मकीर्ति: ६२-६३
चतुर्थोऽध्याय: - अग्निपुराणम् ६४-७०
१. अग्निपुराणस्य महत्त्वम् ६४
२. अग्निपुराणस्य लेखक: ६४
३. अग्निपुराणस्य समय: ६५
४. अग्निपुराणस्य काव्यशास्त्रीयभागस्य परिचय: ६८
५. अग्निपुराणस्य काव्यशास्त्रीयसिद्धान्तानां स्रोतस्तेषाञ्चोत्तरवर्तिनि साहित्ये प्रभाव: ६९
पञ्चमोऽध्याय: - विष्णुधर्मोत्तरपुराणम् ७१-७५
१. विष्णुधर्मोत्तरपुराणस्य महत्त्वम् ७१
२. विष्णुधर्मोत्तरपुराणस्य समय: ७१
३. विष्णुधर्मोत्तरपुराणस्य काव्यशास्त्रीयभागस्य परिचय: ७२
षष्ठोऽध्याय: - भट्टि: ७६-७९
१. काव्यशास्त्रे भट्टेर्महत्त्वम् ७६
२. भट्टे: समय: ७६
३. भट्टिकाव्यस्य शास्त्रीयपरिचय: ७८

४. भट्टिकाव्यस्य प्राचीनाष्टीका: ७९

सप्तमोऽध्याय: - भामह: ८०-९४

१. भामहस्य महत्त्वम् ८०
२. भामहस्य व्यक्तित्वम् ८१
३. भामहस्य समय: ८४
(i) भामह: कालिदासश्च ८५
(ii) भामहो भासश्च ८६
(iii) भामहो न्यासकारश्च ८७
(iv) भामहो भट्टिश्च ८८
(v) भामहो दण्डी च ८८
(vi) भामहो दिङ्नागो धर्मकीर्त्तिश्च ९१
४. भामहस्य कृतय: ९१
५. काव्यालङ्कारपरिचय: ९२
६. भामहेनोल्लिखिता: प्राचीना आचार्या: ९३
७. काव्यालङ्कारस्य प्राचीनाष्टीका: ९४

अष्टमोऽध्याय: - दण्डी ९५-११०

१. दण्डिनो महत्त्वम् ९५
२. दण्डिन: समय: ९५
३. दण्डिनो जीवनवृत्तम् ९८
४. दण्डिन: कृतय: १००
५. काव्यादर्शस्य परिचय: १०४
६. काव्यादर्शे प्रस्तुतान्यन्यानि तत्त्वानि १०६
७. काव्यादर्शस्य प्राचीनटीका: १०९

नवमोऽध्याय: - उद्भट: १११-११८

१. उद्भटस्य महत्त्वम् १११
२. उद्भटस्य स्थानं समयश्च १११
३. उद्भटस्य कृतय: ११२
(i) अलङ्कारसारसङ्ग्रह: ११२
(ii) भामहविवरणम् ११४
(iii) कुमारसम्भवम् ११५
(iv) नाट्यशास्त्रस्य टीका ११५
४. अलङ्कारसारसङ्ग्रहस्य प्राचीनाष्टीका: ११६

५. उद्भटस्य वैशिष्ट्यम् ११७

दशमोऽध्यायः – वामनः ११९-१२४

१. वामनस्य महत्त्वम् ११९
२. वामनस्य स्थानं समयश्च ११९
३. वामनस्य कृतयः (काव्यालङ्कारसूत्रवृत्तिः) १२१
४. काव्यालङ्कारसूत्रवृत्तिग्रन्थस्य प्राचीनटीकाः १२३
५. वामनस्य वैशिष्ट्यम् १२३

एकादशोऽध्यायः – रुद्रटः १२५-१३२

१. रुद्रटस्य महत्त्वम् १२५
२. रुद्रटस्य स्थानं समयश्च १२५
३. रुद्रटस्य कृतयः १२६
४. काव्यालङ्कारस्य प्राचीनटीकाः १२९
५. रुद्रटकृतकाव्यालङ्कारस्य वैशिष्ट्यम् १३०

द्वादशोऽध्यायः – रुद्रभट्टः १३३-१३५

१. रुद्रभट्टो रुद्रटश्च १३३
२. रुद्रभट्टस्य समयः १३४
३. रुद्रभट्टस्य कृतयः १३५

त्रयोदशोऽध्यायः – आनन्दवर्धनः १३६-१५१

१. आनन्दवर्धनस्य महत्त्वम् १३६
२. आनन्दवर्धनस्य जीवनवृत्तं समयश्च १३७
३. आनन्दवर्धनस्य कृतयः १४०
४. ध्वन्यालोकस्य परिचयः १४२
५. कारिकाकारो वृत्तिकारश्च १४४
६. परिकरसङ्ग्रहसंक्षेपश्लोकाः १४८
७. ध्वन्यालोकस्य प्राचीनाष्टीकाः १४९

चतुर्दशोऽध्यायः – मुकुलभट्टः १५२-१५३

१. मुकुलभट्टस्य परिचयः १५२
२. मुकुलभट्टस्य कृतयः १५२

पञ्चदशोऽध्यायः – भट्टतौतः १५४-१५६

१. भट्टतौतस्य परिचयः १५४
२. भट्टतौतस्य कृतयो मान्यताश्च १५४

षोडशोऽध्यायः – भट्टनायकः १५७-१६०

१. भट्टनायकस्य परिचयः १५७

२. भट्टनायकस्य कृतयः १५७
३. हृदयदर्पणस्योद्धरणानि १५८
४. भट्टनायकस्य काव्यशास्त्रे प्रभावः १५९

सप्तदशोऽध्यायः - राजशेखरः १६१-१६८

१. राजशेखरस्य महत्त्वम् १६१
२. राजशेखरस्य जीवनवृत्तं समयश्च १६१
३. राजशेखरस्य कृतयः १६३
४. काव्यमीमांसा १६४
५. राजशेखरस्य वैशिष्ट्यम् १६७

अष्टादशोऽध्यायः - अभिनवगुप्तः १६९-१७४

१. अभिनवगुप्तस्य महत्त्वम् १६९
२. अभिनवगुप्तस्य जीवनवृत्तं समयश्च १६९
३. अभिनवगुप्तस्य गुरवः १७१
४. अभिनवगुप्तस्य कृतयः १७२

एकोनविंशोऽध्यायः - कुन्तकः १७५-१७९

१. कुन्तकस्य महत्त्वम् १७५
२. कुन्तकस्य समयः १७५
३. कुन्तकस्य कृतयः १७६
४. वक्रोक्तिजीवितम् १७६
५. वक्रोक्तिकल्पना १७७
६. कुन्तलकः कुन्तको वा १७९

विंशोऽध्यायः - महिमभट्टः १८०-१८५

१. महिमभट्टस्य महत्त्वम् १८०
२. महिमभट्टस्य परिचयः समयश्च १८०
३. महिमभट्टस्य कृतयः १८१
४. व्यक्तिविवेकः १८१
५. व्यक्तिविवेकस्य वैशिष्ट्यम् १८२
६. व्यक्तिविवेकस्य प्राचीनाष्टीकाः १८४

एकविंशोऽध्यायः - भोजराजः १८६-१९६

१. भोजराजस्य महत्त्वम् १८६
२. भोजराजस्य जीवनवृत्तं समयश्च १८६
३. भोजराजस्य कृतयः १९०

४. सरस्वतीकण्ठाभरणम् १९२
५. सरस्वतीकण्ठाभरणस्य टीका: १९३
६. शृङ्गारप्रकाश: १९३
७. भोजराजस्य वैशिष्ट्यम् १९५

द्वाविंशोऽध्याय: - क्षेमेन्द्र: १९७-२०२

१. क्षेमेन्द्रस्य महत्त्वम् १९७
२. क्षेमेन्द्रस्य जीवनवृत्तं समयश्च १९७
३. क्षेमेन्द्रस्य कृतय: १९८
४. औचित्यविचारचर्चा १९९
५. कविकण्ठाभरणम् २०१
६. सुवृत्ततिलकम् २०१
७. काव्यशास्त्रजगत्यौचित्यस्य महत्त्वम् २०२

त्रयोविंशोऽध्याय: - मम्मट: २०३-२१६

१. मम्मटस्य महत्त्वम् २०३
२. मम्मटस्य जीवनवृत्तम् २०४
३. मम्मटस्य समय: २०५
४. मम्मटस्य कृतय: २०६
५. काव्यप्रकाश: २०६
६. काव्यप्रकाशस्य कर्तृत्वम् २०९
७. कारिकाकारो वृत्तिकारश्च २१०
८. काव्यप्रकाशस्य प्राचीनटीका: २१३

चतुर्विंशोऽध्याय: - रुय्यक: २१७-२२९

१. रुय्यकस्य महत्त्वम् २१७
२. रुय्यकस्य जीवनवृत्तं समय: स्थानञ्च २१७
३. रुय्यकस्य कृतय: २१८
४. अलङ्कारसर्वस्वम् २२०
५. अलङ्कारसर्वस्वस्य कारिकाकारो वृत्तिकारश्च २२३
(क) मङ्खपरम्परा २२४
(ख) रुय्यकपरम्परा २२५
६. अलङ्कारसर्वस्वस्य प्राचीनटीका: २२७

पञ्चविंशोऽध्याय: - सागरनन्दी २३०-२३१

१. सागरनन्दिनो महत्त्वम् २३०

२. सागरनन्दिन: समय: परिचय: २३०
३. सागरनन्दिन: कृतय: २३०
४. नाटकलक्षणरत्नकोशस्य परिचय: २३०

षड्विंशोऽध्याय: - वाग्भट: प्रथम: २३२-२३४

१. वाग्भटस्य महत्त्वं परिचय: समयश्च २३२
२. वाग्भटप्रथमस्य कृतय: २३३
३. वाग्भटालङ्कार: २३३
४. वाग्भटालङ्कारस्य प्राचीनटीका: २३४

सप्तविंशोऽध्याय: - वाग्भटो द्वितीय: २३५-२३६

१. वाग्भटस्य द्वितीयस्य महत्त्वम् २३५
२. वाग्भटद्वितीयस्य परिचय: समयश्च २३५
३. वाग्भटद्वितीयस्य कृतय: २३५
४. काव्यानुशासनम् २३५

अष्टाविंशोऽध्याय: - हेमचन्द्र: २३७-२४०

१. हेमचन्द्रस्य महत्त्वं परिचय: समयश्च २३७
२. हेमचन्द्रस्य कृतय: २३७
३. काव्यानुशासनम् २३८

एकोनत्रिंशोऽध्याय: - अमरचन्द्र: २४१-२४२

१. अमरचन्द्रस्य महत्त्वम् २४१
२. काव्यकल्पलताग्रन्थस्य लेखक: २४१
३. ग्रन्थकर्तु: परिचय: २४१
४. अमरचन्द्रस्य कृतय: २४१
५. काव्यकल्पलता २४२
६. काव्यकल्पलतानाटिका २४२

त्रिंशोऽध्याय: - देवेश्वर: २४३

१. देवेश्वरस्य महत्त्वं परिचयश्च २४३
२. कविकल्पलता २४३
३. कविकल्पलताटीका २४३

एकत्रिंशोऽध्याय: - धनञ्जय: २४४-२४८

१. धनञ्जयस्य महत्त्वम् २४४
२. धनञ्जयस्य जीवनवृत्तं समयश्च २४४
३. धनिक: २४५
४. धनञ्जयो धनिकश्च २४५

५. धनञ्जयस्य कृतयः २४६
६. दशरूपकम् २४६
७. दशरूपकस्य प्राचीनटीकाः २४८

द्वात्रिंशोऽध्यायः - रामचन्द्रगुणचन्द्रौ २४९-२५३

१. रामचन्द्रगुणचन्द्रयोर्महत्त्वम् २४९
२. रामचन्द्रगुणचन्द्रयोः समयो जीवनवृत्तञ्च २४९
३. रामचन्द्रगुणचन्द्रयोः कृतयः २५०
४. नाट्यदर्पणम् २५०
५. नाट्यदर्पणस्य महत्त्वम् २५१

त्रयस्त्रिंशोऽध्यायः - जयदेवः २५४-२५८

१. जयदेवस्य महत्त्वम् २५४
२. जयदेवस्य जीवनवृत्तं समयश्च २५४
३. जयदेवस्य कृतयः २५६
४. चन्द्रालोकः २५६
५. चन्द्रालोकस्य प्राचीनाष्टीकाः २५८

चतुस्त्रिंशोऽध्यायः - विद्याधरः २५९-२६१

१. विद्याधरस्य महत्त्वं परिचयश्च २५९
२. विद्याधरस्य समयः २५९
३. विद्याधरस्य कृतयः २६०
४. एकावली २६०
५. एकावल्याः प्राचीनटीका २६१

पञ्चत्रिंशोऽध्यायः - विद्यानाथः २६३-२६३

१. विद्यानाथः प्रतापरुद्रश्च २६२
२. प्रतापरुद्रयशोभूषणम् २६२
३. प्रतापरुद्रयशोभूषणस्य टीकाः २६२

षट्त्रिंशोऽध्यायः - कविराजो विश्वनाथः २६४-२७३

१. विश्वनाथस्य महत्त्वम् २६४
२. विश्वनाथस्य जीवनवृत्तं समयश्च २६५
३. विश्वनाथस्य कृतयः २६८
४. साहित्यदर्पणम् २७०
५. साहित्यदर्पणस्य प्राचीनटीकाः २७३

सप्तत्रिंशोऽध्यायः - केशवमिश्रः २७४-२७६

१. केशवमिश्रस्य महत्त्वं २७४

२. केशवमिश्रस्य समय: २७४
३. केशवमिश्रस्य कृतय: २७४
४. अलङ्कारशेखर: २७५

अष्टत्रिंशोऽध्याय: - शारदातनय: २७७-२७९

१. शारदातनयस्य महत्त्वं परिचयश्च २७७
२. शारदातनयस्य समय: २७७
३. शारदातनयस्य कृतय: २७८
४. भावप्रकाशनम् २७८

एकोनचत्वारिंशोऽध्याय: - सिंहभूपाल: २८०-२८२

१. सिंहभूपालस्य महत्त्वम् २८०
२. सिंहभूपालस्य समय: परिचयश्च २८०
३. सिंहभूपालस्य कृतय: २८१
४. सङ्गीतसुधाकर: २८१
५. रसार्णवसुधाकर: २८२

चत्वारिंशोऽध्याय: - विश्वेश्वर: कविचन्द्र: २८३-२८८

१. विश्वेश्वरकविचन्द्रश्य महत्वम २८३
२. विश्वेश्वरकविचन्द्रश्य परिचय: समयश्च २८३
३. विश्वेश्वरकविचन्द्रस्य कृतय: २८४
४. चमत्कारचन्द्रिका २८५
५. चमत्कारचन्द्रिकायामन्यलेखकानां कृतीनाञ्चोल्लेखा: २८८

एकचत्वारिंशोऽध्याय: : - भानुदत्तो मिश्र: २८९-२९५

१. भानुदत्तस्य महत्त्वम् २८९
२. भानुदत्तस्य परिचय: २८९
३. भानुदत्तस्य समय: २९०
४. भानुदत्तस्य कृतय: २९२
५. अलङ्कारतिलकम् २९३
६. रसमञ्जरी २९३
७. रसतरङ्गिणी २९५

द्विचत्वारिंशोऽध्याय: - विश्वनाथदेव: २९६-३०१

१. विश्वनाथदेवस्य महत्त्वम् २९६
२. विश्वनाथदेवस्य परिचय: समयश्च २९६
३. विश्वनाथदेवस्य कृतय: २९८

४. साहित्यसुधासिन्धुः २९८
५. साहित्यसुधासिन्धोः प्राचीनसंस्करणानि ३००
६. साहित्यसुधासिन्धोर्वैशिष्ट्यम् ३०१
त्रयश्चत्वारिंशोऽध्यायः - रूपगोस्वामी ३०२-३०६
१. रूपगोस्वामिनो महत्त्वम् ३०२
२. रूपगोस्वामिनो जीवनवृत्तं समयश्च ३०२
३. रूपगोस्वामिनः कृतयः ३०३
४. नाटकचन्द्रिका ३०४
५. भक्तिरसामृतसिन्धुः ३०४
६. उज्ज्वलनीलमणिः ३०५
७. उज्ज्वलनीलमणिग्रन्थस्य प्राचीनाष्टीकाः ३०६
चतुश्चत्वारिंशोऽध्यायः - कर्णपूरः ३०७-३०८
१. कर्णपूरस्य महत्त्वं परिचयः समयश्च ३०७
२. कर्णपूरस्य कृतयः ३०७
३. अलङ्कारकौस्तुभम् ३०७
४. अलङ्कारकौस्तुभस्य प्राचीनटीका ३०८
पञ्चचत्वारिंशोऽध्यायः - कविचन्द्रः ३०९
षट्चत्वारिंशोऽध्यायः - अप्पयदीक्षितः ३१०-३१६
१. अप्पयदीक्षितस्य महत्त्वम् ३१०
२. अप्पयदीक्षितस्य जीवनवृत्तं समयश्च ३१०
३. अप्पयदीक्षितस्य कृतयः ३१२
४. वृत्तिवार्तिकम् ३१४
५. चित्रमीमांसा ३१४
६. कुवलयानन्दः ३१५
७. कुवलयानन्दस्य टीकाः ३१५
सप्तचत्वारिंशोऽध्यायः - आशाधरभट्टः ३१७-३२१
१. आशाधरभट्टस्य महत्त्वम् ३१७
२. आशाधरभट्टस्य परिचयः ३१७
३. आशाधरभट्टस्य समयः ३१८
४. आशाधरभट्टस्य कृतयः ३१८
५. कोविदानन्दः ३१९
६. अद्वैतवेदान्तम् ३१९

७. प्रभापटलम् ३१९
८. त्रिवेणिका ३१९
९. कारिकादीपिका ३२०

अष्टचत्वारिंशोऽध्यायः - पण्डितराजो जगन्नाथः ३२२-३३१

१. जगन्नाथस्य महत्त्वम् ३२२
२. पण्डितराजस्य समयः ३२४
३. पण्डितराजस्य जीवनवृत्तम् ३२४
४. पण्डितराजविषये काश्चन किम्वदन्त्यः ३२५
५. पण्डितराजस्य कृतयः ३२७
६. रसगङ्गाधरः ३२९
७. रसगङ्गाधरस्य प्राचीनटीकाः ३३०

एकोनपञ्चाशोऽध्यायः - नागेशभट्टः ३३२-३३३

१. नागेशभट्टस्य महत्त्वम् ३३२
२. नागेशभट्टस्य परिचयः ३३२
३. नागेशभट्टस्य समयः ३३३
४. नागेशभट्टस्य कृतयः ३३३

पञ्चाशोऽध्यायः - विश्वेश्वरः पाण्डेयः ३३४-३३८

१. विश्वेश्वरपाण्डेयस्य महत्त्वम् ३३४
२. विश्वेश्वरपाण्डेयस्य समयो जीवनवृत्तञ्च ३३४
३. विश्वेश्वरपाण्डेयस्य कृतयः ३३५
४. केषाञ्चित् प्रमुखग्रन्थानां परिचयः ३३६
५. प्रमुखकाव्यशास्त्रीयग्रन्थानां परिचयः ३३७
(i) अलङ्कारकौस्तुभम् ३३७
(ii) अलङ्कारमुक्तावली ३३७
(iii) अलङ्कारप्रदीपः ३३७
(iv) रसचन्द्रिका ३३८
(v) कवीन्द्रकण्ठाभरणम् ३३८

एकपञ्चाशोऽध्यायः - नरसिंहकविः ३३९-३४२

१.नरसिंहकवेर्महत्त्वम् ३३९
२.नरसिंहकवेर्जीवनवृत्तं समयश्च ३३९
३.नरसिंहकवेः कृतयः ३४१

४.नञ्जराजयशोभूषणम् ३४१

## तृतीय: खण्ड:

### काव्यस्यात्मा

प्रथमोऽध्याय: - काव्यात्मतत्त्वम् ३४४-३४७

१.काव्यस्यात्मतत्त्वानुसन्धानम् ३४४

२.काव्यशास्त्रस्य सम्प्रदाया: ३४५

द्वितीयोऽध्याय: - रससम्प्रदाय: ३४८-३८५

१.रससम्प्रदायस्य प्रवर्तनम् ३४८

२.रसपदस्यानेकार्थत्वं प्राचीनसाहित्ये च रसपदप्रयोग: ३४९

३.रसस्य काव्यशास्त्रीयं विवेचनं भरतोक्तं रससूत्रञ्च ३५०

४.भरतरससूत्रस्य व्याख्या ३५१

(i) भट्टलोल्लट: (उत्पत्तिवाद:) ३५२

(ii) श्रीशङ्कुक: (अनुमितिवाद:) ३५३

(iii) भट्टनायक: (भुक्तिवाद:) ३५४

(iv) अभिनवगुप्त: (अभिव्यक्तिवाद:) ३५६

५.विभावानुभावव्यभिचारिस्थायिभावा: ३५८

(i) विभावा: ३५८

(ii) अनुभावा: ३५९

(iii) व्यभिचारिभावा: ३५९

(iv) स्थायिभावा: ३६१

(v) सहजप्रवृत्तयो मन:संवेगाश्च ३६१

६.रसानां संख्या ३६३

७.रसानां प्राधान्यम् ३६५

८.रसानां स्वरूपम् ३६७

(i) शृङ्गाररस: ३६७

(ii) हास्यरस: ३६७

(iii) करुणरस: ३६८

(iv) रौद्ररस: ३६८

(v) वीररस: ३६८

(vi) भयानकरस: ३६९

(vii) बीभत्सरस: ३६९

(viii) अद्भुतरस: ३६९

(ix) शान्तरसः ३६९
(x) वत्सलरसः ३७०
(xi) भक्तिरसः ३७०
९.रसानां वर्णा. देवताश्च ३७१
१०.रसानां परस्परविरोधस्तत्परिहारश्च ३७२
११.भावादयः ३७३
(i) भावः ३७३
(ii) रसाभासः ३७३
(iii) भावाभासः ३७४
(iv) भावशान्तिः ३७४
(v) भावोदयः ३७५
(vi) भावसन्धिः ३७५
(vii) भावशबलता ३७५
१२.रसानां सुखदुःखात्मकत्वम् ३७५
१३.रसानां काव्यात्मत्वसमीक्षा ३८२
तृतीयोऽध्यायः - अलङ्कारसम्प्रदायः ३८६-४०८
१.अलङ्कारवादस्य प्रारम्भः ३८६
२.अलङ्काराणां विकासः ३८७
३.विविधाचार्याणामलङ्कारपरिभाषा काव्येषु च तस्याः महत्त्वम् ३८९
४.अलङ्काराणां संख्या ३९३
(i) भामहः ३९३
(ii) दण्डी ३९३
(iii) उद्भटः ३९४
(iv) वामनः ३९४
(v) रुद्रटः ३९५
(vi) भोजराजः ३९५
(vii) मम्मटः ३९६
(viii) रुय्यकः ३९६
(ix) विश्वनाथः ३९८
(x) अप्पयो दीक्षितः ३९८
(xi) पण्डितराजो जगन्नाथः ४००
५.अलङ्काराणां मूलतत्त्वम् ४००

(i) अलङ्काराणां मूलं वक्रोक्तिरतिशयोक्तिर्वा ४००
(ii) अलङ्काराणां मूलमुपमा ४०२
(iii) अलङ्काराणां मूलं वास्तवौपम्यातिशयश्लेषा: ४०२
६.अलङ्काराणां वर्गीकरणम् ४०२
७.अलङ्काराणां काव्यत्मत्वसमीक्षा ४०४
चतुर्थोऽध्याय: - रीतिसम्प्रदाय: ४०९-४२६
१.रीतीनां प्रवर्तनम् ४०९
२.रीतेरुद्भवविकासयो: क्रमविवेचनम् ४०९
३.रीतिलक्षणं गुणैश्च सह तासां सम्बन्ध: ४१५
४.रीतीनां संख्या ४१७
५.रीतीनां नियामकतत्त्वानि ४१७
६.रीतीनां काव्यान्यतत्त्वै: सह सम्बन्ध: ४१८
(i) रीतयो रसाश्च ४१८
(ii) रीतयोऽलङ्काराश्च ४१८
(iii) रीतयो वृत्तयश्च ४१९
(iv) रीतय: प्रवृत्तयश्च ४२०
(v) रीतय: शैल्यश्च ४२०
७.रीतीनां पारस्पारिकप्राशस्त्यम् ४२१
८.रीतीनां काव्यात्मत्वसमीक्षा ४२२
पञ्चमोऽध्याय: - वक्रोक्तिसम्प्रदाय: ४२७-४४४
१.वक्रोक्तिसम्प्रदायस्य प्रवर्तनम् ४२७
२.वक्रोक्त्या ऐतिहासिकक्रमविकास: ४२७
३.कुन्तककृतकाव्यलक्षणं वक्रोक्तिस्वरूपनिर्धारणञ्च ४३०
४.वक्रोक्तेर्भेदप्रभेदा: ४३२
(i) वर्णविन्यासवक्रता ४३३
(ii) पदपूर्वार्द्धवक्रता ४३३
(iii) प्रत्ययवक्रता ४३३
(iv) वाक्यवक्रता ४३३
(v) प्रकरणवक्रता ४३४
(vi) प्रबन्धवक्रता ४३४
५.वक्रोक्ते: काव्यास्यान्यतत्त्वै:सह सम्बन्ध: ४३५
(i) वक्रोक्ति: स्वभावोक्तिश्च ४३५

(ii) वक्रोक्तिः रसश्च ४३७
(iii) वक्रोक्तिरलङ्कारश्च ४३८
(iv) वक्रोक्तिः रीतयो गुणाश्च ४३९
(v) वक्रोक्तिरौचित्यञ्च ४३९
(vi) वक्रोक्तिः ध्वनिश्च ४४०
६.वक्रोक्तेः काव्यात्मत्वसमीक्षा ४४१
षष्ठोऽध्यायः - औचित्यसम्प्रदायः ४४५-४६१
१.औचित्यसिद्धान्तस्य प्रवर्तनम् ४४५
२.औचित्यस्यैतिहासिको विकासक्रमः ४४६
३.औचित्यस्यात्मत्वप्रतिपादनम् ४५३
४.क्षेमेन्द्रकृतमौचित्यलक्षणम् ४५३
५.औचित्यस्य भेदाः ४५४
६.औचित्यस्य काव्यस्यान्यतत्त्वैः सह सम्बन्धः ४५५
(i) औचित्यं रसश्च ४५५
(ii) औचित्यमलङ्कारश्च ४५५
(iii) औचित्यं रीतयश्च ४५६
(iv) औचित्यं वक्रोक्तिश्च ४५७
(v) औचित्यं ध्वनिश्च ४५७
६.औचित्यस्य काव्यात्मत्वसमीक्षा ४५९
सप्तमोऽध्यायः - ध्वनिसम्प्रदायः ४६२-४९६
१.ध्वनिसिद्धान्तस्य प्रारम्भः ४६२
२.ध्वनेः प्राचीनता ऐतिहासिकविकासक्रमश्च ४६३
३.ध्वनेः मूलप्रेरणा ४६६
४.ध्वनिपदस्यार्थः ४६८
५.ध्वनिकाव्यस्य लक्षणम् ४७१
६.ध्वनिकाव्यस्य भेदाः ४७२
७.ध्वनिविरोधिन आचार्याः ४७४
(i) आनन्दवर्धनात् पूर्ववर्तिनो ध्वनिविरोधिनः ४७४
(क) अभाववादिनः ४७४
(ख) भक्तिवादिनः ४७५
(ग) अलक्षणीयतावादिनः ४७५
(ii) आनन्दवर्धनोत्तरवर्तिनो ध्वनिविरोधिनः ४७६

(क) भट्टनायकः ४७६
(ख) महिमभट्टः ४७६
(ग) कुन्तकः ४७८
(घ) क्षेमेन्द्रः ४७८
(iii) जयरथेनोल्लिखिततानि ध्वनिविरोधीनि मतानि ४७९
८.ध्वनिविरोधिमतानां युक्तयस्तासाञ्च समाधानम् ४८१
९.ध्वनेश्च काव्यान्यतत्त्वानाञ्च परस्परसम्बन्धः ४९१
(i) ध्वनिः रसश्च ४९१
(ii) ध्वनिरलङ्कारश्च ४९२
(iii) ध्वनिः रीतिश्च ४९३
(iv) ध्वनिर्वक्रोक्तिश्च ४९४
(v) ध्वनिरौचित्यञ्च ४९५
१०.ध्वनेः काव्यास्यात्मत्वसमीक्षा ४९५

## चतुर्थः खण्डः

### काव्यशास्त्रविषयाः

प्रथमोऽध्यायः - काव्यप्रयोजनानि ४९८-५०७
१.काव्यशास्त्रस्य प्रयोजनानि ४९८
२.काव्यप्रयोजनसम्बन्धे प्रास्ताविकम् ४९९
३.मम्मटप्रतिपादितानि काव्यप्रयोजनानि ४९९
४.कतिपयशास्त्रकृद्भिः प्रतिपादितानि काव्यप्रयोजनानि ५०१
(i) भरतो मुनिः ५०१
(ii) भामहः ५०१
(iii) वामनः ५०२
(iv) भोजराजः ५०२
(v) कुन्तकः ५०२
(vi) वाग्भटः ५०३
(vii) रुद्रटः ५०३
(viii) अग्निपुराणम् ५०३
(ix) रामचन्द्रगुणचन्द्रौ ५०३
(x) विश्वनाथः ५०४
(xi) जगन्नाथः ५०५
५.काव्यप्रयोजनानां समीक्षा ५०५

६.काव्यप्रयोजनानां विषये पाश्चात्यविदुषां मन्तव्यानि ५०६

द्वितीयोऽध्याय: - काव्यहेतव: ५०८-५१७

१.प्रारम्भिकं कथनम् ५०८
२. प्रतिभा ५११
३.व्युत्पत्ति: ५१४
४.अभ्यास: ५१५
५.हेतुत्रयस्यैकत्वम् ५१७

तृतीयोऽध्याय: - काव्यलक्षणम् ५१८-५२९

१.प्रारम्भिककथनम् ५१८
२.मम्मटकृतं काव्यलक्षणम् ५१८
३.अन्येषामाचार्याणां काव्यपरिभाषा ५१९
४.मम्मटकृतकाव्यलक्षणपरीक्षणम् ५२०
(i) शब्दार्थौ ५२०
(ii) अदोषौ ५२२
(iii) सगुणौ ५२४
(iv) अनलङ्कृती पुन:क्वापि ५२६
(v) तत् शब्दार्थौ काव्यम् ५२९
५.साहित्यम् ५२९

चतुर्थोऽध्याय: - काव्यभेदा: ५३०-५३७

१.प्रारम्भिककथनम् ५३०
२.विधामधिकृत्य काव्यभेदानां वर्गीकरणम् ५३०
(i) दृश्यकाव्यानि ५३०
(ii) श्रव्यकाव्यानि ५३१
(क) गद्यकाव्यम् ५३१
(ख) पद्यकाव्यम् ५३१
(ग) गद्यपद्यमयकाव्यम् ५३२
३.काव्यस्यार्थमाश्रित्य काव्यभेदानां वर्गीकरणम् ५३३
(i) ध्वनिकाव्यम् ५३३
(ii) गुणीभूतव्यङ्ग्यकाव्यम् ५३४
(iii) चित्रकाव्यम् ५३५
(iv) चित्रकाव्यस्य काव्यत्वाकाव्यत्वनिर्णय: ५३६
४.काव्यभेदसम्बन्धे पण्डितराजजगन्नाथस्य मतम् ५३७

५.वर्गीकरणस्यान्य आधाराः ५३७

पञ्चमोऽध्यायः – गुणाः ५३८–५५०

१.काव्यगतगुणविवेचनभूमिका ५३८
२.वामनकृतं गुणविवेचनम् ५४०
३.ध्वनिवादिनामाचार्याणां गुणविवेचनम् ५४१
(i) गुणलक्षणं काव्ये च तेषां स्थानम् ५४२
(ii) गुणालङ्कारयोर्भेदः ५४२
(iii) गुणानां संख्या ५४४
(iv) गुणस्वरूपं गुणानाञ्च रसविशेषैः सह सम्बन्धः ५४७
(क) माधुर्यम् (ख) ओजः (ग) प्रसादः
(v) गुणानां व्यञ्जनहेतवः ५४९
(क) माधुर्यम् (ख) ओजः (ब) प्रसादः

षष्ठोऽध्यायः – दोषाः ५५१–५६९

१.काव्यगतदोषविवेचनभूमिका ५५१
२.दोषाणां स्वरूपम् ५५२
३.दोषाणां वर्गीकरणं लक्षणानि च ५५३
(क) पददोषाः ५५४
(ख) पदांशदोषाः ५५६
(ग) वाक्यदोषाः ५५६
(घ) अर्थदोषाः ५५९
(ङ) रसदोषाः ५६१
(च) अलङ्कारदोषाः ५६४
४.दोषाणां नित्यत्वमनित्यत्वञ्च केषाञ्चिच्च दोषाणां दोषाभावत्वम् ५६५
५.रसगतदोषाणामनित्यत्वं दोषपरिहारश्च ५६८

परिशिष्टानि –

परिशिष्टम् – १ ग्रन्थे वर्णिताः प्राचीनप्रसिद्धाचार्याः तेषां कृतयः प्रसिद्धटीकाश्च ५७१
परिशिष्टम् – २ उद्धृतानां कारिकाणामनुक्रमणिका ५८९
परिशिष्टम् – ३ उद्धृतानां गद्यांशानामनुक्रमणिका ६०३
परिशिष्टम् – ४ उद्धृतानामुदाहरणानामनुक्रमणिका ६१०
परिशिष्टम् – ५ प्रमुखसन्दर्भग्रन्थाः ६१३
ग्रन्थकर्तुः परिचयः १–४

प्रथमोऽध्यायः

## काव्यस्य काव्यशास्त्रस्य च प्रादुर्भावः

साहित्यस्य विविधविधासु काव्यविधा कवेरान्तरिकभावानां संवेगानाञ्च बौद्धिकविकास-जन्या प्रस्फुटिताऽभिव्यक्तिरेव। काव्यरचनायै हृदयगतभावानां प्रस्फुटनं, विषयगत-सामग्रीणामुपस्थितिः,भावाभिव्यञ्जनसमर्था परिष्कृता भाषा, विषयप्रतिपादनयोग्या कविप्रवृत्तिरित्यादीनां सर्वेषां तत्त्वानामेकत्र स्थितिरनिवार्या विद्यते। एकस्याऽपि तत्त्वस्याऽभावः काव्यरचनावरोधको वर्तते। प्राचीनतमेष्वपि काव्येषु तत्त्वानामेतेषां काव्यरचना-कराणामुपस्थितिः सर्वत्र संलक्ष्यते। प्राचीनभारते काव्यरचनायाः प्रादुर्भावस्य विकासस्य च संक्षेपेण समीक्षणमस्मिन्नेव परिप्रेक्ष्ये रोचकमुपयोगि च विद्यते।

### १. काव्यरचनायाः प्रारम्भिकयुगम्

सहस्रशो हि वर्षाणामवधिर्व्यतीतो यदा महर्षिर्विश्वामित्रोऽनुयायिभिः शिष्यैः समं शुतुद्रीविपाशोः सङ्गमं सम्प्राप्तः। सरितोः समुन्नमन्तं सलिलराशिमवलोक्य सहसा तस्य हृदयगताः भावाः काव्यरूपेण प्रवहन्तः समुच्छलिताः -

**प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने ।**

**गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते।। ऋग्वेद ३.३३.१**

शैलानामुत्सङ्गान्निर्गत्य समुद्रं कामयमाने मन्दुरातो विमुक्ते अश्वे इव हासमाने जवेनाऽन्योन्यं स्पर्धमाने हृष्यन्त्यौ द्वे शुभ्रे गावाविव शोभमाने मातराविव वत्सं लेढुमिच्छन्त्यौ विपाट् च शुतुद्री च नद्यौ पयसा त्वरितं गच्छतः।

ऋग्वेदस्याऽस्मिन् मन्त्रे काव्यस्योत्तमस्य सर्वाणि तत्त्वानि सन्निहितानि वर्तन्ते। अत्र शृङ्गाररसस्य वात्सल्यरसस्य चाऽभिव्यक्तिर्विद्यते, माधुर्यगुणस्योपमालङ्कारस्य च चमत्कृतिरनुभूयते सामाजिकैः।

सत्यपि ऋग्वेद आर्याणां मूलधर्मग्रन्थे तत्र काव्यात्मकं सौन्दर्यं सम्भृतमस्ति। रसगुणालङ्कारादीनां काव्यसौन्दर्याधायकानां तत्त्वानामनुभवो बहुधा सामाजिकानां हृदयसन्निहितो भवति। यथा -

**अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम्।**

**जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः।।[१]**

---

१. ऋग्वेद १.१२४.७

प्रातरुदयतः सूर्यस्य शोभामवलोक्य दीर्घतमसः सुतस्य कक्षीवतो महर्षेर्हृदयगताः भावाः काव्यरूपेण परिणताः प्रस्फुटिताः बभूवुः। अत्र मन्त्रे चतसृभिरुपमाभिरुपकृतस्य शृङ्गाररसस्याभिर्व्यक्तिर्भवति, सामाजिकं सत्यञ्च प्रस्फुटते।

अनेनैव विधिना महर्षिर्गौतमः पूर्वदिश्युदयन्त्या उषसोऽनुपमं सौन्दर्यं समीक्षमाणस्तां शोभनं वस्त्राभरणं वहन्तीं वक्षः प्रकटयन्तीं नर्तकीमिवाऽमनिष्ट। सा उषा सकलं भुवनं प्रकाशयन्ती गोष्ठं गौरिव ब्रजति -

**अधिपेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव वर्जहम् ।**
**ज्योतिर्विश्वस्मै कृण्वती गावो न व्रजं व्युषा आवर्तमः।।**
ऋग्वेद १.९२.४

ऋग्वेदस्य निम्नलिखिते मन्त्रेऽतिशयोक्त्यलङ्कारसौन्दर्येण सह गूढतम-भावानामभिव्यक्तिः प्रसिद्धा -

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकषीति।।** ऋग्वेद १.१६४.२०

अस्मिन् मन्त्रे रूपकातिशयोक्त्यलङ्कारस्य सौन्दर्यं निहितम्। अथ चाऽत्र आत्मा, परमात्मा प्रकृतिश्चेति त्रीण्युपमेयानि, सयुजा पक्षिणौ पिप्पलञ्चेति त्रिभिरुपमानैर्निगीर्यन्ते। अतोऽत्र रूपकातिशयोक्त्यलङ्कारः।[1]

रसगङ्गाधरकारेण पण्डितराजेन जगन्नाथेनाऽप्यतिशयोक्तिरेषा प्रशंसिता।[2] अत्र न केवलमतिशयोक्त्यलङ्कारोऽपित्वनुप्राससौन्दर्येण सह विभावनाविशेषोक्त्योरपि चमत्कृतिरनुभूयते सहृदयैः। माधुर्यगुणः पदद्योत्यो ध्वनिश्चाऽभिव्यज्यते। अत्र आत्मनः परमात्मनश्च नित्यत्वं चैतन्यभावश्चाऽभिव्यज्यते।

चमत्कृतियुताऽतिशयोक्तिः निम्नमन्त्रेऽपि दृश्यते-

**चत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।**
**त्रिधा बद्धो वृषभो रोरवीति महादेवो मर्त्यां आविवेश।।** ऋग्वेद ४.५८.३

अत्र महर्षिणा वामदेवेन वृषभवर्णनप्रसङ्गेन वेद-सूर्य-यज्ञ-महादेवादीनां वर्णनं कृतम्। अतोऽत्र रूपकातिशयोक्त्यलङ्कारः स्पष्टरूपेण लक्ष्यते।

श्लेषालङ्कारस्य चमत्कृतिर्निम्नलिखिते मन्त्रे लक्ष्यते -

**यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति।**
**इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश।।** ऋग्वेद १.१६४.२१

---

१. निगीर्याध्यवसानं तु प्रकृतस्य परेण यत्।
विज्ञेयाऽतिशयोक्तिः सा।। काव्यप्रकाश १०.१००-१०१

२. इयं चाऽतिशयोक्तिर्वेदेऽपि दृश्यते। यथा द्वा सुपर्णा............. शीति''।
रसगङ्गाधर-अतिशयोक्त्यलङ्कारप्रकरण।

अत्र मन्त्रेऽर्थद्वयं लक्ष्यते - आध्यात्मिकोऽर्थ आधिभौतिकश्च। अतोऽत्र श्लेषालङ्कारः। आध्यात्मिकोऽर्थः प्रकृत्यादिविषयवर्णनात्मकः। आधिभौतिकश्च पक्षिवृक्षादिविषयकः। अथ च द्वयोरप्यर्थयोः काव्यत्वं निहितम्।

लोकव्यवहारविषयस्य सुन्दरमुदाहरणमृग्वेदस्य दशममण्डलस्य चतुस्त्रिंशत्तम-मक्षसूक्तमस्ति। महर्षिरैलूषकवषो वदति - अक्षफलके प्रास्ता अक्षाः द्यूतकरं तथैवोन्मादयन्ति यथा सोमरसपानं सोमरसपायिनमुन्मादयति -

**प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः ।**
**सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान्।।**

**ऋग्वेद १०.३४.१**

द्यूतक्रीडासमुत्पन्नायाः द्यूतकरस्याऽवस्थायाः काव्यमयं वर्णनं निम्नलिखितमन्त्रे वर्तते -

**द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विन्दते मर्डितारम्।**
**अश्वस्येव जरतो वस्न्यस्य नाहं विन्दामि कितवस्य भोगम्।।**

**ऋग्वेद १०.३४.३**

द्यूतकरस्य श्वश्रूस्तं द्वेष्टि पत्नी च तमपरुणद्धि। याचमानोऽप्यसौ न कमपि सुखदं जनं प्राप्नोति। विक्रययोग्यस्य अश्वस्येव कस्यापि भोगस्य सुखं स द्यूतकरो न लभते।

मनोमोहिनी काव्यरचना अतिप्राचीनकाले ऋग्वैदिकयुग एव व्यकासादिति प्रमाणानि सकल एव ऋग्वेदे समुपलभ्यन्ते। काव्यसाहित्यस्याधिष्ठात्र्याः वाग्देवतायाः कल्पना तस्मिन् युगे समुपलभ्यते। वाचमाश्रित्य ऋषयः सशक्तनवविजयप्रदानां मन्त्राणां रचनामकुर्वन् -

**प्रतव्यसीं नव्यसीं धीतिमग्नये वाचो मतिं सहसः सूनवे भरे।**
**अपां नपाद्यो वसुभिः सह प्रियो होता पृथिव्यां न्यसीदद्दृत्वियः।।**

**ऋग्वेद १.१४३.१**

ऋग्वेदोत्तरकाले वाग्देवतेयं सर्वदेवतासु प्रधाना शक्तिमत्तमा च समभवत्। इयमन्येषां सर्वेषां रुद्रवस्वादित्यविश्वेदेवमित्रवरुणेन्द्राग्न्यश्विनीसोमत्वष्टृभगादीनां देवतानां धारिका बभूव। इयं धनानां सङ्गमनी चिकितुषी यज्ञियानां प्रथमाऽऽसीत्। देवास्तां बहुषु स्थानेष्वनेकैः प्रकारैरकल्पयन् -

**अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्।**
**तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम्।।**

**ऋग्वेद १०.१२५.३**

ऋग्वेदे काव्यरचनायाः विकासो न केवलं मुक्तककाव्यरूपेणैवोपलभ्यते, प्रबन्ध-काव्यविकासतत्त्वान्यपि तत्राऽवलोक्यन्ते। अनेकेषु सूक्तेषु कथानकतत्त्वानि सन्निहितानि। तेषाञ्च कथानकानां प्रबन्धकाव्यरूपेण विकास उत्तरवर्तिनि युगे ब्राह्मण-पुराण-

रामायण-महाभारतादिषु साहित्यग्रन्थेषु समुपलभ्यते। ऋग्वेदस्य नदीसूक्ते (३.३३) विश्वामित्रस्य नद्योश्च संवादो विद्यते, यमसूक्ते (१०.१०) यमी-यमयोः संवादो वर्तते, सरमासूक्ते (१०.१०८) च सरमापणीनां संवादोऽस्ति। अथ चाऽन्येष्वपि सूक्तेषु बहवः संवादाः समुपलभ्यन्ते। यथा इन्द्रमारुतागस्त्यानां (१.१६५), अगस्त्यागस्त्यशिष्यलोपामुद्राणां (१.१७९), इन्द्रादितिवामदेवानां (४.१८), वसिष्ठवसिष्ठपुत्रेन्द्राणां (६.१३), नृमेधेन्द्रयोः (८.१००), इन्द्रवसुक्रयोः (१०.२८), देवानामग्नेश्च (१०.५१-५३), इन्द्रेन्द्राणीवृषाकपीनां (१०.८६) संवादाः विद्यन्ते। संवादाश्चेमे कथानकपृष्ठभूमियुताः सन्ति। अनेके च संवादा उत्तरवर्तिनि काले साहित्ये प्रबन्धकाव्यरूपेण विचकाशिरे।

ऋग्वेदस्य रोचकश्चमत्कृतिपूर्णः संवाद उर्वशीपुरूरवसोर्विद्यते (१०.९५)। अत्र तयोर्नायिकानायकयोः प्रणयगाथा प्रभुणा कल्पिता। संवादस्याऽस्य प्रबन्धकाव्यरूपेण विकासः शतपथब्राह्मणे, तदनन्तरञ्च महाभारते समभूत्। अस्मादेव प्रबन्धकाव्यात् प्रेरणामधिगम्य महाकविः कालिदासो 'विक्रमोर्वशीयम्' नाम मनोरमं नाटकमकल्पयत्।

ऋग्वेदे काव्यकवितादिपदानां प्रयोगा अपि बहुषु स्थानेषु समुपलभ्यन्ते। सर्वेषामपि काव्यानां ज्ञाता अग्निर्विद्यते।[1] गाथापदस्यापि प्रयोगो ऋग्वेदे वर्तते।[2] ऋग्वेदेऽनेकानि पदानि ध्वनिकाव्यरचनाविशिष्टानि विद्यन्ते, तानि च मन्त्राणां काव्यात्मकशैलीमभिव्यञ्जयन्ति।

ऋग्वेदानन्तरमन्येष्वपि वेदेषु यजुःसामाथर्वस्वपि काव्यरूपता समवलोक्यते। यजुर्वेदस्याऽधोनिर्दिष्टे मन्त्रे वाचकलुप्तोपमायमकालङ्कारयोर्मनोहरो विन्यासो विद्यते -

**सप्त तेऽग्ने समिधः सप्तजिह्वा सप्त ऋषयः सप्त धाम प्रियाणि।**
**सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा।।**
**यजुर्वेद १७.७९**

न केवलं शब्दालङ्काराणामर्थालङ्काराणामपि सौन्दर्यं वेदेऽस्मिन् स्थाने स्थानेऽनुभूयते -

**शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च।**
**शुक्रश्च ऋतपाश्चात्य हा।। यजुर्वेद १७.८०**
**ईदृङ् चान्यादृङ् च संदृङ् च प्रतिसदृङ् च।**
**मितश्च समितश्च सभराः।। यजुर्वेद १०.८१**

आख्यानकाव्यानामथर्ववेदे प्रायशोऽभाव एव, तथापि काव्यतत्त्वानां दर्शनं भवत्येव। प्रथमकाण्डस्य प्रथमसूक्त एव वाणीपतिर्वाचस्पतिः प्रार्थ्यते। प्रथममन्त्रेऽत्र काव्यत्वं सन्निहितम् -

---

१. अग्निर्विश्वानि काव्यानि विद्वान्। ऋग्वेद ३.१.१८
आ देवानामभवः केतुरग्ने मन्द्रो विश्वानि काव्यानि विद्वान्।
ऋग्वेद ३.१.१७

२. गायद्गाथं सुतसोमो दुवस्यन्। ऋग्वेद १.१६७.६

**ये त्रिषप्ता: परियन्ति विश्वा रूपाणि बिभ्रत: ।**
**वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ।। अथर्ववेद १.१.१**

अथर्ववेदस्य अप्सर:सूर्याराष्ट्रादिसूक्तानि ध्वनिकाव्यस्य मनोरमाण्युदाहरणानि सन्ति। अथर्ववेदे प्रोक्तं प्रभुणा - वेदास्तस्य परमात्मनस्तथाविधं काव्यं यन्न नश्यति नापि च जीर्यति।[1]

उत्तरवर्तिनि वैदिककाले ब्राह्मणग्रन्थेष्वपि काव्यमयीनां रचनानां प्राचुर्यमभिलक्ष्यते। बहून्याख्यानकान्यपि तत्र तस्य युगस्य काव्यरचनानैपुण्यं साधयन्ति। शतपथब्राह्मणे मनु-मत्स्यकथा, पुरूरवस-उर्वशीकथा, अन्यानि च कथनोपकथनानि तत्रोदाहरणरूपेण प्रस्तोतुं शक्यन्ते। शतपथब्राह्मणे नारीसौन्दर्यस्याऽऽदर्शो ऋषिणा प्रस्तुत:[2]। स चोत्तरकविभि: स्वरचनासु सम्मानित:। ब्राह्मणग्रन्थेषु प्रतिपादितेषु विभिन्नाश्वमेधराजसूयादियज्ञ-क्रियाकर्मकाण्डादिष्वभिनयतत्त्वानां दर्शनं सर्वत्रोपलभ्यते। तेन तस्मिन् काले ह्युत्तमकाव्यसृष्टि: प्रमाणीक्रियते।

वाजसनेयिसंहितायां (३०.६), तैत्तिरीयब्राह्मणे च (३.४.२) सूताय नृत्यस्य शैलूषाय (नटाय) च गीतस्योपदेशो ऋषिणोपदिष्ट:। ऐतरेयब्राह्मणे (७.१८.१०) शौन:शेपाख्यानाभिधाना शुन:शेपस्य कथा वर्णिता वर्तते। विधिमनुसृत्य कथामेनां होता राजसूययज्ञावसरे गायति स्म। ऐतरेयब्राह्मणे (३.२५.१) सौपर्णाख्यानमपि वर्तते।

दर्शनविषयिकासूपनिषत्सु भारतीयदर्शनानां विविधपक्षाणामुपदेशा: सन्निहिता: वर्तन्ते। परन्तु तत्रापि काव्यतत्त्वानामभाव इति न। कठमुण्डकछान्दोग्यादिषूपनिषत्सु ह्युत्तमकाव्याना-मुदाहरणानि सन्त्येव। निम्नमन्त्रे रूपकालङ्कारस्य मनोरम: सन्निवेशो वर्तते -

**धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धयीत।**
**आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि।।**
**मुण्डकोपनिषत् २.२.३**

**आत्मानं रथिनं विद्धि शरीरं रथमेव तु।**
**बुद्धिं तु सारथिं विद्धि मन: प्रग्रहमेव च।।**
**कठोपनिषत् १.३.३**

वेदेषु काव्यविकासो बभूवेति तथ्यमुत्तरवर्तिभिर्मुनिभि: सुस्पष्टं स्वीकृतम्। भरतमुनिना सर्वाण्येव नाट्यतत्त्वानि वेदेभ्य एव गृहीतानि। ऋग्वेदात् पाठ्यं, सामवेदाद् गीतं, यजुर्वेदादभिनयानथर्ववेदाच्च रसान् मुनि: जग्राह।[3]

---

१. पश्य देवस्य काव्यं न ममार न जीर्यति। अथर्ववेद १७.८.३२

२. शतपथ ब्राह्मण १.२.५.१६

३. जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि।। भरतनाट्यशास्त्र १ १७

## २. लौकिकसंस्कृतभाषायां काव्यरचनायाः प्रारम्भः

लौकिकसंस्कृतभाषायां काव्यरचनायाः प्राचीनतमं रूपं रामायणं नाम काव्यं वर्तते महाभारतञ्चाऽपि। उत्तरवर्तीनि काव्यानि काव्याभ्यामेताभ्यां पूर्णरूपेण प्रभावितानि वर्तन्ते। काव्ये चेमेऽन्येषामनेकेषां काव्यानामुपजीव्यभूते सम्भूते। उत्तरवर्तिभिः संस्कृतकाव्यकृद्भिस्त्रीणि प्राचीनानि महाकाव्यान्युपजीव्यरूपेण गृहीतानि - रामायणं, महाभारतं बृहत्कथा च। अत्र रामायणमहाभारते मूलरूपेण संस्कृतभाषायां समुपलभ्येते, परं बृहत्कथा पैशाचीप्राकृतभाषायां निबद्धा विलुप्ता बभूव। तस्याः संस्कृतरूपान्तराण्येव वर्तमानकाले समुपलभ्यन्ते।

रामायणं संस्कृतस्यादिकाव्यमभिधीयते तस्य च रचयिता वाल्मीकिरादिकविः। वाल्मीकेरिदमादिकाव्यमुत्तरवर्तिभ्यो भारतीयकविभ्यो महत्प्रेरणास्रोतः समवर्तत। दशरूपककारस्तु नाटककारेभ्यः परामर्शमिमं व्यतरद्, यत्ते नाट्यकथावस्तुस्रोतांसि रामायणबृहत्कथाभ्यां गृह्णीयुः।[1]

काव्यरचनाप्रेरणां वाल्मीकिः कथं प्राप्नोदित्यद्भुत एवेतिहासः। वाल्मीकेर्हृदये भावना समुत्पन्ना यदसौ कमप्यद्भुतचरितं वीरं पराक्रमिणं सदाचारिणं संयमिनं कान्तिमन्तं पुरुषं नायकं कृत्वा काव्यरचनां कुर्यात्। अस्मिन् विषयेऽसौ नारदं मुनिं परामार्क्षीत्। नारदः प्रोवाच - भवद्वर्णितैर्गुणैः सम्पन्नस्त्वधुना इक्ष्वाकुवंशीयो राम एव दरीदृश्यते।

नारदं विसृज्य वाल्मीकिर्ऋषिस्तमसासरित्तटं स्नानार्थं प्रपेदे। तत्र विहरन्नसौ क्रौञ्चयुगलमेकमवलोकयामास। तस्मिन्नेव समये व्याधेनैकेन तत्र नरक्रौञ्चः शरेण हतः। रुधिरसंलिप्तगात्रं भुवि पतितं क्रौञ्चमवलोक्य क्रौञ्ची विललाप। करुणमिदं दृश्यमवलोक्य करुणार्द्रचेतसो मुनेर्मुखादयं श्लोकः प्रादुर्बभूव -

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।।**

**रामायण-बालकाण्ड - ३.२५**

श्लोकोऽयं संस्कृतकाव्यस्य प्रथमा छन्दोमयी रचनाऽवर्तत। अतः पूर्वं छन्दोबद्धाः रचनाः वैदिकसंस्कृतभाषायामेव न्यबध्नन्त। तमसातीरान्निवृत्य वाल्मीकेश्चैतन्यं तेनैव शोकेन व्याप्तमासीत्। विस्मयेन शोकेन च विमुग्धोऽसौ व्यचिन्तयत् - "मम मुखात् कीदृशीयं वाणी विनिर्गता ?"

तस्मिन्नेव काले तत्र ब्रह्माऽऽविर्बभूव। शोकश्लोकचमत्कृतिसमाधिस्थमिव वाल्मीकिमसौ प्रोवाच -

हृदये तवैष श्लोको ममैव प्रेरणया प्रापुस्फुटत्। त्वमनेनैव छन्दसा तस्य श्रीरामचरितस्य गानं कुरुष्व यं राममद्य नारदस्त्वत्समक्षं वर्णयामास।

---

१. इत्याद्यशेषमिह वस्तुविभेदजातं रामायणादि च विभाव्य बृहत्कथाञ्च।
आसूत्रयेत्तदनु नेतृरसानुगुण्याच्चित्रां कथामुचितचारुवचःप्रपञ्चैः।। दशरूपक १.६८

ब्रह्मणो वचः स्वीकृत्य वाल्मीकिना योगसमाधिसंस्थितेन रामचरितं साक्षात्कृतमथ च रामायणं काव्यं विरचितम्।

प्रायः सर्वैरेव संस्कृतसाहित्यसमीक्षकैः प्रतिपादितं यदुपरि प्रोक्तो वाल्मीकिश्लोको लौकिकसंस्कृतभाषायाः प्रथमा छन्दोमयी रचना विद्यते। आनन्दवर्धनेन प्रोक्तम् - काव्येऽभिव्यज्यमानो रसरूपार्थ एव काव्यस्यात्मा वर्तते, यथा वाल्मीकेरादिकवेः शोक एव श्लोकतया परिणतः।[१]

स्वयं वाल्मीकिरपि रामायणरचनाकारः श्लोकस्याऽस्य व्याख्यां ब्रह्मणो मुखात्तथा कारयामास यथा शोक एवाऽयं श्लोकतया परिणतो बभूव।[२]

उद्देश्यस्वरूपविषयादीनां समीक्षया रामायणे काव्यस्य सर्वाण्येव तत्त्वानि सन्निहितानि वर्तन्ते। वर्णनानां प्राचुर्यं कल्पनानाञ्च मनोभावनं तत्र संलक्ष्यते। समुद्रसरिद्गगनर्तुसूर्योदयसूर्यास्तचन्द्रोदयचन्द्रास्तवनपर्वतयुद्धादीनां कल्पनामयानां चित्रणानि सहृदयानां मनांस्यावर्जयन्ति। प्रधानभूतेन करुणरसेन सहाऽन्येषामप्यङ्गभूतानां रसानां निष्पत्तिरत्राऽनुभूयते। काव्यशास्त्रकृद्भिः काव्यशास्त्रग्रन्थेषु रामायणस्य श्लोकाः स्थाने स्थाने ह्युदाहरणरूपेणोद्धृताः। यथा रामायणस्यैकः श्लोको ध्वनिकारेणाऽत्यन्ततिरस्कृतवाच्यस्य ध्वनेरुदाहरणतया ध्वन्यालोके प्रस्तुतः।[३]

रामायणं करुणरसप्रधानं काव्यमुच्यते। काव्यशास्त्रिणां मतमिदं यत् काव्ये रस एकोऽङ्गीकरणीयोऽन्ये च रसास्तदङ्गरूपेण सन्नियोजनीयाः। रामायणे यद्यपि सर्वेषां रसानां निष्पत्तिरनुभूयते तथापि प्रधानस्तु रसस्तत्र करुण एव। ध्वनिकारेण प्रोक्तम् -

"शोकः श्लोकत्वमागत इति कथयताऽऽदिकविना रामायणे करुणो रसो निबद्धः सीतावियोगपर्यन्तञ्च स्वप्रबन्धं निबध्नता निर्व्यूढः।"[४]

काव्यरचनायाः प्रारम्भिकयुगे महाभारतमप्यतिमहत्त्वशाल्यवर्तत। काव्यं सदप्ययं ग्रन्थ इतिहासो धर्मशास्त्रमपि चाऽस्ति, तथाऽप्यत्र काव्यस्य सर्वाण्येव तत्त्वानि सन्निहितानि वर्तन्ते। उत्तरवर्तिभ्यः कविभ्यो ग्रन्थोऽयमुपजीव्यकाव्यरूपेण महत्त्वपूर्णं स्थानं दाधार।

---

१. काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।। रामायण बालकाण्ड २.१५

२. समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा।
सोऽनुव्याहरणाद् भूयः शोकः श्लोकत्वमागतः।। वही २.४१

३. रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः।
निःश्वासान्ध इवाऽऽदर्शश्चन्द्रमा न प्रकाशते।। ध्वन्यालोक (२.१) वृत्तितः

४. रामायणे हि करुणो रसः स्वयमादिकविना सूचितः "शोकः श्लोकत्वमागत" इत्येवंवादिना। निर्व्यूढश्च स एव सीतावियोगपर्यन्तमेव स्वयंमुपनिबध्नता।
ध्वन्यालोक (४.५) वृत्तितः।

स्वयं महाभारतकार एव तथ्यमेतत् सङ्केतयामास।[१] महाभारते धर्मशास्त्रेतिहासयो: प्रधानत्वे सत्यपि समालोचका: ग्रन्थमेनं काव्यमेवाऽऽचख्यु:। महाभारतान्तर्गतभगवद्गीताया: निम्नलिखितं श्लोकं ध्वन्यालोककारोऽत्यन्ततिरस्कृतवाच्यध्वनेर्वाक्यप्रकाशताया उदाहरणरूपेण प्रास्तौत् -

या निशा सर्वभूतानां तस्यां जागर्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुने:।।

वाक्यप्रकाशतां स्पष्टीकुर्वन्नानन्दवर्धनो लिलेख -

" अनेन वाक्येन निशार्थो न च जागरणार्थ: कश्चिद् विवक्षित:। किं तर्हि ? तत्त्वज्ञानावहितत्वम्, अतत्त्वपराङ्मुखत्वञ्च मुने: प्रतिपाद्यत इति तिरस्कृतवाच्यस्याऽन्यस्य व्यञ्जकत्वम्।[२]

अत्र श्लोके निशार्थो रात्रिजागरणार्थश्च प्रजागरत्वञ्च न विवक्षितम्। किं तर्हि विवक्षितम्? मुनयस्तत्त्वज्ञानावहिता अतत्त्वपराङ्मुखाश्च भवन्तीत्यर्थ: प्रतिपादितो भवति। अतोऽत्राऽत्यन्ततिरस्कृतवाच्यध्वनेर्व्यञ्जकत्वं वर्तते।

महाभारते काव्यत्वस्याऽन्यान्यप्युदाहरणानि काव्यशास्त्रकृद्भिरुदाहृतानि। परस्पर-विरोधिरसानामङ्गाङ्गिभावङ्गतानां विरोधो निवर्तत, इति नियमस्योदाहरणं महाभारतादेव मम्मटेन प्रस्तुतम्।[३] एवमर्थशक्तिमूलध्वने: प्रबन्धगतभेदस्योदाहरणं मम्मटेन महाभारताद् गृहीतम्। तत्र गृध्रगोमायुसंवाद: -

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले।
कङ्कालबहले घोरे सर्वप्राणिभयङ्करे।।
न चेह जीवित: कश्चित् कालधर्ममुपागत:।
प्रियो वा यदि वा द्वेष्य: प्राणिनां गतिरीदृशी।।
आदित्योऽयं स्थितो मूढा: स्नेहं कुरुत साम्प्रतम्।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन।।
अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।
गृध्रवाक्यात् कथं मूढास्त्यजध्वमविशङ्किता:।।

काव्यप्रकाशे (४.४२) उदाहरणम्

---

१. (क) इतिहासोत्तमादस्माज्जायन्ते कविबुद्धय:। महाभारत - आदिपर्व २.३८५
(ख) इदं कविवरै: सर्वैराख्यानमुपजीव्यते। महाभारत - आदिपर्व २.३८९

२. ध्वन्यालोक (३.१) वृत्ति:

३. अयं स रशनोत्कर्षी पीनस्तनविमर्दन:।
नाभ्यूरूजघनस्पर्शी नीवीविस्रंसन: कर:।। काव्यप्रकाशे (७.६५) उदाहरणम्

महाभारतं प्रबन्धकाव्यं वर्तत इति ध्वनिकारः स्थाने स्थाने जगाद। परन्त्विदं शास्त्रकाव्यरूपछायान्वयि वर्तते, शान्तरसप्रधानञ्च।[1]

रामायणमहाभारतानन्तरमपि संस्कृतकाव्यधारा निरन्तरं प्रावहत्। अष्टाध्यायीकारेण पाणिनिनाऽपि काव्यरचना कृतेति लोके प्रसिद्धम्। पाणिनेः "अधिकृत्य कृते ग्रन्थे" (अष्टाध्यायी ४.३.८७) इति सूत्रेण, तदधिकृत्य च कात्यायनस्य "लुबाख्यायिकेभ्यो बहुलम्" इति वार्तिकेन सिद्धमिदं यत् पाणिनिकात्यायनाभ्यां पूर्वमपि संस्कृतकाव्यधारा भारते प्रवर्तिता बभूव। पाणिनिकृतं काव्यं 'पातालविजयं' रुद्रटटीकाकारो नमिसाधुरुल्लिलेख।[2] स्वकथनपुष्टयेऽसौ पातालविजयकाव्यस्य श्लोकानुद्दधार। राजशेखरेण लिखितम् -

"पाणिनिः जाम्बवतीजयं नाम काव्यं रचयामास।[3]

शास्त्रीयग्रन्थेषु सूक्तिमुक्तावल्यां सुभाषितावल्याञ्च पाणिनिमधिकृत्य केचन श्लोका उद्धृताः सन्ति। यथा -

**उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।**
**यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम्।।**
**ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्।**
**प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार।।**

पाणिनेरनन्तरं वररुचिनाऽपि (कात्यायनेन) हि काव्यरचना कृता। तद्विरचितमेकं काव्यं स्वर्गारोहणमवर्तत। तत्काव्यं पतञ्जलिना वाररुचं काव्यं प्रोक्तम्[4]। पतञ्जलिस्तस्य काव्यस्य कांश्चन श्लोकानुद्धृत्य तेषां व्याख्यामपि चकार। एते श्लोकाः कैयटेन कात्यायनरचिताः प्रोक्ताः। समुद्रगुप्तोऽपि कृष्णचरिते वररुचेः काव्यमिदमुल्लिलेख।[5]

महाभाष्ये "लुबाख्यायिकेभ्यो बहुलम्" इति वार्तिकस्य व्याख्यां कुर्वन् पतञ्जलिः 'वासवदत्तां', 'सुमनोत्तरां' 'भैमरथीं' चेति तिस्र आख्यायिका असूचयत्। अतः सिद्धमिदं

---

१. महाभारतेऽपि शास्त्रकाव्यरूपच्छायान्वयिनि वृष्णिपाण्डवविरसावसानवैमनस्यदायिनीं समाप्तिमुपनिबध्नता महामुनिना वैराग्यजननतात्पर्यं प्राधान्येन स्वप्रबन्धस्य दर्शयता मोक्षलक्षणः पुरुषार्थः शान्तो रसश्च मुख्यतया विवक्षाविषयत्वेन सूचितः।
ध्वन्यालोक (४.५) वृत्तितः।

२. रुद्रटः - काव्यालङ्कार (२०८) सूत्रे नमिसाधुटीका।

३. स्वस्ति पाणिनये तस्मै यस्य रुद्रप्रसादतः।
आदौ व्याकरणं काव्यमनु जाम्बवतीजयः।। सूक्तिमुक्तावली

४. पाणिनीयसूत्रे (४.३.१०१) महाभाष्यम्।

५. यः स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि।
काव्येन रुचिरेणैव ख्यातो वररुचिः सदा।। कृष्णचरितम्

यत्पतञ्जलिपूर्वमाख्यायिकानां रचना प्रावर्तत। पतञ्जलिरपि सम्भवतः महानन्दं नाम महाकाव्यं रचितवान्। समुद्रगुप्तेन कृष्णचरिते महाकाव्यस्याऽस्योल्लेखः कृतः।[1]

पतञ्जलिर्महाभाष्ये कंसवधबलिबन्धयोः काव्ययोरुल्लेखं विधाय तयोरभिनयमप्यसूचयत्। महाभाष्ये पूर्ववर्णितानामनेकेषां कवीनां काव्यानामुद्धरणानि प्रस्तुतानि वर्तन्ते। तेषु विलक्षणं काव्यसौन्दर्यं लक्ष्यते। महाभाष्यस्याऽनेकान्युदाहरणानि स्वयं काव्यरूपाणि सन्ति। यथा - "उपमानानि सामान्यवचनै" रिति सूत्रस्य व्याख्यायामुदाहरणमस्ति -

**चन्द्रमुखी देवदत्तेति बहवश्चन्द्रे गुणा वा या चाऽसौ प्रियदर्शना सा गम्यते।।**

इदमपि सिद्धमेव यन्महाभाष्यकालपर्यन्तं रूपकाणां रचनाया अभिनयस्य च विकासो प्रवर्तितो बभूव। महाभाष्यकारेण नाट्यरचनासङ्केताः प्रस्तुता एव। अभिनयस्याऽपि प्रमाणानि प्रस्तुतानि। अभिनेतॄणां पत्न्यस्तेन निम्नशब्देषु वर्णिताः -

**" व्यजनानि पुनः नटभार्यावद् भवन्ति। नटानां स्त्रियो रङ्गं गता यो वा पृच्छति कस्य यूयं तं तं तवेत्याहुः।"**

" **आख्यातोपयोग** (पाणिनीयाष्टाध्यायी १.४.२९)" इति सूत्रस्य भाष्यं प्रस्तुवन् पतञ्जलिर्लिखति -

**"यदारम्भका रङ्गं गच्छन्ति नटस्य श्रोष्यामो ग्रन्थिकस्य श्रोष्यामः ;'**

उपरिलिखितं विवेचनं प्रमाणयति यत् पतञ्जलिसमयपर्यन्तं काव्यरचनायाः, दृश्यश्रव्यकाव्यानां लेखनस्य सगुणो विकासः समभवत्।

पतञ्जल्यनन्तरं काव्यरचनाविकासस्य सुन्दरं समुज्ज्वलं प्राञ्जलञ्च रूपमवलोक्यते। नाऽप्यत्र कोऽपि संशयः। कालिदासशूद्रकाश्वघोषभारविसुबन्धुबाणमाघदण्डिहर्षभवभूति-राजशेखरादीनां कविवराणां श्रेष्ठकाव्यरूपाण्युदाहरणानि समुपलभ्यन्ते। विकसितकाव्य-रचनापरम्परेयमिदमपि साधयति यत्काव्यरचनया सह काव्यरचनानियमानां समालोचना-सिद्धान्तानाञ्च निर्मितिरपि प्रारभत। काव्यशास्त्रस्येतिहासवर्णनप्रसङ्गे प्राचीनकाव्य-लेखनविकसितपरम्परायाः वर्णनस्याभिप्रायोऽयमेव, यत्काव्यरचनया सह काव्यरचनानियमानां काव्यसमालोचनासिद्धान्तानाञ्च निर्मितिः स्वाभाविकरूपेणैव प्रारभते। अर्थात् काव्यरचनाया अस्मिन् युगे काव्यशास्त्ररचनाऽपि प्रारब्धा।

---

१. पतञ्जलिर्मुनिवरो नमस्यो विदुषां सदा।
महानन्दमयं काव्यं योगदर्शनमद्भुतम्।।
योगव्याख्यानभूतं तद् रचितं चित्तदोषहम्।। कृष्णचरितम्

### ३. काव्यशास्त्रीयसिद्धान्तानां रचनाया आरम्भो भरतपूर्वकालीनाश्चाचार्याः

भारतीयकाव्यशास्त्ररचना कदा प्रारब्धेति समयनिर्धारणं नाऽतिसुकरम्। काव्यशास्त्रविषयकः प्रथमो ग्रन्थो भरतकृतनाट्यशास्त्रमेवोपलभ्यते। स एव प्राचीनतमो ग्रन्थः। परं न त्वसौ सम्पूर्णरूपेण काव्यशास्त्रविषयान् प्रतिपादयति। विशेषतस्तु तत्र रूपकसम्बन्धिनो विषयाः निरूपिताः वर्तन्ते। नाट्यशास्त्रसम्बन्धेन येषां रसगुणालङ्कारादीनां तत्त्वानां समावेशस्तत्राऽऽवश्यकोऽवर्तत, तान्येव तत्त्वानि तत्र लेखकेन समावेशितानि। भरतानन्तरं विशुद्धरूपेण काव्यशास्त्रीयो ग्रन्थो भामहकृतकाव्यालङ्कार एव वर्तमानसमये समुपलब्धो मनीषिभिः। भरतपूर्वं यदि कोऽपि ग्रन्थः समुपलभ्यते, यत्र केषाञ्चित्काव्यशास्त्र-तत्त्वानामुपदेशः, स तु यास्ककृतो निरुक्तग्रन्थः। अत्रोपमाया विस्तृतं विवेचनमस्ति। पाणिनेरष्टाध्याय्यां पतञ्जलेश्च महाभाष्ये कानिचित् काव्यशास्त्रतत्त्वानि सन्निहितानि सन्ति।

भरतपूर्वं काव्यशास्त्रविषयकग्रन्थानां रचना न सञ्जातेति कथनमविश्वसनीयमेव। तस्मिन् काले ग्रन्थाः मनीषिभिर्लिखिताः, परं तेषां समुपलब्धिर्वर्तमानसमये नाऽस्ति। राजशेखरेण काव्यमीमांसाग्रन्थे काव्यशास्त्रोद्गमः प्रकाशितः। यद्यपि तस्य प्रतिपादनं किञ्चित्कल्पनाजन्यमेव प्रतिभाति, तथापि तेन काव्यशास्त्रोद्गमो यथाकथञ्चिदमनुमातुं शक्यते।

राजशेखरेण लिखितम् -

श्रीकण्ठशिवो ब्रह्मवैकुण्ठादिभ्यश्चतुःषष्टिशिष्येभ्यः काव्यविद्यामुपदिदेश। तदनन्तरं ब्रह्मा स्वमानसजन्येभ्यः शिष्येभ्यो विद्यामेतामुपदिदेश। शिष्येष्वेतेषु सरस्वतीसूनुः काव्यपुरुषो वन्दनीयतमो बभूव। प्रजाहिताकांक्षया प्रजापतिरेनं काव्यपुरुषमेव काव्यविद्याप्रवर्तनाय नियुयोज। असौ काव्यपुरुषोऽष्टादशाधिकरणेषु विद्यामेनां निबध्य स्वाष्टादशशिष्यानपाठयत्।[1]

राजशेखरेण पुनर्लिखितम् -

एवमियं काव्यविद्याऽष्टादशाधिकरणयुक्ताऽवर्तत। काव्यपुरुष एकमेकमधिकरणमेकमेकं शिष्यमपाठयत्। अत्र सहस्राक्षः (इन्द्रः) कविरहस्यमुक्तिगर्भ औक्तिकं सुवर्णनाभो रीतिनिर्णयं प्रचेता आनुप्रासिकं (अनुप्रासविषयम्) यमो यमकं चित्राङ्गदश्चित्रं शेषः शब्दश्लेषं पुलस्त्यो वास्तवं (स्वभावोक्तिम्) औपकायन औपम्यं (उपमाविषयम्) पराशरोऽतिशयोक्तिमुतथ्योऽर्थश्लेषं

---

१. अथातः काव्यं मीमांसिष्यामहे, यथोपदिदेश श्रीकण्ठः परमेष्ठिवैकुण्ठादिभ्यश्चतुः-षष्टिशिष्येभ्यः। सोऽपि भगवान् स्वयम्भूरिच्छाजन्येभ्यः स्वान्तेवासिभ्यः। तेषु सारस्वतेयो वृन्दीसामपि वन्द्यः काव्यपुरुष आसीत्। तं च सर्वसमयविदं दिव्येन चक्षुषा भविष्यदर्थदर्शिनं भूर्भुवःस्वस्त्रितयवर्तिनीषु प्रजासु हितकाम्यया प्रजापतिः काव्यविद्याप्रवर्तनाय प्रायुङ्क्त। सोऽष्टादशाधिकरणीं दिव्येभ्यः काव्यविद्यास्नातकेभ्यः सप्रपञ्चं प्रोवाच।

काव्यमीमांसा पृ० १-३

कुबेर उभयालङ्कारविषयं कामदेवो विनोदविषयं भरतो रूपकनिरूपणं नन्दिकेश्वरो रसाधिकारं धिषणो दोषाधिकरणमुपमन्युर्गुणोपादानं कुचुमारश्चौपनिषदिकमपठत्। तदनन्तरं सर्व एव स्वस्वशास्त्राणि व्यरचयन्।[१]

राजशेखरकृतवर्णनस्याऽभिप्रायोऽयमेव यदेवमियं काव्यविद्या विभिन्नैरष्टादशभिराचार्यैरष्टादशस्वधिकरणेषु विभाजिता विरचिता च। परं विभिन्नेषु विभागेषु विभक्ता सा छिन्ना भिन्ना च सञ्जाता। तामेव संक्षिप्याऽसौ राजशेखरोऽष्टादशस्वधिकरणेषु निबध्नाति। परन्तु वर्तमानसमये काव्यमीमांसायाः प्रथममधिकरणमेव (कविरहस्यम्) समुपलभ्यते।

काव्यविद्याया उद्‌गमविषयकमिदं राजशेखरवक्तव्यं केचन समालोचकाः कल्पनाप्रसूतमेव यद्यपि वदन्ति, तथापि न तत् तथा सर्वथा कल्पनाजन्यमेव। राजशेखरेण काव्यविद्याया येषामष्टादशाधिकरणानामष्टादशाचार्यकृतानामुल्लेखो विहितस्तेषामाचार्याणां केषाञ्चन नामान्यन्यत्राऽपि समुपलभ्यन्ते। ग्रन्थाश्चाऽपि केचन प्राप्यन्ते।

सुवर्णनाभकुचमारयोर्नामनी कामसूत्रे समुपलभ्येते। कामसूत्रे सुवर्णनाभः कामसूत्रसाम्प्रयोगिकखण्डस्याऽऽचार्यः प्रोक्तः,[२] कुचुमारश्चौपनिषदिकखण्डस्याऽऽचार्यः।[३] राजशेखरो नन्दिकेश्वरं रसस्याऽधिष्ठातारं वदति। उत्तरवर्तिनि साहित्ये रसविवेचनविषये नन्दिकेश्वरो बहुधा प्रसिद्धः प्रवक्ता। यद्यपि न तस्य कोऽपि रसविषयको ग्रन्थो ह्युपलभ्यते, तथापि कामशास्त्रसङ्गीताभिनयविशेषज्ञरूपेणाऽसौ प्रायशः समीक्षकैरुल्लिखितः। पञ्चसायकरतिरहस्यग्रन्थयोर्नन्दिकेश्वरः कामशास्त्राचार्यरूपेण स्मृतः। सङ्गीतरत्नाकरग्रन्थेऽसौ सङ्गीताचार्यः स्मृतः। नन्दिकेश्वरस्य रसविषयको ग्रन्थोऽभिनवगुप्तेनाऽपि न कदाचित् सम्प्राप्तः। तस्मिन्नापि समये ग्रन्थोऽसावनुपलब्ध एवाऽऽसीत्। यतोऽसौ टीकायामभिनवभारत्यां नन्दिकेश्वरमतं कीर्तिधरसन्दर्भेण प्रास्तौत्।[४] शारदातनयेन कथितम् - नन्दिकेश्वरो भरतं नाट्यं शिक्षयामास।[५]

---

१. तत्र कविरहस्यं सहस्राक्षः समाम्नासीत्। औक्तिकमुक्तिगर्भः, रीतिनिर्णयं सुवर्णनाभः, आनुप्रासिकं प्रचेताः, यमकं यमः, चित्रं चित्राङ्गदः, शब्दश्लेषं शेषः, वास्तवं पुलस्त्यः, औपम्यमौपकायनः, अतिशयं पराशरः, अर्थश्लेषमुतथ्यः, उभयालङ्कारिकं कुबेरः, वैनोदिकं कामदेवः, रूपकनिरूपणीयं भरतः, रसाधिकारिकं नन्दिकेश्वरः, दोषाधिकरणं धिषणः, गुणौपादानिकमुपमन्युः, औपनिषदिकं कुचमार इति। ततस्ते पृथक् पृथक् स्वशास्त्राणि विरचयाञ्चक्रुः। काव्यमीमांसा पृ० ३-५

२. कामसूत्र १.१.१३।।

३. कामसूत्र १.१.१७।।

४. यत्कीर्तिधरेण नन्दिकेश्वरमतमत्रागमित्वे दर्शितं तदस्माभिः साक्षान्न दृष्टं तत्प्रत्ययात्तत् लिख्यते संक्षेपतः। भरतनाट्यशास्त्र - अभिनवभारती टीका अध्याय २९

५. भावप्रकाशन - अध्याय ३

नन्दिकेश्वरस्य ग्रन्थ एकोऽभिनयदर्पणाभिधानो मनमोहनघोषमहोदयस्य सम्पादकत्वे चतुस्त्रिंशदधिकैकोनविंशतिशतितमेऽब्दे (१९३४) प्रकाशितो बभूव। अस्य प्रकाशनं कलकत्ता संस्कृत सीरीज इति संस्थया कृतम्। अस्मिन् ग्रन्थे चतुर्विंशत्यधिकशतत्रय (३२४) श्लोकाः सन्ति। अत्र विषयवस्तु सिद्धान्तसरणिश्च भरतनाट्यशास्त्रेण यद्यपि संवदति, तथापि विभिन्नत्वमपि पर्याप्तमस्ति। पी०वी० काणे महोदयः प्रवक्ति - अभिनयदर्पणस्य रचना नाट्यशास्त्रोत्तरकालीना वर्तते।

राजशेखरो भरतं रूपकनिरूपकं ब्रवीति। तस्य कथनमिदं यथार्थमेव। भरतलिखितं नाट्यशास्त्रं कथनमेतत् प्रमाणयति। राजशेखरेणोल्लिखितानामन्येषामाचार्याणामस्तित्वप्रमाणानि वर्तमानसमये नोपलभ्यन्ते।

अलङ्कारादिविषयलेखकानां मध्ये काश्यपस्य नाम प्राचीनसाहित्ये समुपलभ्यते। रागविषयकं काश्यपमतमभिनवगुप्तो ह्युद्धृतवान्। अभिनवभारतीटीकाया हस्तलिखितपाण्डुलिपौ काश्यपस्य पञ्चसप्ततिश्लोकाः (७५) समुद्धृताः सन्ति। सङ्गीतरत्नाकरटीकायां (२.२.३१) काश्यपस्य पदानि मल्लिनाथेनोद्धृतानि सन्ति। अग्निपुराणे (३३६.२२) काश्यपश्छन्दः-शास्त्ररचयितृरूपेण प्रोक्तः। नान्यदेवः काश्यपं प्राचीनमाचार्यं प्राह। काव्यादर्शस्य हृदयङ्गमायां टीकायां टीकाकारो लिखति - काश्यपवररुचिप्रभृतिभिराचार्यैरलङ्कारशास्त्रविषयकाः ग्रन्थाः विरचिताः।[१] काव्यादर्शस्यैव वादिजंघलकृतायां श्रुतानुपालिनीटीकायामपि काश्यपः प्राचीनाचार्यः प्रोक्तः।

अन्येषामपि केषाञ्चिदाचार्याणां नामानि प्राचीनेष्वलङ्कारग्रन्थेषु समुपलभ्यन्ते। यद्यप्येषामाचार्याणां कृतीनां केऽपि सन्दर्भाः नोपलभ्यन्ते, तथापि काव्यशास्त्रकृत्सु ते प्रसिद्धा एव। यथा -

सदाशिवगौरीवासुकिनारदागस्त्यव्यासाञ्जनेयब्रह्ममतङ्गकोहलतुम्बरुवृद्धकाश्यप-विशाखिलनन्दिदन्तिलवररुचिब्रह्मदत्तनन्दिस्वाम्यादयः।

उपर्युक्तविवेचनं साधयति सुस्पष्टरूपेण यद् भरतपूर्वकाले काव्यशास्त्रविषयकानां ग्रन्थानां रचना ध्रुवं सञ्जाता, परं न ते ग्रन्था इदानीं समुपलभ्यन्ते। तथापि वेदाङ्गेषु काव्यशास्त्रसम्बन्धिविविधविषयाणां विवेचनं सूक्ष्मतया यत्र तत्र समुपलभ्यते। अत्र द्वौ वेदाङ्गौ विशेषरूपेण विवेचनीयौ द्रष्टव्यौ वर्तेते - निरुक्तं व्याकरणञ्च।

## ४. निरुक्ते काव्यशास्त्रस्य विवेचनम्

वेदाङ्गनिरुक्ते ह्युपमालङ्कारस्य संक्षेपेण व्यावहारिकविवेचनं विद्यते। भाषाया विवेचनं कुर्वन् लेखको भाषालङ्करणानामलङ्काराणामपि विवेचनं करोत्येव स्वाभाविकरूपेण। यास्कः

---

१. पूर्वेषां काश्यपवररुचिप्रभृतीनामाचार्याणां लक्षणशास्त्राणि संहृत्य पर्यालोच्य........।।
काव्यादर्शस्य (१.२) हृदयङ्गमाटीका

स्वयमप्युपमालङ्कारं व्याख्यातवानथ च गार्ग्याचार्यस्य मतमप्यस्मिन् विषये लिलेख। यास्ककृतमुपमालक्षणं विद्यते -

**अथात उपमा यद् अतत् तत्सदृशं तदासां कर्म इति गार्ग्यः। ज्यायसा वा गुणेन प्रख्यातमेनं वा कनीयांसं वा अप्रख्यातं वोपमिमीते अथापि कनीयसा ज्यायांसम्।**[1]

अर्थात्, अथ उपमा निरूप्यते। यत्रैकं वस्तु द्वितीयाद् भिन्नमपि तत्सदृशं भवति, तदुपमानानां कर्म भवति इति गार्ग्यस्याऽभिमतं विद्यते। उपमायामधिकगुणवता प्रख्यातेन वोपमानेन सह स्वल्पगुणस्याऽप्रख्यातस्य वोपमेयस्य सादृश्यं वर्ण्यते। अथवा स्वल्पगुणवतोपमानेन सहाऽधिकगुणस्योपमेयस्य सादृश्यं वर्ण्यते।

निरुक्ते ह्युपमायाः सामान्यमिदं लक्षणं निर्दिष्टमस्ति। उत्तरवर्तिभिराचार्यैरपि लक्षण-मुपमायाः निर्दिष्टमिदमेव सुसूक्ष्मान्तरेण सह। निरुक्तकारोऽधिकगुणेनोपमानेन सह न्यून-गुणस्योपमेयस्य सादृश्यमुपमायां निर्दिशन् स्वल्पगुणेनोपमानेन सहाऽधिकगुणस्योपमेयस्य सादृश्यमपि निर्दिशति। परमुत्तरवर्तिन आचार्याः द्वितीयायामवस्थायां सादृश्यमुपमादोषमेवाऽऽ-मनन्ति। सा हीनोपमा कथ्यते। परं निरुक्तकारो द्वयोरेवाऽवस्थयोरुपमामुत्तमगुणान्वितामेव मनुते। न तु द्वितीयायामवस्थायां कमपि दोषं स्वीकरोति। उपमालङ्कारस्य वेदोक्तमुदाहरणं निरुक्तकारेण प्रस्तुतम् -

**तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम्।**
**इयन्ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयदभिरङ्गैः।।**

**ऋग्वेद १०.४.६**

अस्मिन् मन्त्रे ह्युपमालङ्कारः। तत्रेन्द्रियानां संयमनमुपमेयरूपेण वनवासिनां तस्कराणां दृढत्वमुपमानरूपेण वर्तते।

उपमावाचकाः शब्दा अपि निरुक्ते परिगणिताः। ते च सन्ति - इव, यथा, था, न, चित्, नु, आ, वदित्यादयः। उदाहरणानि च तत्र सन्ति -

(i) **यथा** - यथा वातो यथा वनं यथा समुद्र एजति।
(ii) **आ** - जार आ भगम् (जार इव भगम्)
(iii) **था** - तं प्रत्नथा पूर्वथा विश्वथा (प्रत्न इव, पूर्व इव, विश्व इव)
(iv) **वत्** - प्रियमेघवत्, अत्रिवत्, जातवेदो विरूपवत्।

उपमायाः भेदा अपि निरुक्ते परिगणिताः। तत्र पञ्च भेदाः सन्ति - कर्मोपमा, भूतोपमा, रूपोपमा, सिद्धोपमा, लुप्तोपमा च।

(i) **कर्मोपमा** - उपमावाचकेषु पदेषूपस्थितेषु सत्सु कर्मोपमा भवति।
(ii) **भूतोपमा** - उपमेये स्वयमुपमाने सति भूतोपमा भवति।

---

१. निरुक्त ३.१३

(iii) **रूपोपमा** - उपमेयस्योपमानेन सह स्वरूपसाम्ये सति रूपोपमा भवति।

(iv) **सिद्धोपमा** - अत्रोपमा स्वतः सिद्धा भवति। एकेन विशिष्टगुणेन कर्मणा वा अन्यवस्तुभ्यो बृहत्तरा भवति।

(v) **लुप्तोपमा** - अत्र वाचकशब्दो लुप्यते। अत्रोदाहरणानि वर्तन्ते - "काकः पुरुषः", "सिंहः पुरुष" इत्यादयः। इयमर्थोपमाऽप्युच्यते। उत्तरवर्तिनि काले ह्युपमेयमेव रूपकालङ्कारररूपेण प्रतिपादिता ह्याचार्यैः।

यास्कस्यैतेन विवेचनेन प्रतिपाद्यते, यत् तस्मिन् युगे ह्यलङ्कारशास्त्रविकासः पदं लेभे।

### ५. व्याकरणशास्त्रे काव्यशास्त्रविवेचनम्

व्याकरणशास्त्रस्य गणना षट्सु वेदाङ्गेषु विधीयते। प्राचीनव्याकरणग्रन्थेषु पाणिनिकृतं व्याकरणम् (अष्टाध्यायी) सर्वाङ्गसम्पूर्णमुपलभ्यते। तस्याध्ययनं पाणिनिपूर्वमपि व्याकरणशास्त्र-विकासं सूचयति, यद्यपि न तद्विषयकाः ग्रन्था समुपलभ्यन्ते। अष्टाध्याय्यां काव्यशास्त्र-तत्त्वानि समवलोक्यन्ते। तत्रोपगालङ्कारसम्बन्धिनः कतिपये पारिभाषिकशब्दाः सन्ति। अनेन प्रतीयते, यत् पाणिनिसमये शास्त्रीयविवेचनमुपमालङ्कारस्य काव्यशास्त्रविद्भिः सम्यक् सम्पादितम्।

उपमालङ्कारस्याङ्गानि चत्वारि सन्ति - उपमानोपमेयसाधारणधर्म (सामान्य) वाचक-शब्दाः। पाणिनीयसूत्रेषु तेषां सङ्केतो विद्यते -

**तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्। अष्टा० २.३.७२**
**उपमानानि सामान्यवचनैः। अष्टा० २.१.५५**
**उपमितं व्याघ्रादिभिः सामान्याप्रयोगे। अष्टा० २.१.५६**

सूत्रेष्वेतेषु उपमितोपमानसामान्योपमाशब्दप्रयोगाः पाणिनिसमयेऽलङ्काराणां शास्त्रीयविवेचनकल्पनाविकासं साधयन्ति। अथ च कृत्तद्धितसमासान्तप्रत्ययेषु समासेषु स्वरविधानेषु सादृश्योत्पन्नप्रभावाणामपि वर्णनं पाणिनिना कृतम्। एतदेवोपजीव्योत्तरवर्तिभिः काव्यशास्त्रिभिरुपमाभेदाः निरूपिताः।

उदात्तादिस्वरविधानेषु सादृश्योत्पन्नप्रभावाणां स्पष्टोल्लेख आचार्येण शान्तनवनाम्ना फिट्सूत्रेषु विहितः।[1] अथ "उपमानानि सामान्यवचनै" रिति सूत्रस्य व्याख्यां कुर्वन्नाचार्यः पतञ्जलिरुपमानपदमेवं व्याकरोत्[2] -

अज्ञातवस्तुनिर्धारणाय मानशब्दप्रयोगो विधीयते। उपमानमपि मानतुल्यं पदं भवति। तत्तु वस्तु सामान्यरूपेण निर्दिशति, नात्यन्तरूपेण। यथा "गौरिव गवय" इत्यत्र गवयो

---

१. फिट्सूत्र २१६.४.१८

२. मानं हि नाम अनिर्ज्ञातार्थमुपादीयते अनिर्ज्ञातमर्थं ज्ञास्यामीति। तत्समीपे यन्नात्यन्ताय मिमीते तद् उपमानं गौरिव गवय इति। अष्टाध्यायीसूत्रे (२.१.५५) महाभाष्यम्।

गोसदृशो भवति, न तु गौरेव।

यद्यप्यत्रोदाहरणे चमत्कारस्याऽभावात् नोपमालङ्कारं मन्यन्ते काव्यशास्त्रिणस्तथापि शास्त्रदृष्ट्योपमालङ्कारस्य रूपमत्र सुस्पष्टं प्रतिभात्येव।

## ६. काव्यशास्त्रविकासस्य क्रमविभाजनम्

उपर्युक्तविवेचनेन सुस्पष्टमेव काव्यानां विकासस्य रचनायाश्च वैदिकयुगादेवाऽऽरम्भभावः। काव्यरचनया सह रचनापद्धतिनिर्णायिका काव्यसमीक्षासाधिका च काव्यशास्त्ररचना स्वयमेव सिद्धा। अतिप्राचीनयुगादेव, वैदिककालादेव काव्यसमीक्षाविषयकग्रन्थानां रचनासरणिः प्रचलितेति कल्पना स्वाभाविक्येव। परन्तु भरतपूर्वकालीनो ग्रन्थो न कोऽपि काव्यशास्त्रविषयको लभ्यते। काव्यानां शास्त्रीयस्वरूपनिरूपकं पुस्तकं प्राचीनतमं भरतप्रणीतं नाट्यशास्त्रमेव समुपलभ्यते। ई०पू० द्वितीयशताब्दिकालीनो गण्यते भरतो मुनिरितिहासविद्भिः। न च तत्पूर्वकालीनः कश्चिदपि ग्रन्थो विशुद्धकाव्यशास्त्रविषयकोऽद्यावधि सम्प्राप्तः। काव्यानां शास्त्रीयस्वरूपनिरूपकं प्राचीनतमं पुस्तकमतो भरतमुनिकृतं नाट्यशास्त्रमेव मन्तव्यम्।

भरतमनु काव्यशास्त्रीयो ग्रन्थो वर्तते - भामहस्य काव्यालङ्कारः। तदनन्तरं काव्यशास्त्रविषयप्रतिपादकग्रन्थरचनाप्रवाहः सततं प्रवर्धमानो बभूव। स चाऽष्टादशशताब्दिपर्यन्तं परिलक्ष्यते। एतस्मिन् दीर्घावधौ संख्यातीतानां काव्यशास्त्रविषयकग्रन्थानां रचना सञ्जाता। सकले चाऽस्मिन् सुदीर्घकाले प्रतिपादितानां काव्यशास्त्रसिद्धान्तानां क्रमिकविकासश्चतुर्षु विभागेषु विभज्यते -

(i) **आरम्भिकः कालः**
(ii) **रचनात्मकः कालः**
(iii) **निर्णयात्मकः कालः**
(iv) **व्याख्यात्मकः कालः**

काव्यशास्त्रस्य विकासक्रमे यद्यपि न काऽपि कालविभाजननिर्णयात्मिका रेखा कर्षयोग्या, तथापि कालविभाजनमेतद् विकासक्रमं कथमपि द्योतयत्येव। संक्षेपेण स्पष्टीकरणमेतस्योचितमेव।

### (i) आरम्भिकः कालः

आरम्भिककालस्याऽस्य प्रारम्भो वैदिकयुगादेव विलोक्यते। वैदिकसाहित्ये, तदनु च निरुक्तव्याकरणोपनिषद्रामायणमहाभारतादिसाहित्ये काव्यरूपिण्यस्तथाविधा रचना वर्तन्ते, यासामध्ययनेन तेषु युगेषु काव्यशास्त्रस्य निर्मितिर्येन केनाऽपि रूपेणाऽवभासत एव। परन्तु तस्य युगस्य न कोऽपि विशुद्धकाव्यशास्त्रविषयको ग्रन्थो वर्तमानकाले समुपलब्धो विद्वद्भिः। काव्यशास्त्रनिरूपकं प्राचीनतमं पुस्तकं भरतकृतं नाट्यशास्त्रमेव। अत्र चत्वारोऽलङ्काराः,

दश गुणाः, दश च दोषाः नाट्यशास्त्रकृता निरूपिताः। निरूपणञ्चेदं काव्यशास्त्रस्य वाऽलङ्कारशास्त्रस्य वा प्रारिम्भकीं रूपरेखामेव धत्ते।

भरतमनु काव्यशास्त्रकृत्सु मेधाविनो नाम प्रकीर्त्यति समीक्षकैः। मेधाविनो ग्रन्थस्योद्धरणान्येवाऽन्यग्रन्थेषूपलभ्यन्ते, न च ग्रन्थस्योपलब्धिर्वर्तते वर्तमानकाले। अथ च प्राचीनपरम्परामनुसृत्याग्निपुराणमपि तस्यैव कालस्य कृतिः। पुराणेऽस्मिन् बहुभिर्विषयैः सह ३३६-३४७ इत्येकादशस्वध्यायेषु काव्यशास्त्रसम्बन्धिनां तत्त्वानां विवेचनं पुराणकारेण कृतम्। बहवः समीक्षकाः पुराणमेतदुत्तरवर्तिकालीनं प्रमाणयन्ति। तथापि भारतीयपरम्परामनुसृत्याऽग्निपुराणं प्रारम्भिककालीनमेवाऽवगन्तव्यम्। धर्मकीर्तेर्विष्णुधर्मोत्तरपुराणस्य च तथैव सरणिरवगन्तव्या।

(ii) रचनात्मकः कालः

काव्यशास्त्रविकासक्रमे द्वितीयः कालो वर्तते रचनात्मकः। भामहादारभ्याऽयं काल आनन्दवर्धनपूर्वसमयवर्त्यवगन्तव्यः। अस्मिन् काले काव्यशास्त्रान्तर्गतानेकसम्प्रदायाः प्रादुरभूवन्। एषां सम्प्रदायानां तदाविर्भावकानामाचार्याणाञ्चोल्लेखो निम्नवद् वर्तते -

**(क) अलङ्कारसम्प्रदाय : - भामहो, दण्डी, उद्भटो रुद्रटश्च**

**(ख) रीतिसम्प्रदायः - वामनः**

**(ग) रसम्प्रदायः - भरतोक्तरससूत्रस्य व्याख्यातारः।**

काव्यशास्त्रविकासक्रमकालोऽयमतिमहत्त्वं दधाति। युगेऽस्मिन् काव्येष्वलङ्काराणां महत्त्वं प्रतिपाद्य मनीषिभिः साधितम् - काव्येषु शोभा प्राधान्येनाऽलङ्कारैर्निष्पाद्यते। भामहदण्ड्युद्भटरुद्रटैरलङ्काराणां विशदविवेचनं विहितम्। दण्डी त्वलङ्कारैः सह रीतिमपि व्याख्यातवान्। वामनस्तु प्राधान्येन गुणान् काव्यशोभाविधायकान् प्रतिपाद्य रीतिं काव्यस्याऽऽत्मानं साधयामास। अलङ्कारास्तु शोभातिशयहेतवो भवन्तीति तेन प्रोक्तम्। अस्मिन् युगे भरतरससूत्रं केचन काव्यशास्त्रिणो हि सविशदं व्याचख्युः। तत्र च प्रमुखाः व्याख्याकारा अवर्तन्त भट्टलोल्लटशङ्कुकभट्टनायकाभिनवगुप्ताः। अत्राऽभिनवगुप्तो ध्वनिकारानन्दवर्धनपरवर्ती शेषाश्च पूर्ववर्तिनोऽभवन्।

(iii) निर्णयात्मकः कालः

काव्यशास्त्रविकासक्रमे कालोऽयं सर्वातिशायि महत्त्वं धत्ते। आनन्दवर्धनो ध्वनेः स्वरूपं विशदीकृत्य तमेव काव्यस्याऽऽत्मानं प्रत्यापादयत्। तेन निर्णीतम् - "काव्ये ध्वनिरेव प्रमुखतममाह्लादकं तत्त्वं वर्तते। रसगुणरीत्यलङ्कारादीनि सर्वाण्येव तत्त्वानि तस्यैवोत्कर्षकानि सन्ति। ध्वन्यालोकस्य टीकाकारोऽभिनवगुप्तो ध्वनिकारं समर्थयामास। तदनन्तरं मम्मटाचार्यः काव्यप्रकाशग्रन्थं विरच्य ध्वनिविरोधिमतानां युक्तीः सबलप्रमाणैः खण्डितवानथ च निर्णयात्मकरूपेण ध्वनिं प्रस्थापयामास। मम्मटानन्तरं न कोऽपि मनीष्यलङ्कारवादी ध्वनिसिद्धान्तं खण्डयितुं साहसञ्चक्रे। अथ च "ध्वनिः काव्यस्याऽऽत्मेति" सिद्धान्तः सर्वैरेव काव्यशास्त्रकृद्भिरन्तिमरूपेण निस्सन्देहं स्वीकृतः।

आनन्दवर्धनानन्तरं कुन्तको वक्रोक्तिजीवितं ग्रन्थं विरच्य वक्रोक्तिसम्प्रदायं प्रवर्तयामास। परं न तस्य मतं विद्वद्भिः समादृतम्। इत्थञ्चाऽस्मिन् काले द्वौ सम्प्रदायौ विकासभावं सम्प्राप्तौ - ध्वनिसम्प्रदायो वक्रोक्तिसम्प्रदायश्च। अस्य युगस्य प्रमुखा आचार्या अवर्तन्त - आनन्दवर्धनोऽभिनवगुप्तः कुन्तको महिमभट्टो रुद्रटो भोजराजो धनिको धनञ्जयो मम्मटश्च।

(iv) **व्याख्यात्मकः कालः**

काव्यशास्त्रविकासक्रमे चतुर्थः कालो व्याख्यात्मकः काल उच्यते। अयं कालो मम्मटानन्तरमष्टादशशताब्द्यां विश्वेश्वरपर्यन्तं विततो वर्तते। अस्मिन् युगे बहुभिः सुप्रसिद्धैः काव्यशास्त्राचार्यैः काव्यस्य सर्वाण्यङ्गानि विवेचयद्भिः सर्वाङ्गसम्पूर्णाः ग्रन्थाः विरचिताः। एष्वाचार्येषु हेमचन्द्रविश्वनाथजयदेवजगन्नाथविश्वेश्वरादयः प्रथिताः कीर्तिशालिनो मनीषिणो गण्यन्ते। मौलिकचिन्तनं कुर्वन्तोऽप्येत आचार्याः प्राचीनाचार्याणामेव मन्तव्यानि, विशेषतो ध्वनिमेव पोषितवन्तः। परन्त्वत्र क्षेमेन्द्रस्याऽभिनवगुप्तशिष्यस्य विचारसरणिर्नूतनमेव सिद्धान्तमाविश्चकार। औचित्यविचारचर्चाग्रन्थं विरच्याऽसौ सम्प्रदायमौचित्यं प्रवर्तयामास। अस्य युगस्य प्रमुखा आचार्याः सन्ति -

(क) **ध्वनिसम्प्रदायस्याचार्याः**

रुय्यको विश्वनाथो हेमचन्द्रो विद्याधरो विद्यानाथो जयदेवोऽप्पयदीक्षितो जगन्नाथश्चेत्येवमादयः।

(ख) **रसव्याख्यातार आचार्याः -**

शारदातनयः शिङ्गभूपालो रूपगोस्वामी भानुदत्तश्चेत्येवमादयः।

(ग) **औचित्यं काव्यस्यात्मेति सिद्धान्तवादिन आचार्याः** - क्षेमेन्द्रः।

काव्यशास्त्रस्य विकासक्रमे ध्वनेरुद्भावना तस्य च काव्यात्मरूपेण प्रतिपादनमतिमहत्त्वपूर्णं गण्यते काव्यशास्त्रविशारदैः। आनन्दवर्धनाचार्यः ध्वनिं काव्यात्मानं प्रतिपाद्य काव्यशास्त्रविचारसरणिं नूतनपथवर्तिनीञ्चकार। अनया दृष्ट्या काव्यशास्त्रविकासस्येतिहासस्त्रिषु युगेषु विभज्यते -

(क) **ध्वनिपूर्वं युगम्** - वैदिककालादारभ्याऽष्टमशताब्दिपर्यन्तम्।

(ख) **ध्वनियुगम्** - अष्टमशताब्द्या आरभ्य दशमशताब्दिपर्यन्तम्।

(ग) **ध्वनिव्याख्यायुगम्** - दशमशताब्द्या आरभ्याष्टादशशताब्दिपर्यन्तम्

द्वितीयोऽध्यायः

## शास्त्रस्य नामकरणमन्यशास्त्राणाञ्च प्रभावः

### (अ) नामकरणम्

काव्यशास्त्रसमालोचनाविधायिनी गुणावगुणपरीक्षाकारिणी च विद्या अलङ्कारशास्त्र-साहित्यशास्त्र-काव्यशास्त्रादिविविधपदैरभिहिता विद्वद्भिः। तत्र नामकरणस्य को हेतुः, कथञ्च नामान्येतानि प्रचलितानीति विचारणमत्राऽऽवश्यकं वर्तते।



### १. अलङ्कारशास्त्रम्

काव्यसमालोचनाविधायिनी विद्या प्रथमं तावदलङ्कारशास्त्रनाम्ना विद्वद्भिरभिहिता। अतिप्राचीनकाले विद्याया अस्या, नामेदमतिलोकप्रियं प्रचलितमासीत्। प्राचीनाचार्याः भामहोद्भटवामनरुद्रटादयो मनीषिणः स्वरचितकाव्यशास्त्रीयग्रन्थानां नामस्वलङ्कार-पदप्रयोगञ्चक्रुः। भामहस्य ग्रन्थो वर्तते - काव्यालङ्कारः, उद्भटस्य वर्ततेऽलङ्कारसारसङ्ग्रहः, वामनस्यास्ति - काव्यालङ्कारसूत्रम्, रुद्रटस्य विद्यते - काव्यालङ्कारः। वर्णनेनाऽनेन प्रतिभाति यत्प्राचीनसमये समालोचनाविधेयं काव्यालङ्कारनाम्ना अलङ्कारशास्त्रनाम्ना वा प्रथिता बभूव।

काव्यसमालोचनायाः प्रारम्भिकयुगे काव्यस्य प्रमुखं सौन्दर्याधायकं तत्त्वमलङ्कार एव सम्मतं विद्वद्भिः। न केवलं भामह एव, अपितु भामहपूर्ववर्तिनोऽप्यनेक आचार्यास्तथ्यमिदं प्रतिपादयामासुः। उद्भटवामनरुद्रटादयोऽपि काव्येष्वलङ्काराणां महत्त्वं प्रत्यापादयन्। अत एव प्राचीनाचार्याः स्वग्रन्थानां नामकरणेऽलङ्कारपदसंयोजनञ्चक्रिरे। सर्वेषामेव तेषामाचार्याणां मते काव्ये सौन्दर्याधायकं तत्त्वमलङ्कार एव वर्तते। वामनेन प्रोक्तम् - अलङ्कारादेव काव्यं ग्राह्यं भवति।[१] काव्ये सौन्दर्यमलङ्कार एव।[२] अलङ्कृतिरेवाऽलङ्कारो भवति। अस्य पदस्य व्युत्पत्तिः करणकारकरूपिणी वर्तते (अलङ्क्रियतेऽनेन)। अत उपमादयोऽलङ्काराः प्रोच्यन्ते।[३] दण्डिनाऽपि काव्यशोभायाः कर्तारो धर्मा अलङ्काराः प्रोक्ताः।[४]

---

१. काव्यं ग्राह्यमलङ्कारात्। काव्यालङ्कारसूत्र १.१.१

२. सौन्दर्यमलङ्कारः। काव्यालङ्कारसूत्र १.१.२

३. अलङ्कृतिरलङ्कारः। करणव्युत्पत्त्या पुनरलङ्कारशब्दोऽयमुपमादिषु प्रवर्तते।
काव्यालङ्कारसूत्रस्य (१.१.२) वृत्तिः।

४. काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते। काव्यादर्श २.१

बहुभिः प्राचीनैः काव्यशास्त्रविद्भिर्मनीषिभिः स्वरचितग्रन्थनामकरणेऽलङ्कारपदप्रयोगो विहितः। अथ चाऽन्यैः प्राचीनैराचार्यैः ग्रन्थनामकरणेऽलङ्कारपदप्रयोगमकुर्वद्भिरपि स्वविवेचनास्वलङ्कारा एव काव्येषु प्राधान्येन स्वीकृताः। यथा, दण्डिनो ग्रन्थो वर्तते - 'काव्यादर्शः'। तत्र ग्रन्थस्याधिकांशभागे (३/४) पादांशत्रयेऽलङ्काराणामेव विवेचनं विद्यते।

सम्भवतः काव्यसमालोचनायै प्रावीनसमये काव्यालङ्कारपदस्य प्रयोगः प्रचलितोऽवर्तत। परमुत्तरवर्तिनि समयेऽलङ्कारशास्त्रपदप्रयोगः प्रचलितो बभूव। यद्यपि काव्यसमालोचनायां रसगुणदोषरीतिवृत्त्यलङ्कारादीनां सर्वेषामेव तत्त्वानां निवेशो विद्यते, तथापि तत्राऽलङ्काराणामेव प्राधान्यभावादियं विद्या अलङ्कारशास्त्राभिधानेन प्रथिता बभूव। प्रतापरुद्रयशोभूषणग्रन्थस्य रत्नापणटीकायां तथ्यमिदं प्रतिपादयन् मल्लिनाथसुतः कुमारस्वामी प्राह -

छत्रिन्यायेन विद्याया अस्या नामकरणमलङ्कारशास्त्रमिति सञ्जातम्।[1]

काव्यालङ्कारसूत्रवृत्तिग्रन्थस्य कामधेनुटीकायाः लेखको गोपेन्द्रतिप्पभूपालोऽलङ्कारशास्त्र-नामकरणस्यौचित्यं निम्नपदैः समर्थयामास -

**"योऽयमलङ्कारः काव्यग्रहणहेतुत्वेन उपन्यस्यते तद्व्युत्पादकत्वाच्छास्त्रमपि अलङ्कारनाम्ना व्यपदिश्यत इति शास्त्रस्यालङ्कारत्वेन प्रसिद्धिः प्रतिहता स्यादिति सूचयितुमयं विन्यासः कृतः ग्राह्यमलङ्कारादिति।**

वस्तुतः काव्यसमालोचनासिद्धान्तप्रतिपादयितार आचार्याः काव्यस्य विभिन्नतत्त्व-समालोचनप्रसङ्गे लक्षणमप्युपदिदिशुः। दण्डिना प्रोक्तम् - "तेन यथाशक्ति काव्यलक्षणं प्रस्तूयते।[2] निजग्रन्थं काव्यालङ्काराभिधानं कृत्वाऽपि भामहो लिलेख - "उत्तमकवीनां मतान्यवबुध्य तेन निजसामर्थ्यानुसारं काव्यलक्षणं क्रियते।[3] आनन्दवर्धनोऽप्यालङ्कारिकान् काव्यलक्षणविधायिनोऽवोचत्।[4]

काव्यसमालोचनोपक्रमोऽलङ्कारविवेचनप्रभवः। अलङ्काराश्च काव्यस्याऽनिवार्योप-करणानि, तत्र च प्रमुखानि सौन्दर्याधायकतत्त्वानि परिगणितानि। अलङ्काराणां समुचितगहनमीमांसाकरणाद् वक्रोक्त्यलङ्कारस्य समुद्भवो बभूव। तस्माच्च वक्रोक्तिसम्प्रदायः प्रावर्तत। अनेकेऽलङ्कारा वाच्यादतिरिक्तं कञ्चिदन्यमर्थमपि बोधयन्ति। यथा दीपकपर्यायोक्त-तुल्ययोगितासमासोक्त्यप्रस्तुतप्रशंसादयोऽलङ्काराः। अयमन्योऽर्थः प्रतीयमान एव, यस्माच्च ध्वनिसम्प्रदायः प्रावर्तत। एवञ्च काव्यसमालोचनासिद्धान्तानां मूलकारणमलङ्कार एव।

---

१. यद्यपि रसालङ्काराद्यनेकविषयमिदं शास्त्रं तथापि छत्रिन्यायेन अलङ्कारशास्त्रमुच्यते।
प्रतापरुद्रयशोभूषण - रत्नापणटीका पृ० ५

२. यथासामर्थ्यमस्माभिः क्रियते काव्यलक्षणम्। काव्यादर्श १.२

३. अवलोक्य मतानि सत्कवीनामवगम्य स्वधिया च काव्यलक्षणम्। काव्यालङ्कारः ६.६४

४. किञ्च वाग्विकल्पानामानन्त्यात्सम्भवत्यपि वा कस्मिंश्चित् काव्यलक्षणविधायिभिः प्रसिद्धैरप्रसिद्धे। ध्वन्यालोक (१.१) वृत्तिः।

अतः समालोचनाविद्यायाः शास्त्रस्य चाऽलङ्कारशास्त्रमिति नामकरणं समुचितमेव। वक्रोक्तिजीवितग्रन्थकृत् कुन्तकोऽपि स्वग्रन्थस्य मूलकारिकाः काव्यालङ्कार इत्याचख्यौ।

## २. सौन्दर्यशास्त्रम्

केचन मनीषिणः काव्यसमालोचनाविद्यां सौन्दर्यशास्त्रमाचख्युः, यतः काव्यानां सूक्ष्मविवेचनाय समालोचकानां सूक्ष्मेक्षिका तेषां सौन्दर्य एव तिष्ठति। काव्येष्वानन्दप्रदं सहृदयहृदयाकर्षकरं तत्त्वं सौन्दर्यमेव वर्तते। तदभावे काव्येषु न त्वलङ्कारतत्त्वं न रसतत्त्वं नाऽपि च ध्वनितत्त्वमवतिष्ठते। दण्डिवामनाभिनवगुप्तभोजाप्पयादयः प्रसिद्धा आचार्याः काव्येषु सौन्दर्यतत्त्वस्याऽनिवार्यतां प्रतिपादयन्ति। दण्डी काव्यशोभाकरान् धर्मानेवाऽलङ्कारान् मेने।[1] वामनोऽलङ्कारलक्षणं सौन्दर्यमेव चकार। सौन्दर्यमेवाऽलङ्कारो भवतीति।[2]

समालोचकानां मतमिदम् -

"काव्ये सौन्दर्यविघातका अलङ्काराः दोषा एवाऽवगन्तव्याः, न त्वलङ्काराः। वस्तुतश्चारुत्वातिशय एव सौन्दर्याधानम्। असति चारुत्वातिशये काव्येऽलङ्काराः न कामप्युपयोगितामावहन्ति। वपुषि संधृतोऽप्यलङ्कारः वपुःसौन्दर्यमवर्धयन् न तत्र कथमप्युपयोगितामावहति। तथैव स्थितिः काव्येऽप्यवगन्तव्या। काव्यसौन्दर्यवर्धनासमर्था अलङ्कारनामधारिणोऽपि धर्मास्तत्राऽनुपयोगिन एव। अभिनवगुप्तेन प्रोक्तम् - "अलङ्कारस्तु स एव यश्चारुत्वातिशयमादधाति।[3]

अभिनवगुप्तोऽलङ्कारान् याथार्थ्येन न सौन्दर्योपकरणानि मनुते, अपितु ध्वनावेव सौन्दर्यमीक्षते। ध्वनिवादिनामाचार्याणां मतमिदं सुस्पष्टमेव - " वाच्यार्थापेक्षया व्यङ्ग्यार्थस्य प्राधान्ये चारुत्वातिशयबोधके सत्येव काव्ये ध्वनिर्भवति।[4] सौन्दर्यविहीनः प्रतीयमानार्थो न कदाऽपि ध्वनिविषयो भवति। अभिनवगुप्तोऽपि सत्यमेव प्रोवाच -

"सत्यपि ध्वनिव्यापारे गुणालङ्कारौचित्यसम्पन्नशब्दार्थयुतमेव वाक्यं काव्यमित्यभिधीयते।[5]

अतो व्यञ्जनाव्यापारेण प्रतीयमानार्थप्रतीतावपि तत्र ध्वनिरस्त्येवेति न कथयितुं शक्यते। तत्र प्रतीयमानार्थे सौन्दर्यतत्त्वमप्यनिवार्यम्। अत एवाऽभिनवगुप्तेन प्रोक्तम् -

---

१. काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते। काव्यादर्श २.१

२. सौन्दर्यमलङ्कारः। काव्यालङ्कारसूत्र १.१.२

३. तथाजातीयानामिति। चारुत्वातिशयवतामित्यर्थः। सुलसिता इति यत् किलैषां विनिर्मुक्तं रूपं न तत् काव्येऽभ्यर्थनीयम्। उपमा हि 'यथा गौस्तथा गवय' इति........ एवमन्यत्। न चैवमादिकाव्योपयोगीति। ध्वन्यालोक-लोचनटीका पृ० २१०

४. इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः। काव्यप्रकाश १.४

५. गुणालङ्कारौचित्यशब्दार्थशरीरस्य सति ध्वन्यात्मनि आत्मनि काव्यरूपताव्यवहारः। ध्वन्यालोक-लोचनटीका पृ० १७

सत्यपि ध्वनिव्यापारे सर्वत्र ध्वनिकाव्यमस्त्येवेति नाऽनिवार्यम्।।[१] असौ सौन्दर्यप्रतीतिमेव निर्विवादरूपेण काव्यात्मानं स्वीचकार।[२]

भोजोऽपि काव्ये सौन्दर्यतत्त्वस्याऽनिवार्यत्वं प्रतिपादयामास। अलङ्कारस्तु स एव यो काव्ये सौन्दर्यमादधाति। सौन्दर्यतत्त्वाभावात् "धूमोऽयमग्ने" रिति वाक्यं न कदापि काव्यं भवति, न च कस्याऽप्यलङ्कारस्योदाहरणरूपेण प्रस्तूयते। अप्पयदीक्षितेन प्रोक्तम् - "कस्मिंश्चिद् वाक्ये सादृश्यतत्त्वसम्पन्नेऽपि सौन्दर्यातिशययुत एवाऽलङ्कारस्य स्थितिर्भवति। "गोसदृशो गवय" इति वाक्ये सादृश्यतत्त्वसम्पन्नेऽपि नोपमालङ्कारो, यतस्तद् वाक्यं न सौन्दर्यगुणयुतमस्ति।[३]

उपर्युक्तविवेचनेन सुस्पष्टमिदं यदलङ्कारान् सौन्दर्यधर्मयुतान् मत्वा समालोचनाविद्या सौन्दर्यशास्त्रं काव्यसौन्दर्यशास्त्रं वा निगदितुं शक्या। एवञ्च भारतीयसमालोचनाशास्त्रिणः काव्यानां बाह्योपकरणानि भित्त्वा तेषामन्तःस्तरसौन्दर्यं प्रविविशुः। अलङ्कारास्तैस्तावदलङ्काराः न मताः यावत्ते न सौन्दर्याधायकाः वर्तन्ते। काव्यस्येदं सौन्दर्यं चमत्कारचारुत्ववैचित्र्य-विच्छित्त्यादिबहुभिरभिधानैर्मनीषिभिः प्रोक्तम्।

परन्तु समालोचनाविद्याया इदं सौन्दर्यशास्त्रनामकरणं नाऽतिप्रसिद्धिं लेभे। वस्तुतः सौन्दर्यशास्त्रक्षेत्रं काव्यस्य वा साहित्यस्य वाऽपेक्षातो व्यापकतरं वर्तते। काव्यसमालोचनामाध्यमेन समालोचकैः शब्दार्थशरीरिणी कलैव समालोच्यते, परं सौन्दर्यशास्त्रं सर्वासामेव ललितकलानां नृत्यगीतवाद्यचित्रमूर्त्यादीनां चारुत्वं स्वान्तः समावेशयति। एवञ्च सौन्दर्यशास्त्र-क्षेत्रमलङ्कारशास्त्रक्षेत्रापेक्षातो व्यापकतरं वर्तते। अतः सौन्दर्यशास्त्रमिति पदमलङ्कारशास्त्र-पदपर्यायरूपेण न मनीषिभिः स्वीकृतम्।

## ३. साहित्यशास्त्रम्

समालोचनाविद्या साहित्यशास्त्राभिधानेनाऽपि प्रथिता बभूव। शास्त्रीयरूपेण प्रथमं तावद् राजेशखर एनां विद्यां साहित्यविद्यां प्रोवाच[४]। तदनन्तरं रुय्यकविश्वनाथावेतदभिधानं लोकप्रियञ्चक्रतुः। रुय्यकः स्वग्रन्थं साहित्यमीमांसाभिधानञ्चक्रे विश्वनाथश्च साहित्यदर्पणाभिधानम्। रुय्यकविश्वनाथाभ्यामेतन्नामाङ्गीकरणेन साहित्यशास्त्रमित्यभिधानं व्यापकं लोकप्रियञ्च सञ्जातम्।

---

१. तेन सर्वत्र न ध्वननसद्भावेऽपि तथा व्यवहारः। ध्वन्यालोक - लोचनटीका पृ० २८

२. यच्चोक्तम् - " चारुत्वप्रतीतिस्तर्हि काव्यस्यात्मा" इति तदङ्गीकुर्म एव। नास्ति खल्वयं विवाद इति। ध्वन्यालोक-लोचनटीका पृ० ३३

३. सर्वोऽपि ह्यलङ्कारः कविसमयप्रसिद्ध्यनुरोधेन हृद्यतया काव्यशोभाकर एव अलङ्कारतां भजते। अतः "गोसदृशः गवय" इति नोपमा। चित्रमीमांसा पृ० ६

४. पञ्चमी साहित्यविद्येति यायावरीयः। सा हि चतसृणामपि विद्यानां निष्यन्दः। काव्यमीमांसा पृ० ४

काव्यजगति साहित्यपदप्रयोगो नाऽर्वाचीनोऽपित्वतिप्राचीन एव। वस्तुत: साहित्यपदप्रयोगो न केवलं काव्येभ्यो बभूव, अपितु सकलं वाङ्मयमेवैतदन्तर्गतमासीत्[१]। "साहित्यमुरारे" रिति पदप्रयोगं कृत्वा स्वगुरुं मुकुलभट्टं प्रशंसन् प्रतिहारेन्दुराजस्तत्र सकलविधवाङ्मयस्य मीमांसातर्कव्याकरणकाव्यादीनां नैपुण्यमभिव्यानञ्ज।

व्याकरणशास्त्रमधिकृत्य साहित्यपदनिष्पत्तिरेवं वर्तते - सहितस्य भाव: साहित्यम्।"

प्राचीना आलङ्कारिका: काव्यं शब्दार्थमयं जगदु:। एवञ्च साहित्यं तदेव, यत्र शब्दार्थौ सहितौ भवत: - "सहितयो: शब्दार्थयोर्भाव: साहित्यम्।" भामहकृतं काव्यलक्षणं विद्यते -

**"शब्दार्थौ सहितौ काव्यम्"। काव्यालङ्कार १.१६**

शब्दार्थयो: साहित्यमेव काव्यं विद्यते। लक्षणेनाऽनेन भामहेन भविष्यति प्रचलनयोग्यं साहित्यशास्त्राभिधानमपि सङ्केतितम्। उत्तरवर्तिभिराचार्यैरपि काव्ये शब्दार्थयोर्द्वयोरपि साहित्यमङ्गीकृतम्। राजशेखर: साहित्यविद्यामेवं परिबभाषे -

**शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्या। काव्यमीमांसा पृ० ५**

वक्रोक्तिजीवितग्रन्थे शब्दार्थयो: सहितां स्थितिं प्रतिपादयन् कुन्तकाचार्य: काव्यमेवं परिबभाषे -

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।। वक्रोक्तिजीवितम् १.७**

सहृदयानामाह्लादकारिणी चारुकविव्यापारयुता शब्दार्थसहिता रचना काव्यमित्यभिधीयते। कुन्तकस्तु काव्ये शब्दार्थयोस्तुल्यां मनोहारिणीं स्थितिं काव्यं जगाद।[२]

काव्ये शब्दस्यार्थस्य च द्वयोरपि साहित्यमनिवार्यं मनीषिभि: प्रोक्तम्। आचार्या: वेदादिशास्त्राणि शब्दप्रधानानि, पुराणस्मृत्यादिशास्त्राण्यर्थप्रधानानि काव्यानि च शब्दार्थप्रधानानि प्रचख्यु:। व्यक्तिविवेकटीकाकारेण काव्ये शब्दार्थयोर्द्वयोरपि प्रयोगोऽनिवार्यत्वेन प्रोक्त:।[३] माघ: प्रोवाच - काव्यरचनायै उत्तमकवि: शब्दमर्थञ्च द्वावप्यपेक्षते।[४]

काव्याय साहित्यपदप्रयोग: सप्तमाष्टमशताब्द्यां (ई०) प्रारभत। प्रथमं तावद् राजशेखर: काव्यसमालोचनाविद्यां साहित्यविद्यामिति प्रोवाच। तदनन्तरमियं समालोचनाविद्या साहित्यविद्यानाम्ना साहित्यशास्त्रनाम्ना वा प्रसिद्धिङ्गता। रुय्यक: स्वग्रन्थं साहित्यमीमांसाभिधानं कृत्वा नामकरणमेतल्लोकप्रियञ्चकार। विश्वनाथोऽपि स्वग्रन्थं साहित्यदर्पणाभिधानं कृतवान्।

---

१. साहित्यपाथोनिधिमन्थनोत्थं काव्यामृतं रक्षत हे कवीन्द्रा:। विक्रमाङ्कदेवचरितम् १.११

२. साहित्यमनयो: शोभाशालितां प्रति काऽप्यसौ।
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थिति:।। वक्रोक्तिजीवितम् १.१७

३. न च काव्ये शास्त्रादिवदर्थप्रतीत्यर्थं शब्दमात्रं प्रयुज्यते। सहितयो: शब्दार्थयोस्तत्र प्रयोगात्। साहित्यं तुल्यकक्षत्वे न न्यूनातिरिक्तत्वम्। व्यक्तिविवेकटीका पृ० ३६

४. शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते।। शिशुपालवध २.८६

### ४. क्रियाकल्प:

समालोचनाविद्या क्रियाकल्पनाम्नाऽपि प्रसिद्धा बभूव। सम्भवत: प्राचीनतममिदमेव वर्ततेऽभिधानम्। डा० राघवन् महोदयेन लिखितम् -

"भामहदण्डिपूर्वसमये समालोचनाविद्या क्रियाकल्पनाम्नैव प्रथिताऽवर्तत।[1]

कामसूत्रप्रोक्तासु चतु:षष्टिकलासु क्रियाकल्पकलाऽपि परिगणिता मनीषिभि:। सम्भवत: कलेयं काव्यक्रियाकल्प एवाऽऽसीत्। प्रथमं तावत् काव्यक्रियासहायिके द्वे विद्ये भवत: - अभिधानकोष: छन्दोज्ञानञ्च। पुन: क्रियाकल्प: कलासु परिगणित:। निष्कर्षोऽयं विवेचनस्य यद् वात्सायनसमये समालोचनाविद्या क्रियाकल्पपदेनाऽभिधीयते स्म।

क्रियाकल्पपदप्रयोग: कामसूत्रेण सहाऽन्यत्राऽप्युपलभ्यते। ललितविस्तरनामनि बौद्धग्रन्थे कलासु क्रियाकल्पलताऽपि ग्रन्थकारेण परिगणिता। कामसूत्रस्य जयमङ्गलाटीकायां क्रियाकल्पपदनिरुक्तिर्वर्तते -

**क्रियाकल्प इति काव्यकरणविधि: काव्यालङ्कार इत्यर्थ:।**

अस्याऽयमभिप्रायो वर्तते - क्रियाकल्पपदस्य प्रयोगोऽलङ्कारशास्त्रायैव प्रचलितो बभूव। दण्ड्यपि क्रियाकल्पपदप्रयोगेन परिचितोऽवर्तत। तेन लिखितम्:

**वाचां विचित्रमार्गाणां निबबन्धु: क्रियाविधिम्। काव्यादर्श १.९**

काव्यादर्शस्य टीकाकारैरत्र क्रियाविधिपदं क्रियाकल्परूपेणाऽनूदितम्। रामायणस्योत्तरकाण्डेऽपि क्रियाकल्पपदस्य प्रयोगो लभ्यते। कुशलवाभ्यां सङ्गीतितां रामकथां श्रोतुं रामराजसभायां पण्डितनैगमपौराणिकशब्दवित् (वैयाकरण) स्वरलक्षणगान्धर्व-कलामात्रविभागज्ञपदाक्षरसमासज्ञछन्दोविद्याविशेषज्ञै: सह क्रियाकल्पविद: काव्यविदश्च समुपस्थिता आसन्।[2] अनेन वर्णनेनाऽनुमातुं शक्यते, यद् रामायणयुगे समालोचनाविद्या क्रियाकल्पाभिधानेनाऽपि प्रथिता बभूव:। इयञ्च विद्या चतु:षष्टिकलासु परिगणिता मनीषिभि:।

काव्यसमालोचनाविद्या प्राचीनकाले क्रियाकल्पनाम्ना प्रथिता बभूवेति मतस्य पी०वी० काणे महोदय: सशक्तो विरोधी वर्तते। क्रियाकल्पस्तु काव्यरचनाप्रक्रियेति वक्तुमुचितं न त्वसौ काव्यशास्त्रविषयकं शास्त्रं समग्रम्। क्रियापदस्याऽभिप्रायो वर्तते - "मृत्यूत्तरसंस्कारोऽन्या: वा प्रक्रिया:। ललितकलासम्बन्धिनि कस्मिंश्चिद् ग्रन्थे शास्त्रे वा काव्यसमालोचना कला प्रोक्ता, नैतत्कथनस्य किमपि प्रमाणमुपलभ्यते। कामसूत्रे याश्चतु:षष्टिसंख्यका: कला: प्रोक्तास्ता: कन्या: रहसि शिक्षन्ते स्म[3]। वेश्यानामपि शिक्षणार्थं ता: विहिता:।[4] अस्मिन् प्रसङ्गे निम्नपङ्क्तय: शास्त्रकारेणोल्लिखिता: -

---

१. डा० राघवन् : सम कान्सेप्ट्स आफ अलङ्कारशास्त्र पृ० २६४-२६७

२. क्रियाकल्पविदश्चैव तथा काव्यविदो जनान्। रामायण - उत्तरकाण्ड ९४.७

३. अभ्यासप्रयोज्यांश्च चतु:षष्टिकान् योगान् कन्या रहस्येकाकिन्यभ्यसेत्।। कामसूत्र १.३.१४

४. कामसूत्र १.३.२०

**"सम्पाठ्यं मानसी काव्यक्रिया अभिधानकोषः**
**छन्दोज्ञानं क्रियाकल्पः छलितयोगः।"**

अनेनैतत् सिद्धमेव यत् क्रियाकल्पस्याऽभिप्रायः काव्यरचनाप्रक्रियैव वर्तते, न तु काव्यसमालोचना। प्राचीनशास्त्रेषु क्रियापदस्य प्रयोगः संस्कारप्रक्रियाद्यर्थेषु वर्तते, न तु काव्यसमालोचनार्थे। रामायणस्योत्तरकाण्डं तस्यैव मूलभागो वाल्मीकेश्च रचनेति न निश्चितम्। एतत्तु सन्दिग्धमेव। इदमपि सन्दिग्धं यदुत्तरकाण्डस्य चतुर्णवतितमेऽध्याय उत्तरकाण्डस्यैव भागो न च प्रक्षिप्तांशः। यदि च दुर्जनतोषन्यायेनोत्तरकाण्डं तस्य च चतुर्णवतितममध्यायं वाल्मीकेरेवादिकवेः कृतिं वयं मन्यामहे, तथापि क्रियाकल्पपदस्यार्थः काव्यसमालोचनाविद्या काव्यशास्त्रं वा वर्तत इति प्रतिपादयितुं न शक्यते। अत्र क्रियाकल्पविद इति, पदस्यार्थो विद्यते -" विभिन्नप्रक्रियाणां ज्ञातारः, अथ च काव्यविद इति पदस्यार्थो भवति काव्यशास्त्रज्ञातारः।"

अतः नाऽस्य कथनस्य कोऽपि सुदृढ आधारो यत् प्राचीनकाले काव्यशास्त्रमलङ्कारशास्त्रं वा क्रियाकल्पनाम्नाऽपि प्रथितमासीत्।[१]

## ५. काव्यशास्त्रम्

काव्यसमालोचनाविद्यायाः सुप्रसिद्धमभिधानं वर्तते काव्यशास्त्रम्। अतिप्राचीनकालादेवेदमभिधानं सुप्रचलितमस्ति। अस्मिन् शास्त्रे यतः विभिन्नानां काव्याङ्गानां समीक्षा विधीयते, अतोऽस्य काव्यशास्त्रनामकरणं सर्वथा समुचितम्। अतिप्राचीनकालादेव काव्यसमीक्षायै येषां ग्रन्थानां रचना बभूव, तेषु सुस्पष्टमेव लिखितं वर्तते, यत्तैः काव्यलक्षणं क्रियते।[२] आनन्दवर्धनेनाऽलङ्कारवादिन आचार्याः काव्यलक्ष्मविधायिनः प्रोक्ताः।

काव्यशास्त्रपदे काव्येन सह शास्त्रपदसंयोजनस्य प्रयोजनमाचार्याणां सुविचारणीयम्। सामान्यरूपेण शास्त्रपदस्याऽर्थो भवति - शासनात् शास्त्रम्। शासनकर्ता उपदेष्टा वा शास्त्रमिति वक्तुं शक्यते। अयमर्थो वेदादिशास्त्राणां तु समुचितो यतस्तानि प्राधान्येनोपदेशायैव प्रवर्तन्ते। परन्तु काव्येन सह शास्त्रपदसंयोजनं न समुचितं प्रतिभाति। काव्यानां प्रयोजनं नोपदेशप्रदानम्। यद्यप्येतत् प्रयोजनं काव्यस्य वर्तत एव, तथापि उपदेशोऽयं कान्तासम्मितो न तु शासनात्मकः प्रभुसम्मितः।

शास्त्रपदस्यैकाऽन्याऽपि व्युत्पत्तिः सम्भवति - "शंसनात् शास्त्रम्"। कस्यचिद् गूढतत्त्वस्य शंसकः प्रतिपादको वा ग्रन्थः शास्त्रमित्युच्यते। काव्यपदेन सह शास्त्रपदसंयोजनस्या-

---

१. पी०वी० काणे महोदयस्य युक्तीनां सविस्तरं ज्ञानाय तस्य ग्रन्थस्य 'काव्यशास्त्र का इतिहास' पृष्ठानि ४२४-४२६ अवलोकनीयानि।

२. (क) अवलोक्य मतानि सत्कवीनामवगम्य स्वधिया च काव्यलक्ष्म।
भामहः काव्यालङ्कारः ६.६४

(ख) यथासामर्थ्यमस्माभिः क्रियते काव्यलक्षणम्। काव्यादर्श १.२

ऽयमेवाऽभिप्रायो विद्यते, यदस्मिन् काव्यशास्त्रे काव्यस्य गूढतत्त्वानां शंसनं प्रतिपादनं मनीषिभिः कृतम्। अलङ्कारशास्त्रसाहित्यशास्त्रादिपदेष्वपि शास्त्रपदस्याऽयमेवाऽभिप्रायोऽवगन्तव्यः।

अथ च काव्यसमालोचनाविद्यायै काव्यशास्त्रपदप्रयोगो नातिप्राचीनो वर्तते। सम्भवतो भोजराजेन प्रथमं तावत् काव्यशास्त्रपदस्य प्रयोगो विहितः। परन्त्वसौ शास्त्रपदस्य व्युत्पत्तिं "शासनात् शास्त्रम्" इति मत्वा काव्यशास्त्रपदं प्रयुक्तवान्। भोजस्य शास्त्रपदपरिभाषा वर्तते -

**यद् विधौ च निषेधे च व्युत्पत्तेरेव कारणम्।**
**तदध्येयं विदुस्तेन लोकयात्रा प्रवर्तते।। सस्वतीकण्ठाभरण २.१३८**

यद् विधेर्निषिधस्य वा ज्ञानं विदधाति, तस्याऽध्ययनं कर्तव्यम्। अनेनैव लोकव्यवहारो प्रवर्तते। अस्य विधेर्निषिधस्य वा त्रयो हेतवो भवन्ति - काव्यं शास्त्रमितिहासश्च। एतेषां त्रयाणां मिश्रणेन पुनस्त्रयो हेतवो जायन्ते - काव्यशास्त्रम्, काव्येतिहासः, शास्त्रेतिहासश्च। इत्थं भोजराजेन विधेर्निषिधस्य च षड् हेतवः प्रोक्ताः -

काव्यं, शास्त्रम्, इतिहासः, काव्यशास्त्रं, काव्येतिहासः शास्त्रेतिहासश्च। अस्य कथनस्य प्रतिपादनं तेन निम्नप्रकारेण विहितम्

**काव्यं शास्त्रेतिहासौ च काव्यशास्त्रे तथैव च।**
**काव्येतिहासः शास्त्रेतिहासस्तदपि षड्विधम्।। सरस्वतीकण्ठाभरण २.१३९**

एवं भोजराजेन काव्यसमालोचनाविद्या काव्यशास्त्राभिधानेन प्रोक्ता।

उपर्युक्तविवेचनेन सुस्पष्टमेव, यत् काव्यसमालोचनाविद्यायै प्राचीनकालादेव विभिन्ननामानि प्रचलितान्यासन् - काव्यालङ्कारालङ्कारशास्त्रसाहित्यशास्त्रक्रियाकल्प-काव्यशास्त्रादीनि। यद्यप्येतेभ्यः शब्देभ्यो भिन्नभिन्नभावानामभिव्यक्तिर्भवति, तथापि सामान्यतः सर्व एते शब्दा एकस्मिन्नेवाऽर्थे प्रयुज्यन्ते। अयञ्चार्थः - काव्यानां समालोचना समीक्षा वा।

## (ब) काव्यशास्त्रेऽन्येषां शास्त्राणां प्रभावः

प्राचीनकालेऽस्मिन् भारतवर्षे यैराचार्यैर्मनीषिभिः काव्यशास्त्रसिद्धान्तानां विकासो निष्पादितः, ते न केवलं काव्यशास्त्रस्य ज्ञातारः पण्डिता वा बभूवुः अपित्वन्येषामनेकेषां शास्त्राणां व्याकरणदर्शनादीनामपि तत्त्वानामभिज्ञा अवर्तन्त। अतः स्वाभाविकमेतद् यत्काव्यशास्त्रविवेचना अन्यैरपि शास्त्रैः प्रभाविता भवेत्। अयमेव हेतुर्यत् संस्कृत-काव्यशास्त्रविकासेऽन्येषां शास्त्राणां प्रभावः स्वभावतो ध्रुवं परिलक्षितो भवति। काव्यशास्त्रं प्राधान्येन यैः शास्त्रैः प्रभावितं सञ्जातं ते सन्ति - व्याकरणन्यायसांख्यमीमांसोपनिषदः। प्रभावस्याऽस्य संक्षिप्तं दिग्दर्शनं काव्यशास्त्रजिज्ञासुभ्य उपयोगी वर्तते।

### १. काव्यशास्त्रे व्याकरणशास्त्रस्य प्रभावः

काव्यशास्त्रस्य विकासे व्याकरणशास्त्रस्य प्रभावोऽनेकविधो लक्ष्यते। व्याकरणशास्त्रस्याऽयं प्रभावो मुख्यरूपेण ध्वनिविवेचने, अभिधेयार्थप्रतिपादने, उपमायाश्चः भेदोपभेदविवेचने संलक्ष्यते।

ध्वनिसिद्धान्तप्रतिपादनं प्रतिष्ठापनञ्च प्रथमं तावदानन्दवर्धनेन विहितम्। आनन्दवर्धनो जगाद -

प्रमुखाः विद्वांसो हि वैयाकरणाः भवन्ति। व्याकरणमेव सर्वासां विद्यानां मूलम्। वैयाकरणाः श्रूयमाणेषु वर्णेषु ध्वनिं व्यवहरन्ति। काव्यशास्त्रिणोऽपि तेषामेव मतमनुसृत्य वाच्यार्थे वाचकशब्दे व्यङ्ग्येऽर्थे, व्यञ्जकशब्दे व्यञ्जनव्यापारे च ध्वनिपदव्यवहारञ्चक्रु।[१]

काव्यप्रकाशकृन्मम्मटोऽप्यानन्दवर्धनस्य कथनमेतत् समर्थयामास। तेन प्रोक्तम् - ध्वनिपदव्यवहारे काव्यशास्त्रिणो वैयाकरणानन्वसरन्। वैयाकरणाः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकशब्दं ध्वनिं जगदुः।ताननुसृत्य काव्यशास्त्रिणोऽपि वाच्यार्थातिशायिनो व्यङ्ग्यार्थस्याऽभिव्यञ्जकं शब्दार्थयुगलं ध्वनिं प्रोचुः।[२]

एवं काव्यशास्त्रे ध्वनिसिद्धान्तविकासक्रमे व्याकरणशास्त्रप्रभावः सुस्पष्टं लक्ष्यते। ध्वनिसिद्धान्तस्य विकासो वैयाकरणानां स्फोटसिद्धान्ताश्रयेण प्रादुर्बभूव। महाभाष्यकारः शब्दमेव ध्वनिं प्रोवाच। तस्य विवेचनं निम्नप्रकारेण वर्तते -

**"अथ शब्दानुशासनम्।.........................अथ गौरित्यत्र कः शब्दः? किं यत्तत् सास्नालाङ्गूलककुदखुरविषाणिन्यर्थरूपं स शब्दः? नेत्याह, द्रव्यं नाम तत्। कस्तर्हि शब्दः? येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः। अथवा प्रतिपदार्थको लोके ध्वनिः शब्द इत्युच्यते।**

**तद्यथा - शब्दं कुरु, शब्दं मा कार्षीः, शब्दकार्ययं को माणवक ? इति ध्वनिं कुर्वन्नेवमुच्यते। तस्माद् "ध्वनिः" शब्दः।**[३]

वैयाकरणानां मन्तव्यमिदम् -

गौरिति पदस्योच्चारणे त्रयो वर्णाः श्रूयन्ते - ग्+औ+ः (विसर्ग)। परं न तेषामेकस्मिन्नेव काले समुपस्थितिः सम्भवति। "ग्" वर्णस्योच्चारणे "औ+ः" वर्णयोर्ध्वनिर्नास्ति। तदनन्तरं

---

१. प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्। ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति। तथैवाऽन्यैस्तन्मतानुसारिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः। ध्वन्यालोक (१.१३) वृत्तिः।

२. बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः। ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य।
काव्यप्रकाश (१.४) वृत्तिः।

३. महाभाष्य - प्रथम आह्निक - पृ० ७

"औ'' इति वर्णस्योच्चारणे "ग्+:'' वर्णयोर्ध्वनिर्नास्ति। अथ च ":(विसर्ग)'' वर्णस्योच्चारणे "ग्+औ'' वर्णयोर्ध्वनिरनुपस्थितो वर्तते। वर्णानां तदुच्चारणानन्तरमेव विनाशप्रसङ्गात्। अतः प्रश्नोऽयं समुल्लसति "गौः'' इति समग्रपदस्याऽर्थबोधः कथं जायेत ?'' ":(विसर्ग)'' वर्णोऽर्थबोधनेऽक्षमः, सकलपदार्थबोधनाक्षमत्वात्। "गौः'' पदमपि नाऽर्थावबोधने क्षमः, समग्रवर्णानामुपस्थित्यभावात्। प्रश्नस्याऽस्य समाधानं वैयाकरणैः स्फोटसिद्धान्तं प्रतिपाद्य कृतम्। तेषां कथनमस्ति -

सम्पूर्णपदोपस्थितिप्रसङ्गे पूर्वपूर्ववर्णोच्चारणानन्तरमन्तिमवर्णोच्चारणे पूर्वपूर्ववर्णविनाशेऽपि तेषां स्मृतिरवशिष्टा भवति। इयं पूर्ववर्णस्मृतिरन्तिमवर्णध्वनिना संयुज्याऽर्थं बोधयति। अयमेव स्फोटो वर्तते, ध्वन्यात्मकश्चाऽसौ (**पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्त्यवर्णानुभवः स्फोटो व्यज्यते, स च ध्वन्यात्मकः**)।

वैयाकरणाः ध्वनिपदव्यवहारं केवलं शब्द एव चक्रुः। काव्यशास्त्रविद्भिर्ध्वनिपदग्रहणे वैयाकरणानामनुसरणं तु कृतं, परन्तु तस्याऽभिप्राये किञ्चित् परिवर्तनमपि विहितम्। ते तु वाच्यार्थवाचकशब्दव्यङ्ग्यार्थव्यञ्जकशब्दव्यञ्जनाव्यापारेषु सर्वेषु पञ्चसु तत्त्वेषु ध्वनिपदप्रयोगं विनिवेशयामासुः।

अभिधेयार्थस्वरूपनिर्धारणेऽपि काव्यशास्त्रिणो वैयाकरणानन्वसरन्। मम्मटेन काव्यप्रकाशे प्रतिपादितम् - सङ्केतितोऽर्थश्चतुर्विधो भवति - जाति-गुण-क्रिया-संज्ञारूपः। अथ च केवलं जातिरूपो वा।[1] सङ्केतितस्य चतुर्विधत्वप्रतिपादनाय मम्मटो महाभाष्यकारं प्रमाणरूपेण प्रास्तौत्। तेन प्रोक्तम् -

"गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिरिति महाभाष्यकारः।''

अनेकार्थकशब्दानां वाचकतायाः नियमनाय मम्मटो भर्तृहरेः वाक्यपदीयं ग्रन्थं प्रमाणं मेने, तस्य च ग्रन्थस्य द्वौ श्लोकावुद्धृतवान् -

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।।**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।।**

उपमायाः भेदोपभेदविवेचनेऽपि काव्यशास्त्रिणो वैयाकरणानन्वसरन्। साहित्यदर्पणे पूर्णोपमायाः द्वौ भेदौ प्रोक्तौ - श्रौती आर्थी च। तयोर्लक्षणं विद्यते -

**श्रौती यथेव वा शब्दा इवार्थो वा वतिर्यदि।**
**आर्थी तुल्यसमानाद्या तुल्यार्थो यत्र वा वतिः।।**[2]

---

१. सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा। काव्यप्रकाश २.८।।
२. साहित्यदर्पण १०.१६

श्रौती उपमा तत्र भवति, यत्रोपमायां यथा-इव-वा इत्यादीनां समानार्थकानां पदानां प्रयोगो विधीयते, यत्र वा "तत्र तस्येव" (अष्टाध्यायी ५.१.११६) इति सूत्रेण इवार्थे वतिप्रत्ययो विधीयते। अथ च आर्थी उपमा तत्र कथ्यते यत्र तुल्यसमानादीनामुपमावाचकानां शब्दानां प्रयोगो विधीयते। अथ च यत्र तुल्यार्थे "तेन तुल्यं क्रिया चेद्वतिः" (पाणिनि० ५.१.११६) इति सूत्रेण वतिप्रत्ययो विधीयते।

पूर्णोपमाभेदान् प्रतिपादयन् मम्मटो व्याकरणमाशिश्रिये -

....................साऽग्रिमा।

**श्रौत्यार्थी च भवेद् वाक्ये समासे तद्धिते तथा।।**[1]

अग्रिमा (प्रथमा) पूर्णोपमा द्विविधा वर्तते - श्रौती आर्थी च। पुनस्ते द्वे अपि त्रिविधे भवतः - वाक्यगता, समासगता तद्धितगता च।

पूर्णोपमायाः श्रौत्यार्थीभेदयोरुपभेदाः केषुविदंशेषु व्याकरणशास्त्रेण नियमिताः भवन्ति, परं लुप्तोपमायाः पञ्च भेदा सम्पूर्णतो व्याकरणसूत्रैर्नियम्यन्ते। साहित्यदर्पणकारेणैते भेदा एवंप्रकारेण परिगणिताः-

**आधारकर्मविहिते द्विविधे च क्यचि क्यङि।**
**कर्मकर्त्रोर्णमुलि च स्यादेवं पञ्चधा पुनः।।**[2]

एते भेदाः काव्यप्रकाशे निम्नप्रकारेण सन्ति -

**वादेर्लोपे समासे वा कर्माधारक्यचि क्यङि।**
**कर्मकर्त्रोर्णमुलि ............................।।**[3]

एवमुपमाभेदनिर्धारणे व्याकरणशास्त्रस्य प्रभावो बाहुल्येन संलक्ष्यते। न केवलं मम्मट एव प्रभावमेतं सुविशदं व्याकरोदथ च मम्मटात् पूर्ववर्तिष्वपि काव्यशास्त्रग्रन्थेषु प्रभाव एषो दरीदृश्यते। भामहेन "वतिनाऽपि क्रियासाम्य" मिति लिखित्वा प्रभाव एषः प्रदर्शितः। उद्भटस्ततोऽधिकं विशदरूपेण प्रभावमेतं प्रदर्शितवान्। वामनेन काव्यालङ्कारसूत्रस्य पञ्चमेऽधिकरणे भामहेन काव्यालङ्कारस्य षष्ठेऽध्याये ३०-३१ श्लोकयोः काव्यभाषायां व्याकरणशुद्धताऽनिवार्यरूपेण प्रतिपादिता। काव्येषु व्याकरणदोषाश्च्युतसंस्कृतिदोषाः प्रोक्तास्ते च नित्यदोषाः सत्कविभिः सदा परिहर्तव्याः।

## २. काव्यशास्त्रे न्यायशास्त्रस्य प्रभावः

न्यायशास्त्रमपि काव्यशास्त्रं प्रभावयामास। तर्कशास्त्रे शब्दशक्तिविवेचनम् (अभिधाविवेचनम्) अस्ति। अभिधामातृकावृत्ति-शब्दव्यापारविचार-त्रिवेणिका-वृत्तिवार्तिकादिग्रन्थेषु शब्दशक्तिमाश्रित्य विषयविवेचनं ग्रन्थकारैर्विहितम्।

व्यक्तिविवेकग्रन्थकृन्महिमभट्टो व्यञ्जनावादिनां व्यङ्ग्यार्थप्रतीतिमनुमानेनैव प्रतिपादयामास। ध्वनेरन्तर्भावमसावनुमान एव कर्तुं प्रायतिष्ट।

---

१. काव्यप्रकाश १०.८७।। २. साहित्यदर्पण १०.१९,।। ३. काव्यप्रकाश १०.८९

अनेकेषामलङ्काराणां विकासक्रमेऽनुमानस्य योगो दरीदृश्यते। अनुमानालङ्कारोऽपि काव्यशास्त्रविधायिभिः परिभाषितः। हेतुकाव्यलिङ्गादीनामलङ्काराणामुद्भावनेऽनुमानस्याश्रयः काव्यालङ्कारलक्ष्मविधायिभिर्मनीषिभिः स्वीकृतः। अप्पयदीक्षितस्तु प्रत्यक्षादिप्रमाणान्यप्य-लङ्काररूपेण स्वीकृतवान्।

रसनिष्पत्तिव्याख्यायामप्यनुमानस्याऽऽश्रयः कैश्चिद् रससूत्रव्याख्याकारैर्गृहीतः। "**विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्ति**" रिति भरतरससूत्रस्य व्याख्या शङ्कुकेन अनुमानमेवाश्रित्य प्रस्तुता।

## ३. काव्यशास्त्रे सांख्यशास्त्रस्य प्रभावः

काव्यशास्त्रे सांख्यशास्त्रस्य प्रभावो बाहुल्येनाऽविद्यमानोऽपि केषुचिदंशेषु कुत्रचित् संलक्ष्यत एव। भरतरससूत्रस्य भट्टनायककृतव्याख्यायां सांख्यप्रभावः संलक्ष्यते। रससूत्रस्य व्याख्यायां भट्टनायकेन सत्त्वरजस्तमसां त्रयाणां गुणानां भोजकत्वसिद्धान्तस्य च प्रतिपादनं विहितम्। सांख्यदर्शने प्रकृतिस्त्रिगुणात्मिका सत्त्वरजस्तमोमयी प्रोक्ता, तस्याश्च भोक्ता पुरुषो वर्तते। भट्टनायकेन प्रतिपादितम् -

भावकत्वव्यापारेण स्थायिभावे भाविते सति तस्य रजोगुणस्य तमोगुणस्य चाऽभिभवो भवति। सत्त्वगुणस्य चोद्रेकः सञ्जायते। तदनन्तरं सामाजिको भोजकत्वव्यापारेण तस्य भोगं करोति (आस्वादयति)।

## ४. काव्यशास्त्रे मीमांसाशास्त्रस्य प्रभावः

काव्यशास्त्रविकासे मीमांसादर्शनस्या (पूर्वमीमांसादर्शनम्) ऽपि प्रभावः संलक्ष्यते, विशेषतस्तु शब्दाशक्तीनां व्याख्याने ध्वनिवादिभिराचार्यैरभिधालक्षणाव्यञ्जनास्त्रिविधाः शब्दशक्तयो वाच्यलक्ष्यव्यङ्ग्याश्च त्रिविधा अर्थाः स्वीकृताः। परन्तु मीमांसकाः व्यञ्जनावृत्तिं नाऽङ्गीकुर्वन्ति।

अथ च मीमांसकानामेकः सम्प्रदायो (अभिहितान्वयवादिनः) वाक्यार्थबोधनाय तात्पर्यां वृत्तिं प्रतिपादयन् वाक्यार्थं तात्पर्यार्थं ब्रूते। मीमांसका एते वदन्ति - वाक्ये पदमभिधया पदार्थमेव बोधयति, न तु वाक्यार्थम्। वाक्ये वाक्यार्थः पदार्थानामन्वये सत्यवबुध्यते। पदानामयमन्वयस्तात्पर्यवृत्त्या सम्पद्यते। कुमारिलभट्टानुयायिनां मीमांसकानामेतन्मतम्।

परमन्यो मीमांसकसम्प्रदायो (प्राभाकरा - अन्विताभिधानवादिनः) न तात्पर्यां वृत्तिमङ्गीकरोति। पदानामन्वितोऽर्थोऽभिधयैव सम्पद्यत इति तेषां मतम्। तात्पर्यावृत्तिवादिनो मीमांसका अभिहितान्वयवादिनः सन्ति। परं तात्पर्यां वृत्तिं ये नाङ्गीकुर्वन्ति तेऽन्विताभिधानवादिनः कथ्यन्ते। मम्मटस्तु काव्यप्रकाशे द्वयोरेव मतयोरुल्लेखं कृत्वाऽकथयत् -

" केचन आचार्यास्तात्पर्यां वृत्तिं प्रतिपादयन्ति।"[१]

विश्वनाथेनाऽपि लिखितम् -

---

१. तात्पर्यार्थोऽपि केषुचित्। काव्यप्रकाश २.६

" तात्पर्यार्थबोधनायाऽभिहितान्वयवादिनस्तात्पर्यां वृत्तिं मन्वते।[1]"

सङ्केतग्रहणप्रसङ्गेऽपि ध्वनिवादिन आचार्याः मीमांसादर्शनं पस्पर्शुः। सङ्केतग्रहणं कस्मिन् भवतीति विषये मम्मटेन द्वौ पक्षौ प्रस्तुतौ - जात्यादिवादिनो जातिवादिनश्च। वैयाकरणाः सङ्केतग्रहणं जात्यादिषु (जातौ, गुणे, क्रियायां सञ्ज्ञायाञ्च) मन्वते। परं मीमांसकाः सङ्केतग्रहणं जातावेव प्रतिपादयन्ति। गुणः क्रिया संज्ञा च जातिरेवेति मीमांसकमतं मम्मटेन निर्दिष्टम्।[2]

लक्षणानिरूपणेऽपि काव्यशास्त्रे मीमांसकानां प्रभावः संलक्ष्यते। गौर्वाहीको गौरयञ्चेति गौणीसारोपालक्षणायाः गौणीसाध्यवसानालक्षणायाश्चोदाहरणयोर्गोगताः गुणाः वाहीके कथं लक्ष्यन्त इति विवेचने मम्मटः कुमारिलभट्टस्य तन्त्रवार्तिकग्रन्थस्य श्लोकमेकमुद्धृतवान् -

**अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।**
**लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता।।**

मीमांसकाः व्यञ्जनावृत्तिं न स्वीकुर्वन्ति। व्यञ्जनावादिनां व्यङ्ग्यार्थं तेऽभिधाप्रतिपाद्यं साधयन्ति। ध्वनिवादिभिराचार्यैः मीमांसकानां मतमिदं सबलं सप्रमाणञ्च खण्डितम्। काव्यप्रकाशस्य पञ्चमोल्लासे मीमांसकानां युक्तीनां वादानाञ्च - अभिहितान्वयवादस्य, अन्विताभिधानवादस्य, नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते, इषोरिव दीर्घदीर्घतरो व्यापारः, यत्परः शब्दः स शब्दार्थः, लोहितोष्णीषा ऋत्विजः प्रचरन्ति, श्रुतेरनन्तरं यावानर्थो लभ्यते तावति शब्दस्याऽभिधैव व्यापार इति सर्वेषां मतानां खण्डनं कृत्वा मम्मटाचार्यः काव्ये व्यञ्जनां वृत्तिं व्यङ्ग्यार्थञ्चाऽनिवार्यरूपेण प्रतिपादयामास।

लक्षणावृत्त्या प्रतिपादितस्य लक्ष्यार्थस्य प्रयोजनस्य च भिन्नत्वमस्तीति तथ्यं ध्वनिवादिभिराचार्यैः मीमांसान्यायदर्शनयोः प्रमाणैरेव साधितम्। मम्मटाचार्येण प्रोक्तम् -

मीमांसका यथा ज्ञानविषयस्य ज्ञानफलस्य च भिन्नत्वं प्रतिपादयन्ति, तथैव लक्षणाजन्यस्य ज्ञानस्य (लक्ष्यार्थस्य) फलस्य (प्रयोजनस्य) च भिन्नत्वमस्त्येव।[3]

---

१. तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने।
तात्पर्यार्थं तदर्थञ्च वाक्यं तद् बोधकं परे।। साहित्यदर्पण २.२०

२. गुणक्रियायदृच्छानां वस्तुत एकरूपाणामपि भेद इव संलक्ष्यते। यथैकस्य मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदात्। हिमपयःशङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्ल इत्यभिन्नाभिधानप्रत्ययोत्पत्तिस्तच्छुक्लत्वादिसामान्यम्। गुडतण्डुलपाकादिष्वेवमेव पाकत्वादि। बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमित्यन्ये।
काव्यप्रकाश (२.८) वृत्तिः।

३. प्रयोजनेन सहितं लक्षणीयं न युज्यते।
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्।। काव्य प्रकाश २.१७-१८

अथ चाऽलङ्काराणां निरूपणेऽपि काव्यशास्त्रे मीमांसकानां प्रभाव: संलक्ष्यते। मीमांसकानामर्थापत्तिप्रमाणमधिकृत्य काव्यशास्त्रिभिरर्थापत्त्यलङ्कारोऽङ्गीकृत:। एवमेव परिसंख्यालङ्कारस्य परिसंख्यापदमपि मीमांसकानामेक: प्रसिद्ध: पारिभाषिकशब्दो वर्तते।[1]

## ५. काव्यशास्त्रे वेदान्तस्य (उपनिषदां) प्रभाव:

काव्यशास्त्रे वेदान्तस्योपनिषदां वा प्रभाव: क्वचित् संलक्ष्यते। प्रभाव एषो रसस्वरूपविवेचने प्राधान्येन वर्तते। ध्वनिवादिन आचार्या: सामान्यतो रसमात्मानञ्चैकरूपं जगदु:। तैत्तिरीयोपनिषदो ब्रह्मानन्दवल्ल्यामात्मा रस: प्रोक्तो, येनासावानन्दरूपो भवति।[2] रसस्वरूपविवेचने पण्डितराजो जगन्नाथ उपनिषदामेतदवतरणमुद्धृतवान्।[3] काव्यप्रकाशे मम्मटेन रसानुभूतिर्ब्रह्मानन्दसहोदरी प्रोक्ता। अनुभूत्यां तस्यां सत्यां सर्वाण्येवाऽन्यानि वेद्यानि तिरोभवन्ति।[4] मम्मटाचार्यस्येदं वच: बृहदारण्यकोपनिषदो निम्नवचनेन प्रभावितं वर्तते -

**तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवाऽयं पुरुष: प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्। तद्वा तस्मै तदाप्तकाममकामं रूपं शोकान्तरम्। अत्र पिताऽपिता भवति..........तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति।**[5]

---

१. जैमिनि: मीमांसादर्शन १.२.३४, ३.७.३३

२. रसो वै स:। रसं ह्येवाऽयं लब्ध्वाऽऽनन्दीभवति। तैत्तिरीयोपनिषद् - ब्रह्मानन्दवल्ली - ७

३. अस्त्यत्राऽपि रसो वै स:। "रसं ह्येवाऽयं लब्ध्वाऽऽनन्दीभवति" इत्यादि श्रुति:।
रसगङ्गाधर - प्रथममाननम्। रसस्वरूपविवेचनम्

४. अन्यत् सर्वमिव तिरोदधद् ब्रह्मास्वादमिवाऽनुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रस:। काव्यप्रकाश (४.२७-२८) वृत्ति:।

५. बृहदारण्यकोपनिषद् ४.३.२१

प्रथमोऽध्यायः

# भरतो मुनिः

संस्कृतकाव्यशास्त्रस्येतिहासो भरतमुनेः प्रारभते। अतः काव्यशास्त्रस्य प्राचीनाचार्याणां वृत्तान्तप्रसङ्गे प्रथमं तावद् भरतस्य परिचय आवश्यकः।

## १. भरतस्य महत्त्वम्

संस्कृतकाव्यशास्त्रस्येतिहासे भरतः प्राचीनतम आचार्यो गण्यते। भरतमुनिविरचितं नाट्यशास्त्रमपि काव्यशास्त्रविषयकं प्राचीनतमं समुपलभ्यमानं पुस्तकमस्ति। काव्यशास्त्रविषयाणां ग्रन्थोऽयं सुमहान् कोषः। ग्रन्थस्य प्रधानं लक्ष्यं यद्यपि नाट्यसंरचना नाट्याभिनयश्च वर्तते, तथाऽपि मुनिनाऽत्र काव्याङ्गानामप्यन्येषां सर्वाङ्गीणं सुविशदं सुसूक्ष्मञ्च विवेचनं विहितम्। नाट्यस्योत्पत्तिः, प्रेक्षागृहनिर्मितिः, अभिनयो, वेशविन्यासः, संगीतं, नृत्यं, भाषा, छन्दांसीत्यादीनि विभिन्ननाट्यतत्त्वानि भरतेन नाट्यशास्त्रे विवेचितान्येव, अथ च रसगुणरीत्यलङ्कारादीनां काव्याङ्गानामपि सर्वाङ्गपूर्णं विवेचनं विहितम्।

भरतपूर्ववर्तिनि साहित्ये तत्त्वानामेतेषां काव्याङ्गानां विवेचनं यत्किञ्चिदुपलभ्यते, तथापि भरतेनैव प्रथमं काव्यतत्त्वानां साङ्गोपाङ्गानां निरूपणं ग्रन्थरूपेण प्रस्तुतम्। ग्रन्थस्याऽस्याऽवलोकनेन प्राचीनकालवर्तिनां नाट्याभिनयसङ्गीतनृत्यछन्दोरसगुणालङ्कारादि-सम्बन्धिनां नियमानां काव्यशास्त्रविकासक्रमस्य च बोधो जायते। भरतनाट्यशास्त्रग्रन्थाभावे सर्वेषामेतेषां नियमानां काव्यशास्त्रविकासक्रमस्य च स्वरूपज्ञानमपूर्णमिव भवति। भरत एव सर्वप्रथमं प्रत्यापादयद् यत् काव्ये प्रमुखतत्त्वं रस एव वर्तते। स च विभावानुभावव्यभिचारि-संयोगान्निष्पद्यते। उत्तरवर्तिन आचार्याः भरतनाट्यशास्त्रमेवाऽऽश्रित्य काव्यशास्त्रविषयक-ग्रन्थानां रचनामकुर्वन्। सर्वैरेव तैर्भरतो महता समादरेणोद्धृतः प्रमाणरूपेण च स्वीकृतः।

काव्यशास्त्रविषये भरतस्य महत्त्वं न केवलं भारतीयसमीक्षका अङ्गीकुर्वन्ति, पाश्चात्यसमीक्षका अपि तं मुक्तकण्ठं प्रशंसन्ति। 'दी मेकिंग आफ दी लिटरेचर' नामनि ग्रन्थे डा० स्काटजेम्समहोदयेन नाट्यशास्त्रं सुतरां प्रशंसितम्। तच्च अरिस्टोटलमहोदयस्य 'पेरिपोएटिक्स' ग्रन्थतुल्यं प्रतिपादितम्। अतिदुःखमभिव्यञ्जयन्नसौ लिलेख -

नाट्यशास्त्रविषयमधिकृत्य अरिस्टोटलमहोदयविरचिता लघुपुस्तिकैका योरुपे महासम्मानाधिकारिणी बभूव, परन्तु भारतवर्षे अरिस्टोटलमहोदयात् बहुकालपूर्वं भरतमुनिना बृहदाकारनाट्यशास्त्रस्य रचना विहिता, यत्र रङ्गमञ्चछन्दोऽभिनयालङ्कारवेशभूषानृत्यसङ्गीत-भाषादीनां सर्वेषां नाट्याङ्गानां विशदं विवेचनं सन्निहितं वर्तते। परन्तु तस्य ग्रन्थस्य किमपि प्रामाणिकं संस्करणं न वर्तमानसमये समुपलभ्यते।

संस्कृतललितसाहित्येन सह, विशेषतः काव्यरचनाविकासेन सह तस्य समीक्षापद्धतिरपि विकासं भेजे। समालोचनापद्धतेरस्याः प्रथमं व्यवस्थापनं भरतेन नाट्यशास्त्रं विरच्य विहितम्। काव्यस्य विविधान्यङ्गानि निरूप्य भरतेनेयं समालोचनापद्धतिर्नियमेषु निबद्धा। भरतस्याऽस्मिन् नाट्यशास्त्रे ह्युभयविधदृश्यश्रव्यकाव्यतत्त्वनिरूपणं व्याख्या चोपलभ्यते। एवञ्चेदं नाट्यशास्त्रं संस्कृतकाव्यसमालोचनासम्पादकं प्रथमं सर्वाङ्गसम्पूर्णं पुस्तकं वर्तते। इदमेवाऽऽधारीकृत्योत्तरवर्तिभिराचार्यैः काव्यशास्त्रविषयकग्रन्थानां रचना विहिता।

## २. भरतस्य व्यक्तित्वम्

नाट्यशास्त्ररचयिता भरतमुनिरेवेति लोके प्रसिद्धिः। परन्त्वयं महतो दुःखस्य विषयो यद्वयं तस्य व्यक्तित्वेन जीवनवृत्तेन वा नितान्तमपरिचिताः स्म। अनेकेषां समीक्षकानां मतमिदम् - "न बभूव कोऽपि भरतो नाम मुनिः, यस्य नाम्नेदं नाट्यशास्त्रं प्रसिद्धं बभूव। प्राचीनसाहित्ये भरतविषयकवर्णनान्यपि तं कल्पनाप्रसूतमेव यथा कथञ्चित् प्रतिपादयन्ति।

प्राचीनसाहित्ये भरतनाम्ना पञ्च जनाः प्रसिद्धाः वर्ण्यन्ते -

**(१) दशरथपुत्रो भरतः**
**(२) दुष्यन्तपुत्रो भरतः**
**(३) मान्धातुः प्रपौत्रो भरतः**
**(४) जडभरतः**
**(५) नाट्यशास्त्रकृद् भरतः**

अस्मिन् प्रसङ्गे नाट्यशास्त्रकृद् भरत एव विचारणीयो वर्तते।

केचन पाश्चात्यसमीक्षकास्तदनुयायिनो भारतीयसमीक्षकाश्च नाट्यशास्त्रप्रणेतृरूपेण प्रसिद्धं भरतं कल्पनाप्रसूतमेव गणयन्ति। भरतसम्बन्धिप्रसिद्धकथानां विमर्शेण धारणैषा नाऽनुचिता प्रतिभाति। नाट्यशास्त्रप्रणेतुर्भरतस्य गतिर्मनुष्यलोके देवलोके च सर्वत्राऽबाधिताऽवर्तत। तेन ब्रह्मणो नाट्यवेदो गृहीतः। स्वसुतानामप्सरसाञ्च सहयोगेनाऽसौ देवलोके नाट्याभिनयं प्रास्तौत्। मनुष्यलोके चाऽप्यसौ नाट्यानामभिनयस्य प्रचारमकरोत्। भरतो मुनिर्देवसभायां नाट्याभिनयप्रयोजक आसीदिति कल्पनां कालिदासोऽपि समर्थयामास।[१]

डा० मनमोहनघोषमहोदयेन नाट्यशास्त्रस्यांऽऽग्लभाषाप्रस्तावनायां भरतस्य कल्पनाप्रसूतिभावः साधितः। तेन तत्समानविचारशालिभिरन्यैश्च समीक्षकैः प्रोक्तम् -

प्राचीनसमये नाट्याभिनयप्रयोजकाः नटा अभिनेतारो वा भरतनाम्ना लोके प्रसिद्धाः ववृतिरे। अथवा भरताभिधाना काचिन्नाट्याभिनयप्रयोजिका जातिरेव बभूव। तस्याः

---

१. मुनिना भरतेन यः प्रयोगो भवतीष्वष्टरसाश्रयः प्रयुक्तः।
ललिताभिनयं तमद्य भर्ता मरुतां द्रष्टुमनाः सलोकपालः।। विक्रमोर्वशीयम् २.१८

मूलपुरुषरूपस्य भरतस्य मुनेर्व्यक्तित्वस्य कल्पना लोके प्रचलिता बभूव। तां परितश्च पौराणिककल्पनासूत्राणि लोके प्रसिद्धान्यभूवन्।

परमन्ये समीक्षकाः भरतविषयं मतमिदं नाऽङ्गीकुर्वन्ति। आचार्यविश्वेश्वरादीनां विदुषां मतमिदं यत् प्राचीनसमये भरतनाम्ना प्रसिद्धो नाट्याचार्यो ध्रुवमवर्तत, येन नाटयशास्त्रमिदं विरचितम्। परमियमपि सम्भावना कल्प्यते, यदुत्तरवर्तिनि काले मूलनाट्यशास्त्रे परिवर्धनपरिष्करणादीनि भवेयुर्भारतीयपरम्पराश्चाऽनुसृत्य पौराणिक-कल्पनाश्चाऽप्यनुस्यूताः भवेयुः।

सकलभारतीयवाङ्मये पुराणेषु, काव्येषु काव्यशास्त्रीयग्रन्थेषु च भरतस्योल्लेखो नाट्यशास्त्ररचयितृरूपेण समुपलभ्यते। मत्स्यपुराणस्य चतुर्विंशाध्यायस्य २७-३२ श्लोकेषु भरतमुनिर्वर्णितो, येन देवलोके लक्ष्मीस्वयंवरनाटकस्याऽभिनयस्याऽऽयोजनं कृतम्। अभिनयमेनमवलोकयितुं देवराजेन सह पुरूरवा अप्युपस्थित आसीत्। पुरूरवसमवलोक्य नटीरूपेण रङ्गमभिनयन्ती ह्युर्वशी स्नेहानुरागविवशीभूता स्वाभिनयस्याऽपि विसस्मार। संक्रुद्धो भरतः पुरूरवसमुर्वशीञ्च शशाप। कालिदासेन स्वकीये विक्रमोर्वशीये नाटके कल्पना कृता -

'देवलोके लक्ष्मीस्वयंवरनाटकमभिनयन्ती ह्युर्वशी नायकनामग्रहणे स्खलन्ती विष्णोर्विस्मृत्य पुरूरवसो नामोच्चचार। भरतमुनिस्तां शशाप।''

सम्भवतो मत्स्यपुराणस्याऽयं कथांशः कालिदासस्य नाटकेऽपि प्रतिबिम्बितो बभूव।

भरतनाट्यशास्त्रे भरतस्य शतपुत्राणां नाटकाभिनयकुशलानां नटीनामप्सरसाञ्च सुविस्तृता नामावली समुपलभ्यते। तान् सर्वान् नटीनटानादाय भरतो देवसभामागत्य नाटकस्य प्रथममभिनयं प्रास्तौत्। सर्वैरेव प्राचीनैराचार्यैः - दामोदरगुप्तहेमचन्द्रराजशेखरा-भिनवगुप्तशिंगभूपालादिभिर्भरतो नाट्यशास्त्रप्रणेतृरूपेण वर्णितः। अतो भरतस्यैतिहासिकं व्यक्तित्वं ध्रुवमवर्तत। सम्भवतस्तस्येदमैतिहासिकं व्यक्तित्वं पौराणिकल्पनाभिराच्छन्नं सञ्जातम्। भरतमुनेरेव स्मृतौ तस्य समादररूपेण संस्कृतनाटकाभिनयसमाप्त्यवसरे भरतवाक्यगीतपरम्परा प्रचलिता बभूव।

### ३. नाट्यशास्त्रस्य संस्करणानि प्रकाशनञ्च

संस्कृतसमीक्षासाहित्ये नाट्यशास्त्रं यद्यपि महदादरास्पदं महत्त्वशालि चाऽऽचार्यैः परिगणितं, तथापि वर्तमाने युगे बहुकालपर्यन्तमिदमनुपलब्धमेवाऽऽसीत्। चतुर्दशशताब्दिपर्यन्तं काव्यशास्त्रीयग्रन्थेषु भरतस्य नाम लेखकैर्महता समादरेण समुल्लिखितमुपलभ्यते। परं प्रतीयते, तदनन्तरं विद्वांसस्तस्य ग्रन्थस्य साक्षादवलोकनस्याऽवसरं न लेभिरे। तस्य महतो ग्रन्थस्य ज्ञानं विद्वांसोऽन्यग्रन्थसंनिविष्टोद्धरणैरेव सम्प्राप्नुवन्।

एकोनविंशतिशताब्द्यां (१८२५ ई०) विल्सनमहोदयो यदा केषाञ्चित् संस्कृतनाटकाना-मनुवादमांग्लभाषायामकरोत्, तदा तेन नाट्यशास्त्रस्य न काऽपि प्रतिः समुपलब्धा। महता कष्टेन तेनोद्घोषितम् - "प्रतीयते, भरतकृतनाट्यशास्त्रं व्यलुपत्, न च तस्यं काऽपि प्राप्त्याशाऽविशष्टा।" तथापि विद्वांसोऽन्वेष्टारो भरतनाट्यशास्त्रस्य समुपलब्ध्यै सततं महान्तं प्रयासञ्चक्रिरे।

अथ चत्वारिंशद्वर्षानन्तरं (१८६५ ई०) फ्रैड्रिकहालमहोदयो नाट्यशास्त्रस्यैकां हस्तलिखितां किन्त्वपूर्णां प्रतिं लेभे। तस्याश्चतुरोऽध्यायानसौ (१७,१९,२०,२४, अध्यायान्) धनञ्जयकृतदशरूपकस्य संस्करणेन सह परिशिष्टरूपेण प्रकाशितांश्चकार। अध्यायेष्वेतेषु क्रमशः १३२, १३३, ६३, १२१ श्लोका अवर्तन्त। एतेषामध्यायानां क्रमः श्लोकसंख्या च नाट्यशास्त्रस्य काव्यमालासंस्करणेन न संवदति। फ्रेड्रिकहालमहोदस्यैतेन नाट्यशास्त्र-प्रकाशनेन विदुषामेषा धारणा व्यपगता, यदयं ग्रन्थः सर्वथा विलुप्तो न च तस्योपलब्धिः सम्भवा। अथ नाट्यशास्त्रस्याऽन्वेषणं विद्वद्भिर्महतोत्साहेन प्रारब्धम्। अस्मिन् विषये फ्रांसदेशस्य जर्मनीदेशस्य च विद्वांसो महान्तमुत्साहं प्रादर्शयन्।

१८७४ ई० तमेऽब्दे जर्मनीदेशस्य हेमानाभिधानो विद्वान् नाट्यशास्त्रस्य पाण्डुलिपिमे-कां समलभत। विस्तृतपरिचयेन सहाऽसौ तस्याः प्रकाशनमकरोत्। पी०रैग्नोदमहोदयेनाऽन्येन फ्रांसदेशवास्तव्येन विदुषा १८८० ई० तमेऽब्दे नाट्यशास्त्रस्य १५-१६ तमावध्यायौ प्रकाशितौ। अत्र छन्दःसम्बन्धिनः श्लोकाः विद्यन्ते। अत्र पञ्चदशेऽध्याये ऽष्टषष्टि (६८) श्लोकाः षोडशे च षष्ट्यधिकैकशतश्लोकाः (१६०) सन्ति। रैग्नोदमहोदयेनैव १८८४ ई० तमेऽब्दे षष्ठसप्तमाध्यायौ फ्रैंचानुवादसहितौ प्रकाशितौ। अनयोरध्याययोः श्लोकसंख्या क्रमशश्चतुर-शीतिस्त्रयोविंशत्यधिकैकशतञ्च (८४, १२३) वर्तते। रैग्नोदमहोदयस्य शिष्येण ग्रॉसनाम्ना विदुषा गुरोः कार्यमग्रेसारितम्। १८८८ ई० तमेऽब्देऽसौ नाट्यशास्त्रस्याऽष्टाविंशमध्यायं प्राकाशयत्। अध्यायोऽयं सङ्गीतविषयको वर्तते। अस्मिन्नेव वर्षेऽसौ नाट्यशास्त्रस्य प्रथमचतुर्दशाध्यायान् प्रकाशितांश्चकार।

भारतवर्षेऽपि नाट्यशास्त्रं प्रति विदुषां रुचिर्जजागार। १८९४ ई० तमेऽब्दे मुम्बईस्थितनिर्णयसागरमुद्रणालये काव्यमालाग्रन्थसरण्यां नाट्यशास्त्रं सम्पूर्णरूपेण पण्डितवरयोः शिवदत्तकाशीदत्तयोः सम्पादकत्वे प्रकाशितमभवत्। कानिचिदन्यान्यपि संस्करणानि प्रकाशितानि बभूवुः। १९३५ ई० तमेऽब्दे काशीसंस्कृतग्रन्थसरण्यां पण्डितवरबटुकदत्तशर्मणो वलदेवोपाध्यायस्य च सम्पादकत्वे नाट्यशास्त्रस्य प्रकाशनमभवत्। परन्त्वेतेषु संस्करणेषु प्रचुरपाठभेदभावात् शुद्धतायाः न किमपि प्रामाण्यं विद्वद्भिरधिगतम्। विंशतितमशताब्द्याः प्रारम्भिकेषु वर्षेषु टीकेयं काव्यशास्त्रानुवर्तिभिर्विद्वद्भिरुपलब्धा।

काश्मीरप्रदेशवास्तव्येन प्रसिद्धेन विदुषाऽभिनवगुप्तमहोदयेन नाट्यशास्त्रमधिकृत्य अभिनवभारतीनाम्नी टीका लिखिता। परमियं टीकाऽपि विद्वद्भ्योऽप्राप्या बभूव। विंशतितमशताब्द्याः प्रारम्भिकेषु वर्षेषु टीकेयं काव्यशास्त्रानुवर्तिभिर्विद्वद्भिरुपलब्धा।

मद्रासनगरस्य प्रसिद्धो विद्वान् संस्कृतज्ञो रामकृष्णकविमहोदयोऽभिनवभारती-टीकासहितस्य नाट्यशास्त्रस्य प्रकाशनाय संकल्पञ्चकार। १९२६ ई० तमेऽब्देऽस्य ग्रन्थस्य प्रथमो भागः सप्ताध्यायात्मकः प्रकाशितो बभूव। तदनन्तरं १९३४ ई० तमेऽब्देऽस्य ग्रन्थस्य द्वितीयो भागोऽपि प्रकाशनं लेभे। अत्र ८-१८ अध्याया अवर्तन्त। तृतीयो भागः १९५४ ई० तभेऽब्दे १९-२७ अध्यायात्मकः प्रकाशितो बभूव। चतुर्थोऽपि भागः २८-३६ अध्यायात्मकः प्रकाशकैः प्रकाशितः। एवञ्च सम्पूर्णनाट्यशास्त्रप्रकाशनस्य महत्कार्यमिदं गायकवाड ओरियन्टल सीरीज बडौदा संस्थया सम्पादितम्।

परन्तु प्रकाशनमिदमपि महदशुद्धियुतं पाठभेदक्लिन्नञ्च वर्तते। अस्य काठिन्यस्य द्वौ हेतू परिकल्प्येते। प्रथमस्तावत्तु - सम्पादकमहोदयेन सम्प्राप्ता अभिनवभारतीटीकापाण्डु-लिपिः स्थाने स्थाने कृमिकीटोट्टङ्किताऽऽसीत्। द्वितीयो हेतुरयमासीद् यदस्य पृष्ठानि संख्याङ्कितानि नाऽवर्तन्त। अव्यवस्थितानि तान्यासन्। यथास्थित्यामेव तानि मुद्रितान्यभूवन्। अतोऽस्य संस्करणस्य शुद्धता सदा सन्देहास्पदाऽभवत्। नाट्यशास्त्रस्य वाच्यार्थोऽभिप्रायश्चाऽपि तत्र न स्पष्टतां नीतः।

किञ्चित्समयपूर्वमिव विश्वेश्वरमहोदयेनाऽऽचार्यप्रवरेण अभिनवभारतीटीकायाः संशोधनं कृत्वा नवीनं संस्करणं प्रस्तुतम्। अत्र संस्करणे कीटोट्टङ्किताः पाठाः विदुषा टीकाकारेण पूर्णतां नीताः पृष्ठानि च यथास्थानं व्यवस्थापितानि। अस्य संस्करणस्य प्रकाशनं दिल्लीविश्वविद्यालयस्य हिन्दी-अनुसन्धान-परिषदा विहितम्।

डा० मनमोहनघोषमहोदयेन नाट्यशास्त्रमांग्लभाषायामनूदितम्। तच्च विस्तृत-भूमिकया सह रायल एशियायाटिक सोसाइटी आफ बंगाल संस्थया १९५० ई० तमेऽब्दे प्रकाशितम्।

वर्तमानसमये प्रकाशनसंस्थाभिरन्याभिरपि नाट्यशास्त्रप्रकाशनस्योद्योगो विहितो विधीयते च।

## ४. नाटयशास्त्रस्य विकासक्रमः

अतिविस्तृतपरिमाणयुते नाट्यशास्त्रे नाट्यकाव्यसमालोचनानियमान् भरतो मुनिर्विस्तरेण समैक्षत। वर्तमानसमये समुपलभ्यमाने ग्रन्थेऽस्मिन् षट्त्रिंशदध्यायाः पञ्चसहस्राधिकसंख्यापरिमिताश्च श्लोकाः सन्ति। एतदतिरिक्तं गद्यभागोऽपि प्रचुरोऽस्ति। अध्यायानां संख्याऽपि न निश्चिता। नाट्यशास्त्रस्य काव्यमालासंस्करणे सप्तत्रिंशदध्यायाः

वर्तन्ते। चौखम्बासंस्करणे षट्त्रिंशदेवाऽध्यायाः सन्ति। द्वयोरेव संस्करणयोर्विषय-वस्तु श्लोकसंख्यया सह भिन्नतां भजते।

अभिनवगुप्तेन सूचितम् - नाट्यशास्त्रे षट्त्रिंशदध्यायाः[१] षट्सहस्रञ्च श्लोकाः सन्ति। सम्भवतस्तेन नाट्यशास्त्रस्य गद्यभागोऽपि श्लोकेष्वेव परिगणितः। अथ च श्लोकसंख्या षट्सहस्रं लिखिता।

वर्तमानसमये यस्मिन् रूपे भरतनाट्यशास्त्रमिदं समुपलभ्यते, मूलरूपेण नैतदवस्थमासीदिति कैश्चिद् विद्वद्भिः सम्भाव्यते। सम्भावना चेयमपि क्रियते, यदेकस्मिन् समये एकस्यैव लेखकस्य नेयं कृतिः। समये समये परिवर्तनानि संशोधनानि चाऽत्र बभूवुः। नाट्यशास्त्रस्य समाप्तौ स्वयं भरतेन प्रोक्तम् - न तस्य कथनं परिपूर्णं, शेषन्तु विस्तरेण कोहलः कथयिष्यति।[२]

भरतनाट्यशास्त्रस्याऽध्ययनेन तस्य त्रयो विभागाः सुस्पष्टं लक्ष्यन्ते - (i) सूत्राणि (ii) वृत्तयो भाष्याणि वा (iii) कारिकाः श्लोकाः वा। नाट्यशास्त्रं सम्भवतो मूलरूपेण सूत्रेष्वेवाऽवर्तत, भरतेन च स्वयं सूत्राणां भाष्यं कृतम्। अभिनवगुप्तस्त्वेनं ग्रन्थं भरतसूत्रमिति ब्रूते। भरतोऽपि स्वयमलिखत् - "अस्मिन् ग्रन्थे सूत्राणां भाष्याणां कारिकाणाञ्च संग्रहो वर्तते।[३] तथ्यस्याऽस्य संक्षेपेण विशदीकरणमावश्यकम्।

(i) नाट्यशास्त्रस्य सूत्ररूपांशास्ते सन्ति, यत्र लेखको लक्षणानि ब्रूते। तानि लक्षणानि गद्यबद्धानि सन्ति, पद्यबद्धान्यपि च। रसलक्षणं भरतेन निम्नसूत्रे सूचितम् -

**"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः।"**

शृङ्गारलक्षणं निम्नसूत्रे वर्तते -

**तत्र शृङ्गारो नाम रतिस्थायिभावप्रभव उज्ज्वलवेषात्मकः।**

---

१. षट्त्रिंशकं भरतसूत्रमिदं विवृण्वन्, मध्ये षट्त्रिंशाध्यायम्। अभिनवभारती टीका।

२. शेषं प्रस्तारतन्त्रेण कोहलः कथयिष्यति। भरतनाट्यशास्त्र ३६.१५

३. विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः।
निबन्धो यः समासेन सङ्ग्रहं तं विदुर्बुधाः।।
रसा भावा ह्यभिनया धर्मीवृत्तिप्रवृत्तयः।
सिद्धिस्वरास्तथा तोद्यं गानं रङ्गञ्च सङ्ग्रहः।।
अल्पाभिधानेनार्थो यः समासेनोच्यते बुधैः।
सूत्रतः सा तु विज्ञेया कारिकार्थप्रयोगिनी।।
एवमेषोऽर्थसूत्रार्थो व्यादिष्टो नाट्यसङ्ग्रहः।
ततः परं प्रवक्ष्यामि सूत्रग्रन्थविकल्पनम्।। भरतनाटयशास्त्र ६.९-११ तथा ३१

(ii) वृत्तौ भाष्ये वा भरतेन स्वयमेव सूत्राणां व्याख्या कृता। यथा रसविषयकसूत्रस्य व्याख्या निम्नप्रकारेण वर्तते -

**विभावानुभावव्यभिचारिभावाद् रसनिष्पत्तिः। को वा दृष्टान्त इति चेदुच्यते। यथा नानाव्यञ्जनौषधि.........रसत्वमाप्नुवन्ति। ऋषय ऊचुः। रस इति कः पदार्थः? अत्रोच्यत आस्वाद्यत्वात्।**

अत्र प्रथमं वाक्यं सूत्रं वर्तते, शेषश्चांशो भाष्यं वृत्तिर्वाऽस्ति। व्यभिचारिभावानां व्याख्या भरतेन निम्नरूपेण विहिता -

**व्यभिचारिण इदानीं वक्ष्यामः। अत्राह - व्यभिचारिण इति कस्मादुच्यन्ते ? व्यभिचरन्तीति। वि+अभि इत्येतावुपसर्गौ। चर गतौ धातुः।**

अभिनवगुप्तोऽपि लिलेख - अस्मिन् ग्रन्थे भरतः प्रथमं सूत्राणि विरच्य तदनन्तरं तेषां वृत्तिं सूत्रविवरणस्वभावाः कारिकाः प्राकाशयत्।[१]

(iii) कारिकासु श्लोकेषु वाऽन्येषु भरतः स्वसिद्धान्तान् व्याचख्यौ। अथ च तत्राऽसौ पूर्ववर्तिनामाचार्याणां मतान्यप्युद्धृतवान्। श्लोकाश्चेमे चतुर्विधाः सन्ति -

(क) **भरतमुनिप्रोक्तसिद्धान्तप्रतिपादकाः श्लोकाः।** नाट्यशास्त्रे श्लोकानामेतेषामेव प्राचुर्यमस्ति।

(ख) **आनुवंश्याः श्लोकाः।** नाट्यशास्त्रे श्लोकानामेतेषां संख्या वर्तत एकत्रिंशत्। अत्र पञ्चदशश्लोका अनुष्टुप् छन्दसि, षोडशश्लोकाश्चाऽऽर्याछन्दसि विद्यन्ते। श्लोका एते ह्यधिकांशतः षष्ठसप्तमयोरध्याययोर्वर्तन्ते। अन्येष्वध्यायेषु न्यूना एव सन्ति तथाविधा आनुवंश्याः श्लोकाः। आनुवंश्यश्लोकानामभिप्रायोऽयं, यदेते श्लोकाः गुरुशिष्यपरम्परामनुसृत्य चिरकालादेव प्रचलिता अवर्तन्त। लेखकेनैते श्लोकाः यथास्थानं ग्रन्थे समावेशिताः। "**अत्रानुवंश्यौ श्लोकौ**" इत्यत्राऽऽनुवंश्यपदमभिनवगुप्त एवं व्याचख्यौ -

**"अत्रेति भाष्ये। अनुवंशभवौ शिष्याचार्यपरम्परासु वर्तमानौ श्लोकाख्यौ वृत्तविशेषौ सूत्रार्थसंक्षेपप्रकटीकरणेन कारिकाशब्दवाच्यौ भवन्तौ पठति यथेत्यादि।**

अभिप्रायोऽयं यदानुवंश्यप्रोक्ताः श्लोकाः बहुकालपूर्वमेव मनीषिभिर्विरचिताः गुरुशिष्यपरम्परामनुसृत्य भरतेन प्राप्ताः। अथ च ते श्लोकाः मुनिना स्वग्रन्थे नाट्यशास्त्रे यथास्थानं संगृहीताः। एवंविधाः श्लोकाः महाभारतादिग्रन्थेष्वपि संलक्ष्यन्ते।

---

१. सूत्रं सूत्रकं लक्षणं वक्ष्यामि। तेनैव च कारिकाः सङ्ग्रहीताः। ग्रन्थो भाष्यं तत्कृतञ्च विकल्पनमाक्षेपप्रतिसमाधानात्मकमिति परीक्षा निरुक्तशब्दवाच्या प्रतिज्ञाता। सूत्रविवरणस्वभावा तु कारिका सूत्रमपि प्रकाशयन्ती बहुतराक्षेपसमाधानव्याकुलशिष्यजनस्थितिपक्षं निरूपणेनोपकरोति इति भाष्यस्य पश्चादस्याः पाठः। अभिनवभारती टीका।

(ग) **सूत्रानुविद्धाः श्लोकाः।** नाट्यशास्त्रे केचन श्लोकाः "सूत्रानुविद्धे आर्ये भवत'' इति निर्दिश्योद्धृताः सन्ति। एते श्लोका आर्याछन्दसि वर्तन्ते। अर्थात्, श्लोका एते पूर्ववर्तिनामनुबद्धसूत्राणां भावान् सरलभाषया विशदीकुर्वन्ति।

(घ) **पूर्वाचार्याणां श्लोकाः।** नाट्यशास्त्रे श्लोका अनेके "भवन्ति चाऽत्र श्लोका'', अथवा "अत्रार्ये भवतः'' अथवा "अत्र श्लोका'' इति परैर्निर्दिश्य प्रयुक्ताः सन्ति। अभिप्रायोऽयं यद् भरतः प्राचीनाचार्याणां मन्तव्यान्युद्धृत्य विभिन्नेषु प्रकरणेषु यथास्थानं न्यवेशयत्। पद्यानामेतेषां सम्बन्धे ह्यभिनवगुप्तेन प्रोक्तम् -

**"ता एता ह्यार्या एकप्रघट्टकतया पूर्वाचार्यैर्लक्षणत्वेन पठिताः। मुनिना तु सुखसंग्रहाय यथास्थानं निवेशिताः।"**

नाट्यशास्त्रस्य समग्ररूपेण निर्मितिर्भरतेनैव कृतेति नैव प्रतीयते। मुनिना स्वयमेव प्रोक्तम् -

**"ग्रन्थस्याऽस्य विस्तरेण कथनं कोहलः करिष्यति।"**

उत्तरवर्तिनामाचार्याणामुक्तिभिरपि स्पष्टमेव प्रतिभाति यन्नाट्यशास्त्रस्य विकासेऽन्येषामपि लेखकानां योगो विद्यते। सम्भवतस्ते भरतस्यैव शिष्या अवर्तन्त। कोहलाचार्यस्य परिचयो ह्यनेकेषु ग्रन्थेषु समुपलभ्यते। कुट्टनीमतग्रन्थस्य लेखकेन दामोदरेण भरतेन सह कोहलस्याऽभिधानमपि प्राचीननाट्याचार्येषु परिगणितम्।[1] सङ्गीतरत्नाकरस्य कर्ता शार्ङ्गदेवः कोहलं स्वकृत्याधाररूपेणाऽङ्गीचकार।[2] हेमचन्द्रः काव्यानुशासने नाट्यभेदान् वर्णयन् कोहलं प्रमाणरूपेणोपन्यास्थात्।[3] रसार्णवसुधाकरे शिंगभूपालो भरतेन सह शाण्डिल्यदन्तिलमतङ्गान् प्रामाणिकान् गणयन् कोहलमपि नाट्यकर्तारं जगाद।[4] अभिनवगुप्तेनाऽपि टीकायामभिनवभारत्यां कोहलः स्थाने स्थाने समुद्धृतः।

भरतस्यैव शिष्यौ कोहलदन्तिलौ ग्रन्थानन्यानप्यलिखताम्। कोहललिखितस्य ग्रन्थस्यैकस्य तालपत्रे लिखिता पाण्डुलिपिर्लन्डननगरस्थितभारतीयकार्यालये (इन्डिया आफिस लन्डन) सुरक्षिता वर्तते। तस्यैकस्याऽन्यग्रन्थस्य तालशास्त्रस्यापि वर्णनं लभ्यते। दन्तिकोहलविरचितः सङ्गीतविषयको ग्रन्थो 'दन्तिकोहलीय' मपि समीक्षकैरुपलब्धः।

अनेन वर्णनेन सुस्पष्टमेव यन्नाट्यशास्त्रविकासे कोहलदन्तिलशाण्डिल्यादीनामाचार्याणां योगो वर्तत एव। भरतस्यैव शिष्यैरेतैर्नाट्यशास्त्रस्य विकासे सहयोगः प्रदत्तः। नाट्यशास्त्रे ह्येतेषामाचार्याणामुल्लेखो विद्यते।

---

१. कुट्टनीमतम् - श्लोक सं० ८१,।। २. सङ्गीतरत्नाकर - ११५

३. प्रपञ्चस्तु भरतकोहलादिशास्त्रेभ्योऽवगन्तव्यः। काव्यानुशासन

४. रसार्णवसुधाकर १.५०-५२

भावप्रकाशनग्रन्थस्य लेखकः शारदातनयो जगाद - नाट्यशास्त्रस्य द्वे रूपे अवर्तेताम्। "एकं तु द्वादशसहस्रश्लोकपरिमितमासीद् द्वितीयञ्च षट्सहस्रश्लोकपरिमितम्।" शारदातनय एतदपि प्रोवाच - प्राचीनकाले ग्रन्थोऽयं द्वादशसहस्रश्लोकपरिमितमविद्यत। उत्तरवर्तिनि काले विषयावबोधसौकर्याय मनीषिभिरयं षट्सहस्रश्लोकेषु संक्षिप्ततां नीतः।[१]

शारदातनयः प्रथमं तावन्नाट्यशास्त्ररचयितारं वृद्धभरतं वाऽऽदिभरतं वा सूचयति। तदनन्तरमेव नाट्यशास्त्रस्य कर्तारं भरतं ब्रवीति। अस्मिन् विषये विविधमनुमीयते समीक्षकैः। केचन समीक्षकाः मतमिदं प्रकटयन्ति -

नाट्यशास्त्रस्य प्रथमप्रणेता भरतमुनिरेवाऽऽसीत्। तेनेयं कृतिः सूत्ररूपेण प्रस्तुता। सूत्रात्मकग्रन्थस्यैतस्याऽनेकानि भाष्याणि समभूवन्। तदनन्तरं नाट्यशास्त्रमेतदति-विस्तारशाल्यभवत्। भरतेनेयं सकला सामग्री सङ्ग्रहीता सम्पादिता च। अथ च लेखनं तत् सुसम्बद्धं कृतम्। इत्थं वर्तमानसमये समुपलभ्यमानस्य नाट्यशास्त्रस्य रचना भरतेनैव कृता। । अयमेव हेतुर्यदस्मिन् नाट्यशास्त्रे सूत्रात्मिका सामग्री यत्र-तत्र विप्रकीर्णा लक्ष्यते।

आदिभरतस्य वृद्धभरतस्य वाऽस्तित्वमन्यैरनेकैः प्रमाणैः प्रमाणीक्रियते। शारदातनयेनाऽसौ समुल्लिखितः समुद्धृतश्च।[२] एतदवलोक्य तस्य गद्यबन्धोऽपि सिद्ध्यति। भण्डारकर ओरियन्टल रिसर्च इन्स्टीट्यूट संस्थायां नाट्यसर्वस्वदीपिकाऽभिधाना पाण्डुलिपिरेका सुरक्षिता वर्तते। तां समीक्षका आदिभरतकृतग्रन्थटीकां जानन्ति। राघवभट्टेनाऽभिज्ञानशाकुन्तलटीकायामादिभरतो भरतश्चाऽनेकशः समुल्लिखितः। बहुरूपमिश्रेण बहुरूपके स्वटीकायां षट्सहस्रं द्वादशसहस्रञ्च द्विविधमेद नाट्यशास्त्रं संसूचितम्। अनेन प्रतीयते यदेते द्विविधे एव नाट्यशास्त्रे प्राचीनकाले प्रचलिते आस्ताम्। अत्र प्रथममादिभरतकृतं द्वितीयञ्च भरतकृतं लोके प्रसिद्धमासीत्।

नाट्यशास्त्रस्याऽभिनवभारतीटीका सूचयति -

"केचन नास्तिकमतावलम्बिन आचार्याः नाट्यशास्त्रस्य त्रीन् प्रवर्तकान् गणयन्ति स्म - सदाशिवो ब्रह्मा भरतश्च। वस्तुतो ब्रह्मणो मन्तव्यानां प्रतिपादनायैव भरतेनेदं शास्त्रं विरचितम्। नेयं भरतस्य मूलकृतिः।"

---

१. एवं द्वादशसाहस्रैः श्लोकैरेकं तदर्घतः।
षड्भिः श्लोकसहस्रैर्यो नाट्यवेदस्य संग्रहः।।
भरतैर्नामतस्तेषां प्रख्यातो भरताह्वयः।। भावप्रकाशन पृ० २८७

२. एवं हि नाट्यवेदेऽस्मिन् भरतेनोच्यते रसः।
तथा भरतवृद्धेन कथितं गद्यमीदृशम्।
यथा नानाप्रकारैर्व्यञ्जनौषधैः पाकविशेषैश्च।। भावप्रकाशन

परन्त्वभिनवगुप्तो स्वयमेव मन्तव्यमिदं चखण्डे। तेन भरतमुनिरेव नाट्यशास्त्रस्य कर्ता प्रतिपादितः।[१] अभिनवगुप्तेन नाट्यशास्त्ररचनया सह नन्दिकेश्वरस्याऽपि सम्बन्धः प्रस्थापितः।

केषाञ्चन विदुषामियं मान्यता वर्तते, यदिदं नाट्यशास्त्रं वर्तमानसमये समुपलभ्यमानं, नैकस्मिन्नेव समये लिखितमासीत्। ग्रन्थस्याऽस्य विभिन्ना अंशाः विभिन्नेषु समयेषु लिखिता आसन्। यदि भरतमुनिरेवाऽस्य ग्रन्थस्य प्रणेता मन्यते, तस्यामवस्थायामन्य आचार्या अत्र परिवर्तनानि परिवर्धनानि च ध्रुवञ्चक्रुः। परन्तु यदि नाट्यशास्त्रपरम्परा भरतपूर्वीयाऽपि मन्यते, भरतो नाट्यशास्त्रविषयकप्रचलितप्राचीनसिद्धान्तानां समन्वयं सम्पादनञ्च कृत्वा ग्रन्थमेनं वर्तमानरूपेण न्यबध्नात्।

### ५. नाट्यशास्त्ररचनासमयः

नाट्यशास्त्रविकासक्रमे केषाञ्चित् समीक्षकानां मतमिदं वर्णितमासीद् यद् वर्तमानसमये समुपलभ्यमानस्य नाट्यशास्त्रस्य प्रणयनं नैकस्मिन्नेव काले समभवत्। क्रमशश्च तस्य विकासो जातः। काणेमहोदयस्य मन्तव्यमिदं यन्नाट्यशास्त्रस्य षष्ठसप्तमयोरध्याययोर्गद्यांश-स्याऽऽर्याणाञ्च रचना ई०पू० द्वितीयशताब्द्यामभवत्। तदनन्तरं केनचिन्नाट्यशास्त्रविदुषा षष्ठसप्तमयोरध्याययोः सङ्ग्रहं समन्वयञ्च विधाय तावध्यायौ पूर्णतां नीतौ। अनयैव प्रक्रियया सार्द्धमभिनयाङ्गसञ्चालनविविधगतिनिरूपकाणामध्यायानां रचना सञ्जाता। सम्भवतः सप्तदशाध्यायात् पञ्चत्रिंशदध्यायपर्यन्तं नाट्यशास्त्रस्य रचना तस्मिन्नेवावधौ सम्पूर्णतां प्राप्ता।

प्रथमाध्यायस्तदनन्तरञ्च चत्वारोऽध्यायाः पञ्चमशताब्दि (ई०) काले लिखित्वा संयुक्ताः बभूवुः। इयमपि धारणा केषाञ्चित् समीक्षकानां विद्यते, यत् प्रथमाध्यायस्य प्रथमषट्श्लोकान् ग्रन्थाभ्यन्तरीणप्रश्नोत्तरभागस्य भरतस्य कोऽपि शिष्यो लिलेख। मूलपाठश्च भरतलिखित एवाऽऽसीत्।

परन्त्वभिनवगुप्तस्तु मान्यतानामेतासां खण्डनञ्चकार। सम्पूर्णं नाट्यशास्त्रमेकेनैव मनीषिणा भरतेन लिखितमिति तेन प्रतिपादितम्।[२] अतोऽभिनवगुप्तमतमवलम्ब्य निष्कर्षोऽयं विद्यते, यत् सम्पूर्णं नाट्यशास्त्रं भरतविरचितमेकस्मिन्नेव समये लिखितमासीत्। परन्त्वभिनवगुप्तस्य प्रतिपादनमिदमेव यन्नाट्यशास्त्रं यथारूपं लभ्यते तथैवैकस्यैव

---

१. एतेन सदाशिवब्रह्मभरतमतत्रयविवेचनेन ब्रह्ममतसारप्रतिपादनाय मतत्रयीसारासारविवेचनं तद्ग्रन्थखण्डप्रक्षेपेण विहितमिदं शास्त्रं न तु मुनिविरचितमिति यदाहुर्नास्तिकधुर्योपाध्याया-स्तत्प्रयुक्तं सर्वानपह्नवनीयाबाधितशब्दलोकप्रसिद्धिविरोधाच्च।

अभिनवभारती टीका

२. एकस्य ग्रन्थस्याऽनेकवक्तृवचनसन्दर्भमयत्वे प्रमाणाभावात् स्वपरव्यवहारेण पूर्वपक्षोत्तरपक्षादीनां श्रुतिस्मृतिव्याकरणतर्कादिशास्त्रेष्वेककविरचितेष्वपि दर्शनात्। अभिनवभारती टीका।

लेखकस्य कृतिर्वर्तते। अस्य ग्रन्थस्य रचना एकस्मिन्नेव समये बभूव, इत्येवाऽवगन्तव्यम्। अतोऽस्य रचनाकालो निर्धारणीयः।

नाट्यशास्त्रप्रणेतारं भरतं परितः पौराणिककल्पनानामावरणं तथाऽऽच्छन्नं यथा तस्य समयकल्पनं सुदुष्करं वर्तते। अतो नाट्यशास्त्ररचनासमयनिर्धारणमपि सुकठिनं प्रतीयते। नाट्यशास्त्रविषयवस्तुनि लेखकस्य जीवनवृत्तस्य वा न किमपि सङ्केतचिह्नं लक्ष्यते। तथापि बाह्यैरान्तरिकैश्च प्रमाणैस्तद्रचनासमयः किञ्चिदनुमातुं शक्यते।

नाट्यशास्त्रसमयमधिकृत्य विदुषां विभिन्नानि मन्तव्यानि सन्ति। समयोऽसौ ई०पू० पञ्चमशतीत आरभ्य शतद्वय (ई०) पर्यन्तं गण्यते। तथाऽप्यस्मिन् विषयेऽन्वेषणपरैः समीक्षकैर्युक्तयो याः प्रतिपादिताः, यानि च प्रमाणानि प्रस्तुतानि, तैरयं काल ई०पू० द्वितीयशताब्दिकल्पः प्रतीयते। नाट्यशास्त्ररचनासमयविषये निम्नलिखितानि तथ्यानि विचारणीयानि सन्ति -

(i) प्रसिद्धवैयाकरणस्य युधिष्ठिरमीमांसकस्य विचारो वर्तते यन्नाट्यशास्त्रस्य पञ्चदशेऽध्याये वाचकाभिनये छन्दोविभागविषयः कातन्त्रव्याकरणेन प्रभावितो वर्तते। कातन्त्रव्याकरणस्य रचनाकालः (ई०पू०) पञ्चमशताब्दिकोऽस्ति। अतो नाट्यशास्त्रस्य रचनाऽपि तन्निकटसमयवर्तिनी कल्पनीया। अथ च नाट्यशास्त्रस्याऽनेकेषामंशानां सूत्रात्मकत्वात्तस्य समयः पुनः (ई०पू०) पञ्चमचतुर्थशताब्दिकोऽनुमातुं शक्यः।

(ii) मैकडोनलमहोदयस्य विचारो वर्तते, यन्नाट्यशास्त्रस्य कारिकाणां भाषा (ई०) षष्ठशताब्दिकालीना वर्तते। अतस्तस्य रचनाकालः स एवाऽवगन्तव्यः।

(iii) प्रो० सिलवां लेवी महोदयेन प्रतिपादितं यन्नाट्यशास्त्रस्य रचना द्वितीयशताब्द्यां (ई०) बभूव। अस्मिन् समये भारते इण्डोसीथियनक्षत्रपाणां शासनमासीत्। तेषु केचन क्षत्रपाः स्वामिन्निति पदेनाऽवबुध्यन्ते स्म। भरतनाट्यशास्त्रे लेखकेन राज्ञां सम्बोधनाय स्वामिन्निति पदस्य विधानं कृतम्। अतो नाट्यशास्त्रस्याऽयमेव रचनाकालोऽवगन्तव्यः। एतेषां विदेशीयशासकानां राजसभासु भारतीयरङ्गमञ्चस्य विकासो बभूव। अथ च नाट्यशास्त्रे शौरसेनीमागध्यर्धमागध्यावन्तीदाक्षिणात्यादिप्राकृतानां प्रयोगविधानं निर्दिष्टं विभिन्नावस्थासु लेखकेन। अत्र पाशुपतशाक्तनिर्ग्रन्थपदानां प्रयोगेनाऽऽभीराणां शकानाञ्चोल्लेखेनाऽपि नाट्यशास्त्ररचनाया अयमेव समयोऽनुमीयते।

नाट्यशास्त्रसमयसम्बन्धिन्य उपरिवर्णिता एता युक्तयो न तथा समयनिर्धारणक्षमाः प्रतिभान्ति, यथा सत्यतथ्यनिर्णयो विदुषां सन्तोषाय सम्पद्येत। ताभिर्युक्तिभिरेष रचनाकालो नितरां पूर्वकालीनः पश्चात्कालीनो वा सिद्ध्यति। प्राचीनकाव्येषु काव्यशास्त्रग्रन्थेषु वा भरतस्य तदीयनाट्यशास्त्रीयसिद्धान्तानाञ्च बहुश उल्लेखो वर्तते। तैरुल्लेखैर्नाट्यशास्त्ररचनाकालोऽनुमातुं शक्यः। एतद्विषये कानिचित्तथ्यानि प्रस्तूयन्ते -

(i) कुट्टनीमते दामोदरेण नाट्यशास्त्रं ब्रह्मप्रोक्तं प्रतिपादितम्।[१] नाट्यशास्त्रस्य प्रथमेऽध्याये भरतेनाऽपि नाट्यशास्त्रस्योत्पत्तिस्तथैव वर्णिता। अथ च कुट्टनीमतग्रन्थे नाट्यशास्त्रस्य केषाञ्चिद् विषयाणां कासाञ्चिच्च कथानामुल्लेखो विद्यते। नाट्यशास्त्रस्य षट्त्रिंशत्तमेऽध्याये वर्णिता नहुषकथा कुट्टनीमतस्य ९४६ श्लोके लेखकेन सङ्केतिता। नाट्यशास्त्रस्याऽन्येऽपि विषयाः कुट्टनीमतग्रन्थे सन्निविष्टाः सन्ति। कुट्टनीमतग्रन्थस्य समयोऽष्टमशताब्दिको (ई०) गण्यते। अतो नाट्यशास्त्रस्य लोके प्रसिद्धिरष्टमशताब्द्यां (ई०) ध्रुवमवर्तत।

(ii) ध्वनिप्रतिष्ठापक आनन्दवर्धनो नवमशताब्द्यां (ई०) बभूव। अनेकेषु स्थलेषु तेन भरत उद्धृतः। भरतप्रतिपादितानां वृत्तिरसपात्रादिविषयकसिद्धान्तानां तेन समर्थनं विहितम्।[२] आनन्दवर्धनेन लिखितम् -

'वेणीसंहारे भरतविहितनियमपरिपालनायैव लेखकेन प्रकृतरसविरुद्धप्रतिमुखसन्धि-विलासाङ्गरचना घटिता।[३]

वेणीसंहारस्य रचना सप्तमशताब्द्यां (ई०) बभूव। अतो भरतनाट्यशास्त्रस्य प्रसिद्धिस्तत्पूर्वकालीना निश्चीयते।

(iii) काव्यप्रकाशे मम्मटेन भरतकृतरससूत्रं "**विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्ति**" रित्युद्धृतम्। अथ च तत्र तेन भट्टलोल्लटशङ्कुकभट्टनायकाभिनवगुप्तकृताः रससूत्रव्याख्या अप्युल्लिखिताः। अभिनवगुप्तस्य समयः ९८०-१०२० (ई०), भट्टनायकस्य समयो दशमशताब्दिकः (ई०), शङ्कुकस्य समयो नवमशताब्दिकल्पो (ई०) भट्टलोल्लटस्य च समयः ७५०-८०० (ई०) गण्यते समीक्षकैः। अनेन सिद्धमिदं, यदस्मात् कालात् पूर्वमेव भरतस्य प्रसिद्धिः काव्यशास्त्रजगति बभूव।

(iv) भवभूतिर्भरतं तौर्यत्रिकसूत्रधारमप्सरोभिश्च नाटकाभिनयप्रयोक्तारं लिलेख।[४] तस्य समयः सप्तमशताब्दिको (ई०) गण्यते। एवञ्चाऽसौ भरतं वाल्मीकेरपि प्राचीनकालवर्तिनं प्रतिपादयामास।

---

१. ब्रह्मप्रोक्तनाट्यशास्त्रे। कुट्टनीमतम्। श्लोक - ७५
२. इति वा वृत्तीनां भरतप्रसिद्धानां कैशिक्यादीनाम्। एतच्च रसादितात्पर्येण काव्यनिबन्धनं भरतादावपि सुप्रसिद्धमेव। अत एव च भरतेन प्रबन्धप्रख्यातवस्तुविषयं प्रख्यातोदात्तनाय-कत्वञ्च नाटकस्याऽऽवश्यकत्वेनोपन्यस्तम्। ध्वन्यालोक
३. यथा वेणीसंहारे विलासाख्यप्रतिमुखसन्ध्यङ्गस्य प्रकृतरसनिबन्धनाननुगुणमपि भरतमतानुसरण-मात्रेच्छया घटनम्। ध्वन्यालोक
४. तं च स्वहस्तलिखितं मुनिर्भगवान् व्यसृजद् भगवतो भरतस्य तौर्यत्रिकसूत्रधारस्य। स किल भगवान् भरतस्तमप्सरोभिः प्रयोजयिष्यति। उत्तररामचरित - सप्तम अङ्क

(v) बाणभट्टः कादम्बर्यां चन्द्रापीडं वर्णयंस्तं भरतरचितकाव्यशास्त्रे प्रवीणमकथयत्। हर्षचरितेऽसौ भरतं सङ्गीतपद्धतिनिर्देष्टारमवर्णयत्। एकस्मिन् स्थाने बाणभट्टो नटप्रयुक्तं रेचकमारभटीञ्चाऽवर्णयद् यस्य प्रतिपादनं भरतोऽप्यकरोत्। बाणभट्टस्य समयः सप्तमशताब्दिको (ई०) वर्तते। एतत्पूर्वकालमेव भरतस्य प्रसिद्धिः सर्वत्र प्रथिता।

(vi) भामहदण्डिभट्टयुद्भटैः क्रमशस्त्रिशत्त्रिंशदलङ्काराणां प्रायशो वर्णनं कृतम्। भरतेन चत्वारोऽलङ्कारा एव प्रतिपादिता उपमादीपकरूपकयमकाः। एतेन प्रतीयते यद् भरतसमये चत्वार एवाऽलङ्कारा प्रसिद्धा अवर्तन्त। यदि ततोऽधिकानामलङ्काराणां प्रसिद्धिरभविष्यद् भरतोऽपि तेषां विवेचनां ध्रुवमकरिष्यत्। एतेन सिद्ध्यति यद् भामहादीनामालङ्कारिकाणां भरतस्य च मध्ये शताब्दीनामन्तरालोऽविद्यत।

(vii) अश्वघोषकृतनाटकस्य सारिपुत्रप्रकरणस्य रचनापद्धतौ नाट्यशास्त्रस्य प्रभावो नितरां संलक्ष्यते। अस्मिन्नाटके तथा सङ्केताः शब्दाश्च वर्तन्ते, येऽश्वघोषं नाट्यशास्त्रपरिचितं साधयन्ति। अश्वघोषस्य समयो निश्चितः, स च प्रथमशताब्दिको (ई०) वर्तते। अतो नाट्यशास्त्रस्य रचना तत्पूर्वकालीना वर्तते।

(viii) कालिदासो भरतं नाट्यशास्त्रप्रवर्तकमप्सरोभिरभिनयप्रयोजकमष्टरसप्रतिपादकं देवानाञ्च समक्षं नाट्याभिनयप्रयोक्तारं जगाद। विक्रमोर्वशीयनाटकस्यैवैकः श्लोकः सर्वमेतद् विशदीकरोति।[१] भरतनाट्यशास्त्रेऽपि सर्वमेतदुपलभ्यते।[२]

कुमारसम्भवस्य द्वौ श्लोकौ भरतनाट्यशास्त्रस्य षष्ठैकविंशद्वाविंशाध्यानां विषय-वस्तूनि सङ्केतयतः।[३] रघुवंशस्यैकस्मिन् श्लोके[४] खण्डितानायिकायाः वर्णनं नाट्यशास्त्रस्य द्वयोः श्लोकयोः[५] नायिकाभेदेन संवदति। एवमेव रघुवंशवर्णितनृत्यप्रयोगो[६] नाट्यशास्त्रवर्णित-नृत्यप्रयोगतुल्यो[७] वर्तते।

---

१. मुनिना भरतेन यः प्रयोगो भवतीष्वष्टरसाश्रयः प्रयुक्तः।
ललिताभिनयं तमद्य भर्ता मरुतां द्रष्टुमनाः सलोकपालः।। विक्रमोर्वशीयम् २.१८

२. नाट्यशास्त्रप्रवर्तनम्। भरतनाट्यशास्त्र अध्याय - १
अप्सरोभिरभिनयप्रयोगः। भरतनाट्यशास्त्र १.४७-५७
लोकपालानां समक्षं नाट्याभिनयः। भ०ना०शा० १.५५
अष्टौ रसाः - शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः।। भ०ना०शा० ६.१५

३. तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम्।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम्।। कुमारसम्भव ७.९१
प्रमथमुखविकारैर्हासयामास गूढम्। कुमारसम्भव ७.९५

४. रघुवंश १९.२१।। ५. भरतनाट्यशास्त्र ३१.१०९-११०

६. अङ्गसत्त्ववचनाश्रयः मिथः स्त्रीषु नृत्यमुपधाय कल्पनम्। रघुवंश १९.३६

७. सामान्याभिनयो नाम ज्ञेयो वागङ्गसम्भवः। भ०ना०शा० २४.१

एतद्विवेचनेन सिद्ध्यति यद् भरतकृतनाट्यशास्त्ररचना कालिदासाद् बहुकालपूर्विका वर्तते। कालिदासस्य समयः प्रथमशताब्दिकः (ई०पू०) प्रसिद्धः। अतो भरतो द्वितीयशताब्दिकः (ई०पू०) सम्माननीयः। भरतनाट्यशास्त्ररचना च तस्मिन्नेव काले सञ्जातेति सिद्धान्तोऽपि ह्यवगन्तव्यः।

उपर्युक्तेन विवेचनेन सुस्पष्टमेव यद् भरतकृतनाट्यशास्त्ररचनासमयो (ई०पू०) द्वितीयशताब्दिको ध्रुवं कल्पयितुं शक्यते।

## ६. नाट्यशास्त्रस्य विषय-वस्तु

विशालकाये नाट्यशास्त्रे रूपकाणां काव्यानाञ्च रचनासमीक्षासम्बन्धिनियमानां विस्तरेण विवेचनं भरतेन मुनिना कृतम्। न तस्य सर्वस्य विस्तरेण निदर्शनमत्र सम्भवम्। परमध्यायक्रमेण विषयवस्तु समासेन वर्ण्यते।

(i) **प्रथमोऽध्यायः-**

अस्मिन्नध्याये विस्तरेण नाट्योत्पत्तिर्लेखकेन वर्णिता। देवाः ब्रह्माणं सर्ववर्णयोग्यं मनोरञ्जनसाधनं ययाचिरे। ब्रह्मा चतुर्भ्यो वेदेभ्यो नाट्यसामग्रीमादाय पञ्चमं नाट्यवेदमरचयत्। तदनन्तरं भरताय तस्योपदेशः, इन्द्रध्वजमहोत्सवे स्वपुत्रैरप्सरोभिश्च भरतकृतनाट्याभिनयोद्योगः, अभिनयकाले समुपस्थितानां विघ्नानां निवारणं, नाट्यस्य लक्षणं स्वरूपस्य च व्याख्याऽस्याऽध्यायस्य विषयाः सन्ति।

(ii) **द्वितीयोऽध्यायः-**

द्वितीयेऽध्याये नाट्यमण्डपानां भेदान्, प्रेक्षागृहाणां रचनां तेषाञ्च विभिन्नभागानां स्वरूपाणि, रङ्गशीर्षं, मत्तवारुणीं, प्रेक्षाभवनं, यवनिकामन्याश्च रचनाः भरतमुनिर्वर्णयामास।

(iii) **तृतीयोऽध्यायः-**

तृतीयाध्यायस्य वर्ण्यविषयाः सन्ति - रङ्गदैवतपूजनं, देवानां महादेवब्रह्मविष्णु-बृहस्पत्यादीनां ग्रहाणाञ्च पूजनं, तेभ्यश्च वरप्राप्तिः।

(iv) **चतुर्थोऽध्यायः-**

चतुर्थेऽध्यायेऽमृतमन्थनत्रिपुरदाहनाटकयोरभिनयस्ताण्डवनृत्यस्योत्पत्तिः, प्रयोगविधि-स्ताण्डवनृत्यस्याष्टोत्तरशतमुपकरणानि, द्वाविंशत्यङ्गहाराणां रेचकानाञ्चोपदेशः, गीतानां प्रयोग इत्येते विषयाः समुपस्थापिताः सन्ति।

(v) **पञ्चमोऽध्यायः-**

पूर्वरङ्गस्य,नान्द्याः, ध्रुवायाः प्रस्तावनायाश्च वर्णनं पञ्चमेऽध्याये वर्तते।

(vi) **षष्ठोऽध्यायः-**

षष्ठोऽध्यायो रसविषयो वर्तते। अत्र मुनिकृतपञ्चप्रश्नोपस्थापनं, रसविभावस्थायिभावानां विवेचनं, **"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति"** रिति रससूत्रमष्टरसानां

स्वरूपकथनञ्च वर्तते। तदनन्तरं वृत्तिप्रवृत्तिसिद्धिसप्तस्वरवाद्यगीतादीनां वर्णनमस्मिन्नध्याये लेखकेन विहितम्।

(vii) **सप्तमोऽध्यायः-**

सप्तमेऽध्याये रसभावस्थायिभावानामनुभावविभावव्यभिचारिभावानां भेदप्रभेदवर्णनं विद्यते।

(viii) **अष्टमोऽध्यायः-**

अङ्गोपाङ्गानामभिनयस्य, आङ्गिकवाचिकसात्त्विकाहार्येतिचतुर्विधाभिनयस्य निरूपण-मस्मिन्नध्यायेऽस्ति।

(ix) **नवमोऽध्यायः-**

अस्याध्यायस्य वर्ण्यविषयो वर्तते - हस्ताभिनयः। अत्र हस्तयोरङ्गुलीनाञ्च विभिन्न-मुद्राणामङ्गसञ्चालने च हस्ताभिनयस्य मार्गः प्रदर्शितो मुनिना।

(x) **दशमोऽध्यायः-**

दशमस्याध्यायस्य विषयो वर्तते - शरीराभिनयः। अत्र वक्षःपार्श्वकटीनां शरीर-स्याऽन्येषामवयवानामभिनयविधिर्वर्णिता वर्तते।

(xi) **एकादशोऽध्यायः-**

चारीविधानमस्याऽध्यायस्य विषयः। अत्र षोडशविधानां भौमीचारीणां पञ्चदशविधाना-ञ्चाऽऽकाशिकीनां चारीणां परिभाषाः प्रयोगाश्च प्रोक्ताः। अथ च पात्राणामभिनयगतिः, धनुर्विज्ञानप्रदर्शनं, व्यायाम इत्यादयो विषयाः प्रोक्ताः।

(xii) **द्वादशोऽध्यायः-**

अस्याऽध्यायस्य विषयो वर्तते - मण्डलविधानम्। अत्र मण्डलानां नामानि लक्षणानि च प्रोक्तानि।

(xiii) **त्रयोदशोऽध्यायः-**

अस्मिन्नध्याये गतिप्रचारो लेखकेन वर्णितः। अत्र रसानुकूलानां विविधपात्रा-नुकूलानाञ्च गतीनां सूक्ष्मवर्णनं विद्यते। स्त्रियः कथं पुरुषाभिनयं पुरुषाश्च महिलाभिनयं कुर्युरिति विधिरुपदिष्टा वर्तते।

(xiv) **चतुर्दशोऽध्यायः-**

अस्याऽध्यायस्य वर्णनविषयो वर्तते - अभिनये प्रवृत्तिधर्मव्यञ्जना। अत्र भारतवर्षस्याऽन्येषाञ्च वर्षाणां स्वरूपं पाञ्चाल्यावन्तीदाक्षिणात्यौड्रमागधी चेति चतस्रः प्रवृत्तयः, दिशां विभागाः लोकधर्मो नाट्यधर्मश्च, सुकुमाराण्याविद्धानि च द्विविधानि रूपकाणि मुनिना निर्दिष्टानि।

(xv) **पञ्चदशोऽध्यायः-**

अस्मिन्नध्याये वाचकाभिनयान्तर्गतछन्दसां विभागोऽस्ति। स्वरव्यञ्जनसञ्ज्ञाक्रियोपसर्गसन्ध्यादीनामालोचनं विद्यते, रूपकेषु संस्कृतप्राकृतभाषाप्रयोगनियमाः सन्ति। छन्दसां भेदानामष्टगणानां गुरुलघुयत्यादीनां विशेषाणां वर्णनानि वर्तन्ते।

(xvi) **षोडशोऽध्यायः-**

षोडशेऽध्याये वृत्तानां परिभाषा नियमाश्च सन्ति। अत्र समविषमवृत्तानामार्याछन्दसश्च निर्देशो विद्यते।

(xvii) **सप्तदशोऽध्यायः-**

अस्याऽध्यायस्य वर्ण्यविषयाः सन्ति - काव्यनिरूपणं, कवितायाः षट्त्रिंशल्लक्षणानि, उपमादीपकरूपकयमकालङ्काराणां स्वरूपणि, तेषां भेदा उदाहरणानि च, काव्यस्य दश दोषाः दशैव च गुणाः।

(xviii) **अष्टादशोऽध्यायः-**

अस्मिन्नध्याये भाषाविधानं विद्यते, कस्य पात्रस्य भाषा संस्कृतभाषा कस्य च प्राकृतभाषा भवितव्या। शौरसेनी प्रमुखप्राकृतभाषा वर्तते। अथ च मागधी, अवन्तिजा, प्राच्या, अर्धमागधी, बाह्लीका, दाक्षिणात्या चान्याः प्राकृतभाषा वर्तन्ते। एतदतिरिक्तं शबराभीरचाण्डालशकारद्रविडौड्रादयो विभाषाः विद्यन्ते।

(xix) **एकोनविंशोऽध्यायः-**

एकोनविंशस्याऽध्यायस्य विषयाः वर्तन्ते - काकुस्वरस्य व्यञ्जकत्वविधानं, पात्राणां परस्परसंम्भाषणविधिः सम्बोधनविधिश्च, द्विजातीनां वेश्यानाञ्च नामकरणविधिः, पाठ्यगुणाः, सप्तस्वरास्तेषाञ्च रसेषु विनियोगः, काकोर्द्वौ भेदौ, द्रुतविलम्बितस्वरा अलङ्कारा इत्येवमादयः।

(xx) **विंशोऽध्यायः-**

अस्मिन्नध्याये रूपकाणां दशभेदानामन्येषाञ्चोपभेदानां साङ्गोपाङ्गनिरूपणं विद्यते। अथ च नाट्याङ्गानाम् - अङ्कविष्कम्भकप्रवेशकादीनां रचना, नाटिकाया उपरूपकाणाञ्च भेदाः, लास्यलक्षणं प्रयोगाश्च मुनिना निर्दिष्टाः।

(xxi) **एकविंशोऽध्यायः-**

अस्याऽध्यायस्य वर्ण्यविषयो वर्तते - नाट्यकथावस्तुनो रचना। अत्राधिकारिकप्रासङ्गिककथानां पञ्चावस्थानां, पञ्चसन्धीनां, सन्ध्यङ्गानां, पञ्चकार्याणां, पञ्चार्थप्रकृतीनामर्थोपक्षेपकाणामित्यादीनां विस्तृतं विवरणं विद्यते। मुनिनाऽत्र प्रतिपादितम् - सर्वेषां वस्तूनां समावेशो नाट्यवस्तुनि सम्भवः।[१]

---

१. न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
न तत्कर्म न योगोऽसौ नाटके यन्न दृश्यते।। भ०ना०शा० २१.१२२

**(xxii) द्वाविंशोऽध्यायः-**

अस्मिन्नध्याये वृत्तीनां विस्तृतं विवरणं विद्यते। अत्र वृत्तीनामुत्पत्तिर्वर्णिता। भारती-सात्त्वती-कैशिकी-आरभटी चेति चतुर्विधवृत्तीनामुदयं निर्दिश्य तासां लक्षणानि प्रोक्तानि विविधरसेषु चोपयोगाः वर्णिताः।

**(xxiii) त्रयोविंशोऽध्यायः-**

अस्याऽध्यायस्य विषयो वर्तते - आहार्याभिनयनिरूपणम्। अत्र निरूपिताः सन्ति - आहार्याभिनयस्य स्वरूपं, नेपथ्यं, वेशभूषोपायाः, नेपथ्यस्य चतुर्विधत्वम् - पुस्तमलङ्कारा अङ्गरचना सञ्जीवनञ्च।

**(xxiv) चतुर्विंशोऽध्यायः-**

अस्याऽध्यायस्य वर्ण्यविषयो वर्तते - सामान्याभिनयः। अत्र वर्णिताः विषयाः सन्ति - तत्त्वानां बाह्योत्पत्तिः तरुणीनां विंशतिविधा अलङ्काराः - त्रयोऽङ्गजाः, दश स्वभावजाः, सप्त चाऽयत्नजाः, रसभावानुकूलं शारीरिकाभिनयः, द्वादशविधाः वाचिकाभिनयाः, दर्शनादीनामभिनयो, विविधाः स्त्रियः, कामस्य दशावस्थाः, दूतीसम्प्रेषणम्, अष्टविधाः नायिकास्तासाञ्च कामतन्त्रवर्णनम्।

**(xxv) पञ्चविंशोऽध्यायः-**

अस्याऽध्यायस्य विषयो वर्तते - अभिनये बाह्योपचाराः। अत्रेमे विषयाः सन्ति - वैशिकस्य लक्षणानि, तस्य स्वाभाविकाः सम्पादिताश्च त्रयस्त्रिंशद् गुणाः, वैशिकस्य मित्राणि दूत्यश्च, स्नेहशीलानां घृणाकरीणाञ्च वनितानां चेष्टितानि, स्त्रीणां यौवनस्य चतस्रोऽवस्थाः, कामिनां चतुर्विधत्वं, स्त्रीवशीकरणस्य पञ्चोपाया इत्यादयः।

**(xxvi) षड्विंशोऽध्यायः-**

अस्मिन्नध्याये चित्राभिनयस्य वर्णनमस्ति। अत्र मुनिश्चन्द्रसूर्ययोरवस्थाविशेषान्, प्रातर्मध्याह्नसायंकालदिवसरात्र्यन्धकारादिसमयविशेषान् हर्षशोकादिभावप्रकटनविधिञ्च निर्दिदेश। अथ चाऽत्र विषयाः प्रोक्ताः - आकाशभाषितस्वगतजनान्तिकापवारितकसंवादाना-मभिप्रायाः, स्वप्नावस्था, मरणं, विषीवेगाभिनयः, वृद्धबालकानामासन्नमरणानाञ्च स्वरसंयोगविधिः जनसाधारणस्य चाऽभिनयशिक्षणविधिः।

**(xxvii) सप्तविंशोऽध्यायः-**

सप्तविंशाध्यायस्य वर्ण्यविषयो वर्तते - सिद्धिव्यञ्जनम्। अस्मिन्नध्याये दैवीमानुषीसिद्धयः, अभिनयसाफल्ये दर्शकैः सन्तोषप्रकाशनविधयः, दैवीसिद्धीनामभिप्रायाः, दुर्घटनापशकुननिवारणोपायाः नाट्यपरीक्षकाणाञ्च योग्यताः मुनिना व्याख्याताः।

**(xxviii) अष्टाविंशोऽध्यायः-**

अस्मिन्नध्याये चतुर्विधानां वाद्यानां ततावनद्धघनसुषिराणां, सप्तस्वराणां, स्वराणाञ्च ग्राममूर्च्छनाश्रुतिजातीनां वर्णनानि सन्ति।

**(xxix) एकोनत्रिंशोऽध्यायः-**

अस्मिन्नध्याये ततातोद्यवाद्यानां निरूपणं मुनिना कृतम्। अथ च विशिष्टरसेषु जातिस्वरप्रयोगविधानं वर्तते। तदनन्तरं चतुरो वर्णान् आरोह्यवरोहिस्थायिसञ्चारिणो निर्दिश्य तदाश्रितास्त्रयस्त्रिंशदलङ्कारा वर्णिताः सन्ति।

**(xxx) त्रिंशोऽध्यायः-**

अस्याऽध्यायस्य विषयो वर्तते सुषिरातोद्यवाद्यानि। अत्र वीणाविधेः वंशस्वराणाञ्च वर्णनं विद्यते।

**(xxxi) एकत्रिंशोऽध्यायः-**

अस्मिन्नध्याये मुनिना प्रोक्ताः - काललयभेदाः, गीतलक्षणान्यङ्गानाञ्च विवेचनं, ध्रुवतालविधानलास्यानां व्याख्याः।

**(xxxii) द्वात्रिंशोऽध्यायः-**

द्वात्रिंशाध्यायस्य विषयो वर्तते - ध्रुवाप्रतिपादनम्। अत्र प्रोक्ताः - ध्रुवायाः पञ्चभेदा अन्ये च प्रभेदाः, गायकानां, वादकानाञ्च गुणाः, स्त्रीभिर्गानं पुरुषैश्च वादनं, सङ्गीताचार्यस्य शिष्यस्य च गुणाः।

**(xxxiii) त्रयस्त्रिंशोऽध्यायः-**

त्रयस्त्रिंशेऽध्याये वाद्यानां विस्तृतं विवेचनं विद्यते। मृदङ्गपणवदर्दुरादीनामन्य-वाद्यानाञ्च वर्णनमत्र वर्तते। अथ च स्वातिनारदाभ्यां वाद्यानां प्रवर्तनं, वाद्यवादनावसराः, वाद्यदेवता इत्यादयो विषया अस्मिन्नध्याये प्रोक्ताः।

**(xxxiv) चतुस्त्रिंशोऽध्यायः-**

चतुस्त्रिंशाध्यायस्य विषयाः वर्तन्ते - स्त्रीपुरुषाणामुत्तममध्यमाधमत्रिविधप्रवृत्तीनां विचारः, चतुर्विधनायकाः - धीरोद्धतधीरललितधीरोदात्तधीरप्रशान्ताः, स्त्रीणां विभिन्नाः श्रेणयोऽन्तःपुरपरिचारिकाणां राजसेवकानाञ्च गुणाः।

**(xxxv) पञ्चत्रिंशोऽध्यायः-**

अस्याऽध्यायस्य प्रमुखविषयो वर्तते - भूमिपात्रस्य रचना। अत्र वर्ण्यविषयाः सन्ति - विभिन्नपदार्थैः कृत्रिमदृश्यानां निर्मितिः, सुकुमार आविद्धश्च द्विविधोऽभिनयः, सूत्रधार-पारिपार्श्वकनटशकारविटचेटनायिकादीनां गुणाः, विविधपात्रभूमिकानां विस्तृतविवेचना।

**(xxxvi) षट्त्रिंशोऽध्यायः-**

अस्याऽध्यायस्य वर्ण्यविषयाः सन्ति - नाट्यस्य भूमावतरणम्, ऋषीणां नामानि तत्कृताश्च प्रश्नाः, नटवंशानामुत्पत्तेरितिहासो नाट्यशास्त्रस्य च माहात्म्यम्।

### ७. नाट्यशास्त्रस्य प्राचीनाष्टीकाः

बहुचर्चितमतिमहत्त्वपूर्णञ्च नाट्यशास्त्रमधिकृत्य प्राचीनकाले विद्वद्भिर्बह्व्यष्टीकाः लिखिताः। परन्तु वर्तमानसमये केवलमेकैव टीका समुपलभ्यते अभिनवभारतीटीकाऽ-

भिनवगुप्तकृता। इयं टीका लेखकेन नाट्यवेदविवृत्यभिधानाऽपि विहिता। अभिनवगुप्तस्य टीकायामस्यामनेकप्राचीनटीकाकाराणां नामानि मतानि चोल्लिखितानि सन्ति। परन्तु तासां काऽपि टीका ग्रन्थो वा वर्तमानसमये नोपलभ्यते। अभिनवभारतीटीकायां भट्टलोल्लट-भट्टोद्भटशङ्कुकभट्टनायकराहुलभट्टयन्त्राणां टीकाकाराणां नामानि लभ्यन्ते। शार्ङ्गधरेणाऽपि भरतनाट्यशास्त्रस्य षट् टीकाकाराणां नाम्नामुल्लेखो विहितः - भट्टलोल्लटोद्भटशङ्कुक-भट्टनायकाभिनवगुप्तकीर्तिधराः।[1] नाट्यशास्त्रटीकाकारेषु हर्षवार्तिकमातृगुप्तौ चाऽपि परिगणितौ। एवं भरतनाट्यशास्त्रस्य प्राचीनटीकाकारेषु दशनामानि समुपलभ्यन्ते -

(i) उद्भटः (ii) भट्टलोल्लटः, (iii) शङ्कुकः (iv) भट्टनायकः, (v) राहुलः, (vi) भट्टयन्त्रः (vii) कीर्तिधरः (viii) हर्षवार्तिकः (ix) मातृगुप्तः (x) अभिनवगुप्तः।

एतेषां संक्षिप्तपरिचयो वर्ण्यते -

**(i) उद्भट :-**

अभिनवभारतीटीकायामुद्भटस्योल्लेखोऽभिनवगुप्तेनाऽनेकशो विहितः। नाट्यशास्त्रस्य ६.१०, ९.१८३, १८.७६ श्लोकानां व्याख्यासु वृत्तिचतुष्टयस्य च व्याख्यायामुद्भटस्य मतस्योल्लेखो विद्यते। नाट्यशास्त्रस्य २१.९७ श्लोकस्य व्याख्यायां तेनोद्भटमतस्य खण्डनं कृतम्। नाट्यशास्त्रमधिकृत्योद्भटकृता टीका वर्तमानसमये नोपलभ्यते, परन्त्वभिनवगुप्तेन शार्ङ्गधरेण चाऽसौ टीकाकाररूपेण सूचितः। उद्भटस्य समयोऽष्टमशताब्द्याः (ई०) गण्यते।

**(ii) भट्टलोल्लटः-**

नाट्यशास्त्रटीकाकाररूपेण भट्टलोल्लटोऽपि प्रसिद्धः। तस्य परिचयो न केवल-मभिनवगुप्तशार्ङ्गधरयोर्वचनेषूपलभ्यते, मम्मटहेमचन्द्रमल्लिनाथगोविन्दठक्करादयोऽपि तं भरतरससूत्रव्याख्यातृरूपेणोल्लिलिखुः। अभिनवगुप्तेन लिखितं यद् भट्टलोल्लटेनोद्भटमतस्य खण्डनं कृतम्। अतोऽयमुद्भटपरवर्ती मन्तव्यः। अस्य समयः ८००-८४० (ई०) मध्यवर्ती गण्यते। अभिनवभारतीटीकायां भरतरससूत्रव्याख्याप्रसङ्गे भट्टलोल्लटस्योद्धरणानि समुपलभ्यन्ते। तत्राऽभिनवगुप्तेनेदमप्युद्धृतं यद् भट्टलोल्लटानुसारं रसानां संख्या न नियता। हेमचन्द्रेणाऽपि काव्यानुशासने भट्टलोल्लटस्य द्वौ श्लोकावुद्धृतौ। अथ चाऽसावपराजितिनाम्ना सम्बोधितः। अनेन विवरणेन प्रतीयते यद् भट्टलोल्लटस्य जनकोऽपराजिताभिधानो भवेत्। नाम्नैव भट्टलोल्लटस्य काश्मीरप्रदेशनिवासित्वं सिद्धम्।

**(iii) श्रीशङ्कुकः-**

अभिनवगुप्तमम्मटौ सूचयतो यच्छङ्कुको भट्टलोल्लटकृतां भरतरससूत्रव्याख्यां चखण्डे। नाट्यशास्त्रस्याऽभिनवगुप्तकृताभिनवभारतीटीकायां शङ्कुकस्य नाट्यसम्बन्धि-मतानामुल्लेखोऽनेकेषु स्थानेषु वर्तते। नाट्यशास्त्रस्य ३.२१-३२ श्लोकानां व्याख्याने

---

१. व्याख्यातारो भारतीये लोल्लटोद्भटशङ्कुकाः।
भट्टाऽभिनवगुप्तश्च श्रीमान् कीर्तिधरोऽपरः।। सङ्गीतरत्नाकर

रङ्गपीठसम्बन्धे, १८.१० श्लोकस्य व्याख्यायां नाटकसम्बन्धे, १८.१२ श्लोकस्य टीकायां नृपतीनामिति पदस्य व्याख्याने, १८.६० श्लोकस्य व्याख्यायां नाटिकासम्बन्धे, २१.४० श्लोकस्य व्याख्यायां प्रतिमुखसन्धिप्रसङ्गे, २१.४२ श्लोकस्य व्याख्यायां विमर्शसन्धिप्रसङ्गे ह्यभिनवगुप्तः शङ्कुकस्य मन्तव्यानि प्राकाशयत्। अथ च २१.९ श्लोकस्य व्याख्यायां गर्भाङ्गविद्रवचर्चायां, चतुर्विंशाध्यायस्य व्याख्याने चाऽभिनवगुप्तः शङ्कुकस्य मन्तव्यान्युल्लिलेख। अनेकेषु प्रसङ्गेष्वसौ शङ्कुकाभिमतानां खण्डनमपि चकार। नाट्यशास्त्रस्य २४.६६-७१ श्लोकानां व्याख्यायामभिनवगुप्तोऽलिखद् यच्छङ्कुकोऽभिनय-भेदान् चत्वारिंशत्सहस्रसंख्यकान् व्याजहार।[1] नाट्यशास्त्रस्यैकोनत्रिंशदध्यायाना-मभिनवभारतीटीकासु शङ्कुकस्य मन्तव्यानि स्थाने स्थाने समुपलभ्यन्ते। अनेनानुमीयते यच्छङ्कुकः सम्पूर्णनाट्यशास्त्रमधिकृत्य टीकामलिखत्।

शङ्कुकस्योल्लेखः कल्हणेन भुवनाभ्युदयकाव्यलेखकरूपेणाऽपि विहितः।[2] काव्यमिदं काश्मीरराजमजितपीडं सम्मानयितुं लिखितमासीत्। अजितपीडस्य समयः ८१३ (ई०) गण्यते। अतः शङ्कुकोऽपि नवमशताब्दि (ई०) पूर्वार्द्धे दभूवेति मन्तव्यम्।

(iv) **भट्टनायकः -**

भरतरससूत्रस्य मम्मटोक्तचतुर्षु व्याख्यातृषु भट्टनायकस्तृतीयो वर्तते। अभिनवभारती-टीकानुसारं भट्टनायकेन भट्टलोल्लटशङ्कुककृतभरतरससूत्रव्याख्ययोः खण्डनं कृतम्। रसचर्वणाविषयेऽसौ भोगवादसिद्धान्तं प्रतिपादयामास। अभिनवगुप्तेन केषुचित् स्थानेषु भट्टनायकस्य मन्तव्यान्युद्धृतानि। अथ चाऽसौ भट्टनायककृतसहृदयदर्पणग्रन्थमप्यनेकेषु स्थानेषूद्धृतवान्। पी०वी० काणे महोदयस्य कथनमिदं वर्तते यद् भट्टनायकेन समग्रनाट्यशास्त्रस्य टीका न कृता।

भट्टनायक आनन्दवर्धनस्य ध्वनिसिद्धान्तं चखण्डे। वस्तुध्वनिमलङ्कारध्व-निञ्चाऽसावसङ्गतमेव मेने। ध्वनिसिद्धान्तखण्डनायैवाऽसौ सहृदयदर्पणग्रन्थमरचयत्। अतोऽसौ ग्रन्थो ध्वनिध्वंसोऽप्युच्यते। परं नाऽसौ ग्रन्थो वर्तमानसमये समुपलभ्यते। अभिनवगुप्तेन भट्टनायकमतस्य खण्डनं कृतम्। अतो भट्टनायकस्य समय आनन्दवर्धनाभिनवगुप्तसमयमध्यवर्ती कल्पयितुं शक्यते।[3] राजतरङ्गिण्यां काश्मीरराजास्याऽवन्तिवर्मसुतस्य शङ्करवर्मणः समये भट्टनायकस्योल्लेखः समुपलभ्यते।[4] अतो भट्टनायको नवमशताब्द्युत्तरार्धे (ई०) दशमशताब्दिपूर्वार्द्धे (ई०) वा बभूवेति कल्पना समुचिता।

---

१. ननु यथा शङ्कुकेनोक्तं चत्वारिंशत्सहस्राणीति। अभिनवभारती टीका

२. कविर्बुधमनाः सिन्धुशशाङ्कशङ्कुकाभिधः।
यमुद्दिश्याकरोत् काव्यं भुवनाभ्युदयाभिधम्।। राजतरङ्गिणी ४.७०५

३. पी०वी० काणे : संस्कृत काव्यशास्त्र का इतिहास (प्रथम संस्करण) पृ० २०८

४. राजतरङ्गिणी ५.१५९

(v) **राहुलः-**

अभिनवगुप्तो नाट्यशास्त्रस्याऽभिनवभारतीटीकायां केषुचित् स्थानेषु राहुलमतमप्युल्लिलेख। अयमुल्लेखस्त्रिषु स्थानेषु वर्तते। राहुलस्यैकः श्लोको वैशाखरेचितविषये समुद्धृतोऽस्ति।[१] द्वितीयोल्लेखश्चतुर्थाध्यायस्य टीकायां निम्नरूपेण वर्तते -

**परोक्षेऽपि हि वक्तव्यो नार्या प्रत्यक्षवत् प्रियः।**
**सखी च नाट्यधर्मोऽयं भरतेनोदितं द्वयम्।**[२]

अथ च चतुर्विंशाध्यायस्य टीकायामभिनवगुप्तेन लिखितम् - "भरतेन नवयुवतीनां ये विंशत्यलङ्कारा: वर्णिताः तदतिरिक्तं राहुलो मौग्ध्यमदभावविकृतपरिपतनालङ्कारानपि प्रचक्षते।[३]

(vi) **भट्टयन्त्रः-**

भट्टयन्त्रेणाऽपि नाट्यशास्त्रस्य टीका लिखिता भवेदिति सङ्केताः प्राप्यन्ते। अभिनवगुप्तेनैकस्मिन् स्थाने भट्टयन्त्रमतमेवमुद्धृतम् -

**शिक्षार्हस्वेच्छान्यनृत्तकतिपयनाट्याङ्गकृतं नृत्तमभ्यासफलमिति भट्टयन्त्रः।**[४]

(vii) **कीर्तिधरः-**

भरतप्रोक्तनाट्यशास्त्रटीकाकारेषु कीर्तिधरस्याऽप्युल्लेखो विद्यते। तस्योल्लेखोऽभिनवगुप्तेनैवं विहितः-

**नाट्यमेवेदमिति कीर्तिधराचार्यः।**[५]

शार्ङ्गधरोऽपि कीर्तिधरं नाट्यशास्त्रटीकाकारमाचख्यौ।

(viii) **हर्षवार्तिकः -**

नाट्यशास्त्रमधिकृत्य वार्तिकग्रन्थस्यैकस्य रचना अभिनवगुप्तादपि प्राचीनाऽवर्ततेति सङ्केतोऽभिनवभारतीटीकातः समुपलभ्यते। अभिनवगुप्तः कतिपयेषु स्थानेषु वार्तिककारमतस्योद्धरणानि प्रास्तौत्। सम्भवतो वार्तिककारो हर्षाभिधानः श्रीहर्षाभिधानो वा समवर्तत। अभिनवभारतीटीकायां क्वचिद् "वार्तिककृताऽप्युक्तम्"[६] कुत्रचिच्च "श्रीहर्षवार्तिकम्"[७] इति लिखितं वर्तते। अभिनवभारत्यां वार्तिककारमतस्योल्लेखाः नाट्यशास्त्रस्य १.८४, २.९७-९८, ४.२६७-६८, ४.३३१, ५.८-१५, ५.१८० श्लोकानां व्याख्यासु वर्तन्ते। अत्र वार्तिककारः श्लोकानां व्याख्यया सह स्वमतभेदानपि व्याकरोत्। यथा भरतस्तु नाट्यनृत्ययोर्भिन्नत्वं प्रत्यापादयत्, परं वार्तिककारस्तयोरभिन्नतां प्रादर्शयत्।[८]

---

१. नाट्यशास्त्रम् (अभिनवभारतीटीकासहितम्) गायकवाड ओरियन्टल सीरीज पृ० ११५
२. नाट्यशास्त्र (अभिनवभारतीटीकासहितम्) गायकवाड ओरियन्टल सीरीज पृ० १७२,
३. वही पृ० १६४।। ४. वही पृ० २०८,
५. वही पृ० २०८।। ६. पृ० १७२।। ७. वही पृ० २०७
८. वाच्याऽनुगतेऽभिनये प्रतिपाद्येऽर्थे च गात्रविक्षेपैः।
उभयोरपि हि समानः को भेदो नृत्यनाट्यगतः।। वही पृ० १७२

नाट्यशास्त्रमधिकृत्य विरचिताः वार्तिकाः मुख्यरूपेणाऽऽर्याछन्दसि वर्तन्ते। परन्तु केषुचित् स्थानेषु गद्यरचनाऽपि वतति। सम्भवतष्टीकेयं षष्ठाध्यायपर्यन्तमेव लेखकेन लिखिता। यतस्तस्या उद्धरणानि षष्ठाध्यायपर्यन्तमेवाऽभिनवभारत्यां वर्तन्ते।

वार्तिककारस्य समयव्यक्तित्वादिसम्बन्धे न केऽपि सङ्केताः समुपलभ्यन्ते। डा० शङ्करन् महोदयो 'रस सिद्धान्त का इतिहास' इति पुस्तके प्रत्यापादयत् "कान्यकुब्जाधीश्वरो हर्षवर्धन एव वार्तिककारो हर्ष इति।" किन्त्वस्य कथनस्य न किमपि सशक्तं प्रमाणं तेन प्रस्तुतम्।

(ix) मातृगुप्तः-

अभिनवभारतीटीकायामभिनवगुप्तो मातृगुप्ताभिधानस्य नाट्यशास्त्रव्याख्यातुराचार्यस्योल्लेखमपि चकार। अनेन प्रतीयते, यन्मातृगुप्तोऽपि नाट्यशास्त्रमधिकृत्य कामपि टीकामरचयत्। "पुष्प" इति पारिभाषिकशब्दस्य व्याख्यायां मातृगुप्तमतमभिनवगुप्त उद्धृतवान्।[१] केषुचिदन्येष्वपि ग्रन्थेषु मातृगुप्तमतान्युद्धृतानि सन्ति। भावप्रकाशनग्रन्थे कथावस्तुसम्बन्धे मातृगुप्तस्य मतमुद्धृतं लभ्यते।[२]

राघवभट्टोऽभिज्ञानशाकुन्तलटीकायां सूत्रधारनान्दीनाटकादीनां पारिभाषिकपदानां लक्षणानि प्रदर्शयन् मातृगुप्तश्लोकानपि लिलेख। भरतरचितान्यारम्भबीजलक्षणानि पद्यानि प्रस्तुवन्नसौ मातृगुप्तविषये लिखति -

**अत्र विशेषो मातृगुप्ताचार्यैरुक्तः।**
**क्वचित् कारणमात्रं तु क्वचिच्च फलदर्शनम्।।**

सागरनन्दिना नाटकलक्षणरत्नकोशग्रन्थे मातृगुप्तस्य श्लोका उद्धृताः। कुन्तको वक्रोक्तिजीवितग्रन्थे मातृगुप्तस्य श्लोकान् प्रादर्शयत्। क्षेमेन्द्रेणौचित्यविचारचर्चायां मातृगुप्तस्य श्लोका उद्धृताः। सुन्दरमिश्रो नाट्यप्रदीपग्रन्थे भरतस्य नान्दीलक्षणमुल्लिख्य मातृगुप्तकृतव्याख्यामनेन विधिना समकेतयत् -

**"अस्य व्याख्याने मातृगुप्ताचार्यैः षोडशांघ्रिपदापीयमुदाहृता"**

राजतरङ्गिण्यां कल्हणो लिखति -"हर्षविक्रमादित्यो मातृगुप्ताय कवये राजशासनं समर्प्य स्वयं वाराणसीं गत्वा संन्यासाश्रममङ्गीचकार। मातृगुप्तो भर्तृमेण्ठस्य समकालीनोऽवर्तत।[३] प्रमाणेनाऽनेन मातृगुप्तस्य समयः सप्तमशताब्दिपूर्वार्द्धको (ई०)

---

१. यथोक्तं मातृगुप्तेन -
पुष्पञ्च जनयन्नेको भूयोऽनुस्पर्शनान्वितः।
भरतनाट्यशास्त्रम् (अभिनवभारतीटीकासहितम्) पृ० ४०२

२. पूर्ववृत्ताश्रयमपि किञ्चिदुत्पाद्यवस्तु च।
विधेयं नाटकमिति मातृगुप्तेन भाषितम्।। भावप्रकाशन पृ० २३४

३. राजतरङ्गिणी ३.२६०-२६२

ऽवगम्यते। परन्तु मातृगुप्तस्य कवेर्नाट्याचार्यस्य वा मातृगुप्तस्यैकत्वं संशयास्पदमेव।[१] केचन विद्वांसो मातृगुप्तस्य कालिदासस्य चैकत्वप्रतिपादनमपि प्रययासुः।[२] परमत्र न किमपि प्रामाण्यमुपलभ्यते।

(x) अभिनवगुप्तः -

नाट्यशास्त्रस्य टीकासु प्रसिद्धतमा पाण्डित्यपूर्णा टीका अभिनवगुप्तकृता विद्यते। सा च ह्यभिनवभारतीनाम्ना नााट्यवेदविवृतिनाम्ना वा प्रसिद्धाऽस्ति। अभिनवगुप्तकृता टीकेयं नाट्यशास्त्रविषयान् सम्यग्रूपेण प्रकाशयति। टीकायामस्यामसौ प्राचीनटीकाकाराणां नाट्याचार्याणां मतानप्यतिविस्तरेणोद्धृतवान्। अथ चाऽभिनवगुप्तो ध्वन्यालोकमधिकृत्य ध्वन्यालोकलोचनाभिधानां टीकामप्यलिखत्। शैवमतावलम्बिनाऽभिनवगुप्तेन शैवदर्शनविषया अप्यनेके ग्रन्थाः प्रणीताः। अभिनवगुप्तस्य विस्तृतं विवरणं तत्प्रसङ्गे विद्यते।

अभिनवगुप्तकृतसाहित्यरचनासमयः ९८०-१०२० ई० सम्भवति। वर्तमानयुगे बहुकालं यावद् विद्वद्भिष्टीकेयं नोपलब्धा। विंशशताब्द्याः प्रारम्भसमयेऽस्याष्टीकायाः केचनांशाः समीक्षकैः प्राप्ताः। परन्त्वधुना टीकाया अस्या अधिकांशो भागो विद्वद्भिरधिगतः। रामकृष्णकवेः सम्पादकत्वेऽस्याः प्रकाशनं गायकवाड ओरियन्टल सीरीज बड़ौदा इति संस्थया विहितम्। आचार्यो विश्वेश्वरश्चापि काञ्चिदप्यध्यायान् टीकाया अस्याः सम्पादयामास।

नाट्यशास्त्रस्य व्याख्यातृष्वनेकेष्वाचार्यनामसु समुपलब्धेष्वपि केवलमभिनव-भारतीटीकैव समुपलभ्यते। अन्याः प्राचीनाष्टीका अलभ्या एव सन्ति।

---

१. एस०के०डे : हिस्ट्री आफ पोएटिक्स - भाग १ पृ० ३३

२. डा० भाऊ दाजी : जर्नल आफ रायल एशियाटिक सोसाइटी (१८६१) पृ० ३३

## मेधावी

प्राचीनकाव्यशास्त्रीयग्रन्थेषु काव्यशास्त्रकाररूपेण मेघाविन उल्लेखो बहुशः समुपलभ्यते। भामहेन नमिसाधुना राजशेखरेण च तस्योल्लेखो विहितः। परं मेधाविरचितः कोऽपि ग्रन्थो नोपलभ्यते। परन्तु समालोचकानामेतेषामुल्लेखैर्वयं विद्मो यत् केनचिन्मेधाविनाम्ना काव्यशास्त्राचार्येण कस्यचिदलङ्कारशास्त्रग्रन्थस्य निबन्धनं कृतम्।

राजशेखरो मेधाविन उल्लेखं प्रतिभाप्रभावनिरूपणप्रसङ्गे चकार। असावलिखत् - "प्रतिभावशाज्जन्मान्धोऽपि मेधावी कञ्चिदपि विषयं प्रत्यक्षवदपश्यत्।[1] अयमपि सङ्केतो लभ्यते, यन्मेधावी कालिदास इत्युपाधिमपि लेभे। त्रिकाण्डशेषकोषग्रन्थे मेधाविरुद्रः कालिदासश्चेति द्वे पदे पर्यायवाचिरूपेण वर्णिते स्तः। राजशेखरोऽपि काव्यमीमांसायां कालिदासं काव्यशास्त्रकृद्रूपेण स्वीचकार।

भामहो मेधाविनं द्वयोः स्थानयोरुल्लिलेख। तेन प्रोक्तम् -

"मेधाविना सप्तोपमादोषाः प्रोक्ताः - हीनताऽसम्भवलिङ्गभेदवचनभेदविपर्ययोपमानाधिक्योपमानासादृश्याः।[2] वामनस्तु विपर्ययदोषं हीनताधिक्यान्तर्गतं मत्वोपमायाः षडेव दोषानङ्गीचक्रे।[3] तदनन्तरं वामनेन दोषाणां लक्षणान्युदाहरणानि च प्रस्तुतानि।

भामहो मेधाविन उल्लेखमुत्प्रेक्षालङ्कारप्रसङ्गेऽपि चकार -

**यथासङ्ख्यमथोत्प्रेक्षामलङ्कारद्वयं विदुः।**
**संख्यानमिति मेधाविनोत्प्रेक्षाभिहिता क्वचित्।।[4]**

---

१. प्रत्यक्षप्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव, यतो मेधाविरुद्रकुमारदासादयो जन्मान्धाः कवयः श्रूयन्ते। काव्यमीमांसा पृ० ११-१२

२. हीनताऽसम्भवो लिङ्गवचोभेदो विपर्ययः।
उपमानाधिकत्वञ्च तेनाऽसदृशताऽपि च।।
त एत उपमादोषाः सप्त मेधाविनोदिताः। भामह : काव्यालङ्कार २.३९-४०

३. अनयोर्दोषयोर्विपर्ययाख्यस्य दोषस्यान्तर्भावान्न पृथगुपादानम्।
अत एवाऽस्माकं मते षड् दोषा इति।। काव्यालङ्कारसूत्रवृत्तेः (४.२.३१) वृत्तिः।

४. भामह : काव्यालङ्कार २.८८।।

अनेन पद्येन प्रतीयते यदुत्प्रेक्षालङ्कारं मेधावी संख्याननाम्नाऽपि प्रोवाच। दण्डिना लिखितम् - केचनाऽऽलङ्कारिकाः यथासङ्ख्यालङ्कारं सङ्ख्याननाम्नाऽपि विदन्ति।

एतद्वचनमाधारीकृत्य केचन समालोचकाः कथयन्ति - भामहग्रन्थस्य पाठोऽशुद्धो वर्तते, दण्डिनश्च ग्रन्थस्य पाठः शुद्धः। दण्डी लिखति -

**यथासङ्ख्यमिति प्रोक्तं सङ्ख्यानं क्रम इत्यपि।**[1]

अतः काव्यालङ्कारस्य शुद्धः पाठ एवं भवितव्यः -

**यथासङ्ख्यमिति मेधाविनोत्प्रेक्षाऽभिहिता क्वचित्।**

अस्याऽयमभिप्रायो यन्मेधावी यथासङ्ख्यमलङ्कारं सङ्ख्यानमिति प्रोवाच। अथ च केषुचिदलङ्कारग्रन्थेषूत्प्रेक्षा नाऽलङ्काररूपेणाऽभिहिता।

मेधाविन उल्लेखो नमिसाधुनाऽपि कृतः। तेन प्रोक्तम् - दण्डिमेधाविरुद्रभामहादीनां शास्त्राणि वर्तन्ते[2]। रुद्रटकृतकाव्यालङ्कारं टीकयता नमिसाधुनोपमायाः सप्तदोषप्रदर्शन-प्रसङ्गे मेधाविनः पुनश्चर्चाऽभिहिता। मेधाविनाम्ना सप्तोपमादोषानुल्लिख्य[3] नमिसाधु-स्तेषामुदाहरणान्यपि प्रास्तौत्। तत्र पञ्चोदाहरणानि तु भामहकृतकाव्यालङ्कारस्य वर्तन्ते, परमुदाहरणद्वयं नवमेव। उदाहरणे ते वर्तेते -

**भक्षिताः सक्तवो राजन् शुद्धाः कुलवधूरिव।**
**परमातेव निःस्नेहाः शीतलाः परकार्यवत्॥**
**स्फुरन्ति निखिलाः नीले तारकाः गगने निशि।**
**भास्कराभीषुसंस्पृष्टाः कृमयः कर्दमे यथा ॥**

उदाहरणे एते नमिसाधुना मेधाविनाम्नोद्धृते। अत उदाहरणे इमे मेधाविरचित-स्याऽलङ्कारग्रन्थस्य वर्तेते इति कल्पनीयम्।

मेधाविनमनुसरन् नमिसाधुः शब्दानां चत्वारो भेदान् वर्णयति - "नामाख्यातो-पसर्गनिपाताः। कर्मप्रवचनीयानामसौ गणनां शब्देषु न विदधाति।"[4]

---

१. काव्यादर्श २.२७३

२. ननु दण्डिमेधाविरुद्रभामहादिकृतानि सन्त्येवाऽलङ्कारशास्त्राणि।
रुद्रटकृतकाव्यालङ्कारस्य (१.२) नमिसाधुकृता टीका।

३. अथ च स्वरूपोपादाने सत्यपि चत्वार इति ग्रहणाद् यन्मेधाविरुद्रप्रभृतिभिरुक्तं यथा लिङ्गवचनभेदौ हीनताधिक्यमसम्भवो विपर्ययोऽसादृश्यमिति सप्तोपमादोषाः......................तदेतन्निरस्तम्।
रुद्रटकृतकाव्यालङ्कारस्य (११.१४) नमिसाधुकृता टीका।

४. एत एव चत्वारः शब्दविधा इति येषां सम्यङ्मतं तत्र तेषु नामादिषु मध्ये मेधाविरुद्रप्रभृतिभिः कर्मप्रवचनीयाः नोक्ताः भवेयुः। वही (२.२) नमिसाधुकृताटीका

एतैरुद्धरणैः प्रतीयते यद् भामहपूर्ववर्ती कश्चिन्मेधाविनामा काव्यशास्त्राचार्यो बभूव, यस्याऽलङ्कारशास्त्रसम्बन्धीनि मन्तव्यानि प्राचीनग्रन्थेषूद्धृतानि समुपलभ्यन्ते। परन्तु तस्य स्वरचितग्रन्थो न कोऽपि वर्तमानसमये प्राप्यते।

मेधाविनो नामविषये कश्चिद् विवादोऽपि प्रावर्तत। भामहेनाप्यमाचार्यो मेधाविन्निति नाम्नाऽभिहितः। नमिसाधुराजशेखराभ्यामयं मेधाविरुद्रनाम्नोल्लिखितः। अत्र केषाञ्चिद् वर्तमानयुगीनामाचार्याणां बलदेवोपाध्यायादीनां मतमस्ति -

"आचार्यस्याऽस्य नाम मेधाविरुद्रोऽवर्तत मेधावी वा रुद्रो वेति निर्णेतुं न शक्यते।[१]

केषाञ्चित् समालोचकानां मतमस्ति -

मेधावी रुद्रश्चेति पृथक् पृथग् द्वे नामनी वर्तेते। नमिसाधुराजशेखरौ मेधाविरुद्रं कथयित्वा (मेधाविन् + रुद्र) द्वावेवाऽऽचार्यौ सङ्केतयतः।

---

५. बलदेवोपाध्याय : भारतीय साहित्यशास्त्र (प्रथम खण्ड) पृ० ३८

## धर्मकीर्तिः

प्रसिद्धबौद्धविदुषो धर्मकीर्तेर्न च कोऽपि काव्यशास्त्रविषयको ग्रन्थ उपलभ्यते न च काव्यशास्त्राचार्यरूपेण केनाऽप्याचार्येणाऽसौ समुल्लिखितः। तथापि केषाञ्चित् समीक्षकाणां मतमिदं यत्तेन कस्याप्यलङ्कारशास्त्रग्रन्थस्य रचना ध्रुवं विहिता। सुबन्धुकृतवासवदत्ताभिधानस्य गद्यकाव्यस्य पंक्तिरियं वर्तते -

**"बौद्धसङ्गीतिमिवाऽलङ्कारभूषिताम्।"**

वासवदत्तेति गद्यकाव्यस्याऽनया पंक्त्या आफ्रेक्टपीटर्सनादिभिः समीक्षकैरनुमितं यद् धर्मकीर्तिना कस्याप्यलङ्कारशास्त्रविषयकग्रन्थस्य रचना कृता।

धर्मकीर्तिः कविरप्यासीत्। तत्कृताः केचन श्लोकाः शार्ङ्गधरपद्धत्यां सुभाषितावल्याञ्च सङ्गृहीताः सन्ति। ध्वन्यालोकस्य तृतीयोद्योते धर्मकीर्तेरेकः श्लोक आनन्दवर्धनेनोद्धृतः।[1] अस्मिन् प्रसङ्गे तेन प्रोक्तम् --

अत्र केचन समीक्षकाः व्याजस्तुतिमलङ्कारमन्ये चाऽप्रस्तुतप्रशंसालङ्कारं प्रतिपादयन्ति।

धर्मकीर्तिरलङ्कारशास्त्रस्याऽऽचार्योऽवर्तत, अथ च तेन कस्यचिदलङ्कारशास्त्रीयस्य ग्रन्थस्य रचना कृतेति मन्तव्यस्य पुष्टिर्नाऽन्येन केनचित् प्रमाणेन प्रमाणीक्रियते। तद्रचितश्लोकास्तस्य कवित्वं प्रमाणयन्ति। परं कविरप्यसौ काव्यशास्त्राचार्योऽप्यवर्ततेति नाऽत्र किमपि प्रामाण्यम्। सुबन्धोर्वासवदत्तागद्यकाव्यस्य पूर्वोक्तां पङ्क्तिमेवाऽऽश्रित्य धर्मकीर्तेरलङ्कारशास्त्रकृत्त्वं कल्प्यते। परं वासवदत्तागद्यकाव्यस्य अन्येषु संस्करणेषु पाठोऽयमेवमपि समुपलभ्यते -

---

१. लावण्यद्रविणव्ययो न गणितः क्लेशो महानर्जितः
स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः।
एषापि स्वयमेव तुल्यरमणाभावाद् वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता।। ध्वन्यालोकस्य (३.४१) वृत्तिः

"सत्कविकाव्यरचनामिवाऽलङ्कारभूषिताम्" ।

अतो बौद्धविदुषो धर्मकीर्तेरलङ्कारशास्त्राचार्यभावः सन्दिग्ध एव।

पी०वी० काणे महोदयस्याऽत्र कथनमस्ति -

सुबन्धुकृतवासवदत्तागद्यकाव्ये शुद्धः पाठस्त्वयमेव -

"बौद्धसङ्गीतिमिवाऽलङ्कारभूषिताम्" ।

अत्र सङ्गीतिपदं बौद्धपरिषदमभिव्यनक्ति। अथ चैतत्पदं तस्य साहित्यस्याऽप्यभिव्यञ्जकं यत्र भगवतो बुद्धस्य प्रथमपरिचयो लभ्यते। अलङ्काराभिधानौ द्वौ बौद्धग्रन्थौ प्रसिद्धौ स्तः - अश्वघोषस्य सूत्रालङ्कारोऽसङ्गस्य च महायानसूत्रालङ्कारः। एवं सुबन्धोरियं पंक्तिर्बौद्धसङ्गीतिं विचारपरिषदमभिव्यञ्जयन्ती बौद्धग्रन्थावप्यभिव्यनक्ति। अतः सुबन्धोः पूर्वोक्तां पंक्तिमाश्रित्य "धर्मकीर्तिः कमप्यलङ्कारशास्त्रीयं ग्रन्थमरचयद्" इति प्रतिपादनं नोचितम्।[१]

---

१. पी०वी० काणेकृत संस्कृतकाव्य शास्त्र का इतिहास पृ० ८१-८२

# अग्निपुराणम्

प्राचीनभारतीयसाहित्ये पुराणसाहित्यं विशिष्टं महत्त्वशालि वर्तते। अथ च तत्साहित्यं भारतीयज्ञानविज्ञानकोषरूपेणाऽपि ज्ञायते। पुराणेषु भारतीयधर्मसंस्कृतिपरम्पराणामक्षयः कोषसङ्ग्रहः सरलभाषया पुराणकारैः कृतः। हिन्दूधर्मस्याऽऽधारभूतानि पुराणानि ज्ञानविज्ञानस्याऽमूल्यानि स्रोतांसि वर्तन्ते।

पुराणानां संख्याऽष्टादश प्रसिद्धा। तानि च सन्ति - ब्रह्मपद्मशिवविष्णुश्रीमद्भागवत-वायुनारदाग्निमत्स्यब्रह्मवैवर्तवराहस्कन्दमार्कण्डेयवामनकूर्मगरुडब्रह्माण्डभविष्यदेवीभागवत-पुराणानि। अथ चाऽष्टादशोपपुराणान्यपि वर्तन्ते। अन्यानि च कानिचित्पुराणानि समुपलभ्यन्ते। कानिचित् पुराणानि क्षेत्रीयपुराणानि सन्ति - यथा केदारखण्डमानसखण्डादीनि।

## १. अग्निपुराणस्य महत्त्वम्

अष्टादशपुराणेष्वग्निपुराणस्य विशिष्टं माहात्म्यं वर्तते। अत्र विविधविद्यानां सङ्कलनं विद्यते। धर्मसंस्कृतिसम्बन्ध्यनेकतथ्यविवेचनेन सहाऽग्निपुराणेऽनेकेषां शास्त्राणामपि विवेचनं विद्यते। अस्मिन् पुराणे व्याकरणचिकित्साकोशकाव्यशास्त्रज्योतिःशास्त्रादिसम्बन्धिनी पुष्कलसामग्री सन्निहिता वर्तते। भारतीयैः पाश्चात्यैश्च समीक्षकैरग्निपुराणस्य विषयसामग्री महामहिमशालिन्यभिमता। पुराणञ्चेदं विश्वकोषरूपेण स्वीकृतम्। डा० बलदेवोपाध्यायेन[1] विन्टरनिट्जमहोदयेन[2] च कथितम् - पुराणमिदं विश्वकोष एव।

अग्निपुराणे भारतीयज्ञानविज्ञानानां सर्वे विषयाः सन्निहिताः विद्यन्ते। अग्निपुराणस्यैकादशस्त्वध्यायेषु (३३७-३४७) काव्यशास्त्रसम्बन्धिनी सामग्री सङ्कलिता वर्तते।

## २. अग्निपुराणस्य लेखकः

भारतीयपरम्परास्वष्टादशपुराणानां कर्ता महर्षिर्वेदव्यासो गण्यते। परन्तु वर्तमान-युगसमीक्षका आमनन्ति यदष्टादशपुराणानां रचयिता न महर्षिर्व्यासः, परन्त्वसौ संकलकः सम्पादको वा वर्तते। अतो विचारणीयोऽयं विषयः को वर्तते पुराणानां मूलप्रणेता ?

अग्निपुराणस्य रचयिता क आसीदिति प्रश्नस्य समाधानं ग्रन्थारम्भ एव सन्निहितम्। पुराणमिदं सौतिर्मुनिः शौनकादिमुनीन् श्रावयामास। तेन चेयं विद्या महर्षेर्व्यासादधीता।

---

१. बलदेवोपाध्याय : संस्कृत साहित्य का इतिहास पृ० ५१

२. विन्टरनिट्ज : ए हिस्ट्री आफ इन्डियन लिटरेचर (प्रथम भाग) पृ० ५६६

व्यासो विद्यामिमां वसिष्ठादधीतवान्। वसिष्ठश्चोपदेशमिममग्नेर्जग्राह। इत्थमस्य पुराणस्य मूलरूपेणोपदेशमग्निर्वसिष्ठाय प्रददौ।[१] अतोऽस्य पुराणस्य प्रणेताऽग्निरेवाऽवगन्तव्यः।

अग्निनामा कोऽप्यैतिहासिकपुरुष आसीदित्यस्य तथ्यस्य न किमपि प्रमाणमुपलभ्यते। अग्निस्त्वेकः पौराणिको देवः। अत आधुनिकसमालोचकानां मतं विद्यते, यदग्निपुराणस्य लेखकस्य समयो ज्ञातुं न शक्यते। डा० एस०के० डे महोदयोऽलिखत् -

"अग्निपुराणस्य लेखकस्य परिचयोऽज्ञात एव।[२] अस्य लेखकस्य परिचयसम्बन्धे वक्तुमिदमेव शक्यते, यद् विभिन्नेषु समयेषु विभिन्नलेखका अग्निपुराणसामग्रीं लिलिखुः सञ्जगृहुश्च। अथ चाऽन्तिमरूपेण महर्षिणा व्यासेनेयं सामग्री सङ्कलिता सम्पादिता च।

## ३. अग्निपुराणस्य समयः

अग्निपुराणसमयनिर्धारणमप्यतिकठिनकार्यं वर्तते। भारतीयपरम्पराः प्रतिपादयन्ति - काव्यशास्त्रसम्बन्धिसिद्धान्ताः प्रथमं तावदग्निपुराणे लिखिताः। महेश्वरः काव्यप्रकाशादर्शेऽलिखत् - भरतेनाऽलङ्कारशास्त्रसामग्री ह्यग्निपुराणाद् गृहीता। अथ चाऽसौ तां संक्षिप्य कारिकासु न्यबध्नात्।''[३] एवमेव साहित्यकौमुदीटीकायां विद्याभूषणेन लिखितम् - भरतेनाऽग्निपुराणादीनि शास्त्राण्यवलोक्य संक्षिप्तकारिकाभिः साहित्यप्रक्रियायाः निबन्धनं विहितम्।[४] इत्थमग्निपुराणस्य समयो भरतपूर्ववर्ती ह्यवगन्तव्यः।

परन्त्वाधुनिकसमालोचकैरेतन्मतं न स्वीक्रियते। ते कथयन्ति - वर्तमानसमये समुपलभ्यमानमग्निपुराणं भरतभामहदण्ड्यानन्दवर्धनभोजराजादिकाव्यशास्त्रकारोत्तरवर्तिनी कृतिर्वर्तते। अग्निपुराणमर्वाचीनतरं साधयितुं निम्नयुक्तयः प्रस्तूयन्ते -

(i) अग्निपुराणे रामायणमहाभारतहरिवंशपिङ्गलधन्वन्तरिसुश्रुतानामुल्लेखो लक्ष्यते। अत्र शब्दकोशसम्बन्धिनी सामग्री वर्तते। साररूपेण भगवद्गीताऽपि तत्र वर्तते। सकलेयं सामग्री ग्रन्थेभ्य एतेभ्यो लेखकेन लेखकैर्वा सङ्गृहीता। अतोऽग्निपुराणस्य रचना तदुत्तरवर्तिनी वर्तते। अमरकोषकर्तुरमरसिंहस्य समयश्चतुर्थशताब्दि (ई०) पूर्वको नास्ति।

(ii) भरतेन प्रणीतत्वाद् भारती वृत्तिः प्रसिद्धा बभूवेत्यग्निपुराणस्य वचनम्।[५]

---

१. यत्तदीशानकं कल्पं वृत्तान्तमधिकृत्य च।
वसिष्ठायाऽग्निना प्रोक्तमाग्नेयं तत् प्रचक्षते।। अग्निपुराण १.१६

२. एस०के०डे : ए हिस्ट्री आफ संस्कृत पोएटिक्स पृ० २५४

३. सुकुमारान् राजकुमारान् स्वादुकाव्यप्रवृत्तिद्वारा गहने शास्त्रान्तरे प्रवर्तयितुमग्निपुराणादुद्धृत्य काव्यरसास्वादकारणमलङ्कारशास्त्रं कारिकाभिः संक्षिप्य भरतमुनिः प्रणीतवान्। काव्यप्रकाशादर्श।

४. काव्यरसास्वादनाय वह्निपुराणादिकं दृष्ट्वा। साहित्यप्रक्रियां भरतः संक्षिप्ताभिः कारिकाभिर्निबबन्ध।। साहित्यसुधाकौमुद्याः विद्याभूषणकृतकृष्णनन्दिनी टीका

५. भरतेन प्रणीतत्वाद् भारतीवृत्तिरुच्यते। अग्निपुराण ३४०.६

भरतो नाट्यशास्त्रे स्वयमेव जगाद यदसौ स्वयमेव भारतीं वृत्तिं प्रणीतवान्।[१] नाट्यशास्त्रस्याऽनेकानि पद्यानि पद्यांशाः ताऽग्निपुराणे समुद्धृताः सन्ति। एतत्सर्वं विश्लेषणमग्निपुराणं भरतोत्तरवर्ति साधयति।

(iii) अग्निपुराणप्रोक्तानेकाः परिभाषाः भामहेन दण्डिना च संवदन्ति। काव्यालङ्कारे भामहेन रूपकाक्षेपाप्रस्तुतप्रशंसासमासोक्तिपर्यायोक्तालङ्काराणां याः परिभाषाः प्रस्तुताः, प्रायश-स्तथाभूता एव परिभाषा अग्निपुराणेऽपि विद्यन्ते। भामहेन लिखितम् - परिभाषाणां निर्मितिस्तेन स्वयमेव विहिता।[२] रूपकोत्प्रेक्षाविशेषोक्तिविभावनापह्नुतिसमाध्यलङ्काराणां परिभाषाः ह्यग्निपुराणनिविष्टाः दण्डिनः काव्यादर्शस्य परिभाषाभिः संवदन्ति। अथ च द्वयोरेव ग्रन्थयोरनेके पद्यांशाः परस्परं सदृशाः वर्तन्ते। अतोऽग्निपुराणस्य रचना भामहदण्ड-युत्तरवर्तिन्येवाऽवगन्तव्या।

(iv) अग्निपुराणस्य काव्यशास्त्रीयभागस्य रचयिता ध्वनिसिद्धान्तपरिचितो ध्रुवं बभूव।[३] अग्निपुराणकारेणैकस्मिन् स्थाने प्रोक्तम् - "पर्यायोक्तापह्नुतिसमासोक्त्यप्रस्तुत-प्रशंसाक्षेपालङ्कारेष्वेकतमस्मिन्नेव ध्वनेः समावेशो भवति।[४] ध्वन्यालोकस्य द्वे पद्ये अग्निपुराणे वर्तेते -[५]

**(१) अपारे काव्य संसारे ०**

**(२) शृङ्गारी चेत्कविः ०**

ध्वन्यालोकस्य कैश्चित् प्रसङ्गैरुत्तरवर्तिनां शास्त्रकाराणां टीकाकाराणाञ्च वचनैः सिद्धमिदं यदेतयोः पद्ययोः रचनाऽऽनन्दवर्धनेन स्वयमेव कृता। अतोऽग्निपुराणमानन्दवर्धनोत्तरवर्ति भवितव्यम्।

(v) भोजकृतसरस्वतीकण्ठाभरणशृङ्गारप्रकाशयोः प्रभावोऽग्निपुराणे संलक्ष्यते। शृङ्गारप्रकाशे भोजराजो रससिद्धान्तस्य विवेचनामकरोत्। सरस्वतीकण्ठाभरणे तेन प्रकाशितं यच्छृङ्गाररस एव आनन्दाहङ्काराभिमानरूपो वर्तते।[६] अग्निपुराणकारेणाऽस्मिन् सम्बन्धे

---

१. स्वनामधेयैर्भरतैः प्रयुक्ता सा भारती नाम भवेत्तु वृत्तिः। नाट्यशास्त्र २०.२६
२. गिरामलङ्कारविधिः सविस्तरः स्वयं विनिश्चित्य क्रिया मयोदितः।। काव्यालङ्कार ३.५८
३. स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः। अग्निपुराण ३४५.१४
४. एषामेकतमस्यैव समाख्या ध्वनिरिष्यते। अग्निपुराण ३४५.१८
५. अग्निपुराण ३३९.१०-११।। ५. सरस्वतीकण्ठाभरण ५.१-४
६. अक्षरं परमं ब्रह्म सनातनमजं विभुम्। वेदान्तेषु वदन्त्येकं चैतन्यं ज्योतिरीश्वरम्।।
आनन्दः सहजस्तस्य व्यज्यते स कदाचन। व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया।।
आद्यस्तस्य विकारो यः सोऽहङ्कार इति स्मृतः। ततोऽभिमानस्तस्येदं समाप्तं भुवनत्रयम्।।
अभिमानाद्रतिः सा च परिपोषमुपेयुषी। व्यभिचार्यादिसामान्याच्छृङ्गार इति गीयते।।
तद्भेदाः काममितरे हास्याद्या अप्यनेकशः।। अग्निपुराण ३३९.१-५

भोजराजस्याऽनुकरणं विहितम्। तत्राऽऽनन्दाहङ्काराभिमानमाध्यमेन शृङ्गाररसाभिव्यक्ति-. निष्पन्नता प्रदर्शिता वर्तते। भोजराजमनुसृत्यैवाऽग्निपुराणकारेण शृङ्गाररसः सर्वेषां रसानां मूलं प्रोक्तः। पाञ्चालीगौडीवैदर्भीलाटीरीतीनां भोजराजकृतलक्षणान्युद्धृत्यैवाऽग्निपुराणकारेण लक्षणानि प्रस्तुतानि। यद्यपि डा० एस०के०डे० महोदयेन प्रतिपादितं यदग्निपुराणमनुसृत्य भोजो रससिद्धान्तं व्यापकत्वेन प्रतिष्ठापयामास, तथापि काणेमहोदयोऽस्य कथनस्य प्रबलरूपेण खण्डनञ्चकार।[१]

(vi) अग्निपुराणरचनामर्वाचीनतरां साधयितुमिदमपि प्रमाणम् - प्राचीनाचार्यैरग्नि-. पुराणं प्रमाणरूपेण नाऽधिकमुद्धृतम्। भामहदण्ड्यानन्दवर्धनभोजराजादिकाव्यशास्त्रकाराः भरतं तु महता समादरेणोद्धरन्ति, नत्वग्निपुराणम्। प्रथमं तावत् साहित्यदर्पणकृता विश्वनाथेन (चतुर्दश शताब्दी ई०) अग्निपुराणमुद्धृतम्।[२] अतोऽग्निपुराणं प्राचीनतरं वक्तुं नोचितम्। अस्मात् कारणादियमग्निपुराणरचना भरतभामहदण्ड्यानन्दवर्धनभोजराजोत्तरवर्तिन्येवाऽव-गन्तव्या।

परमग्निपुराणरचना समग्ररूपेण भोजराजोत्तरवर्तिनी (द्वादशशताब्द्यां) सञ्जातेति कथनमपि न युक्तिसङ्गतं प्रतीयते। तत्र निम्नयुक्तयः प्रस्तूयन्ते -

(i) अग्निपुराणं विश्वकोषरूपेण वर्तते। अथ च तत्राऽनेकविधविषयाणां सङ्कलनं वर्तते। सम्भवतस्तत्र विभिन्नविषयाणां सङ्कलनं विभिन्नेषु कालेषु समवर्तत। समये समये च तस्य सम्पादनमपि बभूव। श्लोकानां संख्या च वृद्धिं न्यूनतां वाऽवाप। मत्स्यपुराणे (३५.२८-३०), स्कन्दपुराणे (१.२.४७-५०) चाऽग्निपुराणस्य श्लोकानां संख्या १६००० कथिता। परन्तु वर्तमानसमये समुपलभ्यमानेऽग्निपुराणे ११५०० श्लोकाः वर्तन्ते। इदमपि सम्भाव्यते, यदग्निपुराणस्यैकाधिकानि संस्करणानि भवेयुः। बल्लालसेनेन (द्वादश शताब्दी ई०) स्वरचितदानसागराद्भुतसागरग्रन्थयोरग्निपुराणस्य येंऽशा उद्धृतास्तेषामधिको भागो वर्तमानसमये समुपलब्धेऽग्निपुराणे न वर्तते।

(ii) डा० विल्सन महोदयोऽकथयत् - अग्निपुराणस्य रचना सङ्कलनं वा नैकस्मिन् समये बभूव। कार्यमिदं विभिन्नेषु समयेषु सम्पन्नमभूत्।[३] डा० विन्टरनिट्ज महोदयस्याऽपि कथनमिदमेव यदग्निपुराणस्य रचनाकालनिर्धारणं दुष्करमेव। अत्र परस्परविरोधिनो विचाराः सन्ति।[४]

(iii) केषाञ्चित् समालोचकानां विचारो वर्तते, यदग्निपुराणस्य रचना मोहम्मदीयानां प्रथमाक्रमणकाले बभूव। पुराणस्याऽस्यैकस्मिन् स्थाने लिखितमस्ति - म्लेच्छा अस्य देशस्य

---

१. पी०बी०काणे : संस्कृत काव्यशास्त्र का इतिहास पृ० १०
२. साहित्यदर्पणम् (१.२) वृत्तिः,
३. हिस्ट्री आफ इन्डियन लिटरेचर पृ० ५६६
४. एम०एम० दत्तमहोदयसम्पादितस्य विष्णुपुराणस्य भूमिका पृ० ६

शासकाः भविष्यन्ति, ते च मनुष्यान् भक्षयिष्यन्ति।[1] ते च म्लेच्छाः मोहम्मदीया एवाऽऽसन् यैर्नवमशताब्द्यां (ई०) भारतदेश आक्रान्तः। अतोऽग्निपुराणस्य रचनाकालो नवमशताब्दी (ई०) निर्धारितो भवति।

(iv) अग्निपुराणे ये लोकव्यवहाराः सामाजिकव्यवहाराश्च संलक्ष्यन्ते, तेषु तान्त्रिकोपासनापद्धत्याः प्रभावो ध्रुवं वर्तते। अतोऽस्य निर्माणकाले भारते तान्त्रिकोपासना प्रचलिताऽवर्तत। अस्मात् कारणादग्निपुराणस्य निर्माणकालो नवमशताब्दिको (ई०) निश्चितो भवति।

उपरिलिखिततथ्यतर्कानवलोक्याग्निपुराणरचनाकालो न निश्चयरूपेण निर्धारयितुं शक्यः। अस्मिन् विषयेऽतिगहनमध्ययनमावश्यकम्।

### ४. अग्निपुराणस्य काव्यशास्त्रीयभागस्य परिचयः

अग्निपुराणस्य ३३७-३४७ अध्यायेषु काव्यशास्त्रविषयाणां निरूपणं विद्यते। एतेष्वेकादशाध्यायेषु ३६२ श्लोकाः वर्तन्ते। अध्यायक्रमेण तेषां विषयवस्तु निम्नप्रकारेण वर्तते -

**(i) अध्यायः ३३७ -**

अस्मिन्नध्याये प्रथमं तावत् काव्यस्य महत्त्वलक्षणभेदानां वर्णनं विद्यते। अथ गद्यकाव्यानां भेदोपभेदाः प्रोक्ताः। तदनन्तरं पद्यकाव्यभेदानुल्लिख्य लेखकेन महाकाव्यस्वरूपं विस्तरेण वर्णितम्। अथ च काव्यभेदस्वरूपं संक्षेपेण सूचितम्।

**(ii) अध्यायः ३३८ -**

अस्मिन्नध्याये नाट्यविषयाः प्रोक्ताः। रूपकाणां दश भेदानुक्त्वा लेखक उपरूपकाणि वर्णयामास। तदनन्तरं प्रस्तावना, पञ्चार्थप्रकृतयः, पञ्चसन्धय इत्यादिविषयाः समुल्लिखिताः सन्ति। तदनु श्रेष्ठनाटकस्य गुणास्तत्र चाऽपेक्षितदेशकालादिभिः सह विचारिताः।

**(iii) अध्यायः ३३९ -**

अध्यायोऽयं रसविषयको वर्तते। अत्र रसस्थायिभावव्यभिचारिभावालम्बनोद्दीपनविभावादीनां वर्णनं कृत्वा लेखकेन नायकनायिकाभेदगुणाः प्रदर्शिताः।

**(iv) अध्यायः ३४० -**

रीतिवृत्तिविषयकेऽस्मिन्नध्याये वैदर्भीगौडीपाञ्चालीलाटीनां चतुर्विधानां रीतीनां वर्णनं विद्यते। तदनन्तरञ्च भारती सात्त्वती कौशिकी (कैशिकी) आरभटीति चतुर्विधा वृत्तयो वर्णिताः सन्ति।

**(v) अध्यायः ३४१ -**

अस्मिन्नध्याये नायिकानां चेष्टानां हावभावानाञ्च वर्णनमस्ति। तदनन्तरं नृत्यकलोपयोगिनामङ्गानां करचरणनयनपक्ष्मादीनां सञ्चालनविधिः प्रोक्ता प्रदर्शिता च वर्तते।

---

१. मनुष्यान् भक्षयिष्यन्ति म्लेच्छाः पार्थिवरूपिणः। अग्निपुराण १६.७

(vi) अध्याय: ३४२ -

अभिनयस्य चत्वार्यङ्गानि सात्त्विकवाचिकाङ्गिकाहार्याण्यध्यायेऽस्मिन् निरूपितानि वर्तन्ते। तदनन्तरं शृङ्गारादिरसानां लक्षणानि भेदाश्च लेखको निरूपयामास। अथ चाऽलङ्कारलक्षणभेदैः सह केषाञ्चिच्छब्दालङ्काराणां निरूपणमस्मिन्नध्याये वर्तते।

(vii) अध्याय: ३४३ -

शब्दालङ्कारा अस्मिन्नध्याये निरूपिता: वर्तन्ते। ते च सन्ति - अनुप्रासो, यमकं तस्य च चत्वारो भेदा:, चित्रकाव्यं तस्य च सप्त भेदा:, प्रहेलिकास्तासाञ्च षोडशभेदा: गोमूत्रिका, सर्वतोभद्रो बन्ध इत्यादय:।

(viii) अध्याय: ३४४ -

अस्याध्यायस्य वर्ण्यविषयो वर्तते - अर्थालङ्कारनिरूपणम्। अत्रोपमारूपकसहोक्त्यर्थान्तरन्यासादीनामलङ्काराणां लक्षणानि भेदैः सह निरूपितानि वर्तन्ते।

(ix) अध्याय: ३४५ -

अस्याऽध्यायस्य मुख्यविषयो वर्तते - शब्दार्थालङ्कारनिरूपणम्। ते चाऽलङ्कारा: षड्विधा वर्तन्ते - प्रशस्तिकान्त्यौचित्यसंक्षेपयावदर्थताऽभिव्यक्तय:। एतानलङ्कारान् निरूप्य लेखक: समाध्याक्षेपसमासोक्त्यपह्नुतिपर्यायोक्तानलङ्कारान् न्यरूपयत्। अथ च लेखकेन प्रतिपादितम् - ध्वने: समावेशोऽलङ्कारेष्वेतेष्वेव सम्भवति।

(x) अध्याय: ३४६-

गुणसम्बन्धिन्यस्मिन्नध्याये गुणपरिभाषा, गुणानां महत्त्वं गुणभेदाश्च प्रकीर्तिता: वर्तन्ते। अत्र सप्त शब्दगुणा: षडर्थगुणा: षट् च शब्दार्थगुणा: प्रोक्ता:।

(xi) अध्याय: ३४७ -

अस्मिन्नध्याये प्रधानरूपेण दोषाणां विवेचनमस्ति। प्रथमं तावदत्र सप्त प्रमुखदोषा: भेदैः सह प्रोक्ता:। तदनन्तरं दोषपरिहारोपाया: प्रदर्शिता:। अथ च कवीनां समुदाचारा अग्निपुराणकारेणोपदिष्टा:।

## ५. अग्निपुराणस्य काव्यशास्त्रीयसिद्धान्तानां स्रोतस्तेषाञ्चोत्तरवर्तिनि साहित्ये प्रभाव:

पूर्वमेव प्रोक्तं यथा भारतीयपरम्पराऽनुसारं भारतीयकाव्यशास्त्रस्य मूलस्रोतोऽग्निपुराणस्य काव्यशास्त्रीयोंऽश एव गण्यते। महेश्वरकृतकाव्यप्रकाशादर्शग्रन्थात् साहित्यकौमुदीग्रन्थस्य च विद्याभूषणकृतनन्दिनीटीकात: सूचना प्राप्यते, यद् भरतोऽग्निपुराणात् सामग्रीमधिगम्य काव्यशास्त्रविषयान् न्यबध्नात्। अतोऽग्निपुराणमेव भारतीयकाव्यशास्त्रस्य मूलस्रोत:।

परन्तु वर्तमानयुगीनकाव्यसमीक्षकाः नैतन्मतमङ्गीकुर्वन्ति। तेऽग्निपुराणं तदुत्तर-कालीनं गणयन्ति। पुराणमिदं नवमशताब्दिकं तदुत्तरकालीनं वा वर्तते। अथ च विभिन्नैः काव्यशास्त्रग्रन्थैरिदं प्रभावितं बभूव। ग्रन्थेभ्यस्तेभ्योऽग्निपुराणे काव्यशास्त्रीया सामग्री सङ्कलिता वर्तते। पी०वी०काणे महोदयो लिखति -

"अनेकेषामलङ्काराणां रूपकोत्प्रेक्षासमासोक्तिविभावनादीनां लक्षणकरणे पद्यस्य च परिभाषासंयोजने भामहस्य काव्यालङ्कारेण दण्डिनश्च काव्यादर्शेनाऽग्निपुराणं प्रभावितं बभूव। अग्निपुराणे भोजस्य रससिद्धान्तस्याऽपि प्रभावो वर्तते। अथ च तत्र ध्वनेरप्युल्लेखो विद्यते।[१]

परन्तु केचनाऽन्ये समीक्षकाः काणे महोदयस्य मतस्य न समर्थकाः सन्ति। तेषामभिमतं विद्यते -

अग्निपुराणस्य रचना भरतोत्तरवर्तिनी सम्भवति, परमिदं पुराणमन्यकाव्यशास्त्रीय-ग्रन्थेभ्यः पूर्ववर्तीति ध्रुवमेवाऽवगन्तव्यम्। कन्हैयालालपोद्दारमहोदयेन लिखितम् - दण्डि-भामहरचनास्रोतोऽग्निपुराणमेव विद्यते। पुराणमिदं दण्डिभामहपूर्वकालीनञ्च वर्तते।[२]

अग्निपुराणेऽनेकेषां सिद्धान्तानां प्रतिपादनं केनचिदन्येनैव विधिना वर्तते। तत्र कानिचित् तादृशानि तथ्यानि वर्तन्ते, यान्यन्येषु ग्रन्थेषु न समुपलभ्यन्ते। गुणानां दोषाणाञ्च निरूपणविधिरस्मिन् पुराणेऽन्येनैव प्रकारेणाऽस्ति। शृङ्गाररसोऽभिमानेन समुत्पद्यत इति कल्पना नवीनैव वर्तते। भोजराजेनाऽपि तथ्यस्याऽस्य विस्तरेण समर्थनं कृतम्। अग्निपुराणेऽलङ्काराणां निरूपणमपि नवीनविधिना कृतं प्रतिभाति।

आनन्दवर्धनकुन्तकक्षेमेन्द्रराजशेखरादिभिरुत्तवर्तिभिराचार्यैरग्निपुराणं न प्रमाणरूपे-णोद्धृतम्। प्रथम तावद् विश्वनाथेन (चतुर्दशताब्दी ई०) प्रमाणरूपेणाऽग्निपुराणस्योल्लेखः कृतः। अनेन प्रतीयते यदुत्तरवर्तिनः काव्यशास्त्राचार्याः नाग्निपुराणेणाधिकं प्रभाविताः बभूवुः। न चाऽस्य पुराणस्य काव्यशास्त्रीयो भागः काव्यशास्त्रकृद्भिः समादरणीयो बभूव। तथापि पुराणमिदं भामहदण्ड्यादिपूर्ववर्ति यदि गण्येत, यथा कन्हैयालालपोद्दारमहोदयेन प्रतिपादितं, तदा काव्यालङ्कारकाव्यादर्शसरस्वतीकण्ठाभरणशृङ्गारप्रकाशादयो ग्रन्थाः ध्रुवमग्निपुराणेन प्रभाविता अवगन्तव्याः।

---

१. पी०वी० काणे : संस्कृत काव्यशास्त्र का इतिहास पृ० ८-११

२. सेठ कन्हैयालाल पोद्दार : संस्कृत साहित्य का इतिहास पृ० १२

# विष्णुधर्मोत्तरपुराणम्

## १. विष्णुधर्मोत्तरपुराणस्य महत्त्वम्

धार्मिकविषयाणां वर्णनेन सह लौकिकविषयाणामपि सङ्ग्रहः पुराणेषु वर्तते। अस्मिन् विषयेऽतिप्रसिद्धिङ्गतस्याऽग्निपुराणस्य चर्चा पूर्वस्मिन्नध्याये कृता। अत्र काव्यशास्त्रीयविषयाणां विस्तृतं वर्णनं विद्यते। विष्णुधर्मोत्तरपुराणेऽपि काव्यशास्त्रचर्चाऽस्त्येव। अत्र तावत् पी०वी० काणे महोदयेन प्रोक्तम् -

'अग्निपुराणमिव विष्णुधर्मोत्तरपुराणमपि काव्यनाट्यशास्त्रसम्पन्नमस्ति। इयं सामग्री पुराणस्याऽस्य तृतीयखण्डस्य पञ्चत्रिंशत्स्वध्यायेषु सङ्गृहीता समुपलभ्यते। अत्र १८,१९,३२ अध्यायाः गद्यबद्धाः शेषाश्च पद्यात्मकाः वर्तन्ते।

## २. विष्णुधर्मोत्तरपुराणस्य समयः

विष्णुधर्मोत्तरपुराणस्य रचना समीक्षकैः षष्ठशताब्दिका (ई०) ह्यनुमिता। तत्समयसीमाः पूर्ववर्तिन्य उत्तरवर्तिन्यश्च निम्नप्रकारेण निर्धारयितुं शक्याः -

(i) विष्णुधर्मोत्तरपुराणेऽलङ्कारशास्त्रीयसिद्धान्तनिरूपणविषये पुराणकारो भरतनाट्यशास्त्रमनुससार। अतः पुराणमिदं तदुत्तरवर्ति वर्तते।

(ii) विष्णुधर्मोत्तरपुराणे सप्तदशालङ्काराणां नामानि परिभाषाश्च विद्यन्ते। भट्टिमहोदयेनाऽष्टात्रिंशदलङ्काराणामुदाहरणानि प्रस्तुतानि। भामहदण्डिवामनैः ३०-४० अलङ्काराः प्रदर्शिताः। तत्पूर्ववर्तिभिरलङ्कारशास्त्रकृद्भिश्चतुर्णां पञ्चानामष्टानां वाऽलङ्काराणां वर्णनं कृतमासीत्। भरतेन चत्वार एवाऽलङ्काराः वर्णिताः। भामहेन प्रोक्तम् - "तत्पूर्ववर्तिभिराचार्यैः पञ्चालङ्कारा एव प्रोक्ताः।[1]

उद्भटस्त्वाह - "तत्पूर्ववर्तिभिराचार्यैरष्टावेवाऽलङ्कारा उदाहृताः''।[2] अतो विष्णुधर्मोत्तरपुराणं पञ्चाष्टालङ्कारकृद्भ्य आचार्येभ्य उत्तरवर्ति भवितव्यम्। अथ चेदं पुराणं भट्टिभामहादिपूर्ववर्ति ध्रुवमस्ति। भट्टिसमयः सप्तमशताब्दिपूर्वार्द्धको वर्तते।

---

१. अनुप्रासः सयमको रूपकं दीपकोपमे।
इति वाचामलङ्काराः पञ्चैवान्यैरुदाहृताः।। काव्यालङ्कार २.४

२. पुनरुक्तवदाभासश्छेकानुप्रास एव च। अनुप्रासस्त्रिधा लाटानुप्रासो रूपकं चतुः।।
उपमादीपकञ्चैव प्रतिवस्तूपमा तथा। इत्येत एवालङ्कारा वाचां कैश्चिदुदाहृताः।।
काव्यालङ्कारसारसङ्ग्रह १.१०२

(iii) विष्णुधर्मोत्तरपुराणे गीतामनुस्मृतिनाट्यशास्त्रनारदस्मृत्यादिग्रन्थानामुद्धरणानि वर्तन्ते। पुराणस्याऽस्य द्वितीये खण्डे वराहमिहिरस्य बृहद्योगयात्राग्रन्थस्योद्धरणान्यपि सन्ति।[१] अतोऽस्य पुराणस्य समय: षष्ठशताब्द्युत्तरार्धकोऽनुमेय:।

(iv) बल्लालसेनेन (द्वादशशताब्दी ई०) विष्णुधर्मोत्तरपुराणस्य तृतीयखण्डस्याऽनेके श्लोका: निजग्रन्थे दानसागरे ह्युद्धृता:। तस्य ग्रन्थस्य प्रस्तावनायां तेन सुस्पष्टं लिखितम् - दानसागरस्य रचना विष्णुधर्मोत्तरपुराणमन्यानि च पुराणान्याश्रित्य वर्तते।[२]

(v) अलबरूनिमहोदय: (१०३० ई०) स्वसंस्मरणेतिहासग्रन्थे विष्णुधर्मोत्तरपुराणस्य त्रिंशत् पाठानुद्धृतवान्।

उपरिवर्णिततथ्यसन्दर्भानाश्रित्य विष्णुधर्मोत्तरपुराणस्य समय: षष्ठशताब्द्युत्तरार्धक: (ई०) सम्भाव्यते।

### ३. विष्णुधर्मोत्तरपुराणस्य काव्यशास्त्रीयभागस्य परिचय:

विष्णुधर्मोत्तरपुराणस्य तृतीयखण्डस्य पञ्चत्रिंशत्स्वध्यायेषु (१-३५) काव्यनाट्यशास्त्र-सामग्री सङ्गृहीता वर्तते। अध्यायक्रमेणाऽत्रसंक्षेपेण सा प्रदर्श्यते।

(i) **प्रथमोऽध्याय:** -

प्रथमाध्यायो बज्रमार्कण्डेययो: संवादेन प्रारभते। अत्र लेखकेन प्रोक्तम् - "चित्रसूत्रविधानेन[३] निर्मितदेवताया: पूजा विधातव्या''।[४]

(ii) **द्वितीयोऽध्याय:** -

द्वितीयेऽध्याये वर्णनानि सन्ति - चित्रसूत्रज्ञानं विना मूर्तिकला नाऽवगम्यते, नृत्तशास्त्रज्ञानं विना चित्रसूत्रं नाऽवगम्यते, वाद्यं विना नृत्तं न सम्भवति, गीतं विना वाद्यपाटवं न जायते। गीतानि तिसृषु प्राकृतापभ्रंशसंस्कृतभाषासु भवन्ति। देशीभाषावैशिष्ट्येनाऽपभ्रंशभाषा अनेकविधा: भवन्ति।

(iii) **तृतीयोऽध्याय:** -

तृतीयेऽध्याये छन्द:परीक्षा वर्णिता।

(iv) **चतुर्थोऽध्याय:** -

चतुर्थेऽध्याये वाक्यपरीक्षा वर्तते।

---

१. विष्णुधर्मोत्तरपुराणम् ३.२.१७६, ३९-११
२. दानसागर -प्रस्तावना श्लोक १४
३. चित्रकलामूर्तिकलानाट्यकलाकाव्यशास्त्राणां नियमानां प्रतिपादनं चित्रसूत्रमिति प्रोच्यते। एतेषामध्ययनविधानं कुट्टनीमते प्रतिपादितमस्ति। कुट्टनीमतम् - श्लोक - १२३
४. चित्रसूत्रविधानेन देवतार्चा विनिर्मिताम्।
सुरूपां पूजयेद् विद्वान् तत्र सन्निहिता भवेत्।। विष्णुधर्मोत्तरपुराणम् ३.१.७

(v) **पञ्चमोऽध्यायः -**

पञ्चमेऽध्यायेऽनुमानस्य पञ्चावयवानां, सूत्रस्य षड्व्याख्यानां, प्रत्यक्षानुमानाप्तवाक्येतिप्रमाणत्रयस्य परिभाषाणां स्मृत्युपमानार्थापत्तीनाञ्च वर्णनानि सन्ति।

(vi) **षष्ठोऽध्यायः -**

षष्ठेऽध्याये तन्त्रयुक्तिर्व्याख्याता।

(vii) **सप्तमोऽध्यायः -**

सप्तमेऽध्याये विविधप्राकृतानां वर्णनमस्ति।

(viii) **अष्टमोऽध्यायः -**

अष्टमेऽध्याये देवादिशब्दानां पर्यायवचिनो सन्ति।

(ix) **नवमोऽध्यायः -**

नवमेऽध्याये शब्दकोशो वर्तते।

(x) **दशमोऽध्यायः -**

दशमेऽध्यायेऽपि शब्दकोशोऽस्ति।

(xi-xiii) **एकादशद्वादशत्रयोदशाध्यायाः -**

अध्यायेष्वेतेषु लिङ्गानुशासनं वर्णितमस्ति। अत्र प्रत्येकस्मिन्नध्याये पञ्चदश श्लोकाः वर्तन्ते।

(xiv) **चतुर्दशोऽध्यायः -**

चतुर्दशेऽध्यायेऽलङ्काराणां नामानि परिभाषाश्च सन्ति। अत्र सप्तदशालङ्काराः प्रोक्ताः - अनुप्रासरूपकयमकव्यतिरेकश्लेषोत्प्रेक्षार्थान्तरन्यासोपन्यासविभावनातिशयोक्तिवार्तायथासंख्यविशेषोक्तिविरोधनिन्दास्तुतिनिदर्शनानन्वयाः।

(xv) **पञ्चदशोऽध्यायः -**

पञ्चदशेऽध्याये काव्यस्य निरूपणं विद्यते। काव्यस्य शास्त्रेतिहासाभ्यां विशेषोऽपि प्रोक्तः। काव्यरचना रससंयुता भवितव्या। नव रसाः भवन्ति।

(xvi) **षोडशोऽध्यायः -**

षोडशेऽध्याये प्रहेलिकानां वर्णनमस्ति। अत्रैकोनविंशतिविधा प्रहेलिकाः प्रोक्ताः।

(xvii) **सप्तदशोऽध्यायः -**

सप्तदशेऽध्याये रूपकनिरूपणं विद्यते। रूपकाणां संख्या द्वादश प्रोक्ता। भरतस्तु दशरूपकाणि प्रोवाच। कानि दृश्यानि रङ्गमञ्चे न प्रदर्शनीयानि, प्रवेशकेनैव सूचयितव्यानि, पुराणकारेणैतदत्र निर्दिष्टम्।[१] अस्मिन्नध्यायेऽष्टविधाः नायिका अपि प्रोक्ताः।

---

१. मरणं राज्यविभ्रंशो नगरस्योपरोधनम्।
एतानि दर्शयेन्नाङ्के तथा युद्धञ्च पार्थिव।।
प्रवेशकेन कर्तव्यं तेषामाख्यानकं बुधैः।। विष्णुधर्मोत्तरपुराण ३.१७.१२-१३

(xviii) **अष्टादशोऽध्यायः -**

अष्टादशोऽध्यायः सङ्गीतविषयको वर्तते। अत्र गतिस्वरग्राममूर्छनानां वर्णनं विद्यते।

(xix) **एकोनविंशोऽध्यायः -**

अस्मिन्नप्यध्याये सङ्गीतविद्या वर्तते। विषयाणामेतेषां वर्णनमस्ति - चतुर्विधानि वाद्यानि, विंशतिमण्डलानि, षट्त्रिंशदङ्गहारा, अष्टोत्तरशतकरणानि, पिण्डीबन्धश्चतस्रो वृत्तयश्चतस्रश्च प्रवृत्तयः।

(xx) **विंशोऽध्यायः-**

विंशेऽध्याये पुराणकारो नाट्यं परिभाष्य नृत्तं तस्य शोभाधायकं जगाद।[१] अत्र चतुर्विधानामभिनयानां वर्णनं विद्यते।

(xxi- xxiii) **एकविंशद्वाविंशत्रयोविंशाध्यायाः -**

अध्यायेष्वेतेषु शय्यासनस्थानकानां प्रतिपादनमस्ति।

(xxiv-xxv) चतुर्विंशपञ्चविंशाध्यायौ -

अध्याययोरेतयोराङ्गिकाभिनयस्य वर्णनं विद्यते।

(xxvi) **षड्विंशोऽध्यायः -**

षड्विंशेऽध्याये नृत्तस्य त्रयोदशसंयुक्ताः द्वाविंशत्यसंयुक्ताश्च भेदाः प्रकीर्तिताः। नृत्ते करगतिवैशिष्ट्यं भवति।[२]

(xxvii) **सप्तविंशोऽध्यायः -**

सप्तविंशेऽध्याये पुस्तालङ्कारा‌ङ्गरचनासञ्जीवभेदेन चतुर्विधाहार्याभिनयस्य वर्णनं वर्तते।

(xxviii) **अष्टाविंशोऽध्यायः -**

अष्टाविंशेऽध्याये सामान्याभिनयस्य स्वरूपं कीर्तितम्।

(xxix) **एकोनत्रिंशोऽध्यायः -**

अस्मिन्नध्याये पुराणकारेण रङ्गमञ्चे विभिन्नपात्राणां गतिः कीदृशी भवितव्येति निर्दिष्टम्।

(xxx) **त्रिंशोऽध्यायः -**

त्रिंशोऽध्यायः रसविवेचनात्मको विद्यते। नाट्ये नव रसाः प्रोक्ताः।

---

१. परस्यानुकृतिर्नाट्यं नाट्यज्ञैः कथितं नृप।
तस्य संस्कारकं नृत्तं भवेच्छोभादिवर्धनम्।। विष्णुधर्मोत्तरपुराण ३२०.१

२. सर्वं करायत्तं हि नृत्तम्। विष्णुधर्मोत्तरपुराण ३२६.१५

(xxxi) **एकत्रिंशोऽध्यायः -**

एकत्रिंशाध्यायस्याष्टपञ्चाशच्छ्लोकेषु भावानां निरूपणं विद्यते। अत्रैकोनपञ्चाशत्प्रकाराः भावाः प्रोक्ताः। स्थायिभावानां सञ्चारिभावानामपि च भेदाः प्रदर्शिताः।[१]

(xxxii) **द्वात्रिंशोऽध्यायः -**

अस्मिन्नध्याये हस्तमुद्राणां निरूपणमस्ति।

(xxxiii) **त्रयस्त्रिंशोऽध्यायः -**

त्रयस्त्रिंशेऽध्याये नृत्यशास्त्रसम्बन्धिन्यो विभिन्नमुद्राः प्रकीर्तिताः।

(xxxiv) **चतुस्त्रिंशोऽध्यायः -**

अस्मिन्नध्याये नृत्यस्योत्पत्तिः पुराणकारेण प्रदर्शिता। मधुकैटभनामानौ द्वौ दैत्यौ वेदानाच्छिद्य पलायनपरौ भगवता विष्णुना युयुधाते। तस्माद्युद्धादेव नृत्यस्योत्पत्तिः सञ्जाता।[२] अस्मिन्नध्याये नृत्यस्योद्देश्योऽपि प्रोक्तो नृत्यविक्रयी च निन्दितः। नृत्यस्योद्देश्यो देवताराधनमेवाऽस्ति। अनेन सर्वे कामाः पूर्यन्ते मोक्षश्च प्राप्यते। इदं यशस्यमायुष्यं स्वर्गप्रदञ्चाऽस्ति। इदमैश्वर्यशालिनां विलासकरणं पीडितानां दुःखविनाशनं मूर्खाणामुपदेशप्रदं स्त्रीणाञ्च सौभाग्यवर्धनं विद्यते।[३]

(xxxv) **पञ्चत्रिंशोऽध्यायः -**

पञ्चत्रिंशेऽध्याये प्रकरणस्याऽस्योपसंहारो विद्यते। अत्र पुराणकारेण प्रोक्तम् - "नारायणो भगवान् चित्रसूत्रं व्यरचयत्। तदनन्तरमसौ विश्वकर्माणमेतत् शिक्षितवान्। नृत्यवच्चित्रकलायामपि तिसृणां लोकानामनुसरणं भवति।

विष्णुधर्मोत्तरपुराणस्य खण्डस्यैतस्योत्तरवर्तिष्वध्यायेषु चित्रमूर्तिस्थापत्यकलानां निदर्शनं विद्यते।

अनेन विवेचनेन सुस्पष्टमेव यद् विष्णुधर्मोत्तरपुराणेऽलङ्कारशास्त्रनाट्यशास्त्रनिर्णायकविषयिका सुसमृद्धा सामग्री समुपलभ्यते। अग्निपुराणवत् पुराणमिदमपि विश्वकोशरूपेण प्रवहद् विश्वज्ञानावबोधाय प्रचुरसांस्कृतिकसामग्रीं दधच्छोभते।

---

१. बहूनां समवेतानां रूपं यस्य भवेद् बहु।
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणः मताः।। विष्णुधर्मोत्तरपुराण ३.३१.५३

२. नाट्यशास्त्रेऽपि (२२.१-३) नृत्यस्योत्पत्तिरेवमेव वर्णिता।

३. देवताराधनं कुर्याद्यस्तु नृत्तेन धर्मवित्।
स सर्वकामानवाप्नोति मोक्षोपायञ्च विन्दति।।
धन्यं यशस्यमायुष्यं स्वर्गलोकप्रदं तथा।
ईश्वराणां विलासस्तु चार्तानां दुःखनाशनम्।।
मूढानामुपदेशस्तु स्त्रीणां सौभाग्यवर्धनम्।। विष्णुधर्मोत्तरपुराण तृतीय खण्ड अध्याय ३४

# भट्टिः

## १. काव्यशास्त्रे भट्टेर्महत्त्वम्

अलङ्कारशास्त्राचार्येषु भट्टिरपि सामान्येन गण्यते। अस्यैकैव कृतिर्भट्टिकाव्यं रावणवधं वा समुपलभ्यते। काव्येऽस्मिन् कविना रामायणमाश्रित्य कथा निबद्धा। इयं कथा रामलक्ष्मणयोर्विश्वामित्रेण सह वनगमनादारभ्य रावणवधपर्यन्तं विस्तृता। रामकथावर्णनमाश्रित्य भट्टिर्व्याकरणशास्त्रस्य काव्यशास्त्रस्य च नियमानामुदाहरणानि प्रास्तौत्। अत एव काव्यमिदं शास्त्रकाव्यमिति समीक्षकाः वदन्ति। वैयाकरणेभ्यः काव्यमिदं दीपतुल्यमस्ति। परन्त्ववैयाकरणस्य हस्ते पतितस्याऽस्य स्थितिरन्धहस्तगतदर्पणस्येव वर्तते।[1]

## २. भट्टेः समयः

भट्टिकाव्यस्य रचना श्रीधरसेननृपतेः समये बलभीनगर्यां बभूवेति तथ्यं काव्यस्याऽस्य वचनैरेव सिद्ध्यति।[2] अतो भट्टिसमयनिर्धारणाय श्रीधरसेनपार्थिवस्य सौराष्ट्रराजस्य समयो निर्धारणीयः। बलभीराजवंशस्य शताधिकानि ताम्रपत्राणि समुपलभ्यन्ते। तैः सूचनेयं प्राप्यते, यद् बलभ्यां श्रीधरसेनाभिधानाश्चत्वारो नृपतयो बभूवुः। तेषां चतुर्णामिव शासनसमय इतिहासविद्भिः ४०२-६४२ ई० कल्पितः। नरपतीनां तेषां वंशतालिका पी०वी०काणे महोदयेन निम्नप्रकारेण प्रस्तुताः[3] -

---

१. दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम्।
हस्तादर्श इवान्धानां भवेद् व्याकरणादृते।।
भट्टिकाव्य २२.२३

२. काव्यमिदं विहितं मया बलभ्यां
श्रीधरसेननरेन्द्रपालितायाम्।
कीर्तिरता भवतान्नृपस्य तस्य
प्रेमकरः क्षितिपो यतः प्रजानाम्।।
भट्टिकाव्य २२.३५।।

३. पी०वी० काणे : संस्कृत काव्यशास्त्र का इतिहास पृ० ४९

राजवंशस्याऽस्य तालिकायां श्रीधरसेनाभिधानाश्चत्वारो भूमिपालाः सन्ति। कस्य श्रीधरसेननृपतेः शासनकाले भट्टिर्बभूवेति विचारणीयम् -

(i) श्रीधरसेनद्वितीयस्य ताम्रपत्रेषु कस्मैचिद् भट्टिनाम्ने विदुषे भूमिदानस्योल्लेखो विद्यते। अतः समालोचकैरनुमितम् - भट्टिः श्रीधरसेनद्वितीयस्य (६०० ई०) समये बभूव।

(ii) भट्टिः स्वकीयमाश्रयदातारं नरेन्द्रपदेन लिलेख। श्रीधरसेनः प्रथमः सेनापतिनाम्ना श्रीधरसेनश्चतुर्थश्च महाराजाधिराजपरमेश्वरचक्रवर्तिविरुदेन चेतिहासविद्भिर्लिखितः। एतयोर्द्वयोरेव शासनकाले भट्टिस्थितिर्न सम्भवा। अस्मात् कारणात् कविरसौ श्रीधरसेनस्य द्वितीयस्य तृतीयस्य वा शासनकाले बभूवेत्यवगन्तव्यम्।

(iii) ए०वी० कीथ महोदयेन प्रोक्तम् - भट्टिः श्रीधरसेनस्य प्रथमस्य समकालीनो मन्तव्यः। अत्र युक्तिरियमस्ति - भट्टिर्यावन्त्युदाहरणान्यलङ्काराणां प्रास्तौत्, भामहेन दण्डिना च तावन्त एवाऽलङ्काराः प्रोक्ताः। अतो भट्टेर्दण्डिभामहयोश्च समयान्तरालो न्यूनतम एव सम्भावनीयः।

(iv) जयादित्यवामनकृतपाणिनीयाष्टककाशिकावृत्तौ निम्नश्लोको लभ्यते -

**वृत्तौ भाष्ये तथा धातुनामपारायणादिषु।**
**विप्रकीर्णस्य तन्त्रस्य क्रियते सारसङ्ग्रहः।।**

अस्य श्लोकस्य (वृत्त्याः) काशिकाविवरणपञ्जिकाभाष्ये जिनेन्द्रबुद्धिर्लिखति -

" चूल्लिभट्टिमल्लूरकृता पाणिनीयसूत्राणां व्याख्या काशिकापूर्ववर्तिनी विद्यते। अतो भट्टिर्जयादित्यपूर्ववर्त्यवर्तत, इति सिद्धमेव। चीनदेशवास्तव्येत्सिंगविवरणमनुसृत्य जयादित्यो ई० ६६१ समये दिवङ्गतो बभूव। अतो भट्टिसमयः ६०० ई० सम्भाव्यते।

(v) वी०सी० मजूमदारमहोदयेन मन्दसौरसूर्यमन्दिरोपलब्धशिलालेखस्य रचयिता वत्सभट्टिः, भट्टिकाव्यस्य च लेखको भट्टिरेकव्यक्तिरूपेण प्रतिपादितः। एतदाश्रित्य तेन भट्टिः श्रीधरसेनप्रथमकालीनस्तत्पूर्वकालीनो वा कल्पितः। परन्त्वस्यैकत्वस्य न किमपि पुष्टं प्रमाणं तेन प्रस्तुतम्। अत्र प्रमाणमित्येव यद् द्वयोर्लेखकयोः शरदृर्णनं समानगुणत्वमावहति। परन्तु शरद्वर्णनस्य समगुणभावमाश्रित्य न तयोर्द्वयोरेकत्वं प्रतिपादयितुं शक्यम्। अन्यैः प्रमाणैस्तयोर्भिन्नत्वं सुस्पष्टमेव।

## ३. भट्टिकाव्यस्य शास्त्रीयपरिचयः

द्वाविंशतिसर्गात्मकं भट्टिकाव्यं १६३४ श्लोकेषु कविना निबद्धम्। द्वाविंशतिसर्गाश्चेमे चतुर्षु काण्डेषु विभक्ता : सन्ति -

(१) प्रकीर्णकाण्डम् (१ - ५ सर्गाः)

(२) अधिकारकाण्डम् (६ - ९ सर्गाः)

(३) प्रसन्नकाण्डम् (१० - १३ सर्गाः)

(४) तिङन्तकाण्डम् (१४ - २२ सर्गाः)

काव्यस्याऽस्य तृतीये प्रसन्नकाण्डेऽलङ्कारशास्त्रनियमानामुदाहरणानि कविना प्रस्तुतानि। सर्गक्रमेण तानि निम्नवत् प्रस्तूयन्ते -

(i) दशमे सर्गेऽष्टत्रिंशदलङ्काराणामुदाहरणानि सन्ति। अत्राऽनुप्रासयमकौ द्वौ शब्दालङ्कारौ वर्तेते शेषाश्चाऽर्थालङ्काराः सन्ति। सर्गोऽयं पञ्चसप्ततिश्लोकात्मको वर्तते।

(ii) एकादशे सर्गे सप्तचत्वारिंशच्छ्लोकेषु माधुर्यगुणस्योदाहरणानि वर्तन्ते।

(iii) सप्ताशीतिश्लोकात्मके द्वादशे सर्गे भाविकालङ्कारस्योदाहरणानि कविना प्रस्तुतानि। भामहदण्डिनौ भाविकालङ्कारं प्रबन्धविषयं जगदतुः।

(iv) त्रयोदशे सर्गे पञ्चाशच्छ्लोकाः विद्यन्ते। तत्र भाषासमस्योदाहरणानि वर्तन्ते। तेषाञ्च श्लोकानां संस्कृतभाषायां प्राकृतभाषायाञ्च समस्थितिर्विद्यते।

भट्टिकाव्यस्य प्रसन्नकाण्डस्य चतुर्षु सर्गेषु समुपस्थापितैरालङ्कारिकतत्त्वैरेव भट्टिः काव्यशास्त्राचार्येषु गणनामवाप। तेन येषामलङ्काराणामुदारणानि येन क्रमेण प्रस्तुतानि, प्रायशस्त एवाऽलङ्कारास्तेनैव क्रमेण भामहदण्डिनोरलङ्कारग्रन्थयोर्विद्यन्ते। एतदेव तथ्यं लक्ष्यीकृत्याऽनेकेषां समीक्षकाणां विचारसरणिरस्ति, यदाचार्यो भट्टिर्भामहदण्डिनावनुससार। अथ चाऽसौ तयोरुत्तरवर्ती वर्तते। परन्त्वन्येषां समीक्षकाणां मतमेतद्विपरीतमेव। ते कथयन्ति यद् भामहदण्डिभ्यां भट्टिरनुसृतः। तदनन्तरं ताभ्यां स्वालङ्कारशास्त्रग्रन्थयोरलङ्कारस्वरूप-निरूपणं कृतम्।

परन्तु द्वे अपि मते भ्रान्तिपूर्णे एव। भामहदण्डिभट्टिकृतग्रन्थानामध्ययनेन सुस्पष्टं यन्न केनाऽप्याचार्येण कस्याऽप्यन्यस्याऽऽचार्यस्याऽनुकरणं विहितम्। यदि केषुचित् स्थानेषु किञ्चित् साम्यं लक्ष्यते, बहुष्वन्येषु स्थानेषु वैषम्यं मतवैभिन्न्यञ्चाऽप्यनुभूयते। अत्रोदाहरणानि सन्ति -

(i) भामहेन विरोधालङ्कारानन्तरं तुल्ययोगितालङ्कार उदाहृतः। परं भट्टिस्तुल्ययोगितालङ्कारमुपमालङ्कारानन्तरं विरोधालङ्काराच्च पूर्वं समस्थापयत्।

(ii) भामहेनाऽप्रस्तुतप्रशंसालङ्कारस्य परिभाषा प्रस्तुता, परं न भट्टिस्तस्योदाहरणं प्रस्तुवते।

(iii) भट्टिः हेतुवार्तालङ्कारयोरुदाहरणे प्रास्तौत् परं न तावलङ्कारौ भामहदण्डिभ्यामङ्गीकृतौ।

(iv) निपुणालङ्कारस्योदाहरणं भट्टिः प्रादर्शयत्, परं न भामहदण्डिनौ तमलङ्कारमलङ्कारेषु गणयामासतुः।

(v) भट्टिः श्लेषसूक्ष्मालङ्कारौ नोदाजहार, परं दण्डी श्लेषसूक्ष्महेत्वलङ्कारान् श्रेष्ठालङ्कारमध्ये गणयामास। भामहेन नैतेऽलङ्काराः स्वीकृताः।

(vi) भट्टिदण्डिभ्यां यमकालङ्कारोऽतिविस्तरेण वर्णितः। भामहस्त्वेनमलङ्कारमतिसूक्ष्मरूपेण प्रोक्तवान्।

अतो वचनमिदमविचारपूर्णमेव यदेकेनाचार्येणाऽन्यस्याऽनुकरणं विहितम्।

### ४. भट्टिकाव्यस्य प्राचीनाष्टीकाः

भट्टिकाव्यमुपलक्ष्य प्राचीनकाले व्याख्याकारैरनेकाष्टीकाः विरचिताः परं वर्तमानसमये द्वे एव टीके समुपलभ्येते -

(i) प्रथमा प्राचीना टीका जयमङ्गला विद्यते। इयं टीका सम्भवतो नवमशताब्द्यां (ई०) लिखिताऽऽसीत्। टीकाकारेणाऽत्र भट्टिपितुर्नाम श्रीस्वामीति सूचितम्।

(ii) द्वितीया टीका मल्लिनाथविरचिता वर्तते। अनेन टीकाकारेण भट्टिपितुर्नाम श्रीधरस्वामीति लिखितम्।

द्वे एव टीके इमे प्रकाशिते स्तः।

विषयोऽयं प्रायशो विवादास्पदो यद् भट्टिः काव्यशास्त्रकृत्स्वाचार्येषु गणयितुं योग्यतां धत्ते न वा। काव्यशास्त्रविवेचनं तेनोदाहरणप्रस्तुतिभिरेव विहितम्। इति हेतुना समीक्षकैरसौ काव्यशास्त्राचार्येषु परिगणितः। भट्टिकाव्यमिदं न केवलं स्वदेश एव, अपित्वन्येषु देशेष्वपि प्रतिष्ठामवाप। डा० ह्यूकासमहोदयो भट्टिकाव्यस्याऽलङ्कारभागमभिलक्ष्य निबन्धमेकं लिलेख। तेन सूचितम् - प्राचीनयवद्वीपभाषायामुपलब्धं रामकथाकाव्यं भट्टिकाव्येन प्रभावितमस्ति।[1]

---

१. राल्फ़ टरनर अभिनन्दन ग्रन्थ पृ० ३५१

सप्तमोऽध्यायः

# भामहः

## १. भामहस्य महत्त्वम्

संस्कृतकाव्यशास्त्रप्रणेतृषु भामहस्य स्थानमतिमहत्त्वशालि वर्तते। भरतमुन्यनन्तरमसौ काव्यशास्त्रस्य प्रथमाचार्यो बभूव। भरतो यदि नाट्यशास्त्रस्य प्रथमाचार्योऽस्ति, भामहोऽलङ्कारशास्त्रस्य प्रथमाचार्योऽवर्तत। उत्तरवर्तिन आचार्याः काव्यशास्त्रप्रवक्तारश्च प्रायः सर्व एव भामहं तस्य कृतिं काव्यालङ्कारञ्च सादरमुल्लिख्य प्रमाणरूपेण प्रास्तुवन्। अनेक आचार्याः काव्यालङ्काराद् विषयवस्तूनि जगृहुः। भामहमतमनङ्गीकुर्वन्तोऽपि मतभेदं प्रकटयन्तोऽपि काव्यशास्त्राचार्या एते भामहस्य सादरं स्मरणं कुर्वन्ति। भामहो न केवलं प्राचीनाचार्यान् प्रभावितांश्चकार, अर्वाचीनाः भारतीयाः पाश्चात्याश्चाऽपि विद्वांसस्तं प्रति समाकृष्टाः सन्ति। भामहसम्बन्धे विविधपक्षानवलम्ब्य नवीनैतिहासिकतथ्यानां गवेषणा विद्वद्भिः सम्पादिता।

काव्यशास्त्रस्येतिहासे भामहस्य महत्त्वमनेकैर्हेतुभिर्वर्तते। संक्षेपेण ते निम्नविधिना प्रस्तूयन्ते -

(i) भामहस्य कृतिः काव्यालङ्कारः काव्यशास्त्रस्य प्राचीनतमो ग्रन्थो वर्तते। यद्यपि भरतस्य नाट्यशास्त्रं भामहादपि प्राचीनतरं, तथापि तन्मुख्यरूपेण नाट्यशास्त्रीयं वर्तते। भामहः काव्यशास्त्रतत्त्वानि नाट्यशास्त्रात् पृथक्कृत्य स्वतन्त्ररूपेण काव्यशास्त्रीयग्रन्थं विरच्य सर्वाण्येव काव्याङ्गानि समीक्षाञ्चकार।

(ii) प्रथमं तावद् भामहेनैव काव्यस्वरूपस्य निर्धारणं कृतम्। तेन लिखितम् - शब्दार्थौ सम्मिलितावेव काव्यं भवतः।[1] उत्तरवर्तिनो बहव आचार्याः भामहमतमङ्गीचक्रुः। परन्तु भामहेन काव्यस्याऽऽत्मा न स्पष्टीकृतः, यस्तु बहुकालानन्तरमानन्दवर्धनेन परिभाषितः।

(iii) भामहः काव्यस्य प्रमुखाङ्गानां गुणालङ्कारादीनां विशदं विवेचनमकरोत्। भरतो दशगुणानां विवेचनञ्चकार। दण्डिनाऽपि दशगुणाः प्रोक्ताः। वामनस्तु विंशतिगुणान् जगाद - दश शब्दगुणान् दश चाऽर्थगुणान्। परन्तु प्रथमं तावद् भामहेनैव प्रतिपादितम् - काव्ये त्रयो गुणाः भवन्ति - माधुर्यमोजः प्रसादश्च। उत्तरवर्तिभिराचार्यैर्गुणविषये भामहमतमेव

---

१. शब्दार्थौ सहितौ काव्यम्। भामहः काव्यालङ्कार १.१६

स्वीकृतम्। यद्यपि ते गुणत्रयं स्वीकुर्वन्ति, तथापि तेषां गुणपरिभाषा वामनात् किञ्चिद् भिन्नैव लक्ष्यते।

(iv) भरतेन नाट्यशास्त्रे चत्वार एवाऽलङ्काराः प्रोक्ताः। परं भरताद् दीर्घकालानन्तर-वर्तिना भामहेनाऽलङ्काराणां विशदं विवेचनं कृत्वाऽनेकेषामलङ्काराणामुद्भावना कृता। भामहो निम्नलिखितांस्त्रयश्चत्वारिंशदलङ्कारान्न्यरूपयत् -

अनुप्रास (द्वौभेदो) यमक (पञ्चभेदाः) रूपक (द्वौ भेदौ) दीपकोपमा (सप्तदोषसहित) प्रतिवस्तूपमाऽऽक्षेपा (द्वौ भेदौ) ऽर्थान्तरन्यासव्यतिरेकविभावनासमासोक्त्यतिशयोक्ति-यथासंख्योत्प्रेक्षा स्वभावोक्तिप्रेयोरसवदूर्जस्विपर्यायोक्तसमाहितोदात्त(द्वौ भेदौ) श्लिष्टापह्नुति-विशेषोक्तिविरोधतुल्ययोगिताऽप्रस्तुतप्रशंसाव्याजस्तुतिनिदर्शनोपमारूपकोपमेयो-पमासहोक्तिपरिवृत्तिससन्देहानन्वयोत्प्रेक्षावयवसंसृष्टिभाविकाऽऽशिषः।

(v) भामहो जगाद - वक्रोक्तिं विना न कोऽप्यलङ्कारः सिद्ध्यति।[1] हेतुसूक्ष्मश्लेषाः नाऽलङ्काराः विद्यन्ते, यतस्ते वक्रोक्तिरहिताः।[2] अलङ्कारशास्त्रस्येतिहासे वक्रोक्त्याः महत्त्वं ध्रुवं वर्तते। कुन्तको वक्रोक्तिमेव काव्यस्य प्राणान् प्रत्यापादयत्। असौ वक्रोक्तिसम्प्रदायस्य प्रवर्तको बभूव। भामहप्रोक्ता वक्रोक्तिः कुन्तकप्रोक्तायाः वक्रोक्त्याः यद्यपि भिद्यते, तथापि वक्रोक्त्याः प्रथमव्याख्याता भामह एवाऽवगन्तव्यः।

(vi) काव्यदोषाणां विस्तृतवैज्ञानिकव्याख्या भामहेनैव विहिता। काव्यगतदोषाणां विवेचनेन सहाऽसौ काव्यशोभाधायकानामलङ्काराणामपि दोषान् प्रादर्शयत्।

(vii) भामहः काव्यकर्त्रे न्यायशब्दशास्त्रयोरध्ययनमनिवार्यं निरदिशत्। न्यायशब्दशास्त्रज्ञ एव दोषरहितं काव्यं कर्तुं क्षमते।

## २. भामहस्य व्यक्तित्वम्

भामहस्य व्यक्तिगतजीवनविषये नाऽधिकं विद्वांसो जानन्ति। प्राचीनसाहित्यस्याऽध्ययनेन यत्किञ्चिदवगम्यते, तदेवाऽत्र प्रस्तूयते।

प्राचीनपरम्परा अनुसृत्य केषाञ्चिद् विदुषां मतमस्ति, यद् भामहः कश्मीरदेश-वास्तव्योऽवर्तत। व्हूलरनरसिंहाचार्यकृष्णमाचार्यादिभिराचार्यैर्मनीषिभिः स्वलेखेषु तथ्यस्याऽस्य प्रतिपादन कृतम्। यद्यप्येतैर्विद्वद्भिः स्वमन्तव्यप्रतिपादनाय न काऽपि सक्षमा युक्तिः प्रतिपादिता, तथापि नैतन्मतं खण्डयितुं प्रमाणमप्यन्येन केनचित् समीक्षकेण प्रस्तुतम्।

---

१. सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।। भामह : काव्यालङ्कार २.८५

२. हेतुश्च सूक्ष्मो लेशश्च नाऽलङ्कारतया मतः।
समुदायाऽभिधानस्य वक्रोक्त्यनभिधानतः।। काव्यालङ्कार २.८६

भामहकृतकाव्यालङ्कारस्य पाण्डुलिपिरेकाऽन्वेषकैर्दक्षिणभारते समुपलब्धा। अतः केचन विद्वांसो भामहं दक्षिणभारतीयमामनन्ति। परन्तु नाऽत्राऽपि किञ्चित् सक्षमं प्रमाणम्। प्रथमं तावत् कश्मीरप्रदेशग्रन्थेष्वेव भामहस्योल्लेखो लभ्यते। अथ च कश्मीरदेशवास्तव्येनाऽऽचार्येणोद्भटेन तत्कृतिमुपलक्ष्य भामहविवरणाभिधाना टीका लिखिता। अतोऽसौ कश्मीरको विद्वद्भिरभिमतः।

काव्यालङ्कारस्याऽन्तिमेन श्लोकेनाऽनुमीयते, यद् भामहजनकस्य नाम रक्रिलगोभिन्नवर्तत।[१] काव्यालङ्कारं प्रारभन् भामहः सार्वसर्वज्ञमस्तौत्।[२] भामहस्य पितुरमिधानं रक्रिलगोमिन्नवर्तत, आराध्यश्च सार्वसर्वज्ञ आसीदिति पदाभ्यां केचन समीक्षकास्तं बौद्धमतावलम्बिनं कथयन्ति। नरसिंह आयङ्गर महोदयो ब्रूते -

रक्रिलपदं राहुलपोत्तलसोमिल्लादिभिर्बौद्धनामभिः सादृश्यं भजते। अतो भामहो बौद्धोऽनुमीयते। गोमिन्निति पदमपि तस्य बौद्धभावं सूचयति, यतो बुद्धस्यैकः शिष्यो गोमिन्नामाऽवर्तत।

परन्तु पाठकमहोदयस्य कथनमस्ति - "गोमिन्निति पदमत्र पूज्यार्थे वर्तते, यथा चान्द्रव्याकरणे प्रतिपाद्यते।"[३]

सार्वसर्वज्ञपदमपि भामहस्य बौद्धभावं प्रतिपादयति। सर्वज्ञपदस्यार्थो वर्तते - बुद्धः।[४] सार्वपदस्य निर्वचनं वर्तते - सर्वेभ्यो हितः। सर्वहितकारिणो बुद्धस्य स्तुतिर्भामहेन कृतेत्यसौ बौद्धमतावलम्बी मन्तव्यः।

परन्तु बहुसंख्यकाः समीक्षकाः भामहस्य बौद्धत्वावधारणाविरोधिनो वर्तन्ते। तत्रैताः युक्तयः प्रस्तूयन्ते -

(i) रक्रिलनाम्नैव कश्चिन्न बौद्धो वक्तुं शक्यते। भारतवर्षे बौद्धानां ब्राह्मणमतावलम्बिनाञ्च सहनिवासभावात् परस्परं नामग्रहणं स्वाभाविकमेव।

(ii) गोमिन्निति पदस्य प्रयोगः केवलं बौद्धैरेव कृत इति नेदृशी स्थितिः। कश्मीरजनपदवास्तव्याः केचन गोमिन्निति जातिवाचका अवर्तन्त। दक्षिणभारते गोमिन्निति पदस्य प्रयोग आचार्येभ्योऽवर्तत। निरुक्ते गोमिन्निति पदं गोस्वामिन्निति पदस्य संक्षिप्तरूपं प्रोक्तम्।

---

१. अवलोक्य मतानि सत्कवीनामवलोक्य स्वधिया च काव्यलक्ष्म।
सुजनावगमाय भामहेन ग्रथितं रक्रिलगोमिसूनुनेदम्।। काव्यालङ्कार ६.६४

२. प्रणम्य सार्वं सर्वज्ञं मनोवाक्कायकर्मभिः।
काव्यालङ्कार इत्येष यथाबुद्धि विधास्यते।। काव्यालङ्कार १.१

३. गोमिन् पूज्ये। चान्द्र व्याकरण ४.११.१४४

४. सर्वज्ञः सुगतो बुद्धः। अमरकोष १.१.१३

(iii) सार्वपदस्य निर्वचनं "सर्वेभ्यो हित" इत्येव वर्तते। परन्त्वेतत् पदं विशेषणत्वेनाऽभिधात्वेन वा न केवलं बुद्धायैव प्रयुक्तम्। अथ चेदं पदं कोषग्रन्थेषु बुद्धपदस्य पर्यायरूपेण प्रोक्तम्। अमरसिंहो बौद्धमतानुयाय्यवर्तत। परन्तु नाऽसौ सार्वपदं बुद्धपदपर्यायत्वेन जगाद।

(iv) सर्वज्ञपदप्रयोगो बुद्धायैव केवलं बभूवेति न। शिवोऽपि सर्वज्ञः प्रोक्तः।[१] श्लोकवार्तिकग्रन्थे कुमारिलभट्टः सर्वज्ञं दीर्घं तुष्टाव।

(v) भामहो बौद्धानामपोहवादं सुकठोरमालुलोचे।[२] यद्यसौ बौद्धोऽभविष्यन्न तथा तानालोचिष्यत।

(vi) यदि भामहो बौद्धोऽभविष्यत्, तस्य ग्रन्थे काव्यालङ्कारे बौद्धकथानां सिद्धान्तानाञ्च सङ्केताः ध्रुवं न्यधास्यन्त। काव्यालङ्कारे न तथा सङ्केताः समुपलभ्यन्ते। परमेतद्विपरीतं तस्मिन् ग्रन्थे वैदिकदेवतानां पौराणिककथानाञ्च सङ्केताः प्राचुर्येण सन्ति। सोमपीतीनां[३], वैदिकदेवतानां[४] महादेवशिवेन कामदेवस्य दहनस्य[५], रामायणघटनानां[६] महाभारतघटनानां[७], कृष्णपुत्रप्रद्युम्नस्येति[८] वर्णनान्यस्मिन् ग्रन्थे वर्तन्ते। अन्येऽपीदृशीनां घटनानां सङ्केताः काव्यालङ्कारे समुपलभ्यन्ते। गुणाढ्यस्य बृहत्कथाऽपि भामहेन काव्यालङ्कारे सङ्केतिता।

निर्वचनेनाऽनेन सुस्पष्टमेव यद् भामहं बौद्धमतावलम्बिनं वक्तुमनुचितमेवाऽसङ्गतञ्च। असौ वैदिकधर्मानुयायी ब्राह्मण आसीदित्येव कथनीयम्।

---

१. कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः। अमरकोश १.१.१३

२. अन्यापोहेन शब्दोऽर्थमाहेत्यन्ये प्रचक्षते।
अन्यापोहश्च नामान्यपदार्थापाकृतिः किल।।
यदि गौरित्ययं शब्दः कृतार्थोऽन्यनिराकृतौ।
जनको यदि गोबुद्धेर्मृग्यतामपरोऽध्वनिः।। काव्यालङ्कार ६.१६-१७

३. भूभृतां सोमपीतीनां न्याय्ये वर्त्मनि तिष्ठताम्।
अलङ्करिष्णुना वंशं गुरौ सति जिगीजुणा।। काव्यालङ्कार ४.४९

४. युगादौ भगवान् ब्रह्मा विनिर्मित्सुरिव प्रजाः। काव्यालङ्कार २.२५

५. स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरताऽपि तनुं यस्य शम्भुना न बलं हृतम्।। काव्यालङ्कार ३.२४

६. उदात्तः शक्तिमान् रामो गुरुवाक्यानुरोधतः।
विहायोपगतं राज्यं यथावनमुपागमत्।। काव्यालङ्कार ३.११

७. आहूतो न निवर्तेय द्यूतायेति युधिष्ठिरः।
कृत्वा सन्धां शकुनिना दिदेवेत्यर्थबाधिनी।। काव्यालङ्कार ५.४२

८. भरतस्त्वं दिलीपस्त्वं त्वमेवैलः पुरूरवाः।
त्वमेव वीर प्रद्युम्नस्त्वमेव नरवाहनः।। काव्यालङ्कार ५.५९

## ३. भामहस्य समय:

भामहस्य समयविषये विदुषां विभिन्नानि मतानि सन्ति। भामहस्य समय: प्रायश: पञ्चम-षष्ठशताब्दिको (ई०) गण्यते। तत्र प्रधाना युक्तिरियमस्ति -

भामह: काव्यालङ्कारस्य पञ्चमे परिच्छेदे न्यायसिद्धान्तपर्यालोचने प्रसिद्धेन बौद्धविदुषा दिङ्नागेन प्रभावितो लक्ष्यते।

अथ वाचस्पतिमिश्रेण प्रोक्तम् -

प्रमाणानां द्वैविध्यं, प्रत्यक्षप्रमाणस्य कल्पनापोढत्वं, कल्पनाया: नामजात्यादियोजना-रूपत्वं, लिङ्गानां त्रैविध्यमिति यत्किञ्चिदपि भामहो न्यरूपयत्तत्र दिङ्नागानुकरणं सुस्पष्टमेव। अतो भामहो दिङ्नागोत्तरवर्ती वर्तते।

दिङ्नागस्य समयस्तस्य गुरुं वसुबन्धुमुपलक्ष्य निश्चीयते। वसुबन्धुश्चतुर्थशताब्दिक: (ई०) प्रतिपाद्यते। कुमारजीवो वसुबन्धोश्चरित (४०१-४०९ ई०) मलिखत्। अतोऽसौ गुप्तवंशीयचन्द्रगुप्तविक्रमादित्यसमकालीनोऽवगम्यते। दिङ्नागस्य समयोऽपि चतुर्थशताब्दिको (ई०)ऽवगन्तव्य:।

भामहो धर्मकीर्तिबाणपूर्वकालीनोऽवर्तत। धर्मकीर्तिना दिङ्नागस्य प्रत्यक्षप्रमाणनिरूपणे किञ्चित् परिवर्तनं कृतम्। परन्तु भामहेन तत्तथैव स्थापितम्। नाऽसौ धर्मकीर्तिमनुचकार।[१] अतो भामहो धर्मकीर्तिपूर्ववर्ती वर्तते। धर्मकीर्तिर्विंशत्युत्तरषट्शताब्दिको (६२० ई०) गण्यते।

आनन्दवर्धनस्यैकेन वर्णनेन भामहो बाणपूर्वकोऽवगम्यते। ध्वन्यालोकस्य चतुर्थाध्यायस्यैकस्या: कारिकाया अभिप्राय: -

पूर्ववर्तिनां कवीनां वर्णनेष्वपि रसनिवेशात्तथैव नवत्वमापद्यते, यथा मधुमासे तरवो नवीना इव प्रतिभान्ति।[२] अस्योदाहरणमिदं वर्तते -

**तथाहि विवक्षितान्यपरवाच्यस्यैव शब्दशक्त्युद्भवानुरणरूपव्यङ्ग्यप्रकारसमाश्रयेण नवत्वम्। यथा "धरणीधारणायाधुना त्वं शेष इत्यादौ -**

**शेषो हिमगिरिस्त्वञ्च महान्तो गुरव: स्थिरा:।**
**यदलंघितमर्यादाश्चलन्तीं बिभ्रते भुवम्।।**

**इत्यादिषु सत्स्वपि तस्यैवार्थशब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यसमाश्रयेण नवत्वम्।**

---

१. प्रत्यक्षं कल्पनापोढम्। दिङ्नाग
प्रत्यक्षं कल्पनापोढम्। काव्यालङ्कार ५.६।।
प्रत्यक्षं कल्पनापोढमभ्रान्तम्। धर्मकीर्ति

२. दृष्टपूर्वा अपि ह्यर्था काव्ये रसपरिग्रहात्।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमा:। ध्वन्यालोक ४.४

एतद्वर्णनमाध्यमेनाऽऽनन्दवर्धनः "शेषो हिमगिरिस्त्व" मिति वाक्ये प्राचीनत्वमथ चैतदेव वाक्यमाश्रित्य रचिते "धरणीधारणायाधुना त्वं शेष" इति वाक्ये नवत्वमाह। अत्र "शेषो हिम०" इति वाक्यं भामहस्य, "धरणी"० इति च वाक्यं बाणरचितस्य हर्षचरितस्य वर्तते। आनन्दवर्धनस्य कथनेन सुस्पष्टमेव यद् भामहो बाणाद् पूर्ववर्ती वर्तते। बाणस्तु ध्रुवमेव सप्तमशताब्दिपूर्वार्द्धकालीनो (ई०) वर्तते।

एवञ्च भामहं पञ्चमषष्ठशताब्दिकालीनं प्रतिपादयितुं न काऽपि बाधा वर्तते।

भामहस्य समयनिर्धारणेऽन्यसंस्कृतकविसमालोचकसमयैः सह तुलनात्मकमध्ययनं महत्साहाय्यं विधत्ते। अतः प्राचीनकविभिः सह भामहसमयसम्बन्धविचारोऽनिवार्यरूपेण कर्तव्यः -

**(i) भामहः कालिदासश्च -**

समीक्षकाणां धारणेयं ध्रुवमस्ति यद् भामहेः कालिदासोत्तरवर्ती वर्तते। अस्मिन् सम्बन्धे भानहवर्णितोऽयुक्तिमद्दोष उद्ध्रियते -

अयुक्तिमद् यथा दूता जलभृन्मारुतेन्दवः।
तथा भ्रमरहारीतचक्रवाकशुकादयः।।
अवाचोऽव्यक्तवाचश्च दूरदेशविचारिणः।
कथं दौत्यं प्रपद्येरन्निति युक्त्या न युज्यते।।
यदि चोत्कण्ठया यत्तदुन्मत्त इव भाषते।
तथा भवतु भूम्नेदं सुमेधीभिः प्रयुज्यते।। काव्यालङ्कार १.४२-४४

वाग्रहितान् मेघादीन् दूतत्वेन कल्पने काव्येऽयुक्तिमद् दोषो भवतीति भामहेन प्रोक्तम्। भामहः कालिदासस्य मेघदूतकाव्यमवलोक्य सम्भवतो दोषमेतमकल्पयत्। अथ चाऽसौ लोकेऽतितरां समादृते कालिदासकाव्ये दोषोद्भावनाकल्पनामसङ्गतां विभाव्य कालिदासकथितमार्गेणैव दोषपरिहारोपायं निरदिशत्। अथ च तं सुमेधीभिरिति पदेन समबोधयत्। कालिदासस्य यक्षः कामोन्मत्त एव मेघं दूतमकल्पयत्।

किन्त्वेतां युक्तिमाश्रित्यैवाऽन्ये समालोचकाः भामहं कालिदासपूर्ववर्तिनं प्रतिपादयन्ति। यतो भामहो वाग्रहितं मेघादिकं दूतत्वेन परिकल्प्य काव्यनिर्माणेऽयुक्तिमद् दोषमाह, अथ च पात्रस्योन्मादभावेन दोषपरिहारभावमपि निरदिशद्, अतो स्वकाव्ये मेघदूते दोषपरिहाराय मेघदूतत्वकल्पनायां कालिदासो यक्षं कामोन्मत्तमपि कल्पयामास। अत एवाऽस्मिन् काव्ये कविना प्रथमं यक्षस्य कामपीडिताऽवस्था वर्णिता, तदनन्तरमेव यक्षस्तस्य दौत्यमीहते -

धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेजु।। मेघदूत - पूर्वमेघ - ५

टी०गणपतिशास्त्रिमहोदयेन प्रोक्तम् -

मेधाविरामशर्माश्मकवंशरत्नहरणादीनां कवीनां वर्णनं भामहेन विहितं, परं न कालिदासस्याऽतिप्रसिद्धिङ्गतस्य कवे: । अतो भामह: कालिदासपूर्ववर्ती वर्तते ।

कालिदासभामहयो: पूर्वापरसम्बन्धे द्विविधा एव युक्तयो वर्तन्ते । अथ च तयो. पूर्वापरत्वं निश्चयेन न साधयितुं शक्यम् । भारतीयपरम्परा: कालिदासं ई०पू० प्रथमशताब्दिकं सूचयन्ति । भामहसमयश्च तथा प्राचीनं प्रतिपादयितुं न शक्यते । अत: कालिदासो भामहपूर्ववर्त्येवाऽवगन्तव्यो भामहश्च कालिदासादुत्तरवर्ती ।

**(ii) भामहो भासश्च -**

केचन समालोचका: भामहसमयनिर्धारणे भासमप्युल्लिखन्ति । काव्यालङ्कारस्य चतुर्थपरिच्छेदे भामहो वत्सराजोदयनस्य कथामेवं निर्दिदिश -

**विजिगीषुमुपन्यस्य वत्सेशं वृद्धदर्शनम् ।**
**तस्यैव कृतिन: पश्चादभ्यधाच्चारशून्यताम् ।।**
**अन्तर्योधशताकीर्णं सालङ्कायननेतृकम् ।**
**तथाविधं गजच्छद्म नाऽज्ञासीत् स स्वभूगतम् ।।**
**यदि वोपेक्षितं तस्य सचिवै: स्वार्थसिद्धये ।**
**अहो तु मन्दिमा तेषां भक्तिर्वा नास्ति भर्तरि ।।**
**शरा: दृढधनुर्मुक्ता: मन्युमद्भिररातिभि: ।**
**मर्माणि परिहृत्याऽस्य पतिष्यन्तीति काऽनुमा ।।**
**हतोऽनेन मम भ्राता मम पुत्र: पिता मम ।**
**मातुलो भागिनेयश्च रुषा संरब्धचेतस: ।।**
**अस्यन्तो विविधान्याजावायुधान्यपराधिनम् ।**
**एकाकिनमरण्यान्यां न हन्युर्बहव: कथम् ।।**
**नमोऽस्तु तेभ्यो विद्वद्भ्यो येऽभिप्रायं कवेरिमम् ।**
**शास्त्रलोकावपास्यैव नयन्ति नयवेदिन: ।।**
**सचेतसो वनेभस्य चर्मणा निर्मितस्य च ।**
**विशेषं वेद बालोऽपि कष्टं किन्नु कथं नु तत् ।।**

काव्यालङ्कार ४.३९-४७

भामहस्यैतान् श्लोकानुपलक्ष्य केषाञ्चित् समालोचकानां कथनमिदमस्ति यद् भामहेनाऽयं वृत्तान्तो भासस्य प्रतिज्ञायौगन्धरायणनाटकस्य कथामाश्रित्य लिखित: । अतो भामहो भासोत्तरवर्ती मन्तव्यो ध्रुवम् ।''

किन्तु भामहस्यैतद्वर्णनमाश्रित्यैव भासस्य भामहपूर्ववर्तित्वप्रतिपादनं नोचितम् । वत्सराजोदयनस्य कथा बृहत्कथायां गुणाढ्येन वर्णिता । सा बृहत्कथा तु वर्तमानसमये

नोपलभ्यते, परन्तु तस्याः संस्कृतरूपान्तरे कथासरित्सागरबृहत्कथामञ्जर्यौ समुपलभ्येते। भामहस्तु कथासङ्केतमेतं बृहत्कथाया एव ध्रुवं जग्राह, न तु भामहस्य प्रतिज्ञायौगन्धरायणनाटकात्। इदं तु सत्यमेव यद् भामहो भासोत्तरवर्ती, परं काव्यालङ्कारस्योदयनकथामाश्रित्यैवैतत् प्रतिपादनं न तर्कसङ्गतम्।

(iii) **भामहो न्यासकारश्च -**

भामहेनैकस्मिन् स्थाने न्यासकारस्योल्लेखः कृतः -

**शिष्टप्रयोगमात्रेण न्यासकारमतेन च।**
**तृचा समस्तषष्ठीकं न कथञ्चिदुदाहरेत्।।**
**सूत्रज्ञापकमात्रेण वृत्रहन्ता यथोदितः।**
**अकेन च न कुर्वीत वृत्तिं तद्गमको यथा।। काव्यालङ्कार ६.३६-३७**

अस्याऽयमभिप्रायो यच्छिष्टप्रयोगमनुसृत्य न्यासकारमतञ्चाऽवलम्ब्य "तृच्" प्रत्ययप्रयोगे षष्ठीसमासो न विधातव्यः। अतो "वृत्रस्य हन्ता" इत्यत्र षष्ठीसमासं विधाय "वृत्रहन्ता" इति प्रयोगो न कार्यः। एवमेव "अक" प्रत्ययप्रयोगेऽपि षष्ठीसमासो न विधेयः। "तद्गमक" इति रूपमप्यशुद्धमेवाऽस्ति।

पाणिनीयसूत्रं वर्तते - " तृजकाभ्यां कर्तरि"। अनेन " तृच्" प्रत्ययस्य "अक" प्रत्ययस्य च प्रयोगे कर्तृकारके षष्ठीसमासविधानं निषिध्यते। अतः "अपां स्रष्टा", बज्रस्य भर्ता", "ओदनस्य पाचक" इत्यादिपदेषु समासो न विधीयते।

भामहस्यैतत्कथनमाश्रित्य प्रो० पाठकमहोदयस्य कथनं वर्तते -

"भामहो न्यासोत्तरवर्ती ह्यवर्तत।[1] न्यासकारस्तु प्रसिद्धो बौद्धविद्वान्, जिनेन्द्रबुद्धिरवर्तत। तेन 'काशिकाविवरणपञ्जिका' लिखिता। इयं न्यासटीका प्रोच्यते। चीनदेशवास्तव्यस्येत्सिङ्गमहोदयस्य वर्णनमाश्रित्य जिनेन्द्रबुद्धिः सप्तमशताब्दिको (ई०) निश्चीयते। अतो भामहस्य समयोऽष्टमशताब्दिको (ई०) मन्तव्यः।

परमन्ये विद्वांसः प्रो० पाठकमहोदयस्य मतं प्रबलयुक्तिभिः खण्डयन्ति। एषु डा० त्रिवेदीमहोदयः प्रधानत्वेन तिष्ठति।[2] तस्याऽभिमतमस्ति -

न्यासपदमाश्रित्यैव भामहं जिनेन्द्रबुद्ध्युत्तरवर्तिनमष्टशताब्दिकं (ई०) च साधयितुं नोचितम्। एतेषु श्लोकेषु भामहकृतन्यासपदप्रयोगो न काशिकाविवरणपञ्जिकाभिधानां न्यासटीकां सूचयति। न्यासपदप्रयोगः सामान्येन वृत्तये वा विवरणाय वा विधीयते।

---

१. जे० आर० ए० एस० (बोम्बे) वो० xxvii इन्ड० एन्ट० वो० एक्स० एल० आई० (१९१२)
२. डा० त्रिवेदीकृत प्रतापरुद्रयशोभूषणग्रन्थप्रस्तावना पृ० xxxv

माधवाचार्यो "माधवीयधातुवृत्तौ' बहून् न्यासान्नुल्लिलेख। बाणभट्टेन 'हर्षचरिते' "कृतगुरुपदन्यासा'' इति पदस्य प्रयोगो विहितः। अस्य पदस्य व्याख्या शङ्करेणैवं कृता -

**"कृतोऽभ्यस्तो गुरुपदे दुर्बोधशब्दे न्यासो वृत्तिर्विवरणं यैस्ते"।**

अतो भामहस्येदं न्यासपदं तत्पूर्ववर्तिनं कञ्चित् पाणिनीयाष्टाध्यायीटीकाकारं सूचयति, न तु न्यासकारं जिनेन्द्रबुद्धिम्। यदि च न्यासकारपदेन जिनेन्द्रबुद्धिरेव बोध्यते, ततः "कृतगुरुपदन्यासा'' पदेन बाणोऽपि जिनेन्द्रबुद्धिपश्चाद्वर्ती सिद्ध्येत। परन्तु तत्त्वसम्भवमेव। अतो न्यासकारपदप्रयोगयुक्तिमाश्रित्य भामहस्य जिनेन्द्रबुद्धिपश्चाद्वर्तित्वसाधनं न समुचितम्।

(iv) **भामहो भट्टिश्च -**

भामहसमयनिर्धारणे भट्टिरप्युल्लिख्यते। भट्टिः भट्टिकाव्यं वा रावणवधं काव्यं वा व्यरचयत्। भारतीयपण्डितेषु परम्परागतोऽयं विचारः -

**"भट्टिः भामहकृतकाव्यालङ्कारगतलक्षणान्युदाहर्तुमेव भट्टिकाव्ये १०-१३ सर्गाणि व्यरचयत्।"**

भट्टिकाव्यस्य दशमे सर्गेऽलङ्कारोदाहरणावलोकनेन प्रतीयते, यत्तच्छ्लोकनिबन्धने कवेः समक्षं भामहकृतकाव्यालङ्कारग्रन्थ एवाऽवर्तत। भट्टिकाव्यस्य व्याख्यायां जयमङ्गलाटीका-मल्लिनाथटीकयोरलङ्कारलक्षणप्रदर्शनाय लेखकाभ्यां भामहकृतकाव्यालङ्कारस्यैवोपयोगः कृतः। भट्टिकाव्यस्यैकस्मिन् श्लोके काव्यालङ्कारस्य सुस्पष्टप्रभावः संलक्ष्यते।[1] भट्टिभामहयोः श्लोकयोः परस्परं तथा साम्यमस्ति, यथा केनचिदप्यन्यस्य भावो ध्रुवं गृहीतः।

पूर्वमेव प्रतिपादितमिदमवर्तत, यद् भट्टिर्भामहेन प्रभावितोऽवर्तत। अतो भामहो भट्टिपूर्ववर्ती भवितव्यः। इदमपि पूर्वमेव प्रतिपादितमासीद् यद् भट्टिः श्रीधरसेननृपतिसमयेऽवर्तत, तस्य च समयो ६००-६४० ई० गण्यते। अतो भामहस्तत्समयपूर्वकालीनो मन्तव्यः।

(v) **भामहो दण्डी च -**

भामहदण्डिनोः पूर्वापरसम्बन्धं समीक्षकाः गहनरूपेण समैक्षन्त, विभिन्नमतानि च प्राकटयन्। केचन समीक्षकाः भामहं दण्डिपूर्ववर्तिनमन्ये च दण्डिनं भामहपूर्ववर्तिनं प्रतिपादयितुं प्रयासांश्चक्रिरे। यद्यपि समीक्षकाणां बहुमतं डा० त्रिवेदीयाकोबीरङ्गाचार्यगणपतिशास्त्रिबलदेवो-पाध्यायादिसमन्वितं भामहं दण्डिपूर्ववर्तिनं प्रतिपादयति, तथापि केचन मनीषिणो विद्वांसः दण्डिनमेव भामहपूर्ववर्तिनमूचुः। नरसिंह आयंगर महोदयस्य मतं मान्यं कृत्वा पी०वी० काणे महोदयेन प्रबलसशक्तशब्देषु दण्डी भामहपूर्ववर्ती समीक्षितः।

---

१. काव्यस्याऽपि यदीमानि व्याख्यागम्यानि शास्त्रवत्।
असवः सुधियामेव हन्त दुर्मेधसो हताः।। काव्यालङ्कार २.२०
व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम्।
हताः दुर्मेधसश्चाऽस्मिन् विद्वत्प्रियतया मया।। भट्टिकाव्य २२.३४

भामहदण्डिनोरलङ्कारग्रन्थयोरनेकेषु प्रसङ्गेषु सुस्पष्टं साम्यं लक्ष्यते। साम्यमिदं त्रिविधमनुभूयते -

(क) द्वयोर्ग्रन्थयोः कानिचिद् वाक्यानि न केवलमर्थसाम्यं दधति, शब्दसाम्यमपि तानि भजन्ते।

(ख) केषुचिद् वाक्येष्वन्योन्यालोचनं लक्ष्यते।

(ग) केषुचिद् वाक्येषु साम्ये वा भिन्नत्वे वा सत्यपि परस्परं प्रभावो लक्ष्यते।

काव्यालङ्कारे काव्यादर्शे च वाक्यसाम्योदाहरणानि बहुशो दरीदृश्यन्ते। यथा -

(क) सर्गबन्धो महाकाव्यम्।। भामह १.१९, दण्डी १.४

(ख) मन्त्रिदूतप्रयाणाजिनायकाभ्युदयैरपि। भामह १.२०, दण्डी १.२७

(ग) कन्याहरणसङ्ग्रामविप्रलम्भोदयान्विताः।। भामह १.२७
कन्याहरणसङ्ग्रामविप्रलम्भोदयादयः।। दण्डी १.२९

(घ) अद्य या यम गोविन्द जाता त्वयि गृहागते।
कालेनैषा भवेत् प्रीतिस्तवैवाऽऽगमनात् पुनः।।
भामह ३.५, दण्डी २.२७६

द्वाभ्यामेव ग्रन्थकृद्भ्यामयं श्लोकः प्रेयोऽलङ्कारस्योदाहरणरूपेण प्रस्तुतः।

(ङ) भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम्। भामह ३.५३
तद्भाविकमिति प्राहुः प्रबन्धविषयं गुणम्। दण्डी १.२६४

(च) अपार्थं व्यर्थमेकार्थं......................विसंधि च।
भामह ४.१, दण्डी ३.१२५-३२६

(छ) समुदायार्थशून्यं यत्तदपार्थकमिष्यते। भामह ४.८
समुदायार्थशून्यं यत्तदपार्थकमितीष्यते। दण्डी ३.१२८

(ज) गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः।
भामह २.८७, दण्डी ३.१४४

(झ) आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना। भामह २.६६, दण्डी २.५

(ञ) प्रेयो रसवदूर्जस्वि पर्यायोक्तं समाहितम्। भामह ३.१, दण्डी २.५

एतेषु दश वाक्येषु शब्दार्थास्त एव सन्ति, यद्यपि कुत्रचिन्नाममात्रभेदो लक्ष्यते। यथा भामहोक्ते (ग) वाक्ये " उदयान्विता' इति पदस्य स्थाने दण्डिना'' उदयादय'' इति पाठः प्रोक्तः।

भामहेन दण्डिना च केषुचित् प्रसङ्गेषु परस्परमालोचनमपि कृतम्। यथा भामहः काव्यस्य - सर्गबन्धाभिनेयार्थाख्यायिकाकथामुक्तकानीति पञ्चभेदान् वर्णयन् गद्यकाव्यस्य द्वौ भेदावुवाच।[१] परन्तु दण्डिना प्रोक्तम् - " गद्यकाव्यस्य कथाऽऽख्यायिका चेति द्वौ भेदौ वस्तुत एकावेव। तत्र केवलं नामभेदः।[२] भामहो मेधाविनमाश्रित्य सप्तोपमादोषानकथयत्[३] परं दण्डी भामहकथनं सुतीक्ष्णमालुलोचे।[४]

भामहदण्डिनोरेतत्साम्यमालोचनञ्चाऽवलोक्य वर्तमानकालीनसमीक्षकास्तयोः पौर्वापर्यसम्बन्धं सुविशदं समैक्षन्त। प्रथमं तावन्नरसिंह आयङ्गार महोदयो दण्डिनं भामहपूर्ववर्तिनं प्रतिपादितवान्। डा० त्रिवेदीमहोदयेन प्रतापरुद्रयशोभूषणभूमिकायां, रङ्गाचार्येण काव्यादर्शभूमिकायां गणपतिशास्त्रिमहोदयेन च वासवदत्ताप्रस्तावनायामायङ्गारमहोदयमतं सप्रमाणं खण्डितम्। तदनन्तरं पी०वी० काणे महोदयेन तेषां सर्वेषामपि समीक्षकाणां युक्तीनां सुविशदा समीक्षा विहिता, याः दण्डिनं भामहपूर्ववर्तिनं साधयितुं प्रस्तूयन्ते।[५] पी०वी० काणे महोदयेन प्रोक्तम् -

भामहं दण्डिपूर्ववर्तिनं साधयितुं यानि प्रमाणानि प्रस्तूयन्ते, तानि न स्वकार्यं साधयितुं समर्थानि। तानि निर्बलान्यक्षमाणि च। भामहं दण्डिपूर्ववर्तिनमङ्गीकरणं विनाऽपि तेषां समाधानं सम्भवति। एवमेव दण्डिनं भामहपूर्ववर्तिनं साधयितुं यानि प्रमाणानि प्रस्तूयन्ते, तानि सक्षमाणि सन्त्यपि न कमपि निष्कर्षं साधयन्ति। दण्डिभामहौ परस्परं स्वतन्त्रपरम्परानिर्वाहकौ वर्तेते। कोऽपि तत्र पूर्वकालीनो भवेत्, तौ परस्परं सन्निकट-वर्तिनावेव। द्वावेव ६५०-७५० (ई०) कालमध्यवर्तिनावास्ताम्। परमेतत्सर्वं कथयित्वाऽप्यसौ दण्डिनो भामहपूर्ववर्तित्वं साग्रहं समर्थयामास।[६]

भामहदण्डिपूर्वापरविवादेऽस्मिन् समीक्षकाणां बहुमतं भामहमेव पूर्ववर्तिनं गमयति। तत्र तेषामियं प्रबला सक्षमा युक्तिः -

दण्डिनो याऽवन्तिसुन्दरीकथापाण्डुलिपिरुपलब्धा, तत्र दण्डिना बाणमयूरौ वन्दितौ -

**भिन्नस्तीक्ष्णमुखेनाऽपि चित्रं बाणेन निर्व्यथः।**
**व्याहारेषु जहौ लीलां न मयूरः..............।।**

अनेन निश्चीयते यद्दण्डी बाणोत्तरवर्ती वर्तते।

---

१. सर्गबन्धोऽभिनेयार्थं तथैवाऽऽख्यायिकाकथे।
अनिबद्धं च काव्यादि तत्पुनः पञ्चधोच्यते।। काव्यालङ्कार १.१८

२. तत्कथाऽऽख्यायिकेत्येका जातिः संज्ञाद्वयात्मिका।। काव्यादर्श १.२८

३. हीनताऽसम्भवो लिङ्गवचोभेदो विपर्ययः।
उपमानाधिकत्वञ्च तेनाऽसदृशताऽपि वा।। काव्यालङ्कार २.३९

४. न लिङ्गवचने भिन्ने न हीनाऽधिकताऽपि वा।
उपमादूषणायाऽलं यत्रोद्वेगो न धीमताम्।। काव्यादर्श २.५१

५. काणे, पी०वी० : संस्कृत काव्यशास्त्र का इतिहास पृ० १२८-१४३

६. काणे, पी०वी० : संस्कृत काव्यशास्त्र का इतिहास, पृ० १५५

प्रायशः सर्वैरपि समीक्षकैरवन्तिसुन्दरीकथा दण्डिविरचिता स्वीकृता। ध्वन्यालोकमाश्रित्य पूर्वमिव सिद्धं यद् भामहो बाणपूर्ववर्ती वर्तते। अतो भामहो दण्डिपूर्वकालीनोऽवर्तत, इत्येवाऽवगन्तव्यम्।

**(vi) भामहो दिङ्नागो धर्मकीर्तिश्च -**

भामहेन सह दिङ्नागधर्मकीर्तिसम्बन्धविवेचना पूर्वमेवाऽस्मिन् ग्रन्थे कृता विद्यते। भामहो दिङ्नागात् परवर्ती धर्मकीर्तेश्च पूर्ववर्ती बभूव। दिङ्नागस्य समयो ४०० (ई०) धर्मकीर्तेश्च ६२० (ई०) गण्यते। अतो भामहः पञ्चमषष्ठशताब्दिको (ई०) ऽवगन्तव्यः।

## ४. भामहस्य कृतयः

भामहस्य केवलमेक एव ग्रन्थः काव्यालङ्कारः समुपलभ्यते। अयमपि ग्रन्थो दीर्घकालं यावदनुपलब्ध एवाऽविद्यत। अन्यग्रन्थेषु काव्यालङ्कारस्योद्धरणैरेवाऽस्याऽस्तित्वं समीक्षका विदुः। प्रथमं तावत् के०पी० त्रिवेदी महोदयः प्रतापरुद्रयशोभूषणग्रन्थस्याऽष्टमे परिशिष्टे काव्यालङ्कारग्रन्थं सम्पाद्य प्रकाशितवान्। अस्य प्रकाशनं "बोम्बे संस्कृत सीरीज" इति संस्थया कृतम्। तदनन्तरं सप्तविंशत्युत्तरनवशताधिकैकसहस्रसम्मितेऽब्दे (१९२६ ई०) तन्जौरनगरनिवासिना वी०पी० नागनाथशास्त्रिणाऽयं ग्रन्थः प्रस्तावनाऽऽङ्ग्लभाषा-नुवादटिप्पणीभिः सह सम्पूर्णरूपेण प्रकाशितः। अष्टाविंशत्युत्तरनवशताधिकैकसहस्रसम्मितेऽब्दे (१९२८) वटुकनाथशर्मणो बलदेवोपाध्यायस्य च सम्पादकत्वे विस्तृतभूमिकया सह "चौखम्बासंस्कृत सीरीज" इति संस्थयाऽप्ययं ग्रन्थः प्रकाशितो बभूव। अधुना काव्यालङ्कारस्याऽन्यानि संस्करणानि हिन्दीभाषानुवादसहितानि प्रकाशितानि सन्ति।

अन्येऽपि केचन ग्रन्थाः काव्यालङ्कारव्यतिरिक्ताः भामहेन रचिता इति सङ्केताः प्राचीनग्रन्थेषु समुपलभ्यन्ते। यथा - राघवभट्टमहोदयेनाऽभिज्ञानशाकुन्तलटीकायां भामहनाम्ना कानिचिदुद्धरणानि प्रस्तुतानि, यानि काव्यालङ्कारे न समुपलभ्यन्ते। तत्रैकमुद्धरणं छन्दोविषये वर्तते।[1] अनेन प्रतीयते यद् भामहश्छन्दःशास्त्रविषयकं कञ्चिद् ग्रन्थमलिखत्। अन्यदुद्धरणं पर्यायोक्तालङ्कारविषये वर्तते।[2] इदमप्युद्धरणं काव्यालङ्कारे न वर्तते। अनेन प्रतीयते यद् भामहोऽन्यमपि कञ्चिदलङ्कारशास्त्रविषयकं ग्रन्थं प्रणीतवान्। वररुचेः प्राकृतप्रकाशमुपलक्ष्य प्राचीनकाले कृता प्राकृतमनोरमा टीका भामहविरचिता कैश्चिन्मनीषिभिरवगम्यते। परन्तु टीकेयं काव्यालङ्कारकर्त्रा भामहेनैव कृतेत्यत्र न किमपि प्रामाण्यम्।

---

१. क्षेमं सर्वगुरुर्दत्ते भगणो भूमिदैवतः। इति भामहोक्तेः।

अभिज्ञानशाकुन्तलम् राघवभट्टटीका-निर्णयसागरप्रेस पृ० ४

२. तल्लक्षणमुक्तं भामहेन -

पर्यायोक्तं प्रकारेण यदन्येनाऽभिधीयते।
वाच्यवाचकशक्तिभ्यां शून्येनावगमात्मना।।इति।।

उदाहृतञ्च हयग्रीववधस्य पद्यम् -

यं प्रेक्ष्य चिररूढाऽपि निवासप्रीतिरुज्झिता।
मदेनैरावणमुखे मानेन हृदये हरेः।। वही पृ० १०

भामहश्छन्दःशास्त्रविषयं ग्रन्थमरचयदिति प्रमाणानि ग्रन्थेभ्योऽन्यभ्योऽपि समुपलभ्यन्ते। नारायणभट्टेन वृत्तरत्नाकरटीकायां भामह एवमुद्धृतः। तदुक्तं भामहेन -

अवर्णात् सम्पत्तिर्भवति मुदि वर्णाद्धनशता-
न्युवर्णादख्यातिः सरभसमृवर्णाद् विरहितात्।
तथा ह्येचः सौख्यं ङञणरहितादक्षरगणात्-
पद्यादौ विन्यासाद् भरबहलहाहाविरहितात्।।

वृत्तरत्नाकर (बनारस संस्करण) पृ० ६

तदुक्तं भामहेन
देवतावाचकाः शब्दाः ये च भद्रादिवाचकाः।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा।।
कः खो गो घश्च लक्ष्मीं वितरति वियशो ङस्तथा चः सुखं छः।
प्रीतिं जो मित्रलाभं भयमरणकरौ झञौ टठौ खेददुःखे ।।
डः शोभां ढो विशोभां भ्रमणमथ च णस्तः सुखं थश्च युद्धम् ।
दो धः सौख्यं मुदं नः सुखभयमरणक्लेशदुःखं पवर्गः।।
यो लक्ष्मीं रश्च दाहं व्यसनमथ लवौ शः सुखं षश्च खेदम्।
सः सौख्यं हश्च खेदं विलयमपि च ज्ञः क्षः समृद्धिं करोति ।।
संयुक्तं चेह न स्यात् सुखमरणपटुर्वर्णविन्यासयोगः।
पद्यादौ गद्यवक्त्रे वचसि च सकले प्राकृतादौ समोऽयम्।।

वृत्तरत्नाकर (बनारस संस्करण) पृ० ७

उद्धरणैरेतैर्निश्चीयते यद् भामहश्छन्दःशास्त्रविषयकं ग्रन्थमेकमप्यलिखत्, परमसौ ग्रन्थोऽस्मिन् काले नोपलभ्यते।

### ५. काव्यालङ्कारपरिचयः

काव्यालङ्कारग्रन्थे षट् परिच्छेदाः सन्ति। तत्र मुख्यरूपेण पञ्चविषयाणां विवेचनानि सन्ति। ग्रन्थसमाप्तौ भामहेन लिखितम् -

तेन षष्टिश्लोकेषु काव्यशरीरस्य, षष्ट्युत्तरशतश्लोकेष्वलङ्काराणां, पञ्चाशच्छ्लोकेषु दोषाणां, सप्ततिश्लोकेषु न्यायस्य, षष्टिश्लोकेषु च शब्दशुद्धेर्निर्णयो विहितः।[1] एवमस्मिन् ग्रन्थे शतचतुष्टयश्लोकाः सन्ति।

काव्यालङ्कारस्य विषयप्रतिपादनमेवं वर्तते -

---

१. षष्ट्या शरीरं निर्णीतं शतषष्ट्या त्वलङ्कृतिः।
पञ्चाशता दोषदृष्टिः सप्तत्या न्यायनिर्णयः।
षष्ट्या शब्दस्य शुद्धिः स्यादित्येव वस्तुपञ्चकम्।
उक्तं षड्भिः परिच्छेदैर्भामहेन क्रमेण च।। काव्यालङ्कार ६.६५-६६

(i) **काव्यशरीरम् -**

काव्यशरीरनिर्णयं भामहः षष्टिश्लोकेषु कृतवान्। अत्राऽसौ काव्यस्योद्देश्यहेतुलक्षण-भेदादीनां विवेचनं कृतवान्।

(ii) **अलङ्काराः -**

अलङ्कारनिर्णयः षष्ट्युत्तरशत (१६०) श्लोकेषु विद्यते। अत्र काव्यालङ्कारकारेणाऽलङ्काराणां लक्षणान्युदाहरणानि च प्रस्तुतानि। अस्मिन् प्रकरणे केषाञ्चित्तेषां ग्रन्थकाराणामुल्लेखा विद्यन्ते, येषां विषयेऽन्यत्र किमपि न ज्ञायते। भामहेन द्वौ शब्दालङ्कारौ षट्त्रिंशच्चाऽर्थालङ्काराः प्रोक्ताः।

(iii) **दोषाः-**

भामहः पञ्चाशच्छ्लोकेषु दोषनिर्णयञ्चकार।

(iv) **न्यायः-**

सप्ततिश्लोकेषु न्यायदर्शनसम्बन्धिप्रमाणादीनां विवेचनं लेखकेन विहितम्। यद्यपि काव्यरचनासम्बन्धे न कोऽप्येषां प्रत्यक्षसम्बन्धस्तथापि काव्यदोषनिवारणायाऽस्य विषयस्य ज्ञानमावश्यकम्।

(v) **शब्दशुद्धिः -**

अस्मिन् प्रकरणे षष्टिश्लोकेषु भामहो भाषागतशुद्धतां निर्णीतवान्।

काव्यालङ्कारस्य षट्परिच्छेदेषु प्रायशः शतचतुष्टयश्लोकाः विद्यन्ते। प्रथमपरिच्छेदस्य षष्टिश्लोकेषु काव्यशरीरवर्णनं विद्यते। चौखम्बासंस्करणेऽस्मिन् परिच्छेद एकोनषष्टिश्लोकाः सन्ति। द्वितीये परिच्छेदे प्रथमं तावद् गुणानान्तदन्तरञ्चाऽलङ्काराणां निरूपणमस्ति। अलङ्काराणां निरूपणं तृतीयाऽध्यायपर्यन्तमस्ति। लेखककृतगणनामनुसृत्य द्वितीय-तृतीयपरिच्छेदयोः षष्ट्युत्तरशतश्लोकाः सन्ति। परन्तु चौखम्बासंस्करणे चतुःपञ्चाशदधिकैक-शतसंख्यका (१५४) एव श्लोकाः वर्तन्ते।

चतुर्थे परिच्छेदे दोषा एकादश प्रोक्ताः। अत्र पञ्चाशच्छ्लोकाः सन्ति। पञ्चमे परिच्छेदे न्यायो निर्णीतः। अत्र सप्ततिश्लोकाः लेखकेन प्रोक्ताः। परन्तु चौखम्बासंस्करणे एकोनसप्ततिश्लोका एव सङ्गृहीताः। षष्ठे परिच्छेदे लेखकेन शब्दशुद्धिर्निरूपिता। लेखकवचनानुसारमत्र षष्टि श्लोकाः भवितव्याः। परन्तु चौखम्बासंस्करणे षडुत्तरषष्टिश्लोकाः समुपलभ्यन्ते। श्लोकेष्वत्र कविना पाणिनिप्रशंसा कीर्तिता। एकस्मिन् श्लोके ग्रन्थलेखकस्य नामोल्लेखोऽपि वर्तते। चतुःषष्टिश्लोकानन्तरं द्वयोः कारिकयोः भामहेन विषयविभाजनं निर्दिष्टम्। एवञ्च काव्यालङ्कारस्य चौखम्बासंस्करणे श्लोकाः वर्तन्ते - ५९+९६+५८+५०+६९+६६=३९८।

## ६. भामहेनोल्लिखिताः प्राचीनाचार्याः

काव्यालङ्कारे भामहोऽनेकेषां काव्यशास्त्रकृतामाचार्याणां नामानि ग्रन्थांश्च लिलेख। आचार्याः ग्रन्थाश्च निम्नलिखिताः सन्ति -

(i) रामचन्द्रशर्मणोऽच्युतोत्तरम् (२.१९, २.५८) (ii) अश्मकवंश: (१.३३)
(iii) कणभक्ष: (५.१७), (iv) राजमित्र:(२.४५,३.१०), (v) शाखवर्धन: (२.४७)
(vi) मेधाविन् (२.४०, २.८८), (vii) रत्नाहरण: (३.८),
(viii) न्यास: (६.३६), (ix)सालातुरीय: पाणिनि: (६.६२-६३)

अत्राऽच्युतोत्तराश्मकवंशरत्नहरणशाखवर्धनराजमित्राणामुल्लेखोऽन्यत्र क्वचिदपि नोपलभ्यते।

## ७. काव्यालङ्कारस्य प्राचीनटीका:

भामहकृतकाव्यालङ्कारस्य काऽपि प्राचीनटीका वर्तमानसमये नोपलभ्यते। प्राचीन-साहित्ये विवरणान्युपलभ्यन्ते, यदुद्भटेन काव्यालङ्कारमधिकृत्य काऽपि भामहविवरणनाम्नी टीका लिखिता। परन्तु वर्तमानसमयेऽनुपलभ्यैव सा। टीकाया अस्या उल्लेखं प्रतिहारेन्दुराजो ह्युद्भटस्याऽलङ्कारग्रन्थस्य काव्यालङ्कारसारसङ्ग्रहस्य टीकायामेवं चकार -

**"विशेषोक्तिलक्षणे भामहविवरणे भट्टोद्भटेन एकदेशशब्द एवं व्याख्यात, इत्येतदस्माभिर्निरूपित:।"**

भामहग्रन्थं प्रति विद्वांस आकृष्टा न बभूवुरिति न। उत्तरवर्तिभिर्ग्रन्थकारैराचार्यैश्च भामहोऽनेकश उद्धृत:। अत्र प्रमुखा आचार्या: ग्रन्थाश्च वर्तन्ते -

(i) आनन्दवर्धन:
(ii) अभिनवगुप्त:
(iii) केशवमिश्र:
(iv) भट्टिकाव्यस्य जयमङ्गलाटीका
(v) भट्टिकाव्यस्य मल्लिनाथकृतटीका
(vi) दण्डी
(vii) रुद्रटकृतकाव्यालङ्कारस्य नमिसाधुकृतटीका
(viii) उद्भटस्य काव्यालङ्कारसारसङ्ग्रहस्य प्रतिहारेन्दुराजकृता टीका
(ix) काव्यादर्शस्य प्रेमचन्द्रतर्कवागीशकृता टीका
(x) भोजराजकृतसरस्वतीकण्ठाभरणम्
(xi) मम्मटकृतकाव्यप्रकाश:
(xii) रुय्यककृतालङ्कारसर्वस्वम्
(xiii) बल्लभदेवस्य सुभाषितावली
(xiv) वामनकृतकाव्यालङ्कारसूत्रवृत्ति:
(xv) विश्वेश्वरपण्डितस्यालङ्कारकौस्तुभम्
(xvi) हेमचन्द्रस्य काव्यानुशासनम्
(xvii) अप्पयदीक्षित:

# दण्डी

## १. दण्डिनो महत्त्वम्

संस्कृतकाव्यशास्त्रस्येतिहासे दण्डिनो विशेषमहत्त्वमस्ति। तस्याऽलङ्कारशास्त्रीयो ग्रन्थः काव्यादर्शोऽतिप्राचीनकालादेवाऽलङ्कारशास्त्राचार्याणां समादरास्पदत्वं धारयति। दण्डिना न केवलं अलङ्कारशास्त्राऽऽचार्यरूपेण प्रतिष्ठा प्राप्ता, कविरूपेणाऽपि तेन महती कीर्तिरर्जिता। विद्वद्भिः समालोचकैस्तमुपलक्ष्य प्रोक्तम् -

प्रथमं तावदेक एव कविरासीद् - वाल्मीकिः। तदनन्तरं व्यासे सति द्वौ सञ्जातौ। अथ दण्डिनि समागते त्रयः कवयो बभूवुः।[१]

संस्कृतजगति कालिदासो यदि स्वोपमानैपुण्येन प्रसिद्धिं प्राप्तवान्, भारविरर्थगौरवेण कीर्तिमानर्ज, ततो दण्डी पदलालित्यसंयोजनेन परमं यशः प्राप्नोत्।[२]

## २. दण्डिनः समयः

भारतीयैः प्राचीनैः कविभिर्लेखकैश्च स्वजीवनवृत्तान्तसमयादिविषयमधिकृत्याऽत्यल्पैव सूचना प्रदत्ता। इयमेव समस्या दण्डिनः समयादिनिर्धारणेऽप्यस्ति। अतस्तस्य कालनिर्णयो बाह्यप्रमाणैरेव कर्तुं शक्यते।

उत्तरवर्तिनः समीक्षका अन्ये च विद्वांसो दण्डिनं स्वकृतिषु बाहुल्येन समुद्धृतवन्तः। अतो दण्डी तत्पूर्वकालीन एवाऽवर्ततेति ध्रुवमवगन्तव्यम्,। पूर्वापरप्रमाणैस्तस्य समयसीमान एवं निर्णेतुं शक्यन्ते -

(i) रुद्रटकृतकाव्यालङ्कारटीकायां नमिसाधुना दण्डी ह्युल्लिखितः। नमिसाधुना टीकेयं १०८५ ईसवीयेऽब्दे विरचिता। अतो दण्डी तत्पूर्वकालीनो मन्तव्यः।

---

१. जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत्।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि।। सुभाषितरत्नभाण्डागार

२. उपमा कालिदासस्य भारवेरर्थगौरवम्।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः।।

(ii) राजशेखरेण दण्डी द्विवारमुल्लिखितः। प्रथमं तावद् बहुभिः कविभिः सह तस्य नामोल्लेखः सञ्जातः।[१] तदनन्तरमसौ दण्डिनस्त्रीन् प्रबन्धान् प्रादर्शयत्।[२]

राजशेखरः कान्यकुब्जाधीश्वरस्य गुरुरवर्तत। महेन्द्रपालनाम्नस्तस्य नरपतेः समयो दशमशताब्दि (ई०) पूर्वार्द्धको गण्यते। राजशेखरस्य स एव समयोऽवगन्तव्यः। राजशेखरेण ये कवयः सूचिताः, प्रायशः सर्व एव ते सप्तमशताब्दि (ई०) कालीनास्तत्पूर्वकालीना वा गण्यन्ते। अतो दण्डी राजशेखराद् द्वित्रिशताब्दिपूर्वं सञ्जात इति मन्तव्यम्।

(iii) शार्ङ्गधरपद्धत्यां श्लोक एको बिज्जिकानाम्नोद्धृतो लभ्यते। तत्र बिज्जिकया प्रोक्तम् - "नीलकमलदलश्यामलवर्णां बिज्जिकां मामजानता दण्डिना व्यर्थमेव सरस्वती शुक्लवर्णा प्रोक्ता।"[३] अनेन प्रतीयते यद्दण्डी बिज्जिकाकालीनस्तत्पूर्वकालीनो वाऽवर्तत।

बिज्जिकाकृतश्लोकाः मम्मटेन मुकुलभट्टेन चोल्लिखिताः। अतः सा तत्पूर्वकालीना ध्रुवमवगन्तव्या। शार्ङ्गधरपद्धत्यामुद्धृते राजशेखरप्रोक्ते श्लोक एकस्मिन् कर्णाटदेशवास्तव्या विजयाङ्का सरस्वती प्रोक्ता।[४] सम्भवत इयं विजयैव बिज्जिका वर्तते। अथ च चालुक्यवंशीयनरपतेः पुलकेशिनो द्वितीयस्य पुत्रवधूश्चन्द्रादित्यस्य भार्या विजयभट्टारिकाभिधानाऽवर्तत। अयञ्च समयः षष्ट्युत्तरषट्शताब्दिको वर्तते। यदीयं विजयभट्टारिकैव बिज्जिका मन्येत, बिज्जिकासमयोऽपि सप्तमशताब्द्युत्तरार्धको भवेत्। इदमपि सम्भवति यद्दण्डिना स्वरचितेयं कृतिः प्रसिद्धकवयित्र्याः बिज्जिकाया अवलोकनाय प्रेषिता भवेत्, यत्र प्रथमे श्लोके सरस्वती सर्वशुक्ला प्रोक्ता। अथ च बिज्जिकया तत्रैवं व्यङ्ग्योक्तिः कथिता।

अवन्तिसुन्दरीकथायाः भूमिकातो विद्वांसो विदन्ति, यत् प्रसिद्धकवेर्भारवेर्मित्रं दामोदरो दण्डिनः प्रपितामहः, पुलकेशिनो भ्रातुर्विष्णुवर्धनस्य काञ्चीनरेशस्य राजसभापण्डितो बभूव। इयं बिज्जिका वा विजयभट्टारिका ता विष्णुवर्धनस्य भ्रातुष्पुत्रस्य चन्द्रादित्यस्य भार्याऽवर्तत। अनेन वर्णनेनाऽपि दण्डिनः समयः सप्तमशताब्द्युत्तरार्धकालीनोऽष्टमशताब्दिपूर्वार्द्धकालीनो वा निश्चेतुं शक्यते।

---

१. भासो रामिलसौमिलौ वररुचिः श्रीसाहसाङ्कः कवि-
मेण्ठो भारविकालिदासतरलाः स्कन्धः सुबन्धुश्च यः।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽपि ते। सुभाषितहारावती

२. त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः।। सुभाषितहारावली

३. नीलाम्बुजदलश्यामां बिज्जिकां मामजानता।
वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती।। शार्ङ्गधरपद्धतिः

४. सरस्वतीव कार्णाटी विजयाङ्का जयत्यसौ।
या विदर्भगिरां वासः कालिदासादनन्तरम्।। शार्ङ्गधरपद्धतिः

(iv) सिंहलीभाषानिबद्धस्य ग्रन्थस्यैकस्य 'सिय-बस-लकार' (स्वभाषालङ्कार) स्य रचना काव्यादर्शमनुकृत्य बभूव। ग्रन्थस्याऽन्तिमश्लोकवर्णनानुसारमस्य ग्रन्थस्य रचना राजवंशप्रसूतेन सिलमेघसेनेन कृता। ग्रन्थकर्ता स्वीचकार, यत्तेन दण्डिनः काव्यादर्शमाधारीकृत्य स्वग्रन्थो लिखितः। सिंहलदेशलोकप्रसिद्धिमनुसृत्येयं रचना राज्ञः सेनप्रथमस्य वर्तते। तस्य समयो नवमशताब्द्याः पूर्वार्द्धो विद्यते। ग्रन्थमेनं समीक्षमाणेन डा० एल० वर्नेट महोदयेन सिलमेघसेनस्य राज्ञश्च सेनस्य व्यक्तित्वमेकमेव निर्धारितम्।[१] दण्डी तत्पूर्वकालीन एवाऽवगन्तव्यः।

(v) कन्नडभाषानिबद्धोऽलङ्कारशास्त्रीयो ग्रन्थ एकः कविराजमार्गशीर्षकः काव्यादर्शमाधारीकृत्य लिखित आसीत्। ग्रन्थस्याऽस्य रचना राष्ट्रकूटवंशीयेन भूपालेन अमोघवंशनृपतुङ्गेन विहिता। अयञ्च नरपतिः ८१५-८७७ (ई०) कालीनोऽवगम्यते। अतो दण्डी ध्रुवमेव तत्पूर्वकालीनोऽवगन्तव्यः।

(vi) वामनकृतकाव्यालङ्कारसूत्रवृत्तिग्रन्थस्याऽध्ययनेन प्रतीयते यद् वामनो दण्डिना निश्चयेन परिचितोऽवर्तत। काव्यादर्शे दण्डी द्वौ मार्गौ प्रतिपादयति (रीतिद्वयम्)। परं वामनः पाञ्चालीमपि प्रतिपाद्य रीतीस्तिस्रो व्याजहार। अतो दण्डी वामनाद् ध्रुवं पूर्ववर्ती। वामनस्य समयोऽष्टमशताब्दिपूर्वार्द्धकः सप्तमशताब्द्युत्तरार्धको वा विज्ञेयः।

उपर्युक्तविवेचनेन सिद्धमेव यद् दण्डिन उत्तरकालीनोऽवधिः सप्तमशताब्द्युत्तरार्धकोऽष्टम-शताब्दिपूर्वार्द्धको वा निर्णेतुं शक्यते। तस्य समयसीमा तदुत्तरवर्तिनी नाऽवगन्तव्या।

अथ दण्डिनः पूर्वसमयावधिरपि विचारणीयः। तत्र निम्नतथ्यानि विचार्यन्ते -

(i) मृच्छकटिकप्रकरणस्यैकः श्लोको दण्डिनैकस्मिन् स्थान उत्प्रेक्षालङ्कारोदाहरण-रूपेणाऽन्यस्मिन् स्थाने च संसृष्ट्यलङ्कारोदाहरणरूपेणोल्लिखितः।[२] अतो दण्डी ध्रुवं मृच्छकटिकरचनाकारोत्तरवर्ती वर्तते। मृच्छकटिकप्रकरणस्य रचयिता शूद्रको द्वितीयशताब्दि-(ई०पू०) कालीनोऽवगम्यते।

(ii) दण्डिनः कृतिः कालिदासात् प्रभाविता लक्ष्यते। कालिदासकृताऽभिज्ञान-शाकुन्तलस्यैकस्य श्लोकस्यांऽशः - "मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति"[३], इति काव्यादर्शे दण्डिनैवं लिखितः -"लक्ष्म लक्ष्मीं तनोतीति प्रतीतिसुभगं वचः"। अनेन दण्डी कालिदासोत्तरवर्ती सिद्ध्यति।

---

१. जर्नल आफ रायल ओरियन्टल सोसाइटी (१९०५) पृ० ४१

२. लिम्पतीव तमोऽङ्गानि वर्षतीवाऽञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता।। मृच्छकटिकम् १.१३

३. अभिज्ञानशाकुन्तलम् १.१८

(iii) दण्डी बाणादपि प्रभावितो लक्ष्यते। कादम्बर्याः शुकनासोपदेशस्यांशस्य भावो दण्डिनो रचनायामवलोक्यते।[१] अत इमं भावसाम्यमाधारीकृत्य दण्डी बाणोत्तरवर्ती कथयितुं शक्यते। बाणस्य समयः सप्तमशताब्दिपूर्वार्द्धको वर्तते।

(iv) दण्डिनि भर्तृहरिकृतवाक्यपदीयस्याऽपि प्रभावो लक्ष्यते। काव्यादर्शस्य द्वितीयपरिच्छेदस्य १४० तमे श्लोके दण्डिना कर्मणस्त्रयो भेदाः विहिताः – **निवर्त्यं, निकार्यं प्राप्यञ्च**। डा०के०पी० पाठकमहोदयस्य मतं विद्यते यद् दण्डिना कर्मभेदानामेतेषां कल्पना भर्तृहरिकृतवाक्यपदीयग्रन्थाद् (३.४५) गृहीता। वाक्यपदीयकारस्य भर्तृहरेः समयः सप्तमशताब्दि (ई०) पूर्वार्द्धकोऽवगम्यते। दण्डी तदुत्तरवर्त्यवगन्तव्यः।

(v) माघकृतशिशुपालवधेनाऽपि दण्डी प्रभावितोऽवलोक्यते। शिशुपालवधस्यैकस्य श्लोकस्य प्रभावो दण्डिनः काव्यादर्शस्यैकस्मिन् श्लोके वर्तते।[२] माघः सप्तमशताब्दिपूर्वार्द्ध-कालीनो गण्यते। दण्डी तदुत्तरवर्ती ध्रुवं मन्तव्यः।

(vi) भामहसमयविवेचनाप्रसङ्गे दण्डिभामहयोः पूर्वापरसम्बन्धस्याऽपि प्रश्नः समुपस्थितो बभूव। यद्यपि केचन समीक्षकाः नरसिंह आयङ्गार, पी०वी० काणे महोदयादयो भामहं दण्डिपश्चाद्वर्तिनं साधयितुं प्रयेतिरे, तथापि विद्वांसो बाहुल्येन दण्डिनमेव भामहपश्चाद्वर्तिनं प्रतिपादयन्ति। अयं प्रश्नः पूर्वमेव भामहसमयनिर्धारणप्रसङ्गे समासाधितः। भामहस्य समयः पञ्चमषष्ठशताब्दि (ई०) मध्यवर्ती निश्चीयते। अतो दण्डिनोऽपि समयो यदि सप्तमशताब्द्युत्त-रार्धकालीनो निर्णीयते, न तत्र काऽपि बाधः संलक्ष्यते।

उपर्युक्तसमीक्षायां दण्डिनः पूर्वापरसमयसीमासम्बन्धविचारेण सप्तमशताब्द्युत्तरार्ध-कालीनोऽसौ बभूवेति निर्णय एव समुचितः।

## ३. दण्डिनो जीवनवृत्तम्

अवन्तिसुन्दरीकथागद्यकाव्योपलब्धिपूर्वं दण्डिनो जीवनवृत्तसम्बन्धे किमपि ज्ञानं नाऽविद्यत। परमेतद् गद्यकाव्यमुपलभ्य तस्य जीवनवृत्तान्तं किञ्चिद् विद्वद्भिर्विदितम्।

---

१. अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः।। काव्यादर्श २.१९७
केवलञ्च निसर्गत एवभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम्।
कादम्बरी – शुकनासोपदेशः

२. रत्नभित्तिषु सङ्क्रान्तैः प्रतिबिम्बशतैर्वृतः।
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः।। काव्यादर्श २.३०२
रत्नस्तम्भेषु सङ्क्रान्तप्रतिमास्ते चकाशिरे।
एकाकिनोऽपि परितः पौरुषेयवृता इव।। शिशुपालवध २.४०

अस्य गद्यकाव्यस्याऽऽरम्भे दण्डिना स्वपरिवारस्य जीवनवृत्तस्य च सम्बन्धे किञ्चित्सूचितम्। अनेन विज्ञायते यद् दण्डिनो पूर्वजस्य नारायणस्वामिनः सुतो दामोदराभिधानोऽवर्तत। दामोदरः किरातार्जुनीयमहाकाव्यकारस्य भारवेर्मित्रमासीत्। असौ काञ्चीनरेशस्य विष्णुवर्धनस्य राजसभां समाजगाम।

दामोदरस्य त्रयः पुत्राः बभूवुः। तत्र मनोरथाभिधानस्य मध्यमपुत्रस्य चत्वारः सुता अजायन्त। तत्र कनिष्ठो वीररथाभिधान आसीत्। वीररथस्तस्य भार्या गौरी च दण्डिनो मातापितरौ बभूवतुः। दण्डिनो बाल्यकाल एव तौ स्वर्गञ्जग्मतुः।

दामोदरस्य पूर्वजाः भारतवर्षस्य पश्चिमोत्तरप्रदेशस्याऽऽनन्दपुरनामनि ग्रामे न्यवसन्। तस्मात् स्थानात् प्रवासं विधाय तौ दक्षिणभारते नासिकप्रदेशस्याऽचलपुरग्रामं स्वनिवासञ्चक्रतुः। दामोदरस्य मैत्री काञ्चीनरेशेन विष्णुवर्धनेन सार्द्धं सञ्जाता। परन्तु विष्णुवर्धनस्याऽनाचारेण पीडितहृदयोऽसौ गंगवंशीयस्य नृपतेर्दुर्विनीतस्य स्थानञ्जगाम। तदनन्तरमसौ काञ्चीनरेशस्य पल्लववंशीयस्य सिंहविष्णोराश्रये न्यवसत्।

सिंहविष्णोः राज्यारोहणसमयः पञ्चसप्तत्युत्तरशतपञ्चकतमो (५७५ई०) वर्षोऽनुमितः। तस्य पुत्रो महेन्द्रवर्मा बभूव। महेन्द्रवर्मणः सुतो नृसिंहवर्मा पुलकेशिनं द्वितीयं पराजयत्। अयं राजा विष्णुरिति, सिंहविष्णुरिति, नृसिंहविष्णुरिति वा नाम्ना प्रसिद्धो बभूव। अस्य शासनकालो ६२५-६४५ ई० गण्यते। दण्डिनः प्रपितामहो भारवेर्मित्रमासीदतो दण्डिनो जन्म ६५० तमे खिष्टाब्दे सम्भाव्यते।

दण्डिनो बाल्यावस्थायामेव तस्य पितरौ दिवञ्जग्मतुः। तस्मिन्नेव समये काञ्चीनगर्यां महान् विप्लवः समुत्पन्नः। नगरीयं विनाशग्रस्ता सञ्जाता। दण्डिना सा नगरी परित्यक्ता। अनेकेषु स्थानेषु भ्रमन्नसौ दीर्घकालपर्यन्तं विविधविद्याकेन्द्रेषु विद्यामधीयाय। यौवनावस्थायामसौ काञ्चीमागत्य पुनः व्यवस्थितमात्मानञ्चकार। तत्राऽसौ सरस्वत्याः प्रसादेन स्वमित्राणि राजवाहनकथां श्रावयामास। इयमेव कथा अवन्तिसुन्दरीकथानाम्ना प्रसिद्धा। परमियमपूर्णैव प्राप्यते।

यथा पुरा प्रोक्तम्, दण्डिनः प्रपितामहस्य दामोदरस्य भारविना सह सख्यमासीत्। भामहस्य प्रथमोल्लेखो भारतीयेतिहासे चालुक्यवंशीयस्य नृपतेः पुलकेशिनो द्वितीयस्य ऐहोलशिलालेखे (६३४ ई०) समुपलभ्यते।[1] विष्णुवर्धनः पुलकेशिनो द्वितीयस्य भ्राता वा पुत्रो वा प्रसिद्धः। तेनाऽऽन्ध्रप्रदेशे कलिङ्गप्रदेशे च चालुक्यवंशीयं राज्यं स्थापितम्। तस्य शासनकालः ६१५-६३३ ई० गण्यते। तस्यैव राजसभां दामोदरो दण्डिनः प्रपितामहः सुशोभयामास। अथ च दण्डिनः समयः पञ्चाशद्वर्षानन्तरीणः सम्भावयितुमुचितः। अतोऽसौ

---

१. येनाऽयोजि न वेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म।
स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः।। ऐहोल शिलालेख

सप्तमशताब्द्युत्तरार्धकालीनोऽनुमीयते। भारवेः कृतिं किरातार्जुनीयमधिकृत्य राज्ञा दुर्विनीतेन, यस्याश्रये दामोदरः किञ्चित्कालं न्युवास, टीकैकाऽपि लिखिता।[1]

अवन्तिसुन्दरीकथायां दण्डी भाससुबन्धुबाणमयूरादीन् कवीनुल्लिलेख। अतोऽयं तदुत्तरवर्ती ध्रुवमवगन्तव्यः। परमयं बाणमयूरयोरपि निकटोत्तरवर्ती ज्ञातव्यः। अतोऽस्य ग्रन्थरचनाकालः ६७५-७१० ई० तमोऽनुमेयः।

कथमसौ दण्डीति नाम्ना प्रसिद्धः सञ्जात इत्यत्रैका किम्वदन्ती प्रसिद्धा। दशकुमार-चरितस्यैकस्मिन् पद्ये -

**"ब्रह्माण्डच्छत्रदण्डः शतधृतिभवनाम्भोरुहो नालदण्डः"** इति पद्ये दण्डपदपयोगं वीक्ष्य जनास्तं कविं दण्डीति नाम्ना समवबोधयाञ्चक्रिरे।

माधवाचार्यकृतशङ्करविजयनामनि ग्रन्थे लेखकेन वर्णितं यच्छङ्कराचार्यो दण्डिनमन्यांश्च प्रमुखान् कवीन् शास्त्रार्थे पराजयत्।[2] अनेन केचन समीक्षकाः प्रवदन्ति - दण्डी दर्शनशास्त्रस्याऽऽचार्य आसीत्। परन्त्वत्र न निश्चयरूपेण निर्णेतुं शक्यते।

## ४. दण्डिनः कृतयः

यथा पुरा प्रोक्तम् - राजशेखरेण दण्डिनस्त्रयः प्रबन्धाः सूचिताः। काव्यादर्शस्य प्रणेता दण्डी वर्तत इत्यत्र न कोऽपि विवादः। दशकुमारचरितमपि ध्रुवं तस्य कृतिः स्वीक्रियते। परन्तु का दण्डिनस्तृतीया कृतिरित्यत्र प्रचुराः विवादाः सन्ति। अवन्तिसुन्दरीकथाप्रकाशनेन यद्यप्यत्र मतभेदाः प्रायशः प्रशान्तताङ्गतास्तथाऽपि केचन समीक्षकाः न तां कृतिं दण्डिनस्तृतीयां रचनां स्वीकुर्वन्ति। तत्र तेषां महती विप्रतिपत्तिः।

काव्यादर्शदशकुमारचरिताभ्यां सह दण्डिनस्तृतीया कृतिः केति प्रश्नं समाधातुं प्रथमः प्रयासः पिशेलमहोदयेन कृतः। काव्यादर्शे "लिम्पतीव तमोऽङ्गानि" इत्युदाहरणं दण्डिना द्विवारं प्रस्तुतम्। प्रथमं तावदुत्प्रेक्षालङ्कारोदाहरणत्वेन, पुनश्च संसृष्ट्यलङ्कारोदाहरणत्वेन। अयं श्लोको मृच्छकटिकप्रकरणस्य वर्तत, इति प्रमाणमङ्गीकृत्य पिशेलमहोदयेन मृच्छकटिकस्य कर्ता दण्डी प्रमाणितः। मृच्छकटिकमेव दण्डिनस्तृतीयः प्रबन्ध इति।

परन्तु पिशेलमहोदयस्याऽस्य मतस्य समर्थनं न केनचिद् विदुषा कृतम्। अयं श्लोको भासविरचितयोश्चारुदत्तबालचरितनाटकयोरपि वर्तते। अत इदमुदाहरणं प्रमाणीकृत्य मृच्छकटिकं दण्डिप्रबन्धप्रतिपादनं नोचितम्। सम्भवतो दण्डिनोदाहरणमेतद् भासकृतिभ्यां गृहीतम्।

---

१. किरातार्जुनीये पञ्चदशसर्गे टीकाकारेण दुर्विनीताभिधानेन।
गंगवंशीयस्य राज्ञो दुर्विनीतस्यैकः शिलालेखः।

२. स कथाभिरवन्तिषु प्रसिद्धान् विबुधान् बाणदण्डिमयूरप्रमुखान्।
शिथिलीकृतदुर्मताभिमानान् निजभाष्यश्रवणोत्सुकांश्चकार।। शङ्करविजय

पिशेलमहोदयानन्तरं जैकोबीपीटर्सनमहोदयौ विद्वांसौ प्रश्नमेतं समाधातुं प्रायतेताम्। काव्यादर्शस्य प्रथमे परिच्छेदे दण्डिना छन्दोविचितिरिति प्रबन्धस्योल्लेखो विहितः।[१] दण्डिनस्तृतीया कृतिः सैवेति ताभ्यामुक्तम्।

किन्तु धारणेयमपि भ्रान्तिपूर्णा। वस्तुतश्छन्दोविचितिर्न कस्यचिदपि प्रबन्धस्य नाम, किन्तु शास्त्रनामैतद् विद्यानाम वा। प्राचीनशास्त्रेषु छन्दोविचितिरेका विद्या प्रोक्ता। यथा चाणक्यस्यार्थशास्त्रे[२] आपस्तम्बधर्मसूत्रे[३] च लिखितमस्ति। दण्डिना स्वयमेव "**सा विद्या नो विवक्षूणा**" मिति लिखित्वा तथ्यमिदं प्रमाणितम्।

केचन समीक्षकाः कलापरिच्छेदं दण्डिनस्तृतीयं प्रबन्धं वदन्ति। परन्तु नेयं धारणा बहुजनसम्मता बभूव। कलापरिच्छेदप्रबन्धः स्वतन्त्रग्रन्थरूपेण दण्डिना रचित इति नाऽत्र किमपि प्रामाण्यम्। पी०वी० काणे महोदयस्य मतमिदं यत् कलापरिच्छेदो न स्वतन्त्ररूपेण कश्चित् प्रबन्धो बभूव। अपित्वयं काव्यादर्शस्यैवैको भागोऽविद्यत।[४] सम्भवतो दण्डिना कलापरिच्छेदे काऽपि प्रबन्धयोजना कल्पिता भवेद्, यथा तेन स्वयं सूचितम्।[५]

दक्षिणभारते समुपलब्धे भोजराजकृते शृङ्गारप्रकाशे दण्डिरचितद्विसन्धानकाव्यस्य श्लोक एक उद्धृतो वर्तते।[६] स एव दण्डिनस्तृतीयः प्रबन्ध इति केचन समीक्षकाः वदन्ति। दण्डिनोऽयं प्रबन्धोऽनुपलब्ध एव, यद्यपि धनञ्जयकवेरेका कृतिः द्विसन्धानकाव्यं प्रकाशितं बभूव।

दक्षिणभारते समुपलब्धाभ्यां द्वाभ्यां काव्याभ्यां दण्डिकृतिविवादचर्चा प्रायः प्रशान्ता। तत्रैकं गद्यकाव्यमन्यच्च पद्यकाव्यम्। कस्मिन्नपि काव्ये काव्यकृन्नाम नोपलभ्यते। गद्यकाव्यं वर्तते - अवन्तिसुन्दरीकथा। इयमेव कथा पद्यकाव्ये अवन्तिसुन्दरीकथासारे पद्यरूपेण निबद्धा।

अवन्तिसुन्दरीकथां निबध्नन् कविः प्रथमं केषुचिच्छ्लोकेषु हिरण्यगर्भेशान-हरिरूपपरमात्मानमस्तौत्। तदनन्तरं प्राचीनकवीनां तत्कृतीनाञ्च प्रशंसा वर्तते। अत्र

---

१. छन्दोविचित्यां सकलस्तत्प्रबन्धो निदर्शितः।
सा विद्या नौस्तितीर्षूणां गम्भीरं काव्यसागरम्।। काव्यादर्श १.१२

२. चाणक्य : अर्थशास्त्र १.३.१

३. षडङ्गो वेदः। छन्दः कल्पो व्याकरणं ज्योतिषं निरुक्तं शिक्षाछन्दोविचितिरिति।
आपस्तम्ब धर्मसूत्र २.४.८.११

४. काणे, पी०वी० : संस्कृत काव्यशास्त्र का इतिहास पृ० ११६

५. इत्थं कलाचतुःषष्टिविरोधः साधु नीयताम्।
तस्याः कलापरिच्छेदे रूपमाविर्भविष्यति।। काव्यादर्श ३.१७१

६. उदारमहिमा रामः प्रजानां हर्षवर्धनः।
धर्मप्रभव इत्यासीत् ख्यातो भरतपूर्वजः।। शृङ्गारप्रकाश

रामायणमहाभारतसुबन्धुबृहत्कथामूलदेवशूद्रकभासतत्कृतनाटकसर्वसेनतत्कृतहरिविजय-सेतुवैदर्भीरीतिनिपुणकालिदासकाव्यकृन्नारायणान्धकविबाणमयूरबिज्जिकादीनां कविकवयित्रीणां प्रशंसां विधाय दण्डी सरस्वतीं कविसमाजञ्चाऽस्तौत्। तदनन्तरं गद्यरचना प्रारभते।

अवन्तिसुन्दरीकाव्ये कथानकस्य प्रारम्भे दण्डिना स्वजीवनवृत्तं लिखितम्। अत्र कविना वर्णितम् -

दण्डिनः पूर्वजो दामोदरः स्वसुहृदो भारवेः परामर्शेन प्रेरणया च नरपतिनरसिंहविष्णुना सह मैत्रीभावमङ्गीचकार। दण्डिनो बाल्यावस्थायां काञ्चीनगरी महद्भिरुपद्रवैराक्रान्ता। दण्डी च नगरीं परित्यज्य प्रोषितो बभूव।

कतिपयवर्षपर्यन्तं विविधप्रदेशेषु पर्यटय दण्डी कतिपयवर्षानन्तरं पुनः काञ्चीपुर्याः पल्लवनरेशस्य राजसभां समागच्छत्। कदाचिद् देव्याः सरस्वत्या आदेशेनाऽसौ विद्याधरनरेशस्य राजवाहनस्य कथां स्वमित्राणि श्रावयामास। अवन्तिसुन्दरीकथा खण्डितैव समुपलब्धा। समुपलब्धभागस्य कथानकं दशकुमारचरितस्य प्रथमभागस्य कथानकसदृशं वर्तते।

पद्यबद्धेऽवन्तिसुन्दरीकथासारे गद्यकाव्यकथासारः कविना निबद्धः। सप्तपरिच्छेदात्म-कस्याऽस्य काव्यस्य सप्तमः परिच्छेदः खण्डितो वर्तते।

अवन्तिसुन्दरीकथाऽवन्तिसुन्दरीकथासारौ प्रबन्धौ यदैव प्रकाशितौ, तदारभ्यैव तयोः कृतित्वं विवादाक्रान्तं बभूव। केचन समालोचकाः द्वावेव प्रबन्धौ दण्डिकृतौ कथयन्ति। अन्ये च ह्येकमेव। अपरे च न कमपि प्रबन्धं दण्डिकृतं प्रवदन्ति। महामहोपाध्यायकुप्पुस्वामि-शास्त्रिणा सन्देहः प्रकटितो यदवन्तिसुन्दरीकथा दण्डिकृता वर्तते। परं प्रबन्धस्य प्रारम्भिकगद्यभागेनेयं दण्डिकृतैव प्रतिभाति। अन्यैश्चाऽपि प्रमाणैरियं दण्डिकृता प्रतिपाद्यते।

जर्नल आफ ओरियन्टल सीरीज मद्रास भाग - ५, खण्ड - २, इत्यस्य चतुर्थपृष्ठे डा० राघवन् महोदयेनाऽप्ययदीक्षितस्य वाक्यमिदमुद्धृतम् -

**"निरस्ता पल्लवेषु काञ्ची नाम नगरीत्यवन्तिसुन्दरीये दण्डिप्रयोगात्।"**

अनेन वाक्येनाऽवन्तिसुन्दरीकथा दण्डिकृता सिद्धयति। अन्यानि चोद्धरणान्यनेकानि गद्यकाव्यमिदं दण्डिविरचितं प्रमाणयन्ति।

पी०वी० काणेमहोदयेन प्रतिपादितं यत् काव्यमिदं दण्डिविरचितं वर्तते। अथ चेदं दशकुमारचरितस्य पूर्वपीठिका। परन्त्वसाववन्तिसुन्दरीकथासारं न दण्डिविरचितं मनुते। किन्त्वसौ काणे महोदयोऽवन्तिसुन्दरीकथामपि दण्डिविरचितां प्रतिपादने सङ्कुचते। सङ्कोचस्याऽस्य निम्नलिखितानि कारणानि विद्यन्ते -

(i) अस्मिन् काव्ये भारविकृतकिरातार्जुनीयस्याऽन्यस्य वा कस्यचित् तस्य काव्यस्य सङ्केतो न विद्यते।

(ii) अवन्तिसुन्दरीकथायाः कथानकं न तथा पूर्णतां गतं यथा दशकुमारचरितस्य।

(iii) अवन्तिसुन्दरीकथाकाव्ये दिव्यतत्त्वानां निवेशस्य प्राचुर्यं वर्तते।

(iv) दशकुमारचरितस्याऽवन्तिसुन्दरीकथायाश्च शैल्यां भाषायाञ्च नैकरूपत्वं लक्ष्यते।

परन्त्विदं सङ्कोचमभिव्यज्याऽपि काणेमहोदयोऽन्ततोऽवन्तिसुन्दरीकथां दण्डिविरचिता-मङ्गीचकार। अथ च तद्वर्णितघटना आश्रित्याऽसौ तद्ररचनासमयं ६६०-६८० ई० निर्धारितवान्। अधुना प्रायशः सर्वैरेव समीक्षकैः स्वीकृतं यदवन्तीसुन्दरीकथागद्यकाव्यं दण्डिकृतमेव वर्तते।

केचन समीक्षकाः वदन्ति - काव्यादर्शदशकुमारचरितप्रबन्धौ नैकलेखकविरचितौ वर्तेते। अत्र द्विवेदीमहोदयोऽगाशेमहोदयश्च प्रमुखौ स्तः। अत्र युक्तिद्वयं वर्तते -

(i) काव्यादर्शे लेखकेन मतमिदं प्रदर्शितं यत्काव्ये सूक्ष्मेणाऽपि दोषेण काव्यसौन्दर्यं हीयते। अतस्तत्र स्वल्पस्याऽपि दोषस्य नोपेक्षा कार्या।[1] अत्र काव्यादर्शकारेण निम्नलिखितमुदाहरणं प्रस्तुतम् -

**कन्ये कामयमानं मां न त्वं कामयसे कथम्।**
**इति ग्राम्योऽयमर्थात्मा वैरस्यायैव कल्पते।। काव्यादर्श १.६३**

अत्र ग्राम्यत्वदोषो वर्तते।

यद्यस्मिन् काव्ये ग्राम्यत्वदोषं दण्डी कल्पते, तत्तादृशो दोषो दशकुमारचरितेऽनेकेषु प्रसङ्गेषु संलक्ष्यते। तत्र तु ततोऽप्यधिकानि ग्राम्यत्वाश्लीलदोषोदाहरणानि सन्ति। अतः प्रखरालोचकेन दण्डिना तादृशी दोषपूर्णा रचना न सम्भवा।

(ii) अन्यच्च, काव्यादर्शस्य दशकुमारचरितस्य च शैल्यां भाषायाञ्च नैकरूपत्वं लक्ष्यते। तत्र भिन्नत्वमेव वर्तते। काव्यादर्शस्य शैली निर्दोषा सरला कोमलाऽर्थगाम्भीर्ययुता च विद्यते, परं दशकुमारचरितशैली स्थाने स्थाने क्लिष्टा दीर्घसमासा चाऽनुभूयते।

परन्तु प्रायशः सर्वेषामेव समीक्षकाणां मतं यत् काव्यादर्शदशकुमारचरितयोर्लेखक एक एव, मनीषी विद्वान् वर्तते। न तत्र किमपि व्यक्तिभिन्नत्वम्। तत्राऽभिन्नत्वस्य निम्नहेतवो वक्तुं शक्यन्ते -

(क) समालोचनाकवित्वव्यवहारौ भिन्नावेव स्तः। काव्यशास्त्राचार्यैस्तथ्यमेतत् स्वीकृत्य प्रतिपादितम्। समालोचकोऽन्येषां लेखकानां कृतिषु दोषाणामुद्घाटने समर्थोऽपि निजकृती-र्दोषरहितविधानेऽक्षम एव दृश्यते। व्यक्तिविवेककारेण तथ्यमेतत् सुस्पष्टमेव प्रस्तुतम्।[2]

---

१. तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कदाचन।
स्याद् वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्।। काव्यादर्श १.७

२. स्वकृतिष्वनियन्त्रितः कथमनुशिष्यादन्यमयमिति न वाच्यम्।
वारयति भिषगपथ्यादितरान् स्वयमाचरन्नपि तत्।। व्यक्तिविवेक

औचित्यविचारचर्चाकार: क्षेमेन्द्र: स्वयमेव स्वकृतिषु दोषान् प्रादर्शयत्।[1] अत: प्रखरसमीक्षकस्य काव्यशास्त्राचार्यस्य दण्डिन: कृतिषु दोषोपस्थिति: सम्भवति।

(ख) दण्डिना दशकुमारचरितलेखनं स्वयौवनकाले कृतं भवेत्, काव्यादर्शस्य च रचना प्रौढावस्थायाम्। प्रौढावस्थायां प्रतिभाया: परिपक्वतरत्वाद् दोषाणां सम्भावना हीयते। स्वल्पाश्चाऽपि दोषा: लेखकस्य मन: पीडयन्ति।

(ग) काव्यादर्शस्य श्लोकबद्धत्वात्तत्र दीर्घसमासप्राचुर्यावकाशस्य न सम्भावना। तथाऽपि तत्र श्लोकार्धसमासा: सन्त्येव।[2] दशकुमारचरितस्य गद्यबद्धत्वात्तत्र दीर्घसमाससंरचना समुचितेष्टा चाऽप्यवर्तत। दण्डी स्वयं समासप्राचुर्यमोजोगुणं प्रतिपाद्य तद् गद्यकाव्यस्य जीवितमाह।[3] अत: क्लिष्टत्वात् समासबहुलत्वाच्च दशकुमारचरितं दण्डिकृतं नेति प्रतिपादनं न युक्तिसङ्गतम्।

उपर्युक्तविवेचनमाश्रित्य सतर्कं निस्सन्देहमिदमुच्यते, यद् दण्डिनस्त्रयो प्रबन्धा: वर्तन्ते - काव्यादर्शो, दशकुमारचरितमवन्तिसुन्दरीकथा च। सम्भवतो दण्डी प्रबन्धानन्यानपि व्यरचयत्, परं तस्यैतास्तिस्र एव कृतय: प्रसिद्धा: बभूवु:। अत एव राजशेखरेण प्रोक्तम्

"त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुता:।"

यदि च कदाचित् कलापरच्छिेदद्विसन्धानकाव्यादिप्रबन्धा: समुपलभ्येरंस्तदैव किञ्चिदन्यद् वक्तुं शक्यते।

## ५. काव्यादर्शस्य परिचय:

अलङ्कारशास्त्रग्रन्थरूपेण काव्यादर्शेन महती ख्यातिरधिगता। वर्तमानसमये ग्रन्थस्याऽस्याऽनेकानि संस्करणानि प्रकाशतां प्राप्तानि। बाथलिंकमहोदयेनाऽयं ग्रन्थो जर्मनभाषायामनूदित:, प्रकाशनञ्चाऽस्य १८९० ई० तमेऽब्दे बभूव। प्रो० रङ्गाचार्यमहोदयेनाऽयं ग्रन्थो द्वाभ्यां प्राचीनटीकाभ्यां सह १९१० ई० तमेऽब्दे मद्रासनगरात् प्रकाशित:। तदनन्तरं बेलवेलकरमहोदयेन रेड्डीरङ्गाचार्येण चाऽस्य प्रकाशनं १९१७ ई० तमेऽब्दे स्वटीकासहितं पुण्यपत्तन (पूना) नगरात् कारितम्।

जीवानन्दविद्यासागरोऽन्ये चाऽनेके विद्वांस: काव्यादर्शमुपलक्ष्य टीका अलिखन्, याश्च विभिन्नेभ्य: स्थानेभ्य: प्रकाशिता: बभुवु:।

---

१. औचित्यविचारचर्चा - कारिका २०-२१
२. पयोधरतटोत्सङ्गलग्नसन्ध्यातपांशुका। काव्यादर्श १.८४
समानशब्दोपन्यस्तशब्दपर्यायसाधिता।। काव्यादर्श ३.१०३
३. ओज:समासभूयस्त्वमेतद् गद्यस्य जीवितम्।। काव्यादर्श १.८०

काव्यादर्शस्य प्रायशः सर्वेषु संस्करणेषु त्रयः परिच्छेदाः सन्ति। परं रङ्गाचार्यसम्पादित-संस्करणे चत्वारः परिच्छेदाः वर्तन्ते। अन्यसंस्करणानां तृतीयः परिच्छेदस्तेन द्वयोर्भागयोर्विभक्तः। तृतीयपरिच्छेदस्य दोषप्रकरणं पृथक्कृत्याऽसौ चतुर्थपरिच्छेदं प्रास्तौत्। काव्यादर्शस्य कलकत्तासंस्करणे पूनासंस्करणे च ६६० श्लोकाः सन्ति। परं मद्राससंस्करणे श्लोकानां संख्या ६६३ विद्यते। परिच्छेदक्रमेणाऽस्य विषयवस्तु निम्नप्रकारेण वर्तते -

(i) **प्रथमः परिच्छेदः -**

काव्यादर्शस्य प्रथमे परिच्छेदे मंगलाचरणानन्तरं काव्यपरिभाषा, काव्यस्य गद्यपद्यमिश्रा इति त्रयो भेदाः प्रोक्ताः। अथ सर्गबन्धकाव्यस्य स्वरूपमुक्तम्। कथाख्यायिकयोर्भेदं निदर्शयता दण्डिना प्रोक्तम् - "न तयोः कश्चिद् यथार्थो भेदः"। अथ काव्यस्य भाषागतभेदाः संस्कृतप्राकृतापभ्रंशगताः व्याख्याताः। ततो वैदर्भगौडमार्गवर्णनानन्तरं दशगुणाः वर्णिताः। अनुप्रासालङ्कारस्य लक्षणोदाहरणानि प्रोक्तानि। परिच्छेदान्ते च काव्यहेतूनां प्रतिपादनाय प्रतिभापठनाभ्यासानां चर्चा विद्यते।

(ii) **द्वितीयः परिच्छेदः -**

द्वितीये परिच्छेदे दण्डी परिभाषामलङ्कारपदस्य कृत्वा पञ्चत्रिंशदलङ्कारानगणयत्। अथ चैषामलङ्काराणां लक्षणोदाहरणानि प्रास्तौत्। पञ्चत्रिंशदलङ्काराः निम्नप्रकारेण वर्तन्ते -

स्वभावोक्त्युपमारूपकदीपकावृत्त्याक्षेपार्थान्तरन्यासव्यतिरेकविभावनासमासोक्त्यति-शयोक्त्युत्प्रेक्षाहेतुसूक्ष्मलेश (लव) यथासंख्य (क्रम) प्रेयोरसवदूर्जस्विपर्यायोक्तसमाहितो-दात्तापह्नुतिश्लेषविशेषोक्तितुल्ययोगिताविरोधाप्रस्तुतप्रशंसाव्याजोक्तिनिदर्शनासहोक्ति-परिवृत्त्याशीःसङ्कीर्णभाविका इति।

(iii) **तृतीयः परिच्छेदः -**

तृतीये परिच्छेदे प्रथमं सप्तसप्तति (७७) श्लोकेषु यमकालङ्कारस्य विस्तृतं विवेचनं विद्यते। तदनन्तरमष्टादशश्लोकेषु गोमूत्रिकार्धभ्रमसर्वतोभद्रस्वस्थानवर्णनियमादीनां चित्रबन्धालङ्काराणां लक्षणोदाहरणानि वर्तन्ते। अथ एकोनत्रिंशच्छ्लोकेषु प्रहेलिकानां विवेचनमस्ति। परिच्छेदान्ते त्रिषष्टिश्लोकेषु दोषाणां समीक्षा विद्यते।

काव्यादर्शे दण्डिना गुणानामलङ्काराणाञ्च विशदं विवेचनं विहितम्। अतोऽयमलङ्कार-वादी ह्याचार्यो निगद्यते। दण्डिना रीतीनामपि विवेचनं कृतम्। परं तेन न रीतिपदप्रयोगो विहितः। अयं वर्त्मपदं मार्गपदं वा प्रयुयोज। काव्यरचनायै मार्गद्वयमसौ निर्दिदेश - वैदर्भो गौडश्च। दण्डिना प्रोक्तम् - " सूक्ष्मभेदवतीनां वाणीनां शैल्यो भिद्यन्ते। तत्र तेन वैदर्भगौडमार्गौ वर्णितौ, यतस्तत्राधिको भेदो लक्ष्यते।"[1]

---

१. अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम्।
तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ।। काव्यादर्श १.४०

दण्डिन एतद् वचनमुपलक्ष्य काणेमहोदयेन दण्डी ह्यंशतोऽलङ्कारसम्प्रदायस्य समर्थकोंऽशतश्च रीतिसम्प्रदायस्य समर्थकः प्रोक्तः।[१] परन्तु काव्यादर्शे दण्डिना न तु रीतिपदस्य प्रयोगो विहितो न च वामनादिवद् रीतीनां विवेचनं कृतम्। अतः दण्डी कथमंशतोऽलङ्कारवादी वर्तते, कथमंशतश्च रीतिवादीति कथनस्यौचित्यं किमपि लक्ष्यते। अयमलङ्कारवादी ह्याचार्य इति कथनमेव समुचितम्।

अलङ्कारवादी दण्डी रसमाधुर्येणाऽपि परिचितो वर्तते। तेन काव्ये रसस्थितिरनिवार्या मता।[२] परन्तु रससञ्चारणायाऽसौ ह्यलङ्कारान् साधनरूपेणाऽनिवार्यान् जगाद।[३] परन्त्वसौ काव्ये रसं न प्रधानं मेने। रसमसौ रसवदादिष्वलङ्कारेषु परिगणयामास। रसोत्पन्नमानन्द-प्रदरूपमसौ रसवदलङ्कारं प्रोक्तवान्।[४] असौ गुणानप्यलङ्काररूपानङ्गीचक्रे। एवं रसगुणरीत्यादीनां वैशिष्ट्यं स्वीकुर्वन्नप्यसौ ह्यलङ्कारानेव काव्यसर्वस्वं जगाद। अतो दण्डी ह्यलङ्कारवादी वर्तत आचार्य इत्येव कथनं समुचितम्।

काव्यादर्शस्य वर्णनशैली सरलतरा सारगर्भिता च वर्तते। दण्डिनः कवित्वगुणोऽपि ध्रुवमुत्कृष्टतां दधाति। काव्यादर्शे प्रस्तुतानि तस्योदाहरणानि प्रायशः स्वरचितान्येव वर्तन्ते। कानिचिदेवोदाहरणानि तेनाऽन्येभ्यो ग्रन्थेभ्यो गृहीतानि। दण्डिनः पदलालित्यं प्रसिद्धम्। दण्डिना ये प्रसादमाधुर्यसौकुमार्यार्थव्यक्तिकान्त्यादयो गुणाः काव्यादर्शे निरूपितास्ते सर्वे तत्र समुपस्थिताः सन्ति।

## ६. काव्यादर्शे प्रस्तुतान्यन्यानि तत्त्वानि

काव्यादर्शस्योदाहरणेषु कानिचित् तथाभूतानि तत्त्वानि सन्ति यान्यैतिहासिकदृष्टिकोणेन महत्त्वशालीनि वर्तन्ते। कानिचिदैतिहासिकान्यन्यानि च नामानि निम्नप्रकारेण वर्ण्यन्ते -

(i) **मलयः -**

मलयगिरिपवनो दक्षिणदेशात् समायाति। अनुकूलोऽसौ जनान् सुखयति (२.१७४) कर्पूरतरुसंस्पर्शेणायं सुगन्धितो जायते (३.१६५)।

(ii) **कावेरी सरिच्चोलदेशश्च -**

चोलदेशभूमयः कृष्णागुरुणा सुगन्धिताः भवन्ति। ते च तरवः कावेरीसरित्तटवर्तिनो वर्तन्ते (३.१६६)।

---

१. काणे, पी०वी० : संस्कृत काव्यशास्त्र का इतिहास पृ० ११

२. मधुरं रसवद् वाचि वस्तुन्यपि रसस्थितिः।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः।। काव्यादर्श १.५१

३. कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति। काव्यादर्श १.६२

४. रसवद् रसपेशलम्। काव्यादर्श २.२७५

(iii) काञ्ची -

काञ्ची नगरी तथाभूता या मध्येऽनुनासिकवर्णेनोभयतश्च चतुर्भिर्वर्णैः सुशोभिता (३.११४)। प्रहेलिकाया अस्या उत्तरम् = क्+आ+ञ्+च्+ई। अत्राऽष्टवर्णाः राजानो वर्तन्ते। केषाञ्चित् समीक्षकानां मते पदमिदं पल्लववंशं सूचयति। परं पल्लवपदे सप्तवर्णा एव सन्ति। अतः केचन समालोचका अत्र पुण्ड्रकवंशसंकेतं गृह्णन्ति। परन्तु दण्डिसमये पुण्ड्रकवंशप्रतिष्ठायाः न किमपि प्रमाणमुपलभ्यते।

(iv) कलिङ्गः -

कलिङ्गदेशजाताः करिणो मृगसदृशाः भवन्ति (३.१६५)।

(v) अवन्ती -

इयमवन्ती (अवन्तिजनपदस्य राजकन्या) कथं मयाऽस्मिन्नेव जन्मनि प्राप्ता (२.२८०)। अवन्तीपदेन केचन समीक्षका अवन्तिजनपदराजकन्यां वासवदत्तां प्रति सङ्केतं गृह्णन्ति। अतस्तैस्तस्याः सम्बन्धो वत्सराजोदयनेन सह संयोजितः। परमन्ये समीक्षका अत्र राजवाहनस्य प्रेयसीमवन्तिसुन्दरीं प्रति सङ्केतं प्रतिपादयन्ति।

(vi) राजवर्मन् (रातवर्मन्) -

साक्षाद्देवरूपं राजानं राजवर्माणं प्रेक्ष्य यो प्रसादोऽधिगतः, स प्रेय इत्यवगन्तव्यः (२.२७९)। राजवर्मा (रातवर्मा) इति पल्लवदेशस्य नृसिंहवर्मणो द्वितीयस्य विरुदमेवाऽऽसीत्। दण्डी तमुपलक्ष्य सङ्केतमिमं कृतवानिति विद्वद्भिः समीक्ष्यते। प्रायशोऽसौ काञ्चीपुर्याः राजसभामलञ्चकार।

(vii) वराहः -

राजसमूहेनोद्धृतेयं धराऽधुना भवद्भुजमेवाऽऽश्रयते। पूर्वमियं वराहेणोद्धृता शेषमाशिश्रिये (३.२५)। अत्र वराहपदं चालुक्यवंशस्य राजचिह्नं सङ्केतयति।

(viii) कालकालः -

दण्डिना कालकाल इति पदं यमकरूपेणाऽनेकशः प्रयुक्तम् (३.५०)। अयं शब्दः काञ्चीनरेशस्य नृसिंहवर्मणो विरुदं सङ्केतयति।

(ix) पल्लवः -

पल्लवपदं पल्लववंशं सङ्केतयत् प्रतीयते (३.११२)। दण्डिनः प्रपितामहो दामोदरः पल्लववंशनृपतेर्दुर्विनीतस्याऽऽश्रये किञ्चित्कालमुवास।

(x) भाषाः -

साहित्यरचनासु चतस्रो भाषाः प्रयुज्यन्त इति दण्डिना प्रोक्तम् (१.३२) - संस्कृतप्राकृतापभ्रंशमिश्राः। संस्कृतं दैवी वाग् या महर्षिभिः प्रोक्ता। प्राकृतभाषास्त्रिविधाः

भवन्ति - तद्भवतत्समदेशीयाः। महराष्ट्रीशौरसेनीगौडीलाटीत्याद्यनेकाः प्राकृतभाषाः विद्यन्ते। आभीराद्यपभ्रंशभाषाः सन्ति।

(xi) **बृहत्कथा -**

बृहत्कथायाः रचना भूतभाषायां (पैशाचीप्राकृते) बभूव (१.३८)।

(xii) **सेतुबन्धः -**

सेतुबन्धादिकाव्यानि महाराष्ट्रे प्रयुज्यमानायामुत्कृष्टप्राकृतभाषायां निबद्धानि सन्ति (१.३४)।

(xiii) **छन्दोविचितिः -**

काव्यादर्शस्य १.१२ श्लोके निर्दिष्टां छन्दोविचितिं केचन समीक्षकाः दण्डिनः कृतिमेकां प्रतिपादयन्ति। परन्तु समीक्षकाणामधिकसंख्या केवलं छन्दःशास्त्रसूचकं पदमेव समामनुते। छन्दोविचित्यभिधानस्य ग्रन्थस्योल्लेखो वामनेन कृतः। सम्भवतो दण्डिनः काऽपि कृतिश्छन्दोविचितिरिति नाम्नी भवेत् ? परमधुना न सा समुपलभ्यते।

(xiv) **कलापरिच्छेदः -**

काव्यादर्शस्य ३.१७१ श्लोके कलापरिच्छेदस्य कस्याऽप्युल्लेखो दण्डिना कृतः। केचन समीक्षकाः विचारयन्ति दण्डी कलापरिच्छेदं काव्यादर्शस्यैवैकं परिच्छेदं रचयितुं योजनामकल्पयत्। अन्येषाञ्च समीक्षकाणां मते कलापरिच्छेद एकः स्वतन्त्रग्रन्थ एवाऽवर्तत। काऽपि सम्भावना भवेत् - काव्यादर्शस्य परिच्छेदैकरूपो वा स्वतन्त्रग्रन्थरूपो वा भवेद् ग्रन्थोऽयं परं नाऽसौ ग्रन्थो वा ग्रन्थांशो वा वर्तमानसमये समुपलब्धः। अतो नाऽत्र कश्चिन्निर्णयः प्रस्तोतुं शक्यः।

(xv) **महाभाष्यम् -**

काव्यादर्शे दण्डिना आप्तभाषितमिति पदं प्रयुक्तम् (२.२२७)। केषाञ्चिद् विदुषां धारणेयं यद्दण्डिना महाभाष्यं सूचयितुं पदमेतत् प्रयुक्तम्।

(xvi) **भरतनाट्यशास्त्रम् -**

काव्यादर्शे दण्डिना प्रोक्तम् - आगमान्तरे (अन्यस्मिन् शास्त्रे) यानि सन्धिसन्ध्यङ्ग-वृत्तिवृत्त्यङ्गादिलक्षणानि प्रोक्तानि, तेषामन्तर्भावोऽलङ्कारेष्वेवाऽवगन्तव्यः। समालोचकानां विचारोऽत्र वर्तते - दण्डिनाऽत्राऽऽगमान्तरपदेन भरतनाट्यशास्त्रं सङ्केतितम् (२.३६७)।

(xvii) **न्यायः -**

काव्यादर्शे दण्डिना हेतुविद्या न्यायनाम्ना सूचिता (३.१७३)।

(xviii) सुगतः -

काव्यादर्शे दण्डिना सुगतपदस्य प्रयोगः कृतः (३.१७४)। अनेन पदेन बौद्धमतस्य सिद्धान्तोऽयमभिव्यज्यते - संस्काराः न नश्वराः भवन्ति।

(xix) सांख्यः -

काव्यादर्शे प्रयुक्तेन कपिलपदेन (३.१७५) कपिलप्रोक्तं सांख्यदर्शनं सूच्यते।

### ७. काव्यादर्शस्य प्राचीनटीकाः

प्राचीनसमये दण्डिनः काव्यादर्शप्रबन्धोऽतिलोकप्रियो बभूव। अनेकाष्टीकाः प्रबन्धमेनमुपलक्ष्य विद्वद्भिर्लिखिताः। निम्नलिखितटीकानां परिचयो लभ्यते -

(i) तरुणवाचस्पतिकृतटीका -

काव्यादर्शस्य प्राचीनतमां टीकां तरुणवाचस्पतिकृतां रङ्गाचार्यः सम्पाद्य मद्रासनगरात् प्राकाशयत्। टीकायामस्यां टीकाकारो दशरूपकं सरस्वतीकण्ठाभरणञ्चोल्लिलेख। तरुणवाचस्पतिपुत्रेण केशवभट्टारकेणाऽपि तात्पर्यनिर्णयाभिधाना टीका काव्यादर्शमुपलक्ष्य प्रणीता। केशवभट्टारको महाराजाधिराजरामनाथस्य गुरुरवर्तत। होसलवंशीयो रामनाथः १२५५ खिष्टाब्दे राजसिंहासनमध्यतिष्ठत्। अतस्तरुणवाचस्पतिस्त्रयोदशशताब्दिपूर्वार्द्ध-कालीनोऽनुमातुं शक्यते।

(ii) हृदयङ्गमाटीका -

हृदयङ्गमाटीका काव्यादर्शस्य केन लिखितेति न ज्ञायते। टीकेयं केवलं द्वयोः परिच्छेदयोरेव प्राप्यते। इमामपि टीकां रङ्गाचार्यमहोदयः सम्पाद्य मद्रासनगरात् प्रकाशितवान्।

(iii) मार्जनटीका -

मार्जनटीका महामहोपाध्यायेन हरिनाथेन लिखिता। हरिनाथस्य पिता विश्वधरोऽग्रजश्च केशव आसीत्। हरिनाथेन सूचितं यत्तेन मार्जनटीकया सह सरस्वतीकण्ठाभरणमप्युपलक्ष्य टीका लिखिता। परन्तु सा टीका वर्तमानसमये न प्राप्यते। मार्जनटीका त्रयोदशशताब्दिका (ई०) ऽवगम्यते।

(iv) काव्यतत्त्वविवेककौमुदी -

टीकेयं गोपालपुरवास्तव्येन (बंगाल) कृष्णकिङ्करेण तर्कवागीशेन विरचिता।

(v) श्रुतानुपालिनीटीका -

टीकेयं वादिजंघालाभिधानेन विदुषा प्रणीता।

(vi) वैमल्यविधायिनीटीका -

इमां टीकां मल्लिनाथः जगन्नाथस्य सुतोऽलिखत्।

(vii) **विजयानन्दकृतटीका -**

विजयानन्देन टीकेयं प्रणीता।

(viii) यामुनकृतव्याख्या -

व्याख्यायामस्यां काव्यादर्शप्रबन्धश्चतुर्षु परिच्छेदेषु विभक्तः। चतुर्थः परिच्छेदो दोषविषयको वर्तते।

(ix) **रत्नश्रीटीका -**

टीकेयं लङ्कानिवासिना रत्नश्रीज्ञानेन विरचिता। अस्याः प्रकाशनमनन्तलालबहादुर-महोदयस्य सम्पादकत्वे मिथिला इन्स्टीट्यूट दरभङ्गा संस्थया कृतम्।

काव्यादर्शस्य प्राचीनटीकासु तरुणवाचस्पतिटीका हृदयङ्गमाटीका रत्नश्रीटीका इति तिस्रः टीकाः प्रकाशिताः सन्ति।

नवमोऽध्यायः

# उद्भटः

## १. उद्भटस्य महत्त्वम्

काव्यशास्त्राचार्येषूद्भटेनाऽतिमहत्त्वपूर्णं स्थानमधिगतम्। उत्तरवर्तिनो ह्याचार्या उद्भटं तस्य चाऽलङ्कारसम्बन्धिमतं सादरमुल्लिलिखुः। तद्विरोधिन आचार्या आनन्दवर्धनादयोऽपि सादरमुद्भटं वर्णयामासुः।[1] अभिनवगुप्तहेमचन्द्रराजशेखरमम्मटाप्पयदीक्षितपण्डितराजजगन्नाथादयो लब्धप्रतिष्ठाः काव्यशास्त्राचार्याः विरोधमापन्ना अपि तं ससम्मानं प्रशशंसुः। उद्भटस्याऽलङ्कारशास्त्रग्रन्थेनाऽलङ्कारसारसङ्ग्रहेण भामहविवरणेन च तथा प्रसिद्धिरधिगता यथा भामहस्य ग्रन्थो काव्यालङ्कारोऽपि विदुषामगोचर एवाऽवर्तत। किञ्चित्समयपूर्वमेवाऽयं प्राप्यो बभूव।

## २. उद्भटस्य स्थानं समयश्च

यथा नाम्नैवाऽनुमीयते, कश्मीरप्रदेश एवोद्भटस्य जन्मभूमिरवर्तत। राजतरङ्गिण्यां कल्हणः भट्टोद्भटमुल्लिलेख। असौ राज्ञो जयापीडस्य राजसभायां सभापतिपदप्रतिष्ठितो बभूव। अथ चाऽसौ दीनारलक्षं वेतनं प्रतिदिनं लेभे[2]। जयापीडस्य शासनकालः ७७९-८१३ खिष्टाब्दो गण्यते। यद्ययमेव भट्टोद्भटोऽलङ्कारशात्रसङ्गहग्रन्थकृदुद्भटो मन्येत, तदा तस्य समयोऽष्टमशताब्दिको (ई०) निर्णेतुं शक्यते। डा० व्हूलरमहोदयेन काश्मीरसम्बन्धिनि स्वरिपोर्टे द्वयोरेव भट्टोद्भटयोर्व्यक्तित्वमभिन्नत्वेन प्रतिपादितम्।[3]

अन्यैरपि प्रमाणैरुद्भटस्याऽयमेव समयः प्रतिपाद्यते। भामहकृतकाव्यालङ्कारमधिकृत्योद्भटेन भामहविवरणाऽभिधाना टीका लिखिता। अतोऽयं भामहोत्तरवर्ती ध्रुवमवगन्तव्यः। अत उद्भटः सप्तमशताब्द्युत्तरवर्ती ध्रुवमासीत्। उद्भटमानन्दवर्धनो ध्वन्यालोक उल्लिलेख।

---

१. अन्यत्र वाच्यत्वेन प्रसिद्धो यो रूपकादिरलङ्कारः, सोऽन्यत्र प्रतीयमानतया बाहुल्येन प्रदर्शितस्तत्र भवद्भिर्भट्टोद्भटादिभिः। ध्वन्यालोक - निर्णयसागर प्रेस पृ० १०८

२. विद्वान्, दीनारलक्षेण प्रत्यहं कृतवेतनः।
भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः।। राजतरङ्गिणी ४.४९५

३. कश्मीरे संस्कृत पाण्डुलिप्यन्वेषणप्रसङ्गे डा० व्हूलरमहोदयस्य विस्तृतरिपोर्टम्।
जे०वी०आर०ए०एस० (१८८७) पुस्तिकाया अतिरिक्तोऽङ्कः।

कह्लण आनन्दवर्धनमवन्तिवर्मराज्यकालगतमलिखत्।[1] अवन्तिवर्मणो राज्यशासनसमय: ८५४-८८८ खिष्टाब्दोऽवर्तत। अत उद्भटस्य समयोऽष्टमशताब्दिकल्पोऽनायासमेव निर्धारयितुं शक्यते। उद्भटो ध्वनिविषयकं किञ्चिदपि नाऽलिखत्। अतस्तस्य समयो ध्रुवमानन्दवर्धनपूर्ववर्ती निश्चीयते। उद्भटेन ध्वनिविवेचनं किमर्थं न कृतमिति प्रश्नं प्रतिहारेन्दुराजोऽलङ्कारसार-सङ्ग्रहटीकायामेवमुदतरत् -

**"केश्चित् सहृदयैर्ध्वनिर्नाम व्यञ्जकभेदात्मा काव्यार्थोऽभिहित:। स कस्मादिह नोपदिष्ट: ? उच्यते,: एष्वलङ्कारेष्वन्तर्भावात्।**

एतेन वाक्येनाऽनुमीयते यदुद्भटकालपर्यन्तं ध्वनिस्थापना न सञ्जाता। विन्टरनिट्ज-सुशीलकुमारडेपाण्डुरंगवामनकाणेप्रभृतिभि: सर्वै: समीक्षकैरुद्भटो नवमशताब्दिपूर्वार्द्धकालीन: स्वीकृत:।

## ३. उद्भटस्य कृतय:

उद्भटस्य तिसृणां कृतीनां परिचयो विद्वद्भिरुपलभ्यते - अलङ्कारसारसङ्ग्रहो भामहविवरणं कुमारसम्भवञ्च। अत्र प्रथमो ग्रन्थ: काव्यशास्त्रविषयकस्तस्य स्वकीया कृति:। द्वितीयो ग्रन्थो भामहकृतकाव्यालङ्कारस्य भामहविवरणनाम्नी टीका। तृतीयश्च ग्रन्थ: कुमारसम्भवं नाम महाकाव्यम्। ग्रन्थेषु त्रिष्वेतेषु केवलमलङ्कारसारसङ्ग्रह एवोपलभ्यते। उद्भटेन नाट्यशास्त्रमधिकृत्य काऽपि टीका लिखितेति प्राचीनग्रन्थेभ्य: सङ्केता: समुपलभ्यन्ते। अत्रैतेषां ग्रन्थानां परिचय: प्रस्तूयते -

**(१) अलङ्कारसारसङ्ग्रह: -**

ग्रन्थस्याऽस्याऽन्वेषणं प्रथमं तावद् व्हूलरमहोदयेन कश्मीरजनपदे कृतम्, स्वरिपोर्टे चाऽस्य विवरणं प्रस्तुतम्। ग्रन्थोऽयं कर्नल जेकबमहोदयेन नागरीलिप्यामाङ्गलभाषानुवादेन सह सम्पादित:। अथ चाऽयं १८९७ खिष्टाब्दे रायल एशियाटिक सोसाइटीति संस्थाया: पत्रिकायां ८२९-८४७ पृष्ठेषु प्रकाशितो बभूव।

परन्त्वधुनाऽप्ययं ग्रन्थो न सर्वसाधरणजनेभ्य: सुलभोऽविद्यत। तदनन्तरं गङ्गेशराम-कृष्णतैलङ्गपण्डितेन ग्रन्थस्याऽस्य प्रतिहारेन्दुराजकृतटीकया सह सम्पादनं विहितम्। अथ च १९१५ तमे खिष्टाब्देऽयं ग्रन्थो निर्णयसागर प्रेस मुम्बई इति संस्थया प्रकाशित:।

अलङ्कारसारसङ्ग्रहस्य सम्पादनं वनहट्टिरपि चकार, यश्च प्रतिहारेन्दुराजकृतटीकया सह १९२५ खिष्टाब्दे बम्बई संस्कृत सीरीज इति संस्थया प्रकाशित:। वनहट्टिरत्र प्रस्तावनामप्यलिखत् टिप्पण्यश्चाऽपि प्रास्तौत्।

---

१. मुक्ताकण: शिवस्वामी कविरानन्दवर्धन:।
प्रथां रत्नाकरश्चाऽगात् साम्राज्येऽवन्तिवर्मण:।। राजतरङ्गिणी ५.३४

षट्सु वर्गेषु विभक्तेऽलङ्कारसारसङ्ग्रहे एकोनाशीतिकारिका: वर्तन्ते। अत्रैकचत्वारिंशदलङ्काराणां नवत्युदाहरणै: सह विवेचनमस्ति। यथा प्रतिहारेन्दुराजेन प्रोक्ताम् - उदाहरणरूपेण प्रोक्ता श्लोका अत्रोद्भटेन स्वकृतिकुमारसम्भवादेव गृहीता:।[1] प्रस्तुता अलङ्कारा: वर्गक्रमेण निम्नलिखिता: सन्ति -

(i) **प्रथमो वर्ग: -**

(१) पुनरुक्तवदाभास:, (२) छेकानुप्रास:, (३) त्रिविधा अन्येऽनुप्रासा: (परुषा-उपनागरिका- कोमलाऽथवा ग्राम्या), (४) लाटानुप्रास:, (५) चतुर्विधं रूपकम्, (६) उपमा, (७) दीपकम् (आदिमध्यान्त), (८) प्रतिवस्तूपमा।

(ii) **द्वितीयो वर्ग: -**

(९) आक्षेप:, (१०) अर्थान्तरन्यास:, (११) व्यतिरेक:, (१२) विभावना, (१३) समासोक्ति:, (१४) अतिशयोक्ति:।

(iii) **तृतीयो वर्ग: -**

(१५) यथासंख्यम्, (१६) उत्प्रेक्षा (१७) समासोक्ति:।

(iv) **चतुर्थो वर्ग: -**

(१८) प्रेयान् (१९) रसवत्, (२०) ऊर्जस्वि, (२१) यथासंख्यम्, (२२) समाहित:, (२३) द्विविध उदात्त: (२४) द्विविध: श्लिष्ट:।

(v) **पञ्चमो वर्ग: -**

(२५) अपह्नुति: (२६) विशेषोक्ति:, (२७) विरोध:, (२८) तुल्ययोगिता, (२९) अप्रस्तुतप्रशंसा, (३०) व्याजस्तुति:, (३१) निदर्शनम्, (३२) उपमेयोपमा, (३३) सहोक्ति:, (३४) चतुर्विध: सङ्कर:, (३५) परिवृत्ति:।

(vi) **षष्ठो वर्ग: -**

(३६) अनन्वय:, (३७) ससन्देह:, (३८) संसृष्टि:(३९) भाविकम् (४०) काव्यलिङ्गम्, (४१) दृष्टान्त:।

विशेषेणाऽवधेयमत्रैतद्, यदुद्भटोऽलङ्काराणां विवेचने भामहेनाऽतितरां प्रभावितो लक्ष्यते। प्रभावश्चाऽयं स्वाभाविक:, यत उद्भटेन भामहकृतकाव्यालङ्कारमुपलक्ष्य भामहविवरणाभिधाना टीका लिखिता। परन्तूद्भटेन भामहस्य सर्वतोभावेनाऽनुकरणं विहितमिति न। उद्भटो भामहप्रोक्तानलङ्कारान् यमकोपमारूपकोत्प्रेक्षावयवादीनुपेक्षाञ्चक्रेऽथ च नवान् पुन-

---

१. अनेन ग्रन्थकृता स्वोपरचितकुमारसम्भवैकदेशोऽत्रोदाहरणत्वेनोपन्यस्त:।
अलङ्कारसारसङ्ग्रह - लघुविवृतिटीका - निर्णयसागरप्रेस पृ० १५

रुक्तवदाभाससङ्करकाव्यलिङ्गदृष्टान्तालङ्कारानुद्भावयामास। भामहस्य निदर्शनाऽलङ्कारमसौ निदर्शनमाह।

भामहस्य प्रभावोऽनेन तथ्येनाऽपि सुस्पष्टो जायते, यदलङ्काराणां क्रमविकासेऽप्युद्भटस्तमनुससार। अनेकेषामलङ्काराणां लक्षणानि भामहमनुसरन्ति। आक्षेपविभावना-ऽतिशयोक्तियथासंख्यपर्यायोक्तापह्नुतिविरोधाप्रस्तुतप्रशंसासहोक्तिससन्देहाऽनन्वयालङ्काराणां लक्षणान्युद्भटकृतान्यक्षरशो भामहकृतान्येव वर्तन्ते। अनुप्रासोत्प्रेक्षारसवद्भाविकादीनाम-लङ्काराणां लक्षणानि यद्यपि नाक्षरशः संवदन्ति, तथापि सदृशानि तु सन्त्येव। केचन समीक्षकाः सादृश्यस्य हेतुमेवं वदन्ति - उद्भटः प्रथमं भामहविवरणमलिखत्। तदनन्तरं तदेव संक्षिप्याऽलङ्कारसारसङ्ग्रहं न्यबध्नात्।[१]

परन्त्वेतदप्यवधेयं यदुद्भटः सम्पूर्णरूपेण भामहमनुचकारेति न। निजस्वतन्त्र-वैशिष्ट्यस्य परिचयस्तेन स्थाने स्थाने प्रदर्शितः। भामहकृता अनेकेऽलङ्कारास्तेन सर्वथोपेक्षिता अनेके नवाश्चाऽलङ्कारा उद्भाविताः। प्रतिहारेन्दुराजो लिखति -

"भामहेन ग्राम्योपनागरिकाभेदेन द्विविधोऽनुप्रासः प्रोक्तः, परमुद्भटस्तत्र परुषानुप्रासमपि संयोज्य त्रिविधमनुप्रासं प्रोवाच। भामहो रूपकस्य द्वौ भेदावकथयत्, परमुद्भटेन तस्य चत्वारो भेदाः प्रोक्ताः।"[२]

श्लिष्टालङ्कारविवेचनप्रसङ्गेऽपि भामहादुद्भटो भिद्यते। भामहः श्लिष्टालङ्कारं त्रिविधमाह।[३] परमुद्भटेन केवलं द्वौ श्लिष्टालङ्कारभेदौ व्याख्यातौ। प्रेयोऽलङ्कारविषये भामहोद्भटयोर्वैभिन्न्यं प्रतिहारेन्दुराजेन प्रदर्शितम्। भामहो गुरुदेवनृपतिपुत्रविषयकप्रीतिं प्रेयोऽलङ्कारं जगाद, परमुद्भटो भावालङ्कारमेव प्रेयोऽलङ्कारं व्याचष्टे।[४]

**(२) भामहविवरणम् -**

उद्भटेन भामहविवरणाभिधानोऽपि ग्रन्थो रचितः। परं नाऽयं ग्रन्थो वर्तमानकाले समुपलभ्यते। तस्योल्लेख एव प्राचीनग्रन्थेषूपलभ्यते। प्राचीनग्रन्थेषु भामहकृतकाव्यालङ्कार-मुपलक्ष्योद्भटेन लिखितायाः भामहविवरणटीकाया उल्लेखोऽनेकशो वर्तते। प्रतिहारेन्दुराजेन

---

१. काणे, पी०वी०: संस्कृत काव्यशास्त्र का इतिहास पृ० २९६

२. भामहो हि ग्राम्योपनागरिकाभेदेन द्विप्रकारमेवानुप्रासं व्याख्यातवान्। तथा रूपकस्य ये चत्वारो भेदा वक्ष्यन्ते तन्मध्यादाद्यमेव भेदद्वितयं प्रादर्शयत्।
अलङ्कारसारसङ्ग्रह - लघुविवृतिटीका - पृ० १

३. भामहो हि तत्सहोक्त्युपमाहेतुनिर्देशास्त्रिविधं यथा। इति श्लिष्टस्य त्रैविध्यमाह।
अलङ्कारसारसङ्ग्रह - लघुविवृतिटीका पृ० ४७

४. भामहेन हि गुरुदेवनृपतिपुत्रप्रीतिवर्णनं प्रेयोऽलङ्कार इत्युक्तम्.............। उद्भटमते हि भावालङ्कार एव प्रेय इत्युक्तः। अलङ्कारसारसंग्रह - लघुविवृतिटीका पृ० ८७

सूचितम् - "उद्भटो भामहविवरणमलिखत्।[१] अभिनवगुप्तोऽपि भट्टोद्भटरचितभामहव्याख्यां सूचयति।[२] हेमचन्द्र: काव्यानुशासने स्वकृतटीकायामुद्भटकृतभामहविवरणस्योल्लेखमनेकशश्चकार।[३] रुय्यकोऽप्यलङ्कारसर्वस्वग्रन्थे कृतिमिमामुद्भटस्य भामहीयोद्भटलक्षणमित्याह।[४]

अनेन विवरणेन सुस्पष्टमेव यदुद्भटो भामहकृतकाव्यालङ्कारमुपलक्ष्य भामहविवरणाभिधानां टीकामरचयत्। परन्तु वर्तमानसमये नेयमुपलभ्यते।

(३) **कुमारसम्भवम् -**

प्राचीनोल्लेखैरुद्भटकृतकुमारसम्भवमहाकाव्यस्य सूचना प्राप्यते। परन्त्विदं महाकाव्यं न वर्तमानसमये समुपलब्धो मनीषिभिः। प्रतिहारेन्दुराजेन सूचितम् - "उद्भटकृतेऽलङ्कारसारसङ्ग्रहे प्रस्तुतान्युदाहरणानि निजकृतिकुमारसम्भवकाव्यादेव लेखकेन गृहीतानि। उदाहरणानामेतेषां निरीक्षणेन प्रतीयते यदुद्भटकृतकुमारसम्भवकाव्यं कालिदासकृतकुमारसम्भवकाव्यमनुकृत्यैव निबद्धमासीत्। पी०वी० काणे महोदयस्य मतमिदं यद् द्वयोः काव्ययोः प्रचुरं साम्यं लक्ष्यते। न केवलं शब्देषु भावेषु च साम्यमस्ति, घटनासु चाऽपि साम्यमस्ति।[५] कानिचिदुदाहरणान्यधः प्रस्तूयन्ते -

(क) **प्रच्छन्ना शस्यते वृत्तिः स्त्रीणां भावपरीक्षणे।**
**प्रतस्थे धूर्जटिरतस्तनुं स्वीकृत्य वाटवीम्।। अलङ्कारसारसङ्ग्रह २.१०**
**विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा।। कुमारसम्भव ५ ३३**

(ख) **अपश्यच्चातिकष्टानि तप्यमानां तपांस्युमाम्।**
**असम्भाव्यपतीच्छानां कन्यानां का परा गतिः।। अलङ्कारसारसङ्ग्रह २.१२**
**इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः।**
**अवाप्यते वा कथमीदृशं द्वयं तथाविधं प्रेम पतिश्च तादृशः।। कुमारसम्भव ५.२**

(ग) **शीर्णवाताम्बुवाताशकष्टेऽपि तपसि स्थिताम्। अलङ्कारसारसङ्ग्रह २.१७**
**स्वयं विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः।। कुमारसम्भव ५.२८**

(४) **नाट्यशास्त्रस्य टीका -**

उद्भटो नाट्यशास्त्रमुपलक्ष्याऽपि टीकामेकामलिखदिति प्रमाणानि लभ्यन्ते। परन्तु वर्तमानसमये नेयं टीका समुपलभ्यते। अस्याष्टीकायाः सङ्केतो नाट्यशास्त्रीयटीकाप्रसङ्गे कृत एव।

---

१. विशेषोक्तिलक्षणे च भामहविवरणे भट्टोद्भटेन एकशब्द एव व्याख्यातो यथैवाऽस्माभिर्निरूपितः। अलङ्कारसारवङ्ग्रह - लघुविवृतिटीका पृ० १३

२. "भामहोक्तं शब्दश्छन्दोऽभिधानार्थः" इत्यभिधानस्य शब्दाद् भेदं व्याख्यातुं भट्टोद्भटो बभाषे। ध्वन्यालोकलोचनटीका - निर्णयसागर प्रेस पृ० ४०

३. काव्यानुशासन - टीका - निर्णयसागर प्रेस पृ० १७,११०

४. अलङ्कारसर्दस्व - निर्णयसागर प्रेस पृ० १८३

५. काणे पी०वी०: संस्कृत काव्यशास्त्र का इतिहास पृ० १३७

### ४. अलङ्कारसारसङ्ग्रहस्य प्राचीनाष्टीकाः

उद्भटकृतस्याऽलङ्कारसारसङ्ग्रहस्य द्वे प्राचीनटीके समुपलभ्येते। अत्रैका टीका प्रतिहारेन्दुराजकृतलघुविवृतिटीका वर्तते। द्वितीया च टीकाऽस्ति - राजानकतिलक-रचितोद्भटविवेकटीका।

**(i) अलङ्कारसारलघुविवृतिटीका -**

अलङ्कारसारसङ्ग्रहस्य प्राचीनतमा टीका प्रतिहारेन्दुराजलिखिता प्राप्यते। टीकाया अस्याः प्रस्तावनायां तृतीयः श्लोक एवं विद्यते -

**विद्वदग्र्यान्मुकुलादधिगम्य विविच्यते।**
**प्रतिहारेन्दुराजेन काव्यालङ्कारसारसङ्ग्रहः।।**

प्रतिहारेन्दुराजोऽयं मुकुलभट्टस्य शिष्योऽविद्यत। कल्लटभट्टस्य सुतो मुकुलभट्टोऽभिधामातृकावृत्तिग्रन्थमलिखत्। अयं नवमशताब्दिपूर्वार्द्धकालीनोऽवर्तत। अतः प्रतिहारेन्दुराजो दशमशताब्दिपूर्वार्द्धकालीनोऽवगन्तव्यः।

अलङ्कारसारसङ्ग्रहस्य प्रतिहारेन्दुराजकृतटीका संक्षिप्ता, पण्डित्यपूर्णा सुस्पष्टा च विद्यते। अत्र तेनाऽनेकेषां ग्रन्थानामुल्लेखः सोदाहरणं विहितः। भामहदण्डिवामनध्वन्यालोक-नाट्यशास्त्रपतञ्जलिकात्यायनामरुकादीनामुल्लेखास्तत्र सोदाहरणं समुपलभ्यन्ते। प्रतिहारेन्दुराजो ह्युद्भटप्रोक्तोदाहरणानां पाठभेदानपि प्रादर्शयत्।

अभिनवगुप्तस्य गुरुरिन्दुराजः प्रतिहारेन्दुराजाद् भिन्नमेव व्यक्तित्वं दधाति। प्रतिहारेन्दुराजस्य कृतिषु न विद्यते ध्वनेः प्राधान्यम्। अतः प्रतिहारन्दुराजेऽभिनवगुप्तस्य गुरुभावस्यावधारणा न समुचिता।

**(ii) उद्भटविवेकः -**

अलङ्कारसारसङ्ग्रहस्य द्वितीया टीका उद्भटविवेको वा उद्भटविचारो वा राजानकतिलकेन लिखिता। अस्याः प्रकाशनं १९३१ तमे खिष्टाब्दे "गायकवाड ओरियन्टल सीरीज सं० ५५" माध्यमेन बभूव।

प्राचीनसमये टीकेयमुद्भटविवेकाभिधाना काव्यशास्त्राचार्यैरतिसम्मानिता समादरणीया च बभूव। जयरथेनाऽतिशयेन सा प्रशंसिता। जयरथोऽलङ्कारसर्वस्वटीकायां विमर्शिन्यां राजानकतिलकस्योल्लेखञ्चकार, यदसावुद्भटस्य टीकाकारो बभूव। तेन प्रोक्तम् -

"असौ निजटीकायां तिलकस्यैव मतमनुकरोति।"[१]

---

१. एतच्चोद्भटविवेके राजानकतिलकेन सप्रपञ्चमुक्तमिति चिरन्तनेति। अनेनाऽस्माभिस्तन्मता-नुसृतिरेव कृतेत्यात्मविषयमनौद्धत्यमपि ग्रन्थकृता प्रकाशितमिति।
अलङ्कारसर्वस्वविमर्शिनी पृ० २२७

काव्यप्रकाशस्य सङ्केतटीकाकारो रुचकस्तिलकात् काव्यशास्त्रस्याऽध्ययनञ्चकार। पी०वी काणे महोदयस्य सम्मतिर्वर्तते यत् सहृदयलीलाग्रन्थस्य पुष्पिकायां रुचको रुय्यकोऽपि प्रोक्तः। अथ चाऽसौ राजानकतिलकस्य पुत्रः कथितः। सम्भवतोऽयमेव रुय्यकोऽलङ्कारसर्वस्व-ग्रन्थस्य कर्ताऽविद्यत। अलङ्कारसर्वस्वग्रन्थस्य रचना ११३५-११५५ तमेषु ख्रिष्टाब्देषु बभूव। अतास्तिलकस्य समयोऽपि द्वादशशताब्दिपूर्वार्द्धकोऽनुमेयः।

राजानकतिलकस्य टीका संक्षिप्ता सुस्पष्टा विषयानुकूला च विद्यते। अनेकेषु प्रसङ्गेषु प्रतिहारेन्दुराजस्य मतमप्यसावखण्डयत्।

## ५. उद्भटस्य वैशिष्ट्यम्

उद्भटेन यद्यपि लघ्वाकारस्य ग्रन्थस्य रचना कृता, यत्रैकोनाशीतिकारिकास्वेक-चत्वारिंशदलङ्कारा व्याख्यातास्तथापि काव्यसमालोचनाक्षेत्रे ग्रन्थोऽयमतिमहिमानं प्रपेदे। अस्य सिद्धान्ता अनेकेषु स्थानेषूल्लिख्यन्ते। उद्भटस्य सिद्धान्ताः संक्षेपेण निम्नलिखिताः सन्ति -

(i) अर्थभेदेन शब्दाः भिद्यन्ते।[१]

(ii) उद्भटेन श्लेषालङ्कारस्य द्वौ भेदौ परिगणितौ - शब्दश्लेषोऽर्थश्लेषश्च। अथ च द्वावेवाऽर्थालङ्कारमध्ये पठितौ। मम्मटस्त्विदमुद्भटमतमखण्डयत्।[२]

(iii) उद्भटेन श्लेषालङ्कारः प्रधानतमो मतः। अन्येषामलङ्काराणामुपस्थितौ श्लेषालङ्कारः प्रधानत्वेनाऽन्ये चाऽलङ्कारा अप्रधानत्वेन मन्तव्याः।[३]

(iv) राजशेखरमतेनाऽभिधाव्यापारमुद्भटस्त्रिविधं मेने।[४]

(v) व्याकरणशास्त्रमाश्रित्योपमाभेदानां प्रथमं विस्तृतं निरूपणमुद्भटेनैव कृतम्। उत्तरवर्तिनि समये मम्मटविश्वनाथादिभिराचार्यैर्भेदानामेतेषां विस्तृततरं विवेचनं विहितम्।

(vi) रसाभिव्यक्ती रसवदेवाऽलङ्कारो वर्तत इति प्रोक्तमुद्भटेन। इयमभिव्यक्तिः पञ्चधा भवति[५] -

---

१. अर्थभेदेन तावच्छब्दा भिद्यन्त इति भट्टोद्भटस्य सिद्धान्तः।
अलङ्कारसारसङ्ग्रह - लुघुविवृतिटीका पृ० ५५

२. शब्दश्लेष इति चोच्यतेऽर्थालङ्कारमध्ये च लक्ष्यत इति कोऽयं नयः।
काव्यप्रकाशे नवमोल्लासः - श्लेषप्रकरणम्

३. अलङ्कारान्तर्गतां प्रतिभां जनयत्पदैः। काव्यालङ्कारसारसङ्ग्रह - ४

४. तस्य (वाक्यस्य) च त्रिधाऽभिधाव्यापार इत्यौद्भटाः। काव्यामीमांसा पृ० २

५. रसवत्..........स्वशब्दस्थायिसञ्चारिविभावाभिनयास्पदम्।
काव्यालङ्कारसारसङ्ग्रह - चतुर्थो वर्गः

(क) स्वशब्देन
(ख) स्थायिभावेन
(ग) सञ्चारिभावेन
(घ) विभावेन
(ङ) अभिनयेन

परन्तूत्तरवर्तिभिर्ध्वनिवादिभिरभिव्यङ्ग्यो रसो मतः। तैः रसस्य स्वशब्दवाच्यता दोष एव प्रतिपादितः।[१]

(vii) उद्भटो गुणान् संघटनाधर्मानमन्यतेति लोचनकारस्य मतम्।[२] तदनन्तरं ध्वनिवादिभिर्गुणाः रसधर्माः प्रोक्ताः।[३]

(viii) राजशेखरादिभिराचार्यैः प्रोक्तम् - "उद्भटमतेऽर्थाः द्विविधाः भवन्ति - विचारितसुस्था अविचारितरमणीयाश्च। प्रथमप्रकारोऽर्थः शास्त्रेषु विधीयते, द्वितीयश्च काव्येषु।[४]

---

१. व्यभिचारिरसस्थायिभावानां शब्दवाच्यता। काव्यप्रकाश ७.६०
२. संघटनाया धर्मो गुण इति भट्टोद्भटादयः। ध्वन्यालोक - लोचनटीका - पृ० १३४
३. ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः।। काव्यप्रकाश ८.६६
४. किन्तु द्विरूप एवाऽसौ विचारितसुस्थोऽविचारितरमणीयः।
तयोः पूर्वाश्रितानि शास्त्राणि तदुत्तरं काव्यानीत्यौद्भटाः। काव्यामीमांसा पृ० ४४

दशमोऽध्यायः

# वामनः

## १. वामनस्य महत्त्वम्

संस्कृतकाव्यशास्त्रस्येतिहासे वामनस्य विशिष्टमेव महत्त्वं वर्तते। काव्यसमीक्षायै वामनो नवमेव सिद्धान्तं प्रतिष्ठाप्य नवीनं मार्गं प्रादर्शयत्। रीतिं काव्यस्याऽऽत्मानं प्रतिपाद्याऽसौ रीतिसम्प्रदायप्रवर्तको बभूव। रीतिसम्प्रदायसंस्थापनातिरिक्तमपि काव्यशास्त्रेतिहासे वामनस्य ततोऽप्यधिकं महत्त्वं वर्तते। असौ सर्वेषामेव काव्याङ्गानां विशदं विवेचनञ्चकार।

## २. वामनस्य स्थानं समयश्च

अन्यसंस्कृतलेखकवृन्देनेव वामनेनाऽपि निजजीवनवृत्तसमयादिविषयकं किञ्चिदपि न सूचितम्। केवलं बाह्यप्रमाणान्याश्रित्यैव वामनविषयकं किञ्चिज्ज्ञातुं शक्यते। तैः प्रमाणैः समीक्षकैर्वामनस्य केवलं स्थानसमयादिविषयकज्ञानमेवाऽर्जितं, परं तस्य जीवनवृत्तवंशादिविषये न कश्चित् परिचयोऽधिगतः।

वामनः कश्मीरजनपदवास्तव्योऽवर्ततेति न कश्चिदत्र संशयः। प्राचीनैर्विवरणैर्ज्ञायते यद् वामनोद्भटौ द्वावेव कश्मीरनिवासिनौ जयापीडस्य पार्थिवस्य राजसभायाः सदस्यावभवताम्। परन्त्वत्र महदाश्चर्यं, यत्तयोरेकेनाऽप्यन्यस्य विषये न किञ्चिल्लिखितम्। न तु वामनः स्वग्रन्थे ह्युद्भटसिद्धान्तविषये किञ्चिल्लिलेख, न चोद्भटो वामनविषयकं किञ्चिदुदाहरत्।

राजतरङ्गिण्यां कल्हणेन लिखितम् -

कश्मीराधिपस्य जयापीडस्य राजसभायां वामनो मन्त्रिपदप्रतिष्ठितोऽवर्तत। तेन सह मनोरथशङ्खदत्तचटकसन्धिमन्तोऽपि मन्त्रिण आसन्।[1]

कश्मीरपण्डितेषु लोकप्रसिद्धिरियं प्रथिता, यद् वामनः काव्यालङ्कारसूत्रवृत्तिमलिखत्। अथ चाऽसौ जयापीडस्य सचिवोऽप्यासीत्! न च केनाऽपि प्रसिद्धिरियं खण्डिता। डा० व्हूलरमहोदयेनाऽपि प्रसिद्धिरियं समर्थिता। वामनेन काव्यालङ्कारसूत्रवृत्तौ दण्डनीत्यादिविषयक-शिक्षायाः सङ्केतः प्रस्तुतः। तेनाऽस्य मन्त्रिपदकार्यस्य सिद्धिर्भवति। ग्रन्थेनाऽनेन सूचनेयमपि

---

१. मनोरथः शंखदत्तश्चटकः सन्धिमांस्तथा।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः।। राजतरङ्गिणी ४.४९७

प्राप्यते, यद् वामनो दण्डनीतिव्याकरणकाव्यशास्त्रादिविषयाणां काव्यरचनायाश्च विशेषज्ञोऽवर्तत।

राज्ञो जयापीडस्य शासनसमयः ७७९-८१३ ख्रिष्टाब्दोऽवर्तत। अतो वामनोऽष्टमशताब्युत्तरार्द्धनवमशताब्दिपूर्वार्द्धकालीनो निश्चेतुं शक्यते।

अन्यैर्बाह्यप्रमाणैरपि वामनस्याऽयमेव समयो निश्चीयते। राजशेखरः काव्यमीमांसायां वामनं तस्य च रीतिसम्प्रदायमुल्लिलेख।[1] राजशेखरस्य समयो नवमशताब्दिकल्पो वर्तते। वामनस्तत्पूर्ववर्ती भवितव्यः। प्रतिहारेन्दुराजानन्दवर्धनावपि वामनमुल्लिलिखतुः। ध्वन्यालोके वामनस्यैकः श्लोक उदाहरणरूपेण प्रस्तुतो लभ्यते।[2] तस्य व्याख्यां कुर्वताऽभिनवगुप्तेन लिखितम् -

अस्मिन् श्लोके वामनेनाऽऽक्षेपालङ्कारः प्रोक्तः परं भामहोऽत्र समासोक्त्यलङ्कारमाह। अभिप्रायमेनमङ्गीकृत्य ध्वन्यालोककारेण समासोक्त्याक्षेपयोर्द्वयोरेवाऽलङ्कारयोरुदाहरणमेकमेव प्रस्तुतम्।[3]

अतो वामन आनन्दवर्धनात् पूर्ववर्ती मन्तव्यः। आनन्दवर्धनो वामनं नामतस्तु नोक्तवान्, परं रीतीस्तस्य निश्चयेनोदलिखत्। तेन लिखितम् -

"काव्यतत्त्वं व्याख्यातुमसमर्थाः पूर्वाचार्याः रीतीः प्रावर्तयन्।[4]

अत्र ध्वन्यालोककारेण वामनमभिलक्ष्यैवैवं लिखितम्।

विवेचनेनाऽनेन सुस्पष्टमिदं यद् वामनो ध्वन्यालोककारात् पूर्ववर्ती। अभिनवगुप्तस्याऽपीदमेव मतम्। आनन्दवर्धनो नवमशताब्युत्तरार्धकालीनो गण्यते, अतो वामनोऽष्टमशताब्दिदेशीयो मन्तव्यः।

वामनेन काव्यालङ्कारसूत्रवृत्तौ पूर्ववर्तिनां कवीनामनेकेषां श्लोका उदाहृताः। अत्र कालिदासबाणमाघभवभूतिप्रभृतय उल्लेखनीयाः सन्ति। कवीनामेतेषां भवभूतिरर्वाचीनतमो

---

१. ते च द्विधाऽरोचकिनः सतृणाभ्यवहारिणश्च। कवयोऽपि भवन्ति वामनीयाः।
काव्यमीमांसा पृ० १४

२. अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः।
अहो दैवगतिश्चित्रा तथापि न समागमः।।
ध्वन्यालोक प्रथम उद्योत - कारिका १३ उदाहरणम्।

३. वामनाभिप्रायेणाऽयमाक्षेपः, भामहाभिप्रायेण तु समासोक्तिरित्यमुमाशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोरिदमेकमेवोदाहरणं व्यतरद् ग्रन्थकृत्।
ध्वन्यालोक - लोचनटीका पृ० ३७

४. अस्फुटस्फुरितं काव्यतत्त्वमेतद् यथोदितम्।
अशक्नुवद्भिर्व्याकर्तुं रीतयः सम्प्रवर्तिताः।। ध्वन्यालोक ३.४७

गण्यते। भवभूतिकृतोत्तररामचरितस्यैकः श्लोक उदाहरणरूपेण काव्यालङ्कारसूत्रवृत्तौ वर्तते।[१] भवभूतिः ७०० - ७५० ख्रिष्टाब्दकालीनः समीक्षकैर्निर्धारितः। वामनस्तु तत्पश्चाद्वर्त्येव।

उपर्युक्तविवेचनेन सुस्पष्टमिदं यत् वामनोऽष्टमशताब्दिपूर्वार्द्धकालीनः पञ्चाशदुत्तरसप्तमशताब्द्युत्तरकालीनश्चाऽवगन्तव्यः।

## ३. वामनस्य कृतयः (काव्यालङ्कारसूत्रवृत्तिः)

वामनस्य केवलमेक एव ग्रन्थः समुपलभ्यते - काव्यालङ्कारसूत्रवृत्तिः। ग्रन्थस्याऽस्य त्रयो भागाः वर्तन्ते - सूत्रभागो, वृत्तिभाग उदाहरणभागश्च।

वामनस्तु प्रथम आचार्यो यः काव्यशास्त्रसिद्धान्तान् सूत्ररूपेण न्यबध्नात्। सूत्राणि च व्याख्यातुमसौ स्वयं वृत्तिमप्यरचयत्। वृत्तिरेषा तेन कविप्रियाभिधाना कृता। वृत्तावुदाहरणान्यपि न्यवेशयदसौ। वामनेन स्वयं लिखितम् - सूत्राणि व्याख्यातुमसौ कविप्रियानाम्नीं वृत्तिं विदधाति।[२]

वृत्तौ सङ्कलितेषूदाहरणेषु कानिचिदुदाहरणानि वामनेन स्वयं रचितानि। परमुदाहरणानामधिकांशस्तेनाऽन्येषां कवीनां कृतिभ्यः सङ्ग्रहीतः।[३] तथ्यमेतत् स्वयं वामनेनोपमालङ्कारविवेचनप्रसङ्गे स्वीकृतम्।

वामनस्य ग्रन्थोऽयं काव्यालङ्कारसूत्रवृत्तिरतिविस्तृतो व्यापकश्च वर्तते। पञ्चस्वधिकरणेषु विभक्तेऽस्मिन् ग्रन्थे द्वादशाध्यायाः वर्तन्ते। अथ चैकोनविंशत्युत्तरशतत्रय (३१९) सूत्राणि सन्ति। अत्र पञ्चाशदुत्तरशतद्वय (२५०) श्लोका श्लोकार्धाः वोदाहरणरूपेण प्रस्तुताः। अधिकरणक्रमेण ग्रन्थस्य विषयप्रतिपादनं निम्नप्रकारेण वर्तते -

**(i) प्रथममधिकरणम् -**

प्रथममधिकरणं शरीराधिकरणनाम्ना प्रसिद्धम्। अत्र त्रयोऽध्यायाः वर्तन्ते। एषु काव्यपरिभाषा, काव्याङ्गानि, काव्यप्रयोजनानि, काव्यशिक्षाधिकारिणः, काव्यस्याऽऽत्मा रीतिः, तिस्रो रीतयः, काव्यहेतुः काव्यभेदाश्चेति विषयाः व्याख्याताः वर्तन्ते।

---

१. इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्याः प्रेयो नो यदि परमसह्यस्तु विरहः।। उत्तररामचरितम् १.३८

२. प्रणम्य परमं ज्योतिर्वामनेन कविप्रिया।
काव्यालङ्कारसूत्राणां स्वेषा वृत्तिर्विधीयते।। काव्यालङ्कारसूत्रवृत्ति - मङ्गलश्लोक

३. एभिर्निदर्शनैः स्वीयैः परकीयैश्च पुष्कलैः।
शब्दवैचित्र्यगर्भेयमुपमैव प्रपञ्चिता।। काव्यालङ्कारसूत्रवृत्ति ४.३.३३ (वृत्तिः)

**(ii) द्वितीयमधिकरणम् -**

दोषदर्शननाम्नि द्वितीयेऽधिकरणे द्वावध्यायौ वर्तेते। अत्र काव्यगतपदवाक्यवाक्यार्थदोषाः निरूपिताः सन्ति।

**(iii) तृतीयमधिकरणम् -**

गुणविवेचनाभिधाने तृतीयेऽधिकरणेऽपि द्वावध्यायौ स्तः। अत्र लेखकः प्रथमं गुणालङ्कारयोर्भेदं प्रदर्श्य गुणानां भेदान् प्रोवाच। तदनन्तरं दश शब्दगुणानां दश चाऽर्थगुणानां स्वरूपनिर्णयञ्चकार।

**(iv) चतुर्थमधिकरणम् -**

चतुर्थमधिकरणमालङ्कारिकमिति शीर्षकेण प्रसिद्धम्। अत्र त्रयोऽध्यायाः वर्तन्ते। एतेष्वध्यायेषु विस्तृतं विवेचनमलङ्काराणामस्ति।

**(v) पञ्चममधिकरणम् -**

पञ्चममधिकरणं प्रायोगिकमित्युच्यते। अत्र द्वावध्यायौ वर्तेते। अस्मिन्नधिकरणे कविपरम्पराणां विवेचना लेखकेन कृता। यथा - "न शब्दाः द्विवारं प्रयोज्याः"। शब्दशुद्धिरप्यत्र वामनेन विचारिता। प्राचीनसाहित्यप्रयुक्ताननेकानशुद्धशब्दान् सङ्गृह्याऽसौ व्याकरणशास्त्रमाश्रित्य शुद्धान् साधयितुं प्रायतत। यथा **"बिम्बाधरपदमस्ति"**। पाणिनिव्याकरणमाश्रित्येदं पदम् **"उपमितं व्याघ्रादिभिः सामान्याप्रयोगे"** (२.१.५६) सूत्रनियमेन **"अधरबिम्बमिति"** प्रयोज्यम्। परं वामनेनाऽस्य विग्रहः कृतः - **बिम्बाकारोऽधरो बिम्बाधरः**। इत्थं पदं शुद्धमेवाऽस्ति।

काव्यशास्त्रप्रस्तुतीकरणव्यतिरिक्तमपि वामनस्य कृतिरियमन्यानेकदृष्टिभिरपि महत्त्वपूर्णा वर्तते। अत्र तेन निम्नलिखितग्रन्थानां ग्रन्थकाराणाञ्चोल्लेखो विहितः -

**अभिधानकोषः, नाममालाप्रतीकम् (१.३.५), छन्दोविचितिः (१.३.६), विशाखिलकाव्यशास्त्रप्रणेता (१.३.७ वृत्तिः), सुबन्धुर्वसुबन्धुर्वा (३.२.२ वृत्तिः), शूद्रकः (३.२.४ वृत्तिः), हरिप्रबोधः (४.१.२ वृत्तिः), कामन्दकीनीतिः (४.१.२ वृत्तिः), इत्यादयः।**

निम्नलिखितसूत्रे (३.२.२ वृत्तिः) सुबन्धोरुल्लेख एवं वर्तते -

**सोऽयं सम्प्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो पुनः**
**जातो भूपतिराश्रयः कृतधियां दिष्ट्या कृतार्थाश्रयः।।**

**आश्रयः कृतधियामित्यस्य च सुबन्धुसाचिव्यापरोपत्वात् साभिप्रायत्वम्।**

अत्र चन्द्रगुप्तसुतचन्द्रप्रकाशनरपतेराश्रये स्थितस्य सुबन्धोरुल्लेखो वामनेन कृतः। अत्र वामनकृतोऽयमैतिहासिकसङ्केतः कं लक्षयतीति विवादः समुपतिष्ठति। केचन समीक्षकाः वदन्ति -

वामनेनाऽत्र गुप्तकुलप्रसूतचन्द्रगुप्तसुतः समुद्रगुप्तः सङ्कीर्तितः। परमन्ये कथयन्ति - पार्थिवश्चन्द्रप्रकाशः कश्चिदन्य एव राजाऽऽसीद् यस्य सचिवः सुबन्धुरवर्तत। अपरे विद्वांसः प्रकटयन्ति - अस्मिन् वाक्ये 'च' स्थाने 'व' इति पठनीयम्। सचिवस्याभिधानं वसुबन्धु-रित्यासीन्न सुबन्धुः।

## ४. काव्यालङ्कारसूत्रवृत्तिग्रन्थस्य प्राचीनाष्टीकाः

काव्यशास्त्रस्येतिहासे वामनस्य तत्कृतग्रन्थस्य च विशिष्टं महत्त्वमसन्दिग्धमेव। परवर्तिभिर्ध्वनिवादिभिराचार्यैर्यद्यप्यसौ सुकठोरं समीक्षितस्तथापि तस्य महत्त्वं नाऽवहीयते। केचन प्राचीनटीकाकाराः ग्रन्थमेनमटीकन्त। तत्र प्रसिद्धतमटीकाकारो वर्तते - सहदेवः। सहदेवेन कथितम् -

वामनस्य काव्यालङ्कारसूत्रवृत्तिरिति ग्रन्थो दौर्भाग्याद् विलुप्तोऽभवत्। परन्तु मुकुलभट्टेन काश्मीरनिवासिना विदुषा ग्रन्थस्याऽस्यैका प्रतिलिपिः कुतश्चिदप्युपलब्धा, परम्परैषा च रक्षिता।[१]

अथ च गोपालतिप्पभूपालोऽपि कामधेनुनाम्नीं टीकां काव्यालङ्कारसूत्रवृत्तिग्रन्थस्य लिलेख। भट्टगोपालमहेश्वरादयोऽप्येनं ग्रन्थमटीकन्तेति लोके प्रसिद्धम्।

## ५. वामनस्य वैशिष्ट्यम्

सामान्यतो वामनः काव्यस्य सर्वाङ्गानि तत्त्वानि च न्यरूपयत्। काव्यस्य स्वरूपं, प्रयोजनं, हेतुरधिकारी, काव्यस्यात्मा, रीतयो, गुणाः, दोषा, अलङ्कारा, शब्दप्रयोगा इति सर्वेषामेव काव्याङ्गानां समीक्षणमसौ चकार। परन्तु वैशिष्ट्यं वामनस्येदमेव न केवलम्। केषाञ्चिद् विशेषसिद्धान्तानां प्रतिपादनं कृत्वाऽसौ पूर्वप्रचलितधारणासु नवत्वमेव प्रतिपादयामास। वामनस्य वैशिष्ट्यं निम्नप्रकारेण विशदीक्रियते -

(i) काव्यशास्त्रसमीक्षायां वामनः प्रथम एवाऽऽचार्यो यो रीतीः काव्यस्यात्मानं प्रतिपाद्य रीतिसम्प्रदायं प्रवर्तितवान्। यद्यपि वामनात् पूर्वमपि काव्यशास्त्राचार्यैः काव्येषु रीतितत्त्वस्य विवेचना विहिता, तथापि रीतिः काव्यस्यात्मा, विशिष्टा पदरचना रीतिः, पदरचनायाश्च वैशिष्ट्यं गुणेषु निहितमिति तत्त्वं प्रथमं वामनेनैव प्रकटितम्।[२]

---

१. वेदिता सर्वशास्त्राणां भट्टोऽभून्मुकुलाभिधः
लब्ध्वा कुतश्चिदादर्शं भ्रष्टाम्नायं समुद्धृतम्।
काव्यालङ्कारशास्त्रं यत्तेनैतद् वामनोदितम्।
असूया तन्न कर्तव्या विशेषालोकिभिः क्वचित्।।

२. रीतिरात्मा काव्यस्य। विशिष्टा पदसंघटना रीतिः। विशेषो गुणात्मा।
काव्यालङ्कारसूत्र १.२.६-८

(ii) वामनात्पूर्वं दण्डिना काव्यस्य द्वौ मार्गौ प्रदर्शितौ - वैदर्भो गौडश्च। परन्तु वामनस्तिस्रो रीतयः प्रत्यापादयत्। वैदर्भी, गौडी पाञ्चाली चेति रीतयस्तिस्रो वर्तन्ते।

(iii) गुणानां विवेचनं कृत्वा वामनस्तेषामलङ्कारेभ्यो भेदमाह। काव्यशोभाधायकाः धर्माः गुणाः भवन्ति, तस्याः शोभाया अतिशयहेतवोऽलङ्काराः सन्ति।[1] प्रथमं वामनेनैव गुणानां द्वौ वर्गौ - शब्दगुणा अर्थगुणाश्चेति प्रोक्तौ। तदनन्तरमसौ गुणानां संख्यां विंशतिरिति-जगाद - दश शब्दगुणाः दश चाऽर्थगुणाः।

(iv) अलङ्काराणां लक्षणेऽप्यसौ स्वकीयं स्वतन्त्रवैशिष्ट्यं प्रादर्शयत्। वक्रोक्तिस्तेनाऽर्थालङ्कार एव मता। वक्रोक्तिलक्षणं विद्यते -

**"सादृश्याल्लक्षणा वक्रोक्तिः"।**[2]

सादृश्यादुत्पन्ना लक्षणा वक्रोक्तिरस्तीति। तत्कृतं विशेषोक्तिलक्षणं वर्तते -

**" एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः।**[3]

एकस्य गुणस्य न्यूनतां परिकल्प्यावशिष्टगुणेषु साम्यप्रदर्शनं विशेषोक्तिर्विद्यते।

(v) अलङ्कारविषये वामनेन स्वकीयं स्वतन्त्रं मतं प्रदर्शितम्। तेन प्रोक्तम् - "उपमैव मुख्यालङ्कारः"। अन्ये च सर्वेऽलङ्कारा उपमाया एव प्रपञ्चाः।[4]

(vi) आक्षेपस्य वामनेन द्वौ भेदौ प्रदर्शितौ -

**(क) उपमानस्याऽऽक्षेपः प्रतिषेधस्तुल्यकार्यस्य नैरर्थ्यविवक्षायामाक्षेपः।**

**(ख) उपमानस्याऽऽक्षेपतः प्रतिपत्तिरित्यपि सूत्रार्थः।**

उत्तरवर्तिनो मम्मटादय आचार्या अत्र प्रथमं प्रतीपालङ्कारं द्वितीयञ्च समासोक्त्यलङ्कारं प्रतिपादयन्ति।

(vii) काव्ये रसस्थितिं प्रतिपाद्याऽपि वामनस्तं रसं न तथा महत्त्वशालिनमकथयत्। वामनपूर्ववर्तिभिराचार्यैः रसादीनां ग्रहणं रसवदाद्यलङ्कारेषु कृतं, परं वामनेन रसस्य समन्वितिः कान्त्यभिधानेऽर्थगुणे विहिता।[5]

---

१. काव्यशोभायाः कर्तारो धर्माः गुणाः। तदतिशयहेतवस्त्वलङ्काराः। काव्यालङ्कारसूत्र ३.२.१-२
२. काव्यालङ्कारसूत्र ४.३.८।। ३. काव्यालङ्कारसूत्र ४.३.२३
४. प्रतिवस्तुप्रभृतिरुपमामात्रप्रपञ्चः। काव्यालङ्कारसूत्र ४.३.१
५. दीप्तरसत्वं कान्तिः। दीप्ता रसाः शृङ्गारादयो यस्य सः दीप्तरसः।
तस्य भावो दीप्तरसत्वं कान्तिः। काव्यालङ्कारसूत्र ३.२.१५ वृत्तिश्च

एकादशोऽध्याय:

# रुद्रट:

## १. रुद्रटस्य महत्त्वम्

संस्कृतकाव्यशास्त्रस्येतिहासे रुद्रटेन परा प्रसिद्धिरधिगता। रुद्रट: प्रथम आचार्योऽवर्तत, योऽलङ्काराणां वैज्ञानिकवर्गीकरणं विधाय तेषां नियतश्रेणीषु विभागञ्चकार। तेनाऽनेकेऽलङ्कारा: नवा अप्युद्भाविता:। काव्यशास्त्रस्येतिहासे तेन यद्यपि भरतभामहदण्डिवामनसदृशं सम्मानं नाऽधिगतं, तथाप्यलङ्कारवादिनां ध्वनिवादिनाञ्च मध्यवर्तीव संयोजकरूपेणाऽसौ दरीदृश्यते। परं प्रधानतोऽसौ ह्यलङ्कारवादी शास्त्रकार: प्रतिभाति। रससिद्धान्तपरिचितोऽपि काव्येषु च रसस्याऽनिवार्यत्वप्रतिपादकोऽप्यसौ[1] काव्यसौन्दर्यमाधातुमलङ्काराणामनिवार्यत्वमपि मेने।

## २. रुद्रटस्य स्थानं समयश्च

प्राचीनसंस्कृतलेखकैरन्यैरिव रुद्रटेनाऽपि स्वजीवनवृत्तसमयादिपरिचयविषयकं किञ्चिदपि न सूचितम्। रुद्रट इत्यभिधानमभिलक्ष्य समीक्षकैरसौ काश्मीरवास्तव्योऽनुमीयते। परन्त्वत्र न किमप्यन्यत् प्रमाणमस्ति।

रुद्रटकृतकाव्यालङ्कारस्य टीकाकारेण नमिसाधुनाऽपि रुद्रटस्य जीवनवृत्तविषये किञ्चिदपि न सूचितम्। तथापि काव्यालङ्कारस्य पञ्चमाध्यायस्य १४-१५ कारिकयोष्टीकाया-मसौ श्लोकमेकं लिलेख[2], येन रुद्रटस्य पितुर्नाम "भट्टवामुक" इति विज्ञायते। सामवेदी ब्राह्मणोऽयं शतानन्द इति द्वितीयेन नाम्नाऽपि प्रसिद्धोऽवर्तत।

ग्रन्थारम्भे रुद्रटो गौरीगणेशौ ग्रन्थसमाप्तौ च भवानीमुरारिगजाननान् ववन्दे।[3] एतेनाऽयं शैवमतावलम्बी सामाजिकैरनुमीयते। परं स्तुतिपरकपद्यान्याश्रित्यैवैतन्निश्चयं कर्तुं नोचितम्। मुरारिवन्दनेन तस्य विष्णुभक्तिरपि सिद्धा।

---

१. तस्मात् कर्तव्यं यत्नेन महीयसा रसैर्युक्तम्। काव्यालङ्कार १२.२

२. अत्र च न चक्रे स्वनामाङ्कभूतोऽयं श्लोक: कविनाऽन्तर्भावितो यथा-
शतानन्दपराख्येन भट्टवामुकसूनुना।
साधितं रुद्रटेनेदं सामाजा धीमता हितम्।।
रुद्रट - काव्यालङ्कारे ५.१४-१५ नमिसाधुकृतटीका

३. रुद्रट - काव्यालङ्कार १.१ तथा १६.४२

बाह्यप्रमाणान्याश्रित्य रुद्रटसमयनिर्धारणप्रयासः समुचितः। ततः कश्चिदपि निश्चयो निर्णयो वाऽत्र विधातुं शक्यः। अलङ्काराणां साङ्गोपाङ्गवैज्ञानिकं समीक्षणं रुद्रटेन यथा कृतं तेनाऽसौ भामहदण्डिवामनोद्भटपरवर्ती ह्यनुमीयते।

काव्यालङ्कारे रुद्रटेन पञ्चशब्दालङ्काराणां सप्तपञ्चाशदर्थालङ्काराणां च निरूपणं विहितम्। रुद्रटप्रोक्तेषु ह्यर्थालङ्कारेषु षड्विंशत्यलङ्कारा एव प्राचीनैराचार्यैर्निरूपिताः। अत एकत्रिंशदलङ्काराणामुद्भावना (५६-२६-=३१) विवेचनञ्च प्रथमं रुद्रटकृतमेवाऽस्ति। एतेषामलङ्काराणामुद्भावना मम्मटेन कृता, अन्येन वा केनचिदाचार्येणेति विवादास्पदो विषयः। तथापि भामहदण्डिवामनोद्भटपश्चाद्वर्तित्वं रुद्रटस्य सिद्धमेव। रुद्रटस्य समयसम्बन्धे निम्नयुक्तयोऽवधेयाः -

(i) शिशुपालवधटीकाकारो बल्लभदेवोऽसूचयद् यत्तेन रुद्रटप्रणीतस्यैकस्या-ऽलङ्कारग्रन्थस्य टीकाऽपि लिखिता। उद्भटकृताऽलङ्कारसारसङ्ग्रहटीकाकारेण प्रतिहारेन्दुराजेन स्वटीकायां रुद्रटकृताः काश्चन कारिका उल्लिखिताः। द्वावेवैतौ दशमशताब्दि (ई०) पूर्वार्द्धकालीनौ विज्ञायेते। अतो रुद्रटस्य समयस्तत्पूर्वकोऽवधेयः।

(ii) राजशेखरेण काव्यमीमांसायां रुद्रटस्य मतं वक्रोक्तिविषये समुद्धृतम्।[1] राजशेखरो दशमशताब्दि (ई०) पूर्वार्द्धकालीनो गण्यते। अतो रुद्रटस्तत्पूर्ववर्ती ह्यवगन्तव्यः।

(iii) दशरूपकस्य धनिकटीकायां ४.२५ कारिकायाः व्याख्याने रुद्रटकृतकाव्याल-ङ्कारस्य कारिका (१२.४) उद्धृता वर्तते। लोचनकारोऽभिनवगुप्तोऽपि रुद्रटकृतभावलक्षण-(काव्यालङ्कार ७.३८) मुदाहरणसहितमलिखत्। मम्मटाचार्यः काव्यप्रकाशे रुद्रटस्य हेतुव्यतिरेकसमुच्चयालङ्कारविषयकमतमखण्डयत्। अनेन सुस्पष्टमेतद् यद् रुद्रटो न वर्तते नवमशताब्दि (ई०) पश्चाद्वर्ती, अपितु पूर्ववर्त्यैवाऽवर्तत।

(iv) सुप्रसिद्धसमालोचकेनानन्दवर्धनेन रुद्रटस्य कस्यचित् सिद्धान्तस्य तु नोल्लेखो विहितो नाऽपि च खण्डनं कृतम्। यद्यानन्दवर्धनो रुद्रटात् पूर्ववर्त्यभविष्यन्नूनं रुद्रटस्तेन प्रभावितोऽभविष्यत्। यदि च रुद्रट आनन्दवर्धनात् पूर्ववर्त्यवर्तिष्यत, आनन्दवर्धनो नूनं तस्योल्लेखमकरिष्यत्। अनेन प्रतीयते यद् रुद्रटानन्दवर्धनौ द्वावेव समकालीनावास्ताम्। आनन्दवर्धनस्य समयो नवमशताब्दि (ई०) मध्यवर्ती गण्यते, अतो रुद्रटस्याऽयमेव समयो निर्धारणीयः।

### ३. रुद्रटस्य कृतयः

रुद्रटस्य केवलमेकैव कृतिरुपलभ्यते - काव्यालङ्कारः। काव्यसमालोचनादृष्ट्या सर्वाङ्गपूर्णोऽयं ग्रन्थोऽतिमहत्त्वं भजते। रुद्रटस्य ध्वनिसिद्धान्तस्याऽपरिचितत्वादत्र ध्वनिगुणी-भूतव्यङ्ग्यादीनामपि निरूपणं नाऽस्ति।

---

१. काकुवक्रोक्तिर्नाम शब्दालङ्कारोऽयमिति रुद्रटः। काव्यमीमांसा अध्याय ७ पृ० ३१

षोडशेष्वध्यायेषु विभक्ते रुद्रटकृतकाव्यालङ्कारेऽष्टाविंशत्यधिकशतसप्तक (७२८) पद्यान्यार्याछन्दसि निबद्धानि वर्तन्ते। अध्यायेष्वेतेषु विषयप्रतिपादनं निम्नप्रकारेण वर्तते -

(i) **प्रथमोऽध्यायः -**

अध्यायेऽस्मिन् द्वाविंशतिपद्यानि वर्तन्ते। मङ्गलाचरणानन्तरं काव्यप्रयोजनानां काव्यहेतूनाञ्च निरूपणमस्ति। काव्यरचनायास्त्रयोऽनिवार्याः हेतवः - शक्तिर्व्युत्पत्तिरभ्यासश्च। तदनन्तरं कविमहिमा कविना निगदितः।

(ii) **द्वितीयोऽध्यायः -**

अध्यायेऽस्मिन् द्वात्रिंशत्पद्यानि सन्ति। अत्र प्रथमं काव्यलक्षणं, तदनन्तरञ्च शब्दस्य पञ्च भेदा रुद्रटेन निर्दिष्टाः। अथ वृत्तिमाश्रित्य चतसृणां वैदर्भीपाञ्चालीलाटीगौडीनां रीतीनां विवेचनमस्ति। वैदर्भीरीतिरसमासा, पाञ्चालीलाटीगौडीरीतयश्च ससमासाः प्रोक्ताः। तदनन्तरञ्च वाक्यस्य वाक्यभेदानाञ्च निरूपणं कृत्वाऽऽचार्यो वक्रोक्त्यनुप्रासालङ्कारयोर्विस्तृतं विवेचनमकरोत्।

(iii) **तृतीयोऽध्यायः -**

तृतीयाध्यायस्यैकोनषष्टिपद्येषु यमकालङ्कारस्य विशदव्याख्या लेखकेन कृता।

(iv) **चतुर्थोऽध्यायः -**

चतुर्थाऽध्यायस्य पञ्चत्रिंशत्पद्येषु श्लेषालङ्कारस्य निरूपणमस्ति।

(v) **पञ्चमोऽध्यायः -**

पञ्चमेऽध्याये त्रयस्त्रिंशत् पद्यानि वर्तन्ते। अत्र विभिन्नानाञ्चित्रालङ्काराणां चक्रबन्धखड्गबन्धसर्वतोभद्रपद्मबन्धमात्राच्युतकबिन्दुच्युतकप्रहेलिकादीनां स्वरूपं रुद्रटेन व्याख्यातम्।

(vi) **षष्ठोऽध्यायः -**

दोषनिरूपणात्मके षष्ठेऽध्याये सप्तचत्वारिंशत्पद्यानि वर्तन्ते। अत्र लेखकेन पदवाक्यगताः दोषाः प्रोक्ताः।

(vii) **सप्तमोऽध्यायः -**

सप्तमेऽध्याय एकादशोत्तरशतैकपद्यानि (१११) सन्ति। अत्र प्रथममर्थलक्षणमुक्त्वा वाचकशब्दभेदानां वर्गीकरणं रुद्रटः कृतवान्। तदनन्तरमर्थालङ्काराणां वर्गीकरणं तेन कृतम्। अलङ्कारास्तेन चतुर्षु वर्गेषु विभक्ताः - वास्तवौपम्यातिशयश्लेषवर्गाः। अथाऽस्मिन्नध्याये वास्तववर्गस्य त्रयोविंशत्यलङ्काराणां स्वरूपं व्याख्यातम्।

**(viii) अष्टमोऽध्यायः -**

दशोत्तरशतैकपद्यात्मके (११०) ऽस्मिन्नध्याये वर्गस्यौपम्यस्यैकविंशत्यलङ्काराणां विवेचनमस्ति।

**(ix) नवमोऽध्यायः -**

पञ्चपञ्चाशत्पद्यात्मकेऽस्मिन्नध्यायेऽतिशयवर्गस्य द्वादशालङ्काराणां निरूपणं विद्यते।

**(x) दशमोऽध्यायः -**

एकोनत्रिंशत्पद्यपरिमिते दशमेऽध्यायेऽर्थश्लेषस्य दशभेदानुक्त्वा रुद्रटः सङ्करालङ्कारस्य द्वौ भेदौ जगाद।

**(xi) एकादशोऽध्यायः -**

षट्त्रिंशत्पद्यपरिमितेऽध्यायेऽस्मिन्नर्थदोषाणां नव भेदा उपमायाश्च चत्वारो भेदाः रुद्रटेन वर्णिताः।

**(xii) द्वादशोऽध्यायः -**

अध्यायेऽस्मिन् सप्तचत्वारिंशत् कारिकाः सन्तिः। अत्र प्रथमं रुद्रटः काव्यप्रयोजनमुक्त्वा काव्ये रसस्याऽनिवार्यत्वं प्रत्यापादयत्। तदनन्तरं रसस्य दशभेदान् निगद्य शृङ्गारञ्च विस्तरेण निरूप्य नायिकाभेदान् प्रोवाच।

**(xiii) त्रयोदशोऽध्यायः -**

सप्तदशश्लोकात्मके त्रयोदशेऽध्याये लेखकेन प्रथमं सम्भोगशृङ्गारस्य स्वरूपं प्रोक्तम्। तदनन्तरं स्त्रीणां विविधदशानां चेष्टानाञ्च वर्णनं कृतम्। अथ नायकाय शिक्षा प्रदत्ता।

**(xiv) चतुर्दशोऽध्यायः -**

द्वात्रिंशत्पद्यपरिमिते चतुर्दशेऽध्याये रुद्रटो विप्रलम्भशृङ्गारस्य विवेचनं कृत्वा तस्य द्वौ भेदावनुरागमानौ न्यरूपयत्। तदनन्तरं विप्रलम्भशृङ्गारस्य दश दशा उक्त्वा खण्डितनायिकायाः प्रसादनोपायानसौ जगाद।

**(xv) पञ्चदशोऽध्यायः -**

एकविंशतिश्लोकात्मके पञ्चदशेऽध्यायेऽन्येषां रसानां निरूपणमस्ति।

**(xvi) षोडशोऽध्यायः -**

अस्मिन्नध्याये द्वाचत्वारिंशत्पद्यानि वर्तन्ते। अत्र प्रबन्धकाव्यस्य मुख्यभेदानां महाकाव्यमहाकथाऽऽख्यायिकालघुकाव्यानामन्येषाञ्च भेदानां सामान्यचर्चा विद्यते। ग्रन्थसमाप्त्यवसरे काव्यगतवर्णनेषु निषिद्धतत्त्वानि वर्णयित्वा रुद्रटः देववन्दनञ्चकार।

एवं रुद्रटकृतकाव्यालङ्कारे षोडशाध्यायात्मकेऽष्टाविंशत्यधिकसप्तशतश्लोकपरिमिते सर्वाण्येव प्रायशः काव्याङ्गानि वर्णितानि सन्ति। परमत्र गुणनिरूपणाभावो विस्मयजनको वर्तत एव।

### ४. काव्यालङ्कारस्य प्राचीनटीकाः

रुद्रटकृतकाव्यालङ्कारस्याऽनेकाः प्राचीनटीकाः काव्यशास्त्रविद्भिर्लिखिताः। तत्र प्राचीन-टीकानां तिसृणां परिचयो लभ्यते, परं न ताः सर्वा एव समुपलभ्यन्तेः। केवलं नमिसाधुकृतटीकैव प्राप्यते।

**(i) नभिसाधुकृतटीका –**

काव्यालङ्कारस्य टीकेयं प्रसिद्धतमा वर्तमानसमये समुपलभ्यते। शालिभद्रस्य शिष्यो नमिसाधुः श्वेताम्बरजैनमतावलम्बी ह्यासीत्। तेनेयं टीका ११२५ वैक्रमाब्दे (१०६८-६९ई०) लिखिता।[१]

नभिसाधुकृतटीकेयं सरला संक्षिप्ता विषयानुकूला च वर्तते। नाऽसौ स्वात्मानं केनचिदपि सम्प्रदायविशेषेण सम्बद्धञ्चकार। सर्वेष्वेव स्थलेष्वसौ रुद्रटमेव समर्थयामास।

काव्यालङ्कारग्रन्थस्याभिप्रायसमवबोधने नमिसाधुकृतटीका यथार्थं साहाय्यं विदधाति। असौ वर्ण्यविषयं सुविशदं सुस्पष्टञ्चकार। नमिसाधुना स्वटीकायामनेके प्राचीनाचार्या रचनाश्चोल्लिखिताः। अत्र भरतमेधाविरुद्रदण्डिवामनोद्भटादीनां समादरणीयानां काव्यशास्त्रिणां वर्णनानि सन्ति। अथ च कादम्बरीकिरातार्जुनीयतिलकमञ्जरीपातालविजयमालतीमाधव-मृच्छकटिकमेघदूतरत्नावलीवेणीसंहारशिशुपालवधहर्षचरितादीनां काव्यानामुल्लेखा अपि वर्तन्ते।

**(ii) बल्लभदेवकृतटीका –**

शिशुपालवधटीकाकारेण बल्लभदेवेन महाकाव्यस्याऽस्य श्लोकस्य (४.११) ह्येकस्य व्याख्यां कुर्वता सङ्केतितं यत्तेन रुद्रटकृतग्रन्थस्याऽपि टीका लिखिता। सम्भवतष्टीकेयं रुद्रटालङ्काराभिधानाऽवर्तत। रुद्रटकृतकाव्यालङ्कारस्य प्राचीनतमेयं टीका वर्तमानसमये-ऽलभ्यैव।

बल्लभदेवस्य पौत्रेण कैयटेनाऽऽनन्दवर्धनकृतदेवीशतकस्य टीका विरचिता। तस्मिन् समये कश्मीरजनपदं नरपतिर्भीमदेवोऽशासत् (९७७ ई०)। अतो बल्लभदेवस्य समयस्तत्पञ्चाशद्वर्षपूर्वकोऽनुमातुं (९२७ ई०) शक्यः।

---

१. पञ्चविंशतिसंयुक्तैरेकादशसमाशतैः।
विक्रमात् समतिक्रान्तैः प्रावृषीदं समर्थितम्।।

रुद्रटकृतकाव्यालङ्कारस्य नमिसाधुकृतटीकाया अन्तिमः श्लोकः

बल्लभदेवेन निजान्यन्नामाऽपि सूचितम्ः - परमार्थदेवः । तस्य जनको राजानका-ऽऽनन्ददेवः समवर्तत। बल्लभदेवेन कालिदासमाघमयूररत्नाकरकृतग्रन्थानामपि टीकाः लिखिताः ।

(iii) आशाधरकृतटीका -

आशाधरेणाऽपि रुद्रटकृतकाव्यालङ्कारमधिकृत्य टीकैका लिखिता। परन्तु नेयं वर्तमानसमये समुपलभ्यते। जैनाचार्यस्याऽऽशाधरस्य समयः ख्रिष्टस्य त्रयोदशशताब्द्याः मध्यभागोऽवर्तत।

## ५. रुद्रटकृतकाव्यालङ्कारस्य वैशिष्ट्यम्

अलङ्कारसम्प्रदायाचार्येण रुद्रटेन सर्वाण्येव काव्याङ्गानि निरूपितानि। रससिद्धान्तेना-ऽप्यसौ परिचितोऽवर्तत। रसानामसौ सम्यग्विवेचनञ्चकार, काव्ये च रसानामनिवार्यस्थितिमपि प्रत्यापादयत्।[1] पूर्ववर्त्याचार्यापेक्षातोऽसौ ह्यलङ्कारशास्त्रं विकसिततरञ्चकार। रुद्रटस्य वैशिष्ट्यं निम्नप्रकारेण वर्ण्यते -

(i) रुद्रटः प्रथमाचार्यो योऽलङ्काराणां वर्गीकरणास्याऽऽधारं प्रास्तौत्। अलङ्कारास्तेन चतुर्षु वर्गेषु विभक्ताः - वास्तवौपम्यातिशयश्लेषाः। अत्र वास्तववर्गे त्रयोविंशतिः, औपम्यवर्ग एकविंशतिः, अतिशयवर्गे द्वादश, श्लेषवर्गे चैक एवाऽलङ्कारो गण्यते। एवं तेन सप्तपञ्चाशदलङ्काराः परिगणिताः।

अत्र केषाञ्चिदलङ्काराणां गणना ह्येकाधिकवर्गेषु संलक्ष्यते। यथा - उत्तरसमुच्चया-लङ्कारौ वास्तववर्गेऽपि स्त औपम्यवर्गेऽपि। उत्प्रेक्षालङ्कार औपम्यवर्गेऽपि वर्तते, अतिशयवर्गेऽप्यस्ति। विषमालङ्कारस्य गणना वास्तववर्गेऽप्यस्त्यतिशयवर्गेऽपि वर्तते। एवञ्चतुर्णामलङ्काराणां द्विवर्गपरिगणनत्वादलङ्काराणां संख्या त्रिपञ्चाशत्संख्यापरिमिता भवति। परन्तु चतुर्णमितेषामलङ्काराणां लक्षणान्युदाहरणानि च विभिन्नेषु वर्गेषु भिन्नान्येव वर्तन्ते। अतस्ते पृथक्पृथगलङ्कारा एवाऽवगन्तव्याः। एवञ्चाऽत्राऽलङ्कारसंख्या सप्तपञ्चाशदेव भवति।

(ii) रुद्रटेन काव्यालङ्कारे नूतनालङ्कारा एकत्रिंशदुद्भाविताः, येषां विवेचनं पूर्ववर्तिषु काव्यशास्त्रग्रन्थेषु नोपलभ्यते। एतेषामलङ्काराणां रुद्रटेनैवोद्भावना कृतेति स्वीकर्तुं वर्तमानकालीनाः केचन समीक्षकाः सङ्कोचमावहन्ति। तथापि सम्भावनैषा स्वीकरणीयैव, यदाचार्यो रुद्रटः कस्यचित्प्रभूतस्याऽऽचार्यस्य परम्परया सम्बद्धोऽवर्तत, योऽलङ्काराणां विकासेऽतिगौरवमादधाति स्म।

(iii) रुद्रटेन केचन प्राचीनाऽलङ्काराः नवीनरूपेण प्रस्तुताः। वामनो यमलङ्कारं व्याजस्तुतिमाचष्टे, रुद्रटस्तमेव व्याजश्लेषमाह। रुद्रटस्याऽवसरोऽलङ्कारो मम्मटेनोद्भटेन

---

१. तस्मात्तत् कर्तव्यं यत्नेन महीयसा रसैर्युक्तम्।
उद्वेजनमेतेषां शास्त्रवदेवाऽन्यथा हि स्यात्।। काव्यालङ्कार १२.२

चोदात्त उदाहृत:। अथ च तस्य जात्यलङ्कारो दण्डिना मम्मटेन च स्वभावोक्ति: प्रोक्त:। एवञ्च पूर्वाभिधानोऽलङ्कारोऽतिशयोक्त्याश्चतुर्थो भेद: प्रतिपादित:।

(iv) रुद्रट: श्लेषालङ्कारस्य पृथगेव वर्गं प्रत्यापादयत्। अस्मिन् वर्गेऽत्र केवलं श्लेषालङ्कार एवैको विद्यते। श्लेषालङ्कारस्य दश भेदा: सन्ति। एतेषु केचन भेदा उत्तरवर्तिनि काले स्वतन्त्रा एवाऽलङ्कारा: काव्यशास्त्रिभि: प्रतिपादिता:।.

(v) रसनिरूपणेऽपि रुद्रटेन प्राचीनाचार्याणामनुकरणं न कृतम्। रसस्तेन न रसवदलङ्कार: प्रोक्त:। रसमसौ स्वतन्त्ररूपेण न्यरूपयत्। रस: काव्यस्याऽनिवार्यं तत्त्वमस्ति। कविना रसनिवेशने सदा प्रयत्नपरेण भाव्यम्। प्राचीनाचार्यै: नव रसा: निरूपिता: - शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतशान्ता:। परन्तु रुद्रटेन दशमो रस: प्रेयानपि प्रोक्त:। तस्याऽसौ स्वरूपं लक्षणञ्च व्याचख्यौ।

(vi) रुद्रटेन गुणविवेचनं न कृतम्।

(vii) रुद्रटो दोषान् सविशदं न्यरूपयत्। दोषाणां विवेचना काव्यालङ्कारे द्वयो: स्थानयोर्वर्तते - षष्ठेऽध्याये पदवाक्यगता: दोषा: सन्ति। अथ चैकादशेऽध्याये-ऽर्थगतानामुपमागतानाञ्च दोषाणां वर्णनमस्ति। रुद्रटेन केषाञ्चित्तथाविधानामपि दोषाणां गणना कृता, येषां वर्णनं प्राचीनाचार्यैर्न विहितम्। यथा -

**असमर्थदेश्यसङ्कीर्णगर्भितगतार्थनिरागमबाधपत्नसम्बद्धविरसतद्वानतिमात्रन्यूनाधिकपदताऽपुष्टार्थताऽचारुपदताश्च"।**

(viii) रीतीनां विशेषमहत्त्वं न रुद्रटेन यद्यपि प्रदर्शितं, तथापि तासां वर्णनं तु कृतमेव। काव्ये समासमाश्रित्य तासां स्थितिर्विद्यते। तिस्रो रीतय: ससमासा वर्तन्ते - गौडी लाटी पाञ्चाली च। वैदर्भी रीतिरेका समासरहिता वर्तते। वामनेन रीतित्रयं प्रोक्तम् - वैदर्भी, गौडी पाञ्चाली च। परं रुद्रटेन लाटीति चतुर्थी रीतिरपि कथिता। एवञ्च तस्य मते चतस्रो रीतयो वर्तन्ते।

(ix) भावालङ्कारप्रतिपादने रुद्रटो व्यङ्ग्यार्थप्रतिपादनसामीप्यं प्राप्नोत्। भावालङ्कारस्य द्वौ भेदावसौ सोदाहरणौ प्रोवाच। तत्रैकस्योदाहरणमुत्तरवर्तिभिराचार्यैर्गुणीभूतव्यङ्ग्यकाव्यस्योदाहरणं प्रोक्तम्। द्वितीयञ्च ध्वनिकाव्यमुक्तम्। रुद्रटस्य भावालङ्कारस्य निम्नलिखितमुदाहरणमुत्तरवर्तिभिर्ध्वनिवादिभिर्गुणीभूतव्यङ्ग्यस्योदाहरणरूपेण प्रस्तूयते -

**ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।**
**पश्यन्त्या भवति नितरां मलिना मुखच्छाया।। काव्यालंकार ७.३८**

भावालङ्कारस्य निम्नलिखितमुदाहरणं ध्वनिकाव्यस्योदाहरणरूपेण ध्वनिवादिभि: प्रस्तूयते -

एकाकिनी यदबला तरुणी तथाऽह-
मस्मिन् गृहे गृहपतिश्च गतो विदेशम्।
किं याचसे तदिह वासमियं वराकी
श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ।।

काव्यालङ्कार ७.४०

(x) रुद्रटेन नायिकाभेदानां विशदं सुविस्तृतं विवेचनं कृतम्। वर्णनञ्चेदमुत्तरवर्ति-साहित्यं विशेषेण प्रभावितञ्चकार। दशरूपकसाहित्यदर्पणादिग्रन्थेषु निरूपितो नायिकाभेदो रुद्रटेनाऽतितरां प्रभावितो लक्ष्यते।

## १. रुद्रभट्टो रुद्रटश्च

शृङ्गारतिलककृतो रुद्रभट्टस्य काव्यालङ्कारकर्तुश्च रुद्रटस्य व्यक्तित्वमभिन्नं भिन्नं वेति मतभेदो विवादश्च समीक्षकेष्ववर्चीनेषु चिरकालादेव प्रावर्तत। परन्त्वधुना समीक्षकैरधिकसंख्यकैस्तयोर्भिन्नत्वं पृथग्व्यक्तित्वञ्चाऽङ्गीकृतमेव। रुद्रभट्टस्य रुद्रटस्य च व्यक्तित्वस्यैकत्वभिन्नत्वविषये मतिभ्रमः प्राचीनकालेऽप्यवर्तत।

जह्लणेन सूक्तावल्यां (१२५८ तमे खिष्टाब्दे सङ्कलिता) काव्यालङ्कारशृङ्गारतिलक-योर्द्वयोरेव ग्रन्थयोः सुभाषितानां सङ्ग्रहो विहितः। अथ च ग्रन्थकर्तुनाम रुद्र इति लिखितम्। परं सदुक्तिकर्णामृतग्रन्थे श्रीधरदासेन (१२०५ ई०) शृङ्गारतिलकादुद्धृतानां सूक्तीनां रचयिता रुद्रटः प्रोक्तः। भावप्रकाशनेऽपि शृङ्गारतिलकादुद्धृताः श्लोकाः रुद्रटकृताः वर्णिताः।[१] परन्तु वर्तमानकालीनैः समीक्षकैस्तर्कमाश्रित्य द्वयोरेवालङ्कारशास्त्राचार्ययोः रुद्रभट्टरुद्रटयो-र्व्यक्तित्वं भिन्नमेव प्रतिपाद्यते। तत्र युक्तीनां प्रदर्शनमधो विधीयते -

(i) काव्यसमालोचनासिद्धान्तविषये द्वयोरेवाऽऽचार्ययोर्मतवैभिन्न्यं सुस्पष्टं लक्ष्यते। रुद्रटो मुख्यरूपेणाऽलङ्कारसम्प्रदायस्याऽऽचार्यो वर्तते। काव्यालङ्कारे रसान्निरूप्याऽप्य-सावलङ्कारानेव प्राधान्येन संस्थाप्य तेषां विस्तृतविवेचनाञ्चकार। परन्तु रुद्रभट्टस्य समालोचनाविषयो प्राधान्येन रसो वर्तते। तत्राऽपि च शृङ्गारो रसः।

(ii) रुद्रभट्टकृतशृङ्गारतिलकस्य विषयवस्तु काव्यालङ्कारविषयवस्तुना (१२-१४ अध्यायाः) प्रचुरं साम्यं दधाति। न केवलं विषयसाम्यमत्र वर्तते, शब्दानामपि साम्यं लक्ष्यते। एकेनैवाऽऽचार्येण समानविषयवस्तुशब्दयुतयोर्द्वयोः काव्यशास्त्रग्रन्थयोर्विरचने न किमप्यौचित्यं वर्तते।

(iii) रुद्रभट्टस्य रुद्रटस्य च विषयप्रतिपादनपद्धतिरपि भिद्यते। रुद्रभट्टेन नवरसाः प्रोक्ताः, परं रुद्रटो दश रसान् प्रोवाच।

---

१. साधारणस्त्री गणिका सां वित्तं गुणिन्यपि
शृङ्गाराभास एव स्यान्न शृङ्गारः कदाचन।
इति द्विषन्तमुद्दिश्य प्राह श्रीरुद्रटः कविः।। भावप्रकाशन पृ० ९५

(iv) रुद्रभट्टो रसाभिव्यक्त्युपयोगिकैशिक्यादिवृत्तीनां चतसृणां विवेचनं शृङ्गारतिलके कृतवान्। ताः वृत्तयोऽसौ नाट्यक्षेत्रादेव समानयत्। रुद्रटेन रसोपयोगिनीनामेतासां कैशिक्यादीनां वृत्तीनां वर्णनं न कृतं, परं मधुरादिपञ्चवृत्तीनां निरूपणं विहितम्। तास्तु वृत्तयोऽनुप्रासालङ्कारस्यैव विभिन्नरूपाणि धारयन्त्योऽर्थोपयोगिन्यो वर्तन्ते। परन्तु रुद्रभट्टः कैशिक्यादीनां वृत्तीनां शृङ्गारोपयोगिनीनां वर्णनं कृत्वा मधुराललितावैदर्भीपाञ्चाल्यश्च प्रास्तौत्।

(v) रुद्रटकृते रुद्रभट्टकृते च नायिकाभेदवर्णनेऽपि महद् विभिन्नत्वं संलक्ष्यते। रुद्रटेन प्रथमं स्वीया परकीया वेश्या चेति नायिकानां त्रयो भेदा प्रदर्शिताः। तदनन्तरमसौ स्वाधीनपतिका, प्रोषितभर्तृका चेति द्वौ भेदौ प्रादर्शयत्। वेश्या च तेन द्वयोः श्लोकयोर्वर्णिता तिरस्कृता च। परं रुद्रटेन नायिकानामष्टौ भेदाः प्रोक्ताः। वेश्यानां दोषान् स्वीकृत्याऽप्यसौ तासां विस्तरेण वर्णनं सप्रशंसनसमर्थनञ्चकार।[1]

नामसाम्यात् प्रतिपाद्यवस्तुसाम्याच्च द्वयोरेतयोराचार्ययोर्भिन्नत्वाभिन्नत्वसम्बन्धे मतिभ्रमः स्वाभाविक एव। तथ्यमिदमप्यवधेयं यत् ख्रिष्टस्य नवमशताब्द्यनन्तरं सर्वैरेवाऽऽचार्यैः राजशेखरप्रतिहारेन्दुराजबल्लभदेवधनिकाभिनवगुप्तनमिसाधुमम्मटप्रभृतिभिः काव्यालङ्कारस्य कर्ता रुद्रटः प्रोक्तो न तु रुद्रभट्टः। अतो रुद्रभट्टस्य रुद्रटस्य च व्यक्तित्वं भिन्नमेवाऽवगन्तव्यं न त्वभिन्नम्। इत्येव युक्तिसङ्गतम्।

## २. रुद्रभट्टस्य समयः

रुद्रभट्टस्य समयविवेचने नाऽधिकतर्कवितर्कस्याऽऽवश्यता। रुद्रभट्टो रुद्रटपरवर्तीति निश्चयो, यतः काव्यालङ्कारस्य १२-१४ अध्यायानां प्रभावः शृङ्गारतिलकरचनायां सुस्पष्टं लक्ष्यते। रुद्रभट्टकृतशृङ्गारतिलकस्योल्लेखं प्रथमं हेमचन्द्रो व्यदधाद्, यद्यप्यसौ न लेखकस्य नामोल्लेखञ्चकार। शृङ्गारतिलकस्य द्वे पद्ये (१.४, १.६८) तेनोदाहरणरूपेण प्रस्तुते। अथ च मङ्गलाचरणश्लोकमुद्धृत्य तत्र दोषा अपि प्रदर्शिताः। अतो रुद्रभट्टो निश्चयेन हेमचन्द्रपूर्ववर्ती ह्यवगन्तव्यः। हेमचन्द्रस्य समगः १०८८-११७२ (ई०) गण्यते। अतो रुद्रभट्टस्य समयोऽपि ९५०-११०० ख्रिष्टाब्दमध्यवर्ती मन्तव्यः।

विश्वनाथेनाऽपि रुद्रभट्ट उल्लिखितः : अथ च धनिकेन दशरूपकटीकायां रुद्रनाम्ना

---

१. सर्वाङ्गना तु वेश्या सन्यगसौ लिप्सते धनं कामात्।
निर्गुणगुणिनोस्तस्याः न द्वेष्यो न प्रियः कश्चित्।। काव्यालङ्कार १२.३९
सामान्यवनिता वेश्या सा वित्तं परमिच्छति।
निर्गुणेऽपि न विद्वेषो न रागोऽस्याः गुणिन्यपि।।
तत्स्वरूपमिदं प्रोक्तं कैश्चिद् ब्रूमो वयं पुनः।। शृङ्गारतिलक १.६२-६३।।

श्लोकैक उद्धृतः।[1] प्रतापरुद्रयशोभूषणग्रन्थे रुद्रभट्टनाम्ना द्वौ श्लोकावुद्धृतावुपलभ्येते, परं न तौ श्लोकौ शृङ्गारतिलके वर्तेते।

### ३. रुद्रभट्टस्य कृतयः

रुद्रभट्टस्यैकैव कृतिर्लभ्यते शृङ्गारतिलकम्। परं तिलकमञ्जरीकृता धनपालेन लिखितम् - रुद्रभट्टेन त्रैलोक्यसुन्दरीति कथाऽपि विरचिता।[2] परं कथा सा वर्तमानसमयेऽलभ्यैव। त्रैलोक्यसुन्दरीकथालेखकः शृङ्गारतिलकलेखक एव रुद्रभट्ट इत्यत्राऽपि न निश्चयः। त्रिपरिच्छेदात्मके शृङ्गारतिलके रसानां, विशेषतः शृङ्गाररसस्य निरूपणमस्ति। अस्य ग्रन्थस्य विषयवस्तु निम्नवद् वर्तते -

(i) **प्रथमः परिच्छेदः -**

प्रथमे परिच्छेदे नवरसानां भावादीनां नायकनायिकाभेदानाञ्च वर्णनानि वर्तन्ते।

(ii) **द्वितीयः परिच्छेदः -**

द्वितीये परिच्छेदे विप्रलम्भशृङ्गाररसस्य विशदं विवेचनमस्ति।

(iii) तृतीयः परिच्छेदः

तृतीये परिच्छेदेऽन्यरसानां रसोपयोगिनीनाञ्च कैशिक्यादिवृत्तीनां निरूपणं लेखकेन कृतम्।

शृङ्गारतिलकस्याऽध्ययनेन सुस्पष्टं सुनिश्चितमेव यद् रुद्रभट्टो रुद्रटस्य काव्यालङ्कारेणाऽतितरां प्रभावितोऽवर्तत। यद्यप्यनेकेषु प्रसङ्गेषु रुद्रभट्टस्य स्वतन्त्रचिन्तनमपि लक्ष्यते, मतभेदश्च तेन प्रदर्शितस्तथापि रुद्रभट्टः रुद्रटस्य काव्यालङ्कारं सम्मुखं संरक्ष्यैव शृङ्गारतिलकमलिखदिति समीक्षकाणां मतम्। शृङ्गारतिलकस्य काव्यालङ्कारस्य च निम्नलिखितयोः श्लोकयोः साम्यं सुस्पष्टमेव -

**साक्षाच्चित्रे स्वप्ने स्याद् दर्शनमेवमिन्द्रजाले वा।**
**देशे काले भङ्ग्या साधु तदाकर्णनञ्च स्यात्।। काव्यालङ्कार १२.१**
**साक्षाच्चित्रे तथा स्वप्ने तस्य स्याद् दर्शनं त्रिधा।**
**देशे काले च भङ्ग्या च श्रवणं चाऽस्य तद् यथा।। शृङ्गारतिलक १.५१**

शृङ्गारतिलकस्य रसतरङ्गिणीति टीका हरिवंशभट्टसुतेन गोपालभट्टेन लिखिता।

---

१. उत्स्वप्नायितो यथा रुद्रस्य -
नियतिन मयाम्भसि स्मरभरादाली समालिङ्गिता
केनालीकमिदं तवाद्य कथितं राधे मुधा ताम्यसि।
इत्युत्स्वप्नपरम्परासु शयने श्रुत्वा वचः शार्ङ्गिणः
सव्याजं शिथिलीकृतः कमलया कण्ठग्रहः पातु वः।। दशरूपक ४.६० धनिककृतव्याख्यातः

२. स मदान्धकविध्वंसी रुद्रः कैर्नाभिनन्द्यते।
सुश्लिष्टललिता यस्य कथा त्रैलोक्यसुन्दरी।। तिलकमञ्जरी प्रस्तावना श्लोक - ३५

# आनन्दवर्धनः

## १. आनन्दवर्धनस्य महत्त्वम्

संस्कृतकाव्यशास्त्रस्येतिहास आनन्दवर्धनकृतध्वन्यालोको युगान्तरकारी ग्रन्थो वर्तते। ग्रन्थमेतं विरच्याऽऽनन्दवर्धनेन ध्वनिसिद्धान्तमुद्भाव्य प्रतिष्ठाप्य च काव्यसमालोचनाक्षेत्रे महनीयमजरममृतञ्च स्थानमधिगतम्। आनन्दवर्धनोत्तरवर्तिभिः काव्यशास्त्रकृद्भिरभिनवगुप्तमम्मटविश्वनाथजगन्नाथादिभिराचार्यैस्तस्य ध्वनिसिद्धान्तस्य साहित्यिकमान्यताऽङ्गीकृता। अधिकांशरूपेण तैरानन्दवर्धनस्यैव मतं समर्थितम्। काव्यशास्त्रजगत्यानन्दवर्धनस्य तथैव सम्माननीयं स्थानं वर्तते, यथा व्याकरणक्षेत्रे पाणिनेर्वेदान्तक्षेत्रे च शङ्कराचार्यस्याऽस्ति।

साहित्यगतरसविषयकप्राचीनमन्तव्यसमालोचनादिसिद्धान्तान् परिवर्त्याऽऽनन्दवर्धनो नवमेव मार्गं प्रशस्तञ्चकार। पण्डितराजस्य जगन्नाथस्य कथनमिदं यथार्थमेव, यदानन्दवर्धनेनाऽऽलङ्कारिकाणां मार्गो व्यवस्थापितः सुप्रतिष्ठापितश्च।[१]

भरतमुनिना नाट्यशास्त्रे रसानां सम्यक् सुविशदं निरूपणं विहितम्। परन्तु भरतानन्तरं प्रायशः सर्वैरेव काव्यशास्त्राचार्यैः काव्यस्य वाचकशब्दवाच्यार्थालङ्कारेष्वेव काव्यत्वप्रतिष्ठाऽभिमता। भामहाद्याचार्याः काव्येषु शब्दालङ्कारार्थालङ्कारगुणवृत्तिरीत्यादिविवेचनेष्वेव स्वविलक्षणप्रतिभां प्रदर्शयामासुः। परन्त्वानन्दवर्धनेन प्रोक्तम् -

काव्ये द्वावेवाऽर्थौ सहृदयश्लाघ्यौ भवतः - वाच्यः प्रतीयमानश्च।[२] तत्र प्रतीयमानोऽर्थः काव्ये विलक्षणसौन्दर्यमादधाति।[३] यत्र प्रतीयमानार्थसौन्दर्यं प्रधानत्वेनाऽवतिष्ठते, तत्काव्यमुत्तमं भवति। तदेव च ध्वनिकाव्यमित्युच्यते।[४] अयं ध्वनिरेव काव्यस्याऽऽत्मा।[५]

---

१. ध्वनिकृतामालङ्कारिकसरणिव्यवस्थापकत्वात्। रसगङ्गाधर

२. योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ।। ध्वन्यालोक १.२

३. प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।। ध्वन्यालोक १.४

४. यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।। ध्वन्यालोक १.१३

५. काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः। ध्वन्यालोक १.१

काव्यशास्त्रजगति ध्वनिपदप्रयोगरूपं ध्वनिसम्प्रदायस्थापनं ह्यानन्दवर्धनस्य महत्त्वपूर्णं कार्यमवर्तत। ध्वनिस्थापना व्यञ्जनावृत्त्या प्रतीयमानार्थप्रतीतिमाश्रयते। आनन्दवर्धनपूर्ववर्तिन आचार्याः ध्वनिना परिचिताः नावर्तन्तेति न। वाच्यार्थभिन्नस्य प्रतीयमानार्थस्याऽस्तित्वं स्वीकृत्य ते ध्वनिं तु पस्पर्शुः परं व्याख्याकरणेऽसमर्था एव बभूवुः। कार्यमिदमानन्दवर्धनेन सम्पादितम्।

आनन्दवर्धनकृतध्वन्यालोकग्रन्थस्याऽध्ययनेन सुस्पष्टमेव यद् ध्वनिपदप्रयोगं तत्पूर्ववर्तिनोऽप्याचार्याश्चक्रुस्तञ्च काव्यात्मानमपि जगदुः। परं ध्वन्यालोकग्रन्थरचनापूर्वं कस्मिंश्चिदपि काव्यशास्त्रीये ग्रन्थे ध्वनिप्रतिपादनं नोपलभ्यते। ध्वन्यालोकपूर्ववर्ती न कश्चिदप्येतादृशो ग्रन्थः समुपलभ्यते। न च केनचिदाचार्येण तस्योल्लेखो विहितो यत्र ध्वनिसिद्धान्तो मौखिकरूपेणाऽपि चर्चितो बभूव। आनन्दवर्धनेनैषः सिद्धान्तः सुव्यवस्थितरूपेण ध्वन्यालोकग्रन्थे सुप्रतिष्ठापितः। अभिनवगुप्तो जगाद –

ध्वनिसिद्धान्तस्त्वविच्छिन्नरूपेण विद्वद्भिः प्रतिपादितोऽपि न विशिष्टपुस्तकेषु निबद्धो बभूव।[1]

काव्यशास्त्रपरम्परायामानन्दवर्धनस्य तत्कृतध्वन्यालोकस्य च महत्त्वं सुस्पष्टं संलक्ष्यते। ध्वनिमार्गं संस्थाप्य समालोचनाजगति नवीनमार्गस्तेन समुन्मीलितः। काव्यशास्त्रस्येतिहासे ध्वन्यालोककारः केन्द्रबिन्दुरिव संलक्ष्यते। तत्पूर्ववर्तिभिर्भामहदण्ड्युद्भट-वामनरुद्रटादिभिराचार्यैः काव्यसमीक्षामार्गस्य निर्मितिः प्रवर्तिता, आनन्दवर्धनेन च सा नवदिशि परिवर्तिता। आनन्दवर्धनोत्तरवर्तिभिराचार्यैरभिनवगुप्तहेमचन्द्रमम्मटविश्वनाथ-जगन्नाथादिभिराचार्यैरानन्दवर्धनप्रदर्शितमार्गस्य समर्थनं विधाय ध्वनिसिद्धान्तो-ऽन्तिमनिश्चयात्मकरूपेण प्रतिष्ठापितः।

ध्वनिं काव्यस्यात्मानं प्रतिपाद्याऽप्यानन्दवर्धनेन काव्यस्याऽन्यतत्त्वानि गुणालङ्कारवृत्त्यौ-चित्यादीनि नोपेक्षितानि। समालोचनासरण्यामसौ तत्त्वान्येतान्यपि समुचितरूपेण समुचितस्थानेषु समावेशयत्। अत आनन्दवर्धन एव प्रथमस्तथाविधः समालोचको मन्तव्यो यस्य ध्वन्यालोकग्रन्थः काव्यसमालोचनायाः सर्वाण्येवाऽङ्गानि यथोचितानुपातरूपेण प्रास्तौत्। ग्रन्थमेनं विरच्याऽसौ काव्यशास्त्रपरम्परायां महनीयतमं स्थानं लेभे।

## २. आनन्दवर्धनस्य जीवनवृत्तं समयश्च

आनन्दवर्धनो ध्वन्यालोककारः काश्मीरजनपदवास्तव्यः कविः प्रखरसमालोचको दार्शनिकश्च प्रसिद्धः। स्ववैदुष्येणाऽसौ राजानक इत्युपाधिं लेभे।

आनन्दवर्धनजीवनवृत्तविषयकं न किमपि विशिष्टं सामग्रीजातं समुपलभ्यते। केवलमिदमेव वयं जानीमो यदसौ कस्यचिन्नोणस्य नोणोपाध्यायस्य वा सुतोऽवर्तत। ध्वन्यालोकस्यैकस्यां

---

१. अविच्छिन्नेन प्रवाहेण तैरेतदुक्तं विनाऽपि विशिष्टपुस्तकेषु विनिवेशनादित्यभिप्रायः।
ध्वन्यालोक १.१ कारिकायाः लोचनटीकातः

पाण्डुलिप्यां तृतीयोद्योतस्य समाप्तावसौ स्वात्मानं नोणसुतं लिलेख। अथ च देवीशतकस्यैकोत्तर-शततमे श्लोकेऽप्यसौ स्वात्मानं नोणसुतमसूचयत्।[१] काव्यानुशासनवृत्तौ हेमचन्द्र आनन्द-वर्धनस्य देवीशतकमुल्लिख्य तं नोणसुतमकथयत्।

आनन्दवर्धनस्य समयः सुनिश्चितः। राजतरङ्गिण्यां कह्लणेन लिखितम् -

अवन्तिवर्मणः साम्राज्ये मुक्ताकणशिवस्वामिरत्नाकरानन्दवर्धननामानः कवयः प्रसिद्धिमाप्नुवन्।[२]

अस्याऽयमभिप्रायः - अवन्तिवर्मणो राज्यकालेऽयमानन्दवर्धनः प्रसिद्धिमवाप। अन्यैरुपलब्धप्रमाणैरानन्दवर्धनसमयसुनिश्चतीकरणं यद्यपि कठिनमेव, तथापि कह्लणस्य श्लोकेनाऽनेनाऽस्य समयोऽनुमातुं ध्रुवं शक्यः। व्हूलरमहोदयेन जैकोबीमहोदयेन च नरपतेरवन्तिवर्मणः शासनसमयः ८५५-८८३ ख्रिष्टाब्दो निर्धारितः। अत आनन्दवर्धनस्या-ऽप्येषः समयोऽवगन्तव्यः।

केचन विद्वांसः कथयन्ति -

आनन्दवर्धनस्य स्थितिरवन्तिवर्मसुतस्य शङ्करवर्मणः शासनकालेऽप्यासीत्। शङ्करवर्मणः शसनेकालः ८८३-९०२ खिष्टाब्दो निश्चीयते। आनन्दवर्धनेन यशोवर्मकृतरामाभ्युदय-नाटकस्यैकः श्लोक उद्धृतः।[३] शङ्करवर्मैव यशोवर्माऽवर्ततेति विदुषामेतेषां मतम्।

न्यायमञ्जर्याः लेखको जयन्तभट्टः शङ्करवर्मणः समकालीनोऽवर्तत। तेन ध्वनिसिद्धान्तस्य यथा समीक्षा कृता, तथाऽसावानन्दवर्धनस्य समकालीनः प्रतीयते।[४] अत आनन्दवर्धनोऽवन्तिवर्मणः

---

१. देव्याः स्वप्नोद्गमाविष्टदेवीशतकसंज्ञया।
देशितानुपमामाधावतो नोणसुतो नुतिम्।। देवीशतक - १०१

२. मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः।। राजतरङ्गिणी ५.३४

३. तत्र शुद्धस्योदाहरणं यथा रामाभ्युदये - कृतककुपितैरित्यादिश्लोकः।
ध्वन्यालोक ३.३-४ कारिकयोर्वृत्तितः।

४. न्यायमञ्जर्यां सा समीक्षैवं वर्तते -
एतेन शब्दसामर्थ्यमहिमा सोऽपि वारितः।
यमन्यः पण्डितम्मन्यः प्रपेदे कञ्चन ध्वनिम्।।
यथा - भम धम्मिअ वीसत्थो मास्म पान्थ गृहं विश।
मानान्तरपरिच्छेद्यवस्तुरूपोपदेशिनाम्।।
शब्दानामेव सामर्थ्यं तत्र तत्र तथा तथा।
अथवा नेदृशी चर्चा कविभिः सह शोभते।।
विद्वांसोऽपि विमुह्यन्ति वाक्यार्थे गहनेऽध्वनि।।
न्यायमञ्जरी (काशी संस्कृत सीरीज) पृ० ४५

शङ्करवर्मणश्च द्वयोरेव भूपालयोः शासनकालेऽवर्ततेति वक्तुं शक्यते। असाववन्तिवर्मणः शासनकाले कविरूपेण प्रसिद्धिमगात्। अथ च शङ्करवर्मणः शासनकाले स्वजीवनस्योत्तरकाले समीक्षकरूपेण प्रथितो बभूव।

आनन्दवर्धनसमयविषये जैकोबीमहोदयेनाऽन्यैवैका सम्भावना प्रकटिता। कह्लणो राजतरङ्गिण्यां ललितापीडस्य समकालीनं मनोरथं नाम कविमुल्लिलेख। अयं कविर्ललितापीडस्य सचिव आसीत्।[1] अभिनवगुप्तेन ध्वन्यालोकस्य वृत्तिभागे "अन्येन कृत एवात्र श्लोक" इत्यत्र "अन्येन" पदस्य लोचनटीकायामेवं व्याख्या विहिता -

**"तथा चाऽन्येनेति। ग्रन्थकृत्समानकालभाविना मनोरथनाम्ना कविना"!**

एवमभिनवगुप्तलेखनं प्रमाणीकृत्याऽऽनन्दवर्धनमनोरथौ समकालीनौ निश्चीयेते। जयापीडस्योत्तराधिकारिणो ललितापीडस्य शासनकालः ७८०-८१३ खिष्टाब्दो गणित इतिहासविद्भिः। अत आनन्दवर्धनस्याऽयमेव समयो माननीयः।

परं जैकोबीमहोदयस्याऽयं तर्कोऽसङ्गत एव वर्तते। कह्लणो ह्यानन्दवर्धनमवन्तिवर्मसमकालीनमसूचयत्। अतोऽसौ ललितापीडसमकालीन आसीदिति कथनं न युक्तिसङ्गतम्। युक्तिविरुद्धमेव तत्। अस्मिन्नेव श्लोके वामनस्याऽप्युल्लेखो विद्यते, य आनन्दवर्धनपूर्वकालीन आसीदिति सुनिश्चितम्। राजतरङ्गिण्या अस्मिन् श्लोके मनोरथपदस्य स्पष्टीकरणमनेकैर्विधिभिर्विधातुं शक्यते यथा -

(i) कह्लणो जयापीडललितापीडशासनसमयगणनायां विभ्रान्त आसीत्।
(ii) अभिनवगुप्तो मनोरथानन्दवर्धनौ समकालीनाविति प्रतिपादने विभ्रान्तोऽवर्तत।
(iii) राजतरङ्गिण्यां निर्दिष्टस्य मनोरथस्याऽभिनवगुप्तसङ्केतितस्य मनोरथस्य च व्यक्तित्वं भिन्नमेवाऽवर्तत।

बाह्यप्रमाणैरप्यानन्दवर्धनस्य समयो नवमशताब्द्युत्तरार्धको निश्चीयते। आनन्दवर्धनो ध्वन्यालोके ह्युद्भटमुल्लिलेख। उद्भटस्य समयः ८०० तमखिष्टाब्दो निश्चितः। अत आनन्दवर्धनस्तत्पश्चाद्वर्ती खिष्टस्य नवमशताब्द्युत्तरार्धकालीनोऽवगन्तव्यः। राजशेखरो ह्यानन्दवर्धनं प्रशशंस।[2] अत आनन्दवर्धनस्तत्पूर्वकालीनोऽवर्तत। एतत्कथनप्रमाणेनाऽप्यसौ ध्वन्यालोककारो ध्वनिप्रतिष्ठापकश्च नवमशताब्द्युत्तरार्धकालीनो निश्चीयते।

---

१. मनोरथः शङ्खदत्तश्चटकः सन्धिमांस्तथा।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः।। राजतरङ्गिणी ४.४९७

२. ध्वनिनाऽतिगभीरेण काव्यतत्त्वनिवेशिना।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः।।
जह्लणकृतसूक्तिमुक्तावल्यां राजशेखरनाम्नोल्लिखितः श्लोकः

एवमानन्दवर्धनस्य समयोऽतिसारल्येन नवमशताब्द्युत्तरार्धको निर्धारणीयः। विष्णुपदभट्टाचार्यस्य कथनमेतद् यथार्थमेव प्रतीयते - "आनन्दवर्धनस्याऽन्तिमसमयः ९०२ खिष्टाब्दः सम्भाव्यते।[1]

## ३. आनन्दवर्धनस्य कृतयः

आनन्दवर्धनस्य प्रसिद्धतमा कृतिर्ध्वन्यालोकः काव्यशास्त्रजगति सर्वमान्यो ग्रन्थः। अथ च ध्वनिकारोऽयं कानिचित् काव्यानि दार्शनिकग्रन्थांश्चापि लिलेख। तद्रचितानि त्रीणि काव्यानि वर्तन्ते -

(१) देवीशतकम्,(२) विषमबाणलीला (३) अर्जुनचरितञ्च

तद्रचितयोर्द्वयोर्दर्शनग्रन्थयोरपि सङ्केताः समुपलभ्यन्ते -

(१) तत्त्वालोकः (२) प्रसिद्ध बौद्धविद्वद्रचितप्रमाणविनिश्चयग्रन्थस्याऽऽचार्यधर्मोत्तरकृत-प्रमाणविनिश्चयटीकायाष्टीका।

सुभाषितावलीषु ह्यानन्दवर्धननाम्नोद्धृतानि कानिचिदन्यान्यपि पद्यानि समुपलभ्यन्ते। आनन्दवर्धनकृतीनां संक्षिप्तपरिचयोऽधो लिख्यते -

**(i) देवीशतकम् -**

काव्येऽस्मिन्नानन्दवर्धनेन देवी भगवती दुर्गा आराधिता। अत्राऽसौ स्वचित्रकाव्य-रचनानैपुण्यं प्रादर्शयत्। यमकमुरजबन्धगोमूत्रिकाबन्धसर्वतोभद्रप्रहेलिकाचतुरर्थश्लोका-दिचित्रालङ्काराणां संयोजनमत्र लेखकेन कृतम्।

काव्यमेतदुपलक्ष्य ह्यानन्दवर्धनस्य समालोचनं सुकठोरं समीक्षकैर्विहितम्। एकतस्त्वानन्दवर्धनेन ध्वन्यालोके प्रतिपादितं यत्काव्येषु यमकाद्यलङ्कारनिबन्धनं काव्यसौन्दर्यविघातको महान् दोषो भवति, अपरतश्चाऽसौ देवीशतके स्वयमेवैतेषामलङ्काराणां संयोजनं विधत्ते। अत एव व्यक्तिविवेककारो महिमभट्टो ध्वनिकारमालोचयंल्लिखति -

"स्वकृतिष्वनियन्त्रितोऽयं कथं परोपदेशे कुशलः।[2]

**(ii) विषमबाणलीला -**

आनन्दवर्धनस्य काव्यमिदमनुपलब्धमेव। काव्यस्याऽस्य केचन श्लोकास्तेन ध्वन्यालोके ह्युद्धृताः।[3]

---

१. विष्णुपदभट्टाचार्यकृतध्वन्यालोकव्याख्याप्रस्तावना पृ० ९

२. स्वकृतिष्वनुयन्त्रितः कथमनुशिष्यादन्यमयमिति न वाच्यम्।
वारयति भिषगपथ्यादितरान् स्वयमाचरन्नपि तत्।। व्यक्तिविवेक

३. यथा च ममैव विषमबाणलीलायाम् -
ताला जाअन्ति गुणा जाला दे सहिएहिं घेप्पन्ति।
रइकिरणानुग्गहिआइं होन्ति कमलाइं कमलाइं।। ध्वन्यालोक २.१ कारिकायाः वृत्तितः।

(iii) **अर्जुनचरितम् -**

आनन्दवर्धनकृतं काव्यमिदमपि नोपलभ्यते। काव्यस्याऽस्य सङ्केतोऽपि ध्वन्यालोके वर्तते।[१]

(iv) **तत्त्वालोक: -**

आनन्दवर्धनस्याऽयमपि ग्रन्थो नोपलभ्यते। अस्योल्लेखोऽभिनवगुप्तेन लोचनटीकायां कृतम्।[२] सम्भवतोऽयं ग्रन्थो वेदान्तविषयको वर्तते।

(v) **प्रमाणविनिश्चयटीकायाष्टीका -**

ग्रन्थोऽयमपि वर्तमानसमयेऽलभ्य:। ग्रन्थस्याऽस्य सङ्केतो ध्वन्यालोकस्य तृतीयोद्योतस्य सप्तचत्वारिंशत्कारिकाया: वृत्तौ समुपलभ्यते। बौद्धा: सर्वानेव पदार्थान् क्षणभङ्गुरान् मन्यन्ते। अतस्ते किञ्चिदपि वस्त्वलक्षणीयं कथयन्ति। तत्त्वनाख्येयमनिर्देश्यञ्च। बौद्धानां प्रश्नमेतं ध्वन्यालोककार एवमुदतरत् - "बौद्धमते सर्वे पदार्था अनिर्देश्या: प्रोक्तास्तेषां मतपरीक्षाऽन्यस्मिन् ग्रन्थे करिष्याम:।"[३]

अत्राऽभिनवगुप्तस्य स्पष्टीकरणं वर्तते - "ग्रन्थान्तरोऽयं धर्मोत्तरस्य विनिश्चयटीका वर्तते"।[४]

प्रसिद्धबौद्धाचार्येण धर्मकीर्तिना बौद्धदर्शनविषयकप्रमाणविनिश्चयग्रन्थो लिखित:। आचार्येण धर्मोत्तरेण तत्र प्रमाणविनिश्चयटीका लिखिता। आनन्दवर्धनस्त्वत्र प्रमाणविनिश्चय-टीकायाष्टीकामलिखत्। असौ धर्मकीर्तिनाऽपि परिचित आसीदिति सम्भाव्यते, यतो धर्मकीर्ते: श्लोक एकस्तेन ध्वन्यालोके ह्युदाहृत:।

(vi) **ध्वन्यालोक: -**

आनन्दवर्धनस्य प्रसिद्धतमो ग्रन्थो वर्तते - ध्वन्यालोक:, येनाऽसौ लोके ध्वनिकारा-भिधानेन प्रसिद्धिमवाप।

---

१. एतच्च मदीयेऽर्जुनचरितेऽर्जुनस्य पातालावतरणप्रसङ्गे वैशद्येन प्रदर्शितम्।
ध्वन्यालोक ३.२५ कारिकाया: वृत्तित:

२. येऽप्यविभक्तं स्फोटं वाच्यं तदर्थञ्चाहु: तैरप्यविद्यापदपतितै: सर्वेयमनुसरणीया प्रक्रिया। तदुत्तीर्णत्वे तु सर्वं परमेश्वराद्वयं ब्रह्मेत्यस्मच्छास्त्रकारेण न विदितं तत्त्वालोकग्रन्थं विरचयतेत्यास्ताम्। ध्वन्यालोक १.३ कारिकावृत्तिलोचनटीकात:।

३. यत्त्वनिर्देश्यत्वं सर्वलक्षणविषयं बौद्धानां प्रसिद्धं तत्तन्मतपरीक्षायां ग्रन्थान्तरे निरूपयिष्याम:।
ध्वन्यालोक ३.४७ कारिकाया: वृत्तित:

४. ग्रन्थान्तर इति। विनिश्चयटीकायां धर्मोत्तर्यां या विवृतिरमुना ग्रन्थकृता तत्रैव तद् व्याख्यातम्।
ग्रन्थान्तर इत्यत्र लोचनटीका।

## ४. ध्वन्यालोकस्य परिचयः

आनन्दवर्धनस्य प्रसिद्धतमः प्रशस्यः पाण्डित्यपूर्णः प्रौढो ग्रन्थो ध्वन्यालोको वर्तते। चतुर्षूद्योतेषु विभक्तस्य ग्रन्थस्याऽस्य स्पष्टरूपेण त्रयो विभागाः सन्ति - कारिकाः वृत्तयो ह्युदाहरणानि च। ध्वन्यालोकस्य कारिकासंख्या विवादग्रस्ता सञ्जाता। काव्यमालासंस्करणे षड्विंशत्युत्तरशतैकसंख्या (१२६) कारिकाणां वर्तते। परं संस्कृत सीरीज चौखम्बा संस्करणे षोडशोत्तरशतैकसंख्या वर्तते (११६)। संस्करणमेतदेव शुद्धतरं प्रामाणिकञ्च गण्यते। ग्रन्थेऽस्मिन् विषयविवेचनं निम्नप्रकारेण वर्तते -

**(i) प्रथमोद्योतः -**

ध्वन्यालोकस्य प्रथमोद्योते ध्वनिकारेण ध्वनिस्थापना कृता। ध्वनिं काव्यस्यात्मानं कथयित्वाऽसौ ध्वनिविरोधिनां त्रीणि मतानि प्रास्तौत् - अभाववादिनो भक्तिवादिनोऽलक्षणीयतावादिनश्च। अभाववादिनां पुनस्त्रीणि मतानि प्रोक्तानि। ध्वनिकारो मतान्येतानि सर्वाणि खण्डयित्वा जगाद -

**"ध्वनिर्न त्वभिधायां नाऽलङ्कारेषु न च लक्षणायामन्तर्भावयितुं शक्यते। अयमलक्षणीयोऽपि न वर्तते। अस्य लक्षणं विधीयते।"**

काव्ये वाच्यः प्रतीयमानश्चेति द्वावर्थौ भवतः। प्रतीयमान एव सहृदयसंवेद्यश्चारुत्वहेतुर्भवति। यस्मिन् काव्ये प्रतीयमानोऽर्थः प्राधान्येनाऽवतिष्ठते, तदेव काव्यं ध्वनिकाव्यमिति प्रोच्यते।

प्रतीयमानार्थस्त्रिविधो भवति - वस्तुरूपोऽलङ्काररूपो रसरूपश्च। केषुचिदलङ्कारेषु प्रतीयमानार्थस्य विद्यमानत्वेऽपि ध्वनिरलङ्कारेषु नान्तर्भावयितुं शक्यः।

ध्वनिकाव्यस्य मुख्यतो द्वौ भेदौ भवतः - अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च। अविवक्षितवाच्यो ध्वनिर्लक्षणामूलो भवति विवक्षितान्यपरवाच्यश्चाऽभिधामूलः।

**(ii) द्वितीयोद्योतः -**

ध्वन्यालोकस्य द्वितीयोद्योते ध्वनेर्भेदानां स्वरूपव्याख्या सोदाहरणं प्रोक्ता। अविवक्षितवाच्यस्य द्वौ भेदौ भवतः - अर्थान्तरसङ्क्रमितोऽत्यन्ततिरस्कृतश्च। विवक्षितान्यपरवाच्यस्याऽपि ध्वनेर्द्वौ भेदौ स्तः - असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यव्यङ्ग्यक्रमश्च।

असंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः रसभावरसाभासभावाभासभावशान्तिभावोदयभावसन्धिभावशबलताभेदेनाऽनेके भेदाः वर्तन्ते। अत्राऽपि रसानां भावानाञ्चाऽसंख्यभेदत्वादयं ध्वनिर्नानाविधो भवति। अयं रसध्वनिरपि चोच्यते।

रसध्वनिप्रकरणे ध्वनिकारः प्राचीनमतानां खण्डनं कृत्वां त्रीन् गुणान् प्रत्यापादयत - माधुर्यमोजः प्रसादश्च। गुणालङ्कारयोर्भेदोऽपि तेन प्रोक्तः। अस्मिन् प्रकरणे तेन तेषामपि

तथ्यानां वर्णनं विहितं यद् रसाद्यभिव्यक्तिप्रसङ्गेषु कासु परिस्थितिषु रसध्वनिरवगन्तव्यः कासु च रसवदादयोऽलङ्काराः मन्तव्याः।

संलक्ष्यव्यङ्ग्यक्रमध्वनेर्मुख्यास्त्रयो भेदाः वर्तन्ते – शब्दशक्त्युद्भवध्वनिरर्थशक्त्युद्भव-ध्वनिरुभयशक्त्युद्भवध्वनिश्च। त्रयाणामप्येतेषां वस्त्वलङ्काररूपाभिव्यक्तिभेदेन द्वौ भेदौ भवतः – वस्तुध्वनिरलङ्कारध्वनिश्च। एतेषां ध्वन्यालोककारेण सोदाहरणं व्याख्यानं विहितम्। अत्र तेन शब्दशक्त्युद्भवध्वनेः श्लेषालङ्कारस्य च भिन्नत्वमपि व्याख्यातम्।

(iii) तृतीयोद्योतः –

तृतीयोद्योते ध्वनिकारेण व्यञ्जकभेदाद् ध्वनेर्भेदाः प्रदर्शिताः। वर्णपदवाच्यसं-घटनाप्रबन्धाः व्यङ्ग्यार्थस्य व्यञ्जकाः सम्भवन्ति। एभिर्वस्तुरूपव्यङ्ग्यार्थस्यालङ्काररूप-व्यङ्ग्यार्थस्य वाऽभिव्यक्तिर्भवति। ध्वनिकारेण सङ्घटनाव्यञ्जकतायाः विस्तरेण वर्णनं कृतम्। इयं संघटना त्रिविधा भवति – असमासा, मध्यमसमासा दीर्घसमासा च। इयं संघटना गुणानाश्रित्य तिष्ठन्ती रसादीनभिव्यनक्ति। ध्वनिकारेण रसबन्धौचित्यस्य सर्वत्राऽनिवार्यत्वं प्रतिपादितम्।

सङ्घटनाव्यञ्जकताप्रदर्शनानन्तरं ध्वनिकारः प्रबन्धप्रकाशतां विस्तरेण व्यवैक्षीत्। अस्मिन् प्रकरणे तेन बहवो विषयाः व्याख्याताः। यथा – रसानामभिव्यक्तिश्चर्वणा च, विभिन्नरसानां सहायका अलङ्काराः, कथावस्तु तस्य च रसैः सम्बन्धो, विभक्तिक्रियावचन-सम्बन्धकारककृत्तद्धितसमासानामलक्ष्यक्रमद्योत्यता, रसविरोधो रसाभिव्यक्तिविरोधपरिहारश्च, काव्ये रसस्यैकस्य प्रधानत्वमन्येषाञ्च रसानामङ्गत्वं, रसानुगुणशब्दार्थयोजना इत्यादयः।

ध्वनिकारेण रसानुगुणवृत्तयोऽपि निरूपिताः। वृत्तयो द्विविधाः भवन्ति – (१) वाच्याश्रयेण कैशिक्यादयो वृत्तयः (२) वाचकाश्रयेण चोपनागरिकादयो वृत्तयः। एतासां नियोजनं कविनौचित्यमनुसृत्य करणीयम्।

ध्वनिकाव्यं विस्तरेण विविच्य ध्वनिकारस्तृतीय एवोद्योते गुणीभूतव्यङ्ग्यकाव्यं व्याचख्यौ। प्रतीयमानार्थस्य वाच्यार्थापेक्षयाऽप्रधानत्वाद् गुणीभूतव्यङ्ग्यकाव्यं भवति। ध्वनिकारेण तथ्यमिदमपि प्रोक्तम् – यद्यत्र काव्ययोजना रसादितात्पर्येण क्रियते, काव्यमिदमपि ध्वनिरूपमेव भवति।

गुणीभूतव्यङ्ग्यकाव्यनिरूपणानन्तरं ध्वनिकारेण चित्रकाव्यस्य स्वरूपं व्याख्यातम्। चित्रकाव्यं द्विविधं भवति – शब्दचित्रं वाच्यचित्रञ्च। चित्रकाव्यं तदेवोच्यते, यत्र रसाद्यनपेक्षया केवलं शब्दालङ्काराणामर्थालङ्काराणां वा वैचित्र्यं प्रदर्श्यते। अत्र ध्वनिकारस्य वचनं वर्तते –

**चित्रकाव्यं वस्तुतो न काव्यं काव्यानुकृतिमात्रमेव तत् केवलम्।**

विविधानां ध्वनिगुणीभूतचित्रकाव्यानां स्वरूपं निरूप्याऽऽनन्दवर्धनो जगाद – "काव्यानामेतेषां सम्मिश्रणेन ध्वनेरसंख्यभेदप्रभेदाः सम्भवन्ति। अथ च तेन रीतीनां वृत्तीनाञ्च विषये संक्षेपेण स्वमन्तव्यं प्रस्तुतम्।

(iv) **चतुर्थोद्योतः -**

चतुर्थोद्योते ध्वनिकारः प्रतिभानन्त्यं विस्तरेणाऽवर्णयत्। साधारणवस्तून्यपि कविप्रतिभाश्रयेणाऽपूर्वं नवरूपं धारयन्ति। व्यङ्ग्यव्यञ्जकभावे विविधे सम्भवत्यपि कविना रसादिमयकाव्यरचनां प्रति सावधानेन भाव्यम्। रामायणमहाकाव्यं करुणरसप्रधानं महाभारतञ्च शान्तरसप्रधानमस्ति। परम्परया रचितेष्वप्यसङ्ख्यकाव्येषु काव्यक्षेत्रमनन्तमेव।

ध्वनिकारोऽब्रवीत् -

**"कवीनां काव्येषु साम्यं सम्भवति। तत्र किञ्चित् साम्यं ग्राह्यं किञ्चिच्च त्याज्यमेव। अक्षराणि तान्येव सन्ति। नवाक्षराणां रचना वाचस्पतिनाऽपि न सम्भवा। तान्येवाऽक्षराणि काव्येषु नवत्वमादधति।"**

ध्वन्यालोकग्रन्थरचनां समापयता ध्वनिकारेण प्रोक्तम् -

**"सरस्वत्येव कवीनां सहायिका"**

ग्रन्थकारेण कवीनां समुन्नतये ध्वनिकाव्यरचनायाः मार्ग एष उन्मीलितः।

## ५. कारिकाकारो वृत्तिकारश्च

ध्वन्यालोकग्रन्थस्य त्रयो भागाः विद्यन्ते - कारिकाः वृत्तय उदाहरणानि च। एतेषां रचयितृविषयेऽर्वाचीनसमीक्षकैः कैश्चिद् विवादः समुत्पादितः। वृत्तीनां रचनाया उदाहरणानाञ्च सङ्ग्रहस्य कर्ता निर्विवादरूपेणाऽऽनन्दवर्धनो मतः समीक्षकैः। परं कारिकारचयितृविषये महान् विचारभेदः समीक्षकेषु विद्यते। विषयमेतमधिकृत्य समीक्षकैरतिविस्तरेण विचाराः प्रकटिताः। सर्वस्य तस्य विचारविमर्शस्य प्रस्तुतिरत्र न सम्भवा। तथापि संक्षेपेणाऽत्र विचारः प्रस्तूयते।[१]

संस्कृतवाङ्मयस्य प्राचीनपरम्पराः काव्यशास्त्रकृतां प्राचीनाचार्याणां वचनानि च ध्वन्यालोकस्य कारिकाणां वृत्तीनाञ्च रचयितारमानन्दवर्धनमेव प्रतिपादयन्ति। परन्त्वभिनवगुप्तस्य लोचनटीकायाः कैश्चिदप्यंशैः सन्देहोऽयं समुत्पादितः -

"कारिकाणां रचयिता वृत्तिकाराद् भिन्नो मनीषी प्रतीयते।"

लोचनटीकायां कारिकाणां कर्ता मूलग्रन्थकृदिति नाम्ना वृत्तिकारश्च ग्रन्थकृदिति नाम्ना व्याहृतः। प्रथमं तावद् व्हूलरमहोदयेन प्रश्नोऽयमुपस्थापितः। तदनन्तरं प्रो० गोस्वामी, पी०वी० काणे महोदयः, एस०के०डे महोदयः, शिवप्रसादो भट्टाचार्यश्चेति समालोचकास्तं समर्थितवन्तः।

---

१. विषयमेतं विस्तरेणावलोकयितुं लेखकस्य ध्वन्यालोकव्याख्यायाः प्रस्तावना पठनीया। ग्रन्थस्याऽस्य प्रकाशनं मेरठस्थितसाहित्यभण्डारसंस्थया कृतम्।

पी०वी० काणे महोदयो लोचनटीकायास्तानि महत्त्वशालीनि स्थानानि सञ्जग्राह, यानि कारिकाकारवृत्तिकारयोर्भिन्नत्वं प्रतिपादयन्ति।[१] उद्धरणानि तानि कानिचिद् वाक्यानि च लोचनटीकायाः प्रस्तूय पी०वी०काणे महोदयः प्रत्यापादयत् -

"लोचनकारानुसारं वृत्तीनां रचयिता ह्यानन्दवर्धनो वर्तते, स च कारिकाकाराद् भिन्नो विद्वानिति प्रतीयते।"

डा० एस०के०डे महोदयेन कारिकाकारवृत्तिकारयोर्भिन्नत्वं प्रतिपादितम्। प्राचीनानां लेखकानां परम्पराणाञ्चाऽऽलोचनं विधायाऽसौ जगाद - "कारिकाकारो वृत्तिकाराद् भिन्न एव विद्वान् वर्तते।"[२]

कारिकाकारवृत्तिकारयोर्भिन्नत्वप्रतिपादकविदुषां युक्तयो निम्नप्रकारेण वर्तन्ते -

(i) प्राचीनलेखकेषु यैरपि स्वग्रन्थेषु कारिकाणां वृत्तीनाञ्च लेखनं स्वयं कृतं तैस्तथ्यमिदं स्वयमेव स्पष्टीकृतम्। परमानन्दवर्धनेन न तथा कृतम्।

(ii) ध्वन्यालोके केचन तादृशाः परिकरश्लोकाः वर्तन्ते, ये मूलकारिकाभ्योऽप्यतितरां महत्त्वशालिनो विद्यन्ते।[३] अतः कारिकाकारो वृत्तिकारश्च भिन्नावेव विद्वांसाववगन्तव्यौ।

(iii) ध्वन्यालोकस्य २.२३ कारिकापूर्वस्य "तथा चे" ति पदस्य व्याख्यायामभिनवगुप्तेन लिखितम् -

---

१. पी०वी० काणे : संस्कृत काव्यशास्त्र का इतिहास पृ० २०९-२१०

२. Indeed it seems, that Anandavardhan in his classical vritti attempted to build up a more or less complete system of poetics upon the loosely joined ideas and material supplied by the brief KARIKAS and his success was probably so marvelous that in course of time the karikas receded to the background completely overshadowed by the more important big use of his formidable expounder and people considered as the Dhwanikar not of the few memorial verses but the commentator Anandavardhana himself, who for the first fixed the theory in its present form. The term dhwanikar itself came gradually to be used in generic sense of the creator of dhwani school and therefore indiscriminately applied by the late writer Anandavardhana, who though not himself the founder of the system, came to receive that credit for having first victoriously introduced it in struggle of the school.

विष्णुपद भट्टाचार्यकृतध्वन्यालोकाङ्ग्लभाषाव्याख्यायाः प्रस्तावनापृष्ठाद् (xxxii) उद्धृतम्

३. अत्रैकः श्लोको निम्नलिखितो वर्तते -

अनौचित्याद् ऋते नान्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा।। ध्वन्यालोक ३.१४ वृत्तितः।

कारिकाकारेण शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति द्विविधो ध्वनिर्निर्दिष्टः, परं वृत्तिकारेण तृतीयं ध्वनिमुभयशक्तिमूलं सूचयितुं साधारणमवतरणपदं प्रयुक्तम्।[१]

(iv) यद्यपि मङ्गलाचरणं न वर्तते वृत्तिपूर्वं, कारिकापूर्वमेव वर्तते, तथापि कारिकाकारस्य वृत्तिकारस्य चाऽनेन नैकत्वं प्रतिपाद्यते। अनेके ग्रन्थकाराः मङ्गलाचरण-प्रयोग- रहिता अवलोक्यन्ते।

(v) "स्वेच्छाकेसरिण" इति श्लोको लोचनकारेण वृत्तिकारस्य रचना प्रोक्तः।[२] अथ च काव्यस्यात्मेति प्रथमा कारिका आदिवाक्यमित्यसौ जगाद।[३]

अत्र प्रश्नोऽयमुदयति -

यदि कारिकाणां रचना नाऽऽनन्दवर्धनेन कृता, कस्तासां रचयिता। अनेकेषु प्राचीनग्रन्थेषु ध्वन्यालोकग्रन्थः सहृदयालोकाभिधानेनोल्लिखितः। अतः समालोचकानामेतेषां मतिर्यत् कारिकाकारोऽवर्तत कश्चित् सहृदयाभिधानः। तत्राऽऽनन्दवर्धनेन वृत्तिर्लिखिता। कारिकाकारः सहृदयो नाम विद्वान् कश्चिदवर्ततेति प्रतिपादयितुं काणे महादयेन मुख्यतस्त्रयो युक्तयः समुपस्थापिताः -

(i) अभिनवगुप्ताच्छतैकवर्षपूर्वकेन मुकुलभट्टेन अभिधामातृकाग्रन्थस्य रचना विहिता। तत्र तेन सूचितम् - "सहृदयेन ध्वनेर्नवसिद्धान्तः प्रवर्तितः।"

(ii) प्रतिहारेन्दुराजोऽपि सूचयति - मूलरूपेण सहृदयेन ध्वनिसिद्धान्तस्य प्रवर्तनं विहितम्।

(iii) ध्वन्यालोके सहृदय इति नाम स्थाने स्थाने सादरमुल्लिखितं लभ्यते। आनन्दवर्धनेन सहृदयं प्रति तथाविधं सम्मानं प्रकटितमित्यनेनाऽनुमीयते, यत् सहृदयस्तस्य गुरुरवर्तत, कारिकाणां वा रचयिताऽऽसीत्।

परमन्ये ह्याचार्याः डा० संकरन्, सत्कारी मुकर्जी, कृष्णमूर्तिरित्यादयः समीक्षकाः कारिकाकारवृत्तिकारयोर्भेदप्रतिपादनस्य विरोधिनो वर्तन्ते। तत्राऽभेदप्रतिपादनाय विद्वद्भिः प्रस्तुतानां युक्तीनां सारांशो निम्नवद् वर्तते -

(i) संस्कृतसाहित्यपरम्परासु ग्रन्थरचनासु कारिकाकारो वृत्तिकारश्चैक एव विद्वानभिमतः। ग्रन्थकाराः प्रथमं कारिकाः विरच्य तदनन्तरं तासां व्याख्यां वृत्तिभिरुदाहरणैश्चाऽकुर्वन्। इति परम्परा भारतवर्षे प्राचीनकाले प्रचलिताऽवर्तत।

---

१. प्रक्रान्तप्रकारद्वयोपसंहारं तृतीयप्रकारसूचनञ्चैकेन यत्नेन करोमीत्याशयेन साधारणमवतरणपदं प्रक्षिपति वृत्तिकृत् तथा चेति। ध्वन्यालोक - लोचनटीका।

२. स्वयमव्युपच्छिन्न....................परमेश्वरसाम्मुख्यं करोति वृत्तिकारः। ध्वन्यालोक - लोचनटीका

३. अथ प्राधान्येन...............प्रयोजनञ्च सामर्थ्यात् प्रकटयन्नादिवाक्यमाह काव्यस्यात्मेति। ध्वन्यालोक - लोचनटीका

(ii) ध्वन्यालोकस्य लोचनटीकायां नाट्यशास्त्रस्य चाऽभिनवभारतीटीकायामभिनवगुप्तेनाऽनेकेषु स्थानेषु कारिकाकारवृत्तिकारयोरेकत्वं प्रतिपादितम्। अभिनवगुप्तेन कस्मिंश्चिदपि प्रसङ्गे कारिकाकारो वृत्तिकाराद् भिन्नत्वेन पृथग्रूपेण वा नोद्धृतः। यदि च दुर्जनतोषन्यायेन कुत्रचिदभिनवगुप्तेन कारिकाकारो वृत्तिकाराद् भिन्नत्वेन लिखित इति मन्यतें, तथापि तस्य कथनं न निर्भ्रान्तम्। अभिनवगुप्त आनन्दवर्धनानन्तरं शतैकवर्षपरवर्ती बभूव। तत्पूर्ववर्तिभिरुत्तरवर्तिभिर्वा सर्वैरेवाऽऽचार्यैर्ध्वन्यालोकस्य कारिकाकारो वृत्तिकारश्चाऽभिन्नत्वेनानन्दवर्धनः प्रोक्तः।

(iii) अभिनवगुप्तः स्वगुरोरुत्पलदेवस्य रचनाया ईश्वरप्रत्यभिज्ञायाष्टीकामलिखत्। अस्मिन् पुस्तके कारिकाभिः सह वृत्तयोऽपि वर्तन्ते। तत्र टीकाकारेण कारिकाकारवृत्तिकारयोर्न कुत्रचिदपि भिन्नत्वं सूचितम्। लोचनटीकायामपि टीकाकारेण परम्परैषा रक्षिता। कारिकाकारवृत्तिकारयोरेकत्वं मन्यमानेनाऽभिनवगुप्तेन कारिकाणां वृत्तीनामपि च टीका लिखिता। यद्यसौ तयोर्भिन्नत्वममंस्यत, वृत्तीनामेव टीकामलिखिष्यत्, यतः कारिकाणां टीकाऽऽनन्दवर्धनेन वृत्तिरूपेण पूर्वमेव लिखिता।

(iv) आनन्दवर्धनः कुत्रचिदपि स्वात्मानं कारिकाकाराद् भिन्नत्वेन नाऽसूचयत्। स एव ध्वनिप्रतिष्ठातेति सर्वत्राऽभिव्यज्यते।[1]

(v) यदि कारिकाकारवृत्तिकारयोर्व्यक्तित्वं भिन्नमभविष्यत्, प्राचीनपरम्परानुसारं द्वयोर्भागयोर्मङ्गलाचरणमपि पृथक् पृथगवर्तिष्यत। द्वयोर्भागयारेकमेव मङ्गलाचरणं लेखकैकत्वं सूचयति।

(vi) यदि कारिकाकारो वृत्तिकाराद् भिन्नो विद्वान् कश्चित्तत्र वर्तते, ततस्तस्य नामाऽपि ज्ञातव्यम्। भिन्नतावादिनः कारिकाकारं सहृदयनाम्ना वदन्ति। परन्तु काव्यशास्त्रे सहृदयपदप्रयोगो न विशेष्यवाचकोऽपितु विशेषणवाचकः। आनन्दवर्धनेना[2]ऽभिनवगुप्तेन[3] च द्वाभ्यामेव सहृदयपदं विशेषणरूपेण प्रयुक्तम्। अथ च तथैव तत्पदं व्याख्यातम्।

(vii) राजशेखरमुकुलभट्टप्रतिहारेन्दुराजकुन्तकमहिमभट्टजयन्तभट्टक्षेमेन्द्रहेमचन्द्रोदयोत्तुङ्गमम्मटविश्वनाथजगन्नाथप्रभृतिभिः सर्वैरेवाऽऽचार्यैः कारिकाकारस्य वृत्तिकारस्य

---

१. इति काव्यार्थविवेको योऽयं चेतश्चमत्कृतिविधायी।
सूरिभिरनुसृतसारैरस्मदुपज्ञो न विस्मार्यः।। ध्वन्यालोक चतुर्थोद्योतस्यान्तिमो भागः

२. वैकटिका एव हि रत्नतत्त्वविदः। सहृदया एव हि काव्यानां रसज्ञा इति कस्याऽत्र विप्रतिपत्तिः।
ध्वन्यालोक (३.४८) वृत्तिः

३. सहृदयानामिति। येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते स्वहृदयसंवादभाजः सहृदयाः।
ध्वन्यालोक (३.४८) वृत्तौ लोचनटीका

च व्यक्तित्वमभिन्नं मतम्। अथ च तथैवाऽऽनन्दवर्धनो ध्वनिप्रतिष्ठाता ध्वनिकारश्च मतः।

कारिकाकारवृत्तिकारयोरेकत्वप्रतिपादनप्रबलयुक्तिषु सत्स्वपि भिन्नतावादिनां युक्तयः सर्वथा साररहिता इति न शक्यते वक्तुम्। ध्वन्यालोकस्य प्राचीनचन्द्रिकाटीकायां भट्टनायककृतहृदयदर्पणे च ध्वनिविषये ध्वनिकारविषये च प्रचुरं वर्णनं सम्भाव्यते। परं ग्रन्थौ तौ न वर्तमानसमये समुपलभ्येते। यदि तावलप्स्येतां विषयोऽयं निर्णयात्मकत्वेन सिद्धोऽभविष्यत्। परन्त्वस्मिन् समये कारिकाकारविषये वृत्तिकारविषये च यानि प्रमाणानि सयुक्तीनि प्राप्यन्ते तैस्तयोरेकत्वमेव सिध्यति। अतः आनन्दवर्धन एव द्वयोर्भागयोर्लेखको-ऽवगन्तव्यः।

इदमपि तथ्यमवधेयम् -

यदि कारिकाकारवृत्तिकारयोर्व्यक्तित्वं भिन्नमपि मन्येत, अथवाऽऽनन्दवर्धनात् पूर्वं केनचिदज्ञातेन मनीषिणा कारिकाः लिखिता इति सम्भावनाऽपि क्रियते, तथापि ध्वनिकारस्याऽऽदरणीयं पदमानन्दवर्धनायैव काव्यशास्त्रिभिः प्रदत्तम्। स एव ध्वनिकार इति। ध्वनिसिद्धान्तस्य निस्सन्दिग्धव्यवस्थितस्थापनाऽऽनन्दवर्धनेनैव कृता। उत्तरवर्तिभिराचार्यैर्ध्वनिकार इति ध्वन्याचार्य इति च सम्माननीयाभ्यामुपाधिभ्यामानन्दवर्धन एव सम्मानितः।

### ६. परिकरसङ्ग्रहसंक्षेपश्लोकाः

ध्वन्यालोके कारिकातिरिक्तं केचन व्याख्यानात्मकाः श्लोकाः वर्तन्ते। ते च त्रिविधाः सन्ति - परिकरश्लोकाः सङ्ग्रहश्लोकाः संक्षेपश्लोकाश्च।

परिकरश्लोकानानन्दवर्धनः कारिकाविषयस्य सुस्पष्टव्याख्यायै ह्यधिकार्थावबोधनाय च प्रयुयोज। अभिनवगुप्तः परिकरश्लोकपदस्य व्याख्यानमेवमकरोत् -

**"परिकरार्थं कारिकार्थस्याऽधिकावापं कर्तुं श्लोकः परिकरश्लोकः।"**

वृत्त्यन्तर्गतोऽयं श्लोको मूलकारिकायाः व्याख्यानं करोति। यथा - तृतीयोद्योते निम्नोक्तपरिकरश्लोको वर्तते -[१]

**अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।**
**यस्त्वशक्तिकृतस्तस्य स झटित्येवाऽवभासते॥**

अस्याऽयमभिप्रायः -

कवेरव्युत्पत्तिजनितो दोषस्तस्य शक्त्या प्रतिभया संव्रियते। परमशक्त्या यो दोषः समुत्पद्यते, स झटित्येव प्रतीयते। अस्मिन् प्रकरणे ध्वनिकारेण संघटनाजन्यदोषाः द्विविधाः प्रोक्ताः - अव्युत्पत्तिकृताः व्युत्पत्तिकृताश्च। काव्यरचनायां कवेः शक्तिः प्रतिभैव मुख्यो

---

१. ध्वन्यालोक (३.६) वृत्तिः

हेतुः। परं कारिकायामिदं न समुचितरूपेण प्रकटितं ध्वनिकृता। अतः कारिकार्थादधि-कार्थस्य प्रतिपादकोऽयं श्लोकः परिकरश्लोको वर्तते।

अथ ध्वन्यालोके सङ्ग्रहसंक्षेपश्लोका अपि वर्तन्ते। कारिकासु वृत्तिषु च ध्वनिकारो यानि तथ्यानि युक्तीश्च विस्तरेणाऽब्रवीत् तान्येवाऽसौ सङ्गृह्यैतेषु श्लोकेषु संक्षेपेण जगाद। यथा ध्वन्यालोकस्य प्रथमोद्योते - "अलङ्कारेषु ध्वनेरन्तर्भावो न सम्भवति" इति तथ्यस्य विस्तरेण विवेचनं ध्वनिकारेण कृतम्। तदनन्तरं विवेचनमेतत् संक्षिप्य तेन निम्नश्लोकेषु साररूपेण प्रस्तुतम् -

**व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः।**
**समासोक्त्यादयस्तत्र व्याच्यालङ्कृतयः स्फुटाः ।।**
**व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।**
**न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते।।**
**तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ ।**
**ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः।।**

परिकरसङ्ग्रहसंक्षेपश्लोककृतित्वविषयेऽपि कैश्चित् समीक्षकैः सन्देहो प्रकटितः। अस्मिन् विषये विष्णुपदभट्टाचार्यो प्रमुखो विद्वान्। तेन प्रोक्तम् -

वृत्तिभागे समागताः संक्षेपश्लोकाः वृत्तिकारकृताः वर्तन्ते। सङ्ग्रहश्लोकेषु केभ्यश्चित् पूर्वं वृत्तिकारेण "मया उक्त" मिति लिखितम्, केभ्यश्चिच्च पूर्वं किञ्चिन्न लिखितम्। येभ्यः श्लोकेभ्यः पूर्वं "मयोक्तं लिखितं" वा वर्तते, ते श्लोका अभिनवगुप्तमते वृत्तिकारकृताः वर्तन्ते। परन्त्वन्यश्लोकसम्बन्धेऽसौ मौनमेवाऽवलम्बते। परिकरश्लोककृतित्वविषये ध्वनिकारेण काऽपि टिप्पणी न कृता। अनेन प्रतीयते, सङ्ग्रहश्लोकेषु केषाञ्चिच्छ्लोकानां रचना वृत्तिकारेण कृता, केषाञ्चिच्च न कृता। इत्थं परिकरश्लोका अपि वृत्तिकारकृताः न वर्तन्त इत्यवगन्तव्यम्।[1]

### ७. ध्वन्यालोकस्य प्राचीनाष्टीकाः

ध्वन्यालोकस्य विषयगाम्भीर्येण महत्त्वेन च विद्वांसो मनीषिणोऽस्य ग्रन्थस्य व्याख्यायै समाकृष्टाः बभूवुः। अथ च निम्नलिखितानां प्राचीनटीकानां प्रमाणानि समुपलभ्यन्ते -

#### (i) लोचनटीका -

ध्वन्यालोकस्य प्राचीनटीकासु प्रसिद्धतमा लोचनटीकाऽभिनवगुप्तकृता वर्तते। अस्याष्टीकायाः हस्तलिखितासु पाण्डुलिपिषु ह्यनेकानि नामानि समुपलभ्यन्ते। यथा - सहृदयालोचनध्वन्यालोकलोचनकाव्यालोकलोचनादीनि। परवर्तिभिराचार्यैरभिनवगुप्तो लोचनकाराभिधानेन स्मृतः। काव्यशास्त्रस्येतिहासे ध्वन्यालोकलोचनटीकायास्तदेव महत्त्वं यद् व्याकरणशास्त्रस्येतिहासे पतञ्जलिकृतमहाभाष्यस्य दर्शनशास्त्रस्येतिहासे च

---

१. विष्णुपद भट्टाचार्यकृतध्वन्यालोकव्याख्यायाः प्रस्तावना पृ० xxxv - xxxvi

शङ्करकृतब्रह्मसूत्रभाष्यस्य (शाङ्करभाष्यस्य) वर्तते। आचार्येणाऽभिनवगुप्तेन स्वयमेवेयं टीका लोचननाम्नाऽभिहिता। अथ चेमां ध्वन्यालोकरहस्योन्मीलनकारिणीमसौ जगाद।

अभिनवगुप्तजीवनवृत्तकृतित्वसम्बन्धिनी प्रचुरा सामग्री समुपलभ्यते। इयं विस्तरेणाऽभिनवगुप्तविषयकाध्याये प्रस्तविष्यते। लोचनटीकायामभिनवगुप्तेन ध्वन्यालोक-मन्तव्यरहस्यानां समुचिता व्याख्या कृता। अथ च तेन पूर्ववर्तिनोऽनेके विद्वांसः कवयश्च समुल्लिखिताः। टीकासमाप्तौ तेन समुचितमेव लिखितम् -

आनन्दवर्धनविवेकविकसितकाव्यालोकार्थतत्त्वघटनया यस्य सारोऽनुमीयते, यच्च प्रकाशमानसर्वविषयप्रकाशकमभिनवगुप्तस्येदं विशिष्टं लोचनं व्यापारितं बभूव।[१]

(ii) **चन्द्रिकाटीका -**

अभिनवगुप्तात् पूर्वमपि ध्वन्यालोकस्य टीकैका लिखिता बभूव। इयं टीका चन्द्रिकानाम्ना वा चण्डिकानाम्ना वा प्रथिताऽवर्तत। अभिनवगुप्तष्टीकामेतां लोचनटीकायामनेकेषु प्रसङ्गेषूदलिखत्। उल्लेखैरेभिः प्रतीयते यत् केनाऽप्यभिनवगुप्तपूर्वजेनैवेयं टीका लिखिता।

ध्वन्यालोकस्य प्रथमद्वितीयोद्योतयोष्टीकान्तेऽभिनवगुप्तेन लिखितेन श्लोकेन प्रतिभाति, यत्तेन लोचनटीकाविरचने चन्द्रिकाटीकायाः साहाय्यमुपलब्धम्।[२]

लोचनकारेण स्वटीकायामनेकेषु प्रसङ्गेषु चन्द्रिकाटीकाया मन्तव्यानि खण्डितानि। अथ च तत्राऽसहमतिः प्रकटिता।

व्यक्तिविवेककारो महिमभट्टोऽपि, अभिनवगुप्तपूर्ववर्ती, ध्वन्यालोकस्य चन्द्रिकया टीकया परिचितोऽवर्तत। व्यक्तिविवेकप्रस्तावनायाः पञ्चमे श्लोकेऽसावेनां टीकामुल्लिलेख। अतश्चन्द्रिकाटीकारचनाकालः ख्रिष्टस्य ९००-९५० तमाब्दोऽनुमातुं शक्यः।

(iii) **कौमुदीटीका -**

ध्वन्यालोकस्य प्राचीनटीकासु कौमुदीटीकाऽपि प्रसिद्धा। मूलरूपेण टीकेयं ध्वन्यालोकस्य नाऽस्ति, परन्तु ध्वन्यालोकलोचनस्य वर्तते। इयं केरलप्रदेशस्थविदुषा ह्युदयोत्तुङ्गेन लिखिता। केवलं द्वयोरेवोद्यतयोष्टीकेयं समुपलभ्यते। प्रथमं तावत् कुप्पुस्वामिना महामहोपाध्यायेन द्वाभ्यां सहयोगिभ्यां साहाय्येनेयं टीका ख्रिष्टस्य १९४४ तमेऽब्दे प्रकाशिता। कौमुदीटीकाकारेण मयूरसन्देशनामकं काव्यमपि रचितम्। एनमाश्रित्याऽस्य समयः १४८० (ई०) तमाब्दो निर्धार्यते।

---

१. आनन्दवर्धनविवेकविकासिकाव्यालोकार्थतत्त्वघटनादनुमेयसारम्।
यत्प्रोन्मिषत्सकलसद्विषयप्रकाशिव्यापार्यताभिनवगुप्तविलोचनं तत्।।

२. किं लोचनं विनालोको भाति चन्द्रिकयाऽपि हि।

(iv) रत्नाकर-व्याख्या -

रत्नाकरेण ध्वनिपञ्चाशिकाग्रन्थं विरच्य ध्वन्यालोकस्य प्राकृतगाथानां व्याख्या कृता। अत्र तेनाऽभिनवगुप्तस्याऽनुकरणं विहितम्। अतोऽयमभिनवगुप्तपरवर्त्यनुमेयः। ध्वन्यालोकग्रन्थे षट्चत्वारिंशद् गाथाः विद्यन्ते।

वर्तमानसमयेऽपि ध्वन्यालोकमधिकृत्य बह्व्य उच्चस्तरीयाष्टीकाः डा० कृष्णकुमार-विश्वेश्वरादिभिर्विद्वद्भिर्विरचिताः।

# मुकुलभट्टः

काव्यशास्त्रस्येतिहासे मुकुलभट्टस्याऽपि गणना समीक्षकैर्विहिता। तस्यैकैव कृतिरभिधामातृकावृत्तिरुपलभ्यते, या पञ्चदशकारिकासु निबद्धा लघ्वी रचना वर्तते। अत्र मुकुलभट्टेन अभिधायाः लक्षणायाश्च विवेचनं कृतम्।

## १. मुकुलभट्टस्य परिचयः

मुकुलभट्टस्य जीवनवृत्तसमयादिसम्बन्धे केचन सङ्केताः समुपलभ्यन्ते। अभिधामातृकावृत्तिग्रन्थस्याऽन्तिमश्लोकेन वेद्यते यदस्य लेखकस्य जनको भट्टकल्लटोऽवर्तत। कल्हणेन लिखितम् -

भट्टकल्लटः कश्मीरनरपतेरवन्तिवर्मणः (८५५-८८३ ई०) शासनकाले बभूव।[१] एवमयमानन्दवर्धनरत्नाकरसमकालीन आसीत्। अनेन प्रमाणेन मुकुलभट्टस्य स्थितिः नवमशताब्द्युत्तरार्द्धदशमशताब्दिपूर्वार्द्ध (ई०) कालीनाऽनुमीयते। काव्यप्रकाशस्य सङ्केतटीकायाः लेखकेन माणिक्यचन्द्रेण मुकुलभट्टोऽनेकेषु स्थानेषूद्धृतः।

उपर्युक्तविवरणेन लेखकनाम्ना च मुकुलभट्टस्य कश्मीरजनपदनिवासित्वं सुस्पष्टमेव। उद्भटकृतालङ्कारसारसङ्ग्रहटीकाकारः प्रतिहारेन्दुराजो मुकुलभट्टं स्वगुरुमाचचक्षे। असावलिखत् - "तेनाऽलङ्कारशास्त्रस्याध्ययनं मुकुलभट्टात् कृतम्।[२]" मुकुलभट्टो मीमांसाव्याकरणतर्कसाहित्यादीनां शास्त्राणां पण्डितोऽवर्ततेत्यपि तेन प्रोक्तम्। एवं मुकुलभट्टस्य प्रतिहारेन्दुराजस्य च समयो दशमशताब्दिपूर्वार्द्धको (ई०) ऽनुमीयते।

## २. मुकुलभट्टस्य कृतयः

मुकुलभट्टस्य कृतिरभिधामातृकावृत्तिः पञ्चदशकारिकाणामेका लघ्वी पुस्तिका वर्तते। कारिकाणां वृत्तिरपि मुकुलभट्टेन स्वयं लिखिता। अत्राऽभिधालक्षणयोर्द्वयोः शब्दशक्त्योः

१. अनुग्रहाय लोकानां भट्टाः श्रीकल्लटादयः।
अवन्तिवर्मणः काले सिद्धा भुवमवातरन्।। राजतरङ्गिणी ५.६६

२. विद्वदग्रयान्मुकुलादधिगम्य विविच्यते।
प्रतिहारेन्दुराजेन काव्यालङ्कारसङ्ग्रहः।।
अलङ्कारसारसङ्ग्रहस्य प्रतिहारेन्दुराजकृतटीकाया अन्तिमं पद्यम्

मुख्यार्थस्य लाक्षणिकार्थस्य च विवेचनं लेखकेन कृतम्। अत्र लक्षणायाः विस्तृतविवेचना वर्तते। सुप्रसिद्धेन काव्यशास्त्राचार्येण मम्मटेन काव्यप्रकाशस्य द्वितीयोल्लासे लक्षणाविवेचना मुकुलभट्टमाश्रित्य कृता। डा० बलदेवोपाध्यायस्य मतमस्ति -

मम्मटस्य "लक्षणा तेन षड्विधा" इत्युक्तिरभिधामातृकावृत्तिं विनाऽवगन्तुमतिकठिना।

मुकुलभट्टः स्वकृतौ कुमारिलभट्टोद्भटध्वन्यालोकभर्तृमित्रमहाभाष्यबिज्जिका-वाक्यपदीयशबरस्वामिनामुल्लेखमकरोत्।

# भट्टतौत:

अभिनवगुप्तोपाध्यायस्य भट्टतौतस्य नाम काव्यशास्त्रजगति प्रसिद्धं वर्तते।

## १. भट्टतौतस्य परिचय:

भट्टतौतनाम्नो गुरोरभिनवगुप्तो नाट्यशास्त्रस्य शिक्षामवाय।[१] ध्वन्यालोकलोचन-टीकायां नाट्यशास्त्रस्य चाऽभिनवभारतीटीकायामनेकेषु स्थानेष्वसौ भट्टतौतस्योल्लेखं स्वोपाध्यायरूपेण चकार। अभिनवगुप्तेन प्रोक्तम् -

भट्टतौतेन काव्यकौतुकग्रन्थो लिखितोऽभिनवगुप्तेन च तस्य टीका रचिता।[२] परन्तु वर्तमानसमये न तु भट्टतौतस्य ग्रन्थ: समुपलभ्यते, नाऽपि चाऽभिनवगुप्तकृता तद्ग्रन्थटीका।

भट्टतौतसमयसम्बन्धेऽधिकं विवेचनं नाऽवश्यकम्। अभिनवगुप्तस्य गुरोर्भट्टतौतस्य समयस्तच्छिष्यपूर्वकोऽनुमेय:। अभिनवगुप्तस्य समय: सुनिश्चित:। तस्य साहित्यरचनाकाल: ९८०-१०२० ख्रिष्टाब्दमध्यवर्ती गण्यते। अतो भट्टतौतस्यापि ग्रन्थरचनासमय: ९५०-९८० ख्रिष्टाब्दमध्यवर्त्यवगन्तव्य:।

## २. भट्टतौतस्य कृतयो मान्यताश्च

भट्टतौतस्य कृतिरवर्तत - काव्यकौतुकम्। अभिनवगुप्तेनाऽस्य ग्रन्थस्य विवरणनाम्नी टीका लिखिता। परन्त्वयं ग्रन्थो नाऽपि च सा टीका वर्तमानसमये समुपलभ्यते। अत: भट्टतौतप्रोक्तकाव्यसमीक्षानियमानां बोधो न सम्यग्रूपेण प्रवक्तुं शक्य:। परन्त्वभिनवगुप्तेन ध्वन्यालोकलोचनटीकायां नाट्यशास्त्रस्य चाऽभिनवभारतीटीकायां भट्टतौतस्य सिद्धान्तानाम-भिमतानाञ्चोल्लेखो विविधेषु प्रसङ्गेषु विहित:। हेमचन्द्रादिभिराचार्यैरपि भट्टतौतस्याभिमतानि केषुचित्स्थानेषूद्धृतानि। अनेन भट्टतौतसिद्धान्तानां विषये किञ्चिज्ज्ञातुं शक्यते। अत्र केषाञ्चित्तेषामुल्लेखो विधीयते -

---

१. सद्वृत्ततौतवदनोदितनाट्यवेद -
तत्त्वार्थमर्थिजनवाञ्छितसिद्धिहेतो:।
माहेश्वराभिनवगुप्तपदप्रतिष्ठ:
संक्षिप्तवृत्तिविधिना विशदीकरोति।।
भरतनाट्यशास्त्र - अभिनवभारतीटीका प्रस्तावनाश्लोक - ४

२. ध्वन्यालोकलोचन - पृ० २२१

(क) मोक्षप्रदत्वाच्छान्तो रस: श्रेष्ठ:।[१]

(ख) रस: प्रीत्यात्मा भवति। तदेव नाट्यं नाट्ये वा तदेव वेद्यते।[२]

(ग) रससमुदाय एव नाट्यम्। रसो न केवलं नाट्य एव भवति, काव्येऽपि सन्निधीयते। काव्येऽप्ययं रसो नाट्यसदृश आनन्दप्रदो भवति। काव्ये प्रत्यक्षकल्पसंवेदनोदये रसस्योदयो भवति।[३]

(घ) काव्ये कविनायकश्रोतार: समानरूपेण रसमनुभवन्ति।[४]

भट्टतौतकृतकाव्यकौतुकस्याऽनेकानि वाक्यानि ग्रन्थेषूत्तरवर्तिषु समुल्लिखितानि सन्ति। तत्र कानिचिद् वाक्यान्यधो निर्दिश्यन्ते -

(१) **प्रयोगत्वमनापन्ने काव्ये नास्वादसम्भव: ।**
**वर्णनोत्कलिकाभोगप्रौढोक्त्या सम्यगर्पित:।।**
**उद्यानकान्ताचन्द्राद्या भावा: प्रत्यक्षवत्स्फुटा:।।**

नाट्यशास्त्र - अभिनवभारतीटीका - भाग - १ पृ० २९१-२९२

(२) **स्वातन्त्र्येण प्रवृत्तौ तु सर्वप्राणिषु सम्भव:।।**

नाट्यशास्त्र (४.५१) अभिनवभारती टीका

(३) **यदत्रास्ति न तत्रास्य कवेर्वर्णनमर्हति।**
**यन्नासम्भवि तत्र स्यात् सम्भव्यस्य तु धर्मत:।।**

नाट्यशास्त्र - अभिनवभारती टीका भाग - २ पृ० २१६

(४) **महाकवीनां पदवीमुपात्तामारुरुक्षताम्।**
**नासंस्मृत्य पदस्पर्शसम्पत्सोपानपद्धति:।।**

नाट्यशास्त्र-अभिनवभारतीटीका भाग - २ पृ० २९२

(५) **न भाषानियम: पात्रे काव्ये स्यात् सैन्धवीमिति।।**

(६) **कामावस्था न शृङ्गार: क्वचिदासां तदङ्गता।।**

---

१. मोक्षफलत्वेन चाऽयं शान्तो रस: परमपुरुषार्थनिष्ठत्वात् सर्वरसेभ्य: प्रधानतम:। स चाऽयमस्मदुपाध्यायभट्टतौतेन काव्यकौतुके अस्माभिश्च तद्विवरणे बहुतरकृतनिर्णय: पूर्वपक्षसिद्धान्त इत्यलं बहुना। ध्वन्यालोक (३.२६) लोचनटीका

२. प्रीत्यात्मा च रसस्तदेव नाट्यं नाट्य एव च वेद इत्यस्मदुपाध्याया:। ध्वन्यालोकलोचन पृ० १८४

३. रससमुदायो हि नाट्यम्। न नाट्य एव च रस: काव्येऽपि नाट्यायमान एव रस:। काव्यार्थविषये हि प्रत्यक्षकल्पसंवेदनोदये रसोदय इत्युपाध्याया:।

नाटयशास्त्र (६.६९) अभिनवभारती टीका

४. नायकस्य कवे: श्रोतु: समानोऽनुभवस्तत:।। ध्वन्यालोकलोचनटीका पृ० ३४

(७) नागर्षिकविरित्युक्तमृषिश्च कविदर्शनात् ।
विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम् ।।
स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः ।
दर्शनाद् वर्णनाच्चाथ रूढा लोके कविश्रुतिः ।।
तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः ।
नोदिता कविता लोके यावज्जाता न वर्णना ।।

काव्यानुशासनम् पृ० ५१६

(८) प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ।
तदनुप्राणनाज्जीवद् वर्णनानिपुणो कविः ।
तस्य कर्म स्मृतं काव्यम् ।। सोमेश्वरकृतकाव्यप्रकाशटीकायाम्

भट्टतौतस्य काव्यसमीक्षासिद्धान्ता उत्तरवर्तिभिराचार्यैरतितरां सम्मानिता, इत्येतैरुद्धरणैः सुस्पष्टमेव। तस्य शिष्योऽभिनवगुप्तो गुरुणाऽतिशयेन प्रभावितोऽवर्तत। तेन स्वगुरोर्मतान्यतिशयसमादरेण स्थाने-स्थाने समुद्धृतानि। उत्तरवर्तिग्रन्थेषूद्धृतानि भट्टतौतग्रन्थसमुद्धरणानि समीक्ष्याऽनुमातुं शक्यते, यत्तस्य कृतिः काव्यकौतुकं प्रायशः पद्यबद्धमासीत् ।

षोडशोऽध्यायः

# भट्टनायकः

## १. भट्टनायकस्य परिचयः

भरतरससूत्रव्याख्यातृरूपेण भट्टनायकस्य प्रसिद्धिः सर्वत्र दिगन्तरेषु प्रथिता। अथ चाऽसौ कश्मीरजनपदवास्तव्यो भट्टनायकः काव्यशास्त्रस्येतिहासेऽतितरां प्रसिद्ध आचार्यः। भरतरससूत्र[1]व्याख्यातृषु चत्वारो ह्याचार्याः भट्टलोल्लटशङ्कुकभट्टनायकाभिनवगुप्ताः सुतरामाद्रियन्ते। तत्र भट्टनायको महत्त्वपूर्णं स्थानं भजते। मम्मटादिलब्धप्रतिष्ठसमालोचकैः रसस्वरूपव्याख्याने भट्टनायकोऽप्युद्धृतः।

काश्मीरजनपदवास्तव्योऽयं भट्टनायको ध्वन्यालोककारस्याऽऽनन्दवर्धनस्य मतमखण्डयत्। तेन प्रोक्तम् **"न ध्वनिः काव्यस्यात्मा"**। अतोऽसावानन्दवर्धनपरवर्त्यवगन्तव्यः। एतां युक्तिमाश्रित्य भट्टनायकस्य समयः ८५०-९८० ख्रिष्टाब्दमध्यवर्ती निर्धार्यते।

अभिनवगुप्तेन भट्टनायकस्य यथाऽऽलोचना विहिता, तथाऽसौ तदतिनिकटपूर्ववर्ती प्रतीयते। अतो भट्टनायको दशमशताब्दिमध्यकालीनोऽनुमातुं शक्यते।

कह्लणेन राजतरङ्गिण्यां कस्यचिद् भट्टनायकस्य वर्णनं विहितम्।[2] असौ च शङ्करवर्मणो नरपतेः शासनकाले (८८३-९०२ ई०) बभूव। परन्तु वर्तमानकालीनाः समीक्षकास्तस्य भट्टनायकस्य काव्यशास्त्रिणश्च भट्टनायकस्य नैकत्वमङ्गीकुर्वन्ति। डा० पी०वी०काणे महोदयो लिखति -

"द्वयोरेतयोर्भट्टनायकयोर्वर्तति न किमपि साम्यम्। अतः काव्यशास्त्रकृतो भट्टनायकस्य समयः ८५५-८८५ ख्रिष्टाब्दो ह्यवगन्तव्यः''।[3]

## २. भट्टनायकस्य कृतयः

अभिनवगुप्तादीनां प्राचीनकाव्यशास्त्रकृतामुल्लेखैर्वेद्यते, यद् भट्टनायकः कमपि हृदयदर्पणाभिधानं सहृदयदर्पणाभिधानं वा ग्रन्थं प्रणिनाय। परं तस्य काऽपि कृतिर्वर्तमानसमये

१. विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः।

२. द्विजस्तस्य नायकाख्यो गौरीशसुरसद्मनोः।
चातुर्विधकृतस्तेन वाग्देवीकुलमन्दिरम्।। राजतरङ्गिणी ५.५९

३. पी०वी० काणे : संस्कृत काव्यशास्त्र का इतिहास पृ० २८१

नोपलभ्यते। हृदयदर्पणग्रन्थं विरच्य भट्टनायको ध्वनिसिद्धान्तमानन्दवर्धनस्य चखण्डे। व्यक्तिविवेककारेण महिमभट्टेन प्रोक्तम् -

**सहसा यशोऽभिसर्त्तुं समुद्यताऽदृष्टदर्पणा मम धीः।**
**स्वालङ्कारविकल्पप्रकल्पने वेत्ति कथमिवावद्यम्।।**

दर्पणदर्शनं विनैव ध्वनिखण्डनजन्ययशः प्राप्तुं मया स्वग्रन्थस्य रचना कृता।

इदं पद्यं श्लेषेण दर्पणपदमधिकृत्य भट्टनायकस्य हृदयदर्पणग्रन्थं प्रकटयति। दर्पणपदस्य व्याख्यैवं वर्तते -

**"दर्पणो हृदयो दर्पणाख्यो ध्वनिध्वंसग्रन्थोऽपि।"**

अलङ्कारसर्वस्वटीकाकारेण जयरथेन रसाभिव्यक्तिप्रसङ्गे भट्टनायकमतमेवं प्रकटीकृतम् -

**"भट्टनायकेन तु व्यङ्ग्यव्यापारस्य प्रौढोक्त्याऽभ्युपगतस्य काव्यांशत्वं ब्रुवता न्यग्भावितशब्दार्थस्वरूपस्य व्यापारस्यैव प्राधान्यमुक्तम्। तत्राप्यभिधा-भावकत्वलक्षणव्यापारद्वयोत्तीर्णो रसचर्वणात्मा भोगापरपर्यायो व्यापारः प्राधान्येन विश्रान्तिस्थानतयाऽङ्गीकृतः।"**

भट्टनायकमतं समीक्षमाणेन जयरथेन पुनः प्रोक्तम् -

**"इयं विवेचना तस्य हृदयदर्पणाख्ये ग्रन्थे वर्तते।"**

### ३. हृदयदर्पणस्योद्धरणानि

हृदयदर्पणाख्यो ग्रन्थो भट्टनायकस्य न वर्तमानसमये प्राप्यते। परं तस्यानेकान्युद्धरणानि विविधेषु ग्रन्थेषु समुपलभ्यन्ते। तत्र कानिचिदत्र प्रदर्श्यन्ते -

(१) **अभिधा भावना चान्या तद्योगी कृतिरेव च।**
**अभिधाधामतां याते शब्दार्थालङ्कृती ततः।।**
**भावनाभाव्य एषोऽपि शृङ्गारादिगणो मतः।**
**तद्भोगीकृतिरूपेण व्याप्यते सिद्धिमान्नरः।।**

अभिनवभारत्यां, काव्यानुशासने, जयरथकृताऽलङ्कारसर्वस्वटीकायाञ्च

(२) **शब्दप्रधानमाश्रित्य तत्र शास्त्रं पृथग्विदुः।**
**अर्थतत्त्वेन युक्तं तु वदन्त्याख्यानमेतयोः।।**
**द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत्।।**

ध्वन्यालोकलोचनटीकायाम्

(३) **ध्वनिर्नामापरो योऽपि व्यापारो व्यञ्जनात्मकः।**
**तस्य सिद्धेऽपि भेदे स्यात् काव्याङ्गत्वं न रूपिता।।**

ध्वन्यालोकलोचनटीकायां जयरथकृतालङ्कारसर्वस्वटीकायाञ्च

(४) वाग्धेनुर्दुग्ध एकं हि रसं यल्लाभतृष्णया।
तेन नास्य समः स स्याद् दुष्यते योगिभिर्हि यः।।

ध्वन्यालोकलोचनटीकायाम्

(५) नमस्यै लोकनिर्माणकवये शम्भवे यतः।
प्रतिक्षणं जगन्नाट्यप्रयोगरसिको जनः।।

नाट्यशास्त्रस्याभिनवभारतीटीकायाम्

(६) प्रधाने सिद्धिभागेऽस्य प्रयोगाङ्गत्वमागताः।
गेयादयस्तथैवैते त्रैधैनं यद्युपयोगिनः।।
सोपानपदपंक्त्या च सा च मोक्षस्पृगात्मना।।

नाट्यशास्त्राभिनवभारतीटीकायाम्

### ४. भट्टनायकस्य काव्यशास्त्रविकासे प्रभावः

यान् काव्यशास्त्रीयसिद्धान्तान् भट्टनायकः प्रत्यापादयत् तेषां सम्पूर्णतयाऽवबोधः तदैव स्याद् यदा तस्य हृदयदर्पणाख्यो ग्रन्थः समुपलभ्येत। खिष्टस्य षोडशशताब्द्यां ग्रन्थमिमं रसप्रदीपग्रन्थकारः प्राप्तवान्। परं तदनन्तरमस्य ग्रन्थस्योपलब्धिप्रमाणानि नोपलभ्यन्ते। प्राचीनग्रन्थोद्धरणान्येव भट्टनायकस्य काव्यशास्त्रीयमन्तव्यविषये किञ्चिदवबोधने प्रभवन्ति। अथ च काव्यशास्त्रीयसिद्धान्तेषु तस्य प्रभावोऽप्यधिगन्तुं शक्यते। काव्यशास्त्रविकासे भट्टनायकस्य प्रभावो निम्नप्रकारेण प्रस्तूयते -

(i) भट्टनायकः शास्त्राख्यानकाव्यानां भेदं व्याकरोत्। शास्त्राणि शब्दप्रधानानान्युपदेशप्रदानि च भवन्ति। आख्याना (इतिहासपुराणादीनि) न्यर्थप्रधानानि सन्ति। एभ्यः सूचनाः प्राप्यन्ते। काव्यानामाश्रयः कविव्यापारः। अत्र शब्दस्याऽर्थस्य च द्वयोरेव प्राधान्यम्।

(ii) भट्टनायकः काव्यसमीक्षायां ध्वनेर्महत्त्वं नाङ्गीचकार, रसवाद्याचार्योऽसौ रसमेव काव्यस्याऽऽत्मानं मेने। रसचर्वणा रसभोगो वा काव्यस्यात्मा। ध्वनिसिद्धान्तस्य खण्डनाय हृदयदर्पणग्रन्थमसावलिखत्। आनन्दवर्धनो ध्वनेस्त्रीन् भेदान् प्रादर्शयत् तांश्च प्रतीयमानार्थान् जगाद। परं भट्टनायकः काव्ये वस्त्वलङ्कारप्रतीयमानार्थयोमर्हत्त्वं निषिध्य रसस्यैव महत्त्वमङ्गीचकार। रसोऽपि न प्रतीयमानः, परं स्वसंवेद्य एवाऽसौ।

भट्टनायकस्य ध्वनिविषयकमतविषये पी०वी०काणे महोदयो लिखति -

"भट्टनायकस्तेष्वालङ्कारिकेषु गणनीयो ये ध्वनेस्तत्त्वं वागगोचरं मन्यन्ते येभ्यश्च ध्वनिकारेण प्रोक्तम् -

"केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयम्। केचित्पुनर्लक्षणकरणशालीनबुद्धयो ध्वनेस्तत्त्वं सहृदयहृदयसंवेद्यमेव समाख्यातवन्तः।"

परन्तु वस्त्वलङ्कारध्वनिखण्डनकारकस्य "रस एव काव्यस्य सारभूतं तत्त्व" मिति प्रतिपादकस्य भट्टनायकस्याऽभिनवगुप्तेन सुकठोराऽऽलोचना विहिता। तेन लिखितम् -

**"वस्तुध्वनिं दूषयता रसध्वनिस्तदनुग्राहकः समर्थ्यत इति सुष्ठुतरां हि ध्वनिध्वंसोऽयम्।"**

ध्वन्यालोकलोचनटीका

(iii) भरतरससूत्रव्याख्यातृष्वाचार्येषु भट्टनायकस्य विशिष्टं स्थानमस्ति। तस्य रसनिष्पत्तिविषयकमतं मम्मट एवं लिलेख -

**न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यते अपितु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिः सतत्त्वेन भोगेन भुज्यत इति भट्टनायकः।**[१]

भावोऽयमत्र यद् भट्टनायकेन काव्ये त्रयो व्यापाराः मताः - अभिधाव्यापारो भावकत्वव्यापारो भोजकत्वव्यापारश्च। अभिधाव्यापारेण काव्ये वाच्यार्थप्रतीतिर्भवति। भावकत्वव्यापारेण काव्यगतपात्राणां साधारणीकरणं जायते। अर्थात् काव्यगतरामसीतादिपात्राणि रामत्वसीतात्वादिविशेषांशं परित्यज्य युवकयुवतीमात्राण्यवशिष्यन्ते। तदनन्तरं भोजकत्वव्यापारेण सहृदयस्य रजोगुणस्य तमोगुणस्य चाभिभवानन्तरं सत्त्वगुणस्योद्रेको जायते। असौ पात्रैः सह तादात्म्यमनुभूयाऽऽनन्दरूपरसमुपभुनक्ति। भट्टनायकस्य त्रयाणां व्यापाराणामेतेषां वर्णनमभिनवगुप्तेन निम्नप्रकारेण विहितम् -

**" न प्रतीयते नोत्पद्यते नाभिव्यज्यते काव्ये रसः। किन्त्वन्यवैलक्षण्यं काव्यात्मानः शब्दस्य त्र्यंशताप्रसादात्। तत्राऽभिधायकत्वं वाच्यविषयं भावकत्वं रसादिविषयं भोक्तृत्वं सहृदयविषयमिति त्रयोंऽशभूतव्यापाराः।**

अभिनवगुप्तमम्मटप्रभृतिभिराचार्यैर्भट्टनायकस्य साधारणीकरणव्यापारस्त्वङ्गीकृतः, परं तस्य भावकत्वभोजकत्वव्यापारौ न स्वीकृतौ। रसस्तु काव्ये प्रतीयमानार्थ एवेति तैः प्रतिपादितम्।

भट्टनायकस्य काव्यशास्त्रीयमन्तव्यानां सङ्केतमात्रमेवाऽत्र प्रस्तुतम्। विशेषं तु हृदयदर्पणग्रन्थोपलब्धिरेव परिचाययिष्यति।

---

१. मम्मटकृतकाव्यप्रकाशचतुर्थोल्लासे रसनिष्पत्तिव्याख्यायाम्

सप्तदशोऽध्यायः

# राजशेखरः

## १. राजेशखरस्य महत्त्वम्

नाट्यकाररूपेण प्रसिद्धो राजशेखरः काव्यानुशासनग्रन्थं विरच्य काव्यशास्त्रकाररूपेणाऽपि प्रथिताङ्कतः। काव्यानुशासने काव्याङ्गेषु सर्वेष्वसत्स्वपि तत्र सन्निविष्टा काव्यसमीक्षासम्बन्धिनी सामग्री तं काव्यशास्त्रकारिणं समर्थयितुं सक्षमा। अतो राजेशखरो महनीयेषु काव्यशास्त्रकृत्सु मनीषिभिर्लोके समाद्रियते।

## २. राजशेखरस्य जीवनवृत्तं समयश्च

प्राचीनसंस्कृतसाहित्यकाराणां जीवनवृत्तादिविषयकं ज्ञानमत्यल्पमेव प्रायशो विज्ञायते, परं राजशेखरस्य जीवनवृत्तादिपरिचायिका सामग्री पर्याप्तं सुलभा। राजशेखरस्य कृतिभ्योऽन्यविवरणेभ्यश्च तस्य जीवनवृत्तसमयादिविषयकज्ञानं भवत्येव।

राजशेखरस्य समयः ८८०-९२० तमः ख्रिष्टाब्दोऽवगम्यते। तस्य महतो विदुषः कृतयः प्रमाणयन्ति यदसौ कान्यकुब्जप्रदेशस्य प्रतिहारवंशीयनरेशस्य महेन्द्रपालस्य तत्सुतस्य महीपालस्य च गुरुपदमलञ्चकार। तद्वंशीयनरपतिराजसभास्वसौ प्रचुरं सम्मानमधिजगाम। कर्पूरमञ्जरीबालरामायणबालभारतरूपकाणां वाक्यैस्तथ्यस्याऽस्य सम्पुष्टिर्भवति।[1] नाट्यान्येतानि नरपतेर्महेन्द्रपालस्य राजसभासमक्षमभिनयावसरमपि सम्प्राप्नुवन्। महेन्द्रपालस्य समयः सुनिश्चितः। सियोदोनी शिलालेखेन विज्ञायते, यन्महेन्द्रपालस्य राज्यशासनकालः ९०३ तमख्रिष्टाब्दपर्यन्तं बभूव। महीपालस्य च शासनावधिः ९१७ तमख्रिष्टाब्दं यावदभवत्। राजशेखरस्याऽयमेव समयोऽवगन्तव्यः। अन्यैरपि प्रमाणैस्तस्याऽयमेव समयः सिद्ध्यति।

काव्यानुशासने राजशेखरोऽनेकेषां वाक्पतिराजोद्भटानन्दवर्धनादीनामाचार्याणामुल्लेखञ्चकार। वाक्पतिराजोद्भटौ कश्मीरजनपदाधिपतेर्जयापीडस्य समकालीनावास्ताम्। जयापीडस्य समयः ७७९-८११ ख्रिष्टाब्दोऽवगम्यते। आनन्दवर्धनः काश्मीरनरपतेरवन्तिवर्मणः

---

१. आपन्नार्तिहरः पराक्रमधनः सौजन्यवारांनिधि-
स्त्यागी सत्यसुधाप्रवाहशशभृत् कान्तः कवीनां गुरुः।
वर्ण्यं वा गुणरत्नरोहणगिरेः किं तस्य साक्षादसौ
देवो यस्य महेन्द्रपालनृपतिः शिष्यो रघुग्रामणीः।। बालारामायण १.१८

शासनकालेऽभवत्। अयं नरेशः ८५७-८८८ खिष्टाब्दसमये कश्मीरजनपदशासको बभूव। राजशेखरस्त्वानन्दवर्धनोत्तरकालीनो ध्रुवमवगम्यते। अतस्तस्य पूर्वोक्त एव समयः (८८०-९२०) प्रमाणितो भवति।

प्रथमं तावत् सोमदेवो यशस्तिलकचम्पूकाव्ये (रचनाकालः ९६० खिष्टाब्दः) राजशेखरमुल्लिलेख। तदनन्तरं धनपालो (१००० ई०) तिलकमञ्जर्यां यायावरकविं (राजशेखरम्) प्रशशंस।[1] अतो राजशेखरस्तत्पूर्वकालीनो ह्यवगन्तव्यः।

पूर्वापरसमयसम्बन्धविचारेण राजशेखरस्य समयः पूर्वोक्त (८८०-९२० ई०) एव निर्धारयितुं शक्यः।

राजशेखरजीवनवृत्तविषयकमपि वस्तुजातं यत्किञ्चिदुपलभ्यते। राजशेखरो मूलरूपेण महाराष्ट्रजनपदवास्तव्योऽवर्तत। विदर्भनगरनिवासिना तेन साहित्यकारेण साहित्यिकप्रतिष्ठा कान्यकुब्जनगरे समधिगता। राजशेखरस्य परिजनाः महाराष्ट्रजनपदं पूर्वमेव परितत्यजुः। सोऽपि कविः कान्यकुब्जनगरमागत्य तत्र निवासञ्चक्रे। कान्यकुब्जशासकेन निर्भयिना-(महेन्द्रपालेन) ऽसौ सविशेषमभिनन्दितो गुरुरूपेण च वृतः।

राजशेखरेण स्वकृतिषु पूर्वजानां नामान्युल्लिखितानि। तत्र अकालजलद-सुरानन्द-तरल-कविराजादयः प्रमुखत्वेन वर्तन्ते। राजशेखरस्य जनको दुर्दुरकोऽवर्तत, माता च शीलवती। अकालजलदस्तस्य पितामहोऽभवत्। राजशेखरः स्वात्मानं यायावरमाचख्यौ। अथ च तेन प्रोक्तम् - " मुनीनां मतानि विस्तरेण सङ्गृह्य कवीनां हिताय तेन काव्यमीमांसा निबद्धा।"[2]

राजशेखरश्चहुआण (चौहान) वंशजाताया अवन्तिसुन्दरीनामधेयायाः विदुष्याः कन्यायाः पाणिं जग्राह। इयमवन्तिसुन्दरी संस्कृत-प्राकृतभाषाभिज्ञा काव्यशास्त्रसम्बन्धीन्यपि स्वमन्तव्यानि स्थिरीचकार। मन्तव्यान्येतानि काव्यमीमांसायां यत्र तत्र समुल्लिखितानि समुपलभ्यन्ते। इयमवन्तिसुन्दरी कवयित्री ह्यप्यासीत्। यद्यपि तद्रचिता काऽपि काव्यकृतिर्नोपलभ्यते, तथापि तन्निर्मिताः केचन श्लोकाः यत्र तत्रोपलभ्यन्ते। हेमचन्द्रेण स्वकृतौ देशीनाममालायामवन्ति-सुन्दरीकृतास्त्रयः श्लोकाः ह्युल्लिखिताः। काव्यमीमांसायामप्यवन्तिसुन्दरीरचितः श्लोक एको वर्तते। अवन्तिसुन्दरीप्रेरणयैव राजशेखरः प्राकृतभाषायां कर्पूरमञ्जरीरूपकं प्रणीय तस्याऽभिनयस्य प्रबन्धञ्चकार।[3]

---

१. समाधिगुणशालिन्यः प्रसन्नपरिपक्त्रिमाः।
यायावरकवेर्वाचो मुनीनामिव वृत्तयः।। तिलकमञ्जरी-प्रस्तावना - श्लोक - ३३

२. यायावरीयः संक्षिप्य मुनीनां मतविस्तरम्।
व्याकरोत् काव्यमीमांसां कविभ्यो राजशेखरः।। काव्यमीमांसा - प्रथमोऽध्यायः

३. चाहुमानकुलमौलिमौलिका राजशेखरकवीन्द्रगेहिनी।
भर्तुः कृतिमवन्तिसुन्दरी सा प्रयोक्तुमेवमिच्छति।। कर्पूरमञ्जरी (संस्कृत रूपान्तरम्) - १.११

स्वभावेन स्वामिभानी गर्वनिष्ठो राजशेखर: स्वात्मानं वाल्मीकिभर्तृमेण्ठभवभूति-कवीनामवताररूपेणाऽवर्णयत्। बालरामायणे बालभारते चैकस्मिन् श्लोके तेन तथा वर्णितम्।[1]

राजशेखरसम्बन्धो वर्णविषयकोऽपि समीक्षकेषु विवादग्रस्त: सञ्जात:। असौ ब्राह्मणोऽवर्तत क्षत्रियो वा। प्रश्नस्य विवादस्य वाऽत्र मुख्यो हेतुर्यदस्य भार्याऽवन्तिसुन्दरी क्षत्रियवर्णाऽवर्तत। परं भार्याया: क्षत्रियवर्णत्वमेव न तं क्षत्रियकुलजातं साधयति। भारतवर्षस्य प्राचीनधार्मिकसामाजिकपरम्परास्वनुलोमविवाहा अनुमता अवर्तन्त। राजशेखर-समकालभाविना मेधातिथिना ब्राह्मणेभ्योऽनुलोमविवाहाधिकार: प्रदत्त:। क्षत्रियबालकानां क्रोडीकरणमपि ब्राह्मणेभ्योऽनुमतम्। अतो नाऽयमाश्चर्यकरो विषयो यद् राजशेखरो ब्राह्मणोऽपि सन् क्षत्रियकन्याया अवन्तिसुन्दर्या: पाणिञ्जग्राह। राजशेखरस्य ब्राह्मणवर्णत्वं प्रतिपादयितुं निम्नयुक्तय: प्रस्तूयन्ते -

(i) राजशेखरो महेन्द्रपालनृपते: गुरुरवर्तत। नवमदशमख्रिष्टाब्दसामाजिकवातावरणे कश्चित् क्षत्रियराजा कञ्चन क्षत्रियविद्वांसं गुरुरूपेणाऽङ्गीकुर्यादिति तथ्यमसम्भवमेव प्रतीयते। अस्मिन् समये ब्राह्मणस्य कर्तव्यान्यासन् - "यजनं याजनं दानमप्रतिग्रहोऽध्ययनमध्यापनञ्च।" अत्राऽन्यवर्णानां त्रीण्येव कर्तव्यान्यासन् - यजनं दानमध्ययनञ्च। अतो राजशेखरेण ब्राह्मणवर्णीयेन भवितव्यम्।

(ii) राजशेखर: स्वात्मानं यायावरीयमसूचयत्। स्मृतिषु ब्राह्मणा द्विविधा: प्रोक्ता: - शालीया: यायावराश्च। यायावरास्ते ब्राह्मणा ये न नियतरूपेणैकस्मिन् स्थाने निवसन्ति। सामान्यजीवनं व्यत्यापयन्तस्ते न तूपहारान् स्वीकुर्वन्ति न च धनं सञ्चिन्वन्ति।[2] राजशेखरस्य यायावरत्वादसौ ब्राह्मणोऽवगन्तव्य:।

### ३. राजशेखरस्य कृतय:

राजशेखरेणाऽनेकेषां काव्यानामन्यविधग्रन्थानाञ्च रचना विहिता। काव्यशास्त्रकारेणा-ऽप्यनेनाऽनेकेषां रूपकाणां लेखनं कृतम्।

राजशेखरस्य काव्यशास्त्रीयो ग्रन्थो वर्तते - 'काव्यमीमांसा'। अथ च चत्वारि रूपकाण्यप्यसौ व्यरचयत्। रूपकाणि वर्तन्ते - विद्धसालभञ्जिका, कर्पूरमञ्जरी, बालरामायणं बालभारतञ्च। केचन विद्वांस: समीक्षकास्तं हरविलासमिति महाकाव्यस्रष्टारमप्यामनन्ति। सङ्केतोऽयं हेमचन्द्रस्य काव्यानुशासने समुपलभ्यते। परमिदं महाकाव्यं नास्मिन् वर्तमानयुगे समुपलभ्यते। अलभ्यमेवैतद् वर्तते।

---

१. बभूव वल्मीकभव: कवि: पुरा तत: प्रपेदे भुवि भर्तृमेण्ठताम्।
स्थित: पुनर्यो भवभूतिरेखया स वर्तते सम्प्रति राजशेखर:।। बालरामायण १.१३; बालभारत १.१२

२. याज्ञवल्यक्य स्मृति - मिताक्षराटीका - १.१२८

## ४. काव्यमीमांसा

काव्यमीमांसाग्रन्थस्य पाण्डुलिपिरशीतिवर्षपूर्वमेव समीक्षकैरुपलब्धा। ग्रन्थोऽयं प्रथमं गायकवाड-ओरियन्टल-सीरीज-बड़ौदा इति संस्थया प्रकाशतां नीतः। तदनन्तरमन्याभिरपि प्रकाशनसंस्थाभिः प्रकाशितः।

राजशेखरेण स्वयमेव लिखितं यदस्मिन् ग्रन्थे मूलरूपेणाऽष्टादशाधिकरणानि विद्यन्ते। परन्तु वर्तमानसमयेऽधिकरणमेकमेव केवलं लभ्यते। अधिकरणमिदं लेखकेन कविरहस्यमित्यभिधाने नाऽभिहितम्।[1] अधिकरणस्याऽस्य कविरहस्यमिति नामकरणं समुचितमेव, यतोऽस्मिन्नधिकरणे कविभ्य उपयोगिनां सर्वेषामेव सिद्धान्तानामुपदेश एकस्मिन्नेव स्थाने लेखकेन कृतः। अस्याऽधिकरणस्याऽष्टादशाध्यायानां विषयवस्तु निम्नक्रमेण वर्ण्यते -

(i) **प्रथमोऽध्यायः -**

शास्त्रसङ्ग्रहनाम्नि प्रथमेऽध्याये शिवो ब्रह्मणे काव्यमुपदिदेश। ब्रह्मणा ह्युपदेशोऽयं स्वशिष्येभ्यः प्रदत्तः। ब्रह्मणस्त्वेकः शिष्यः काव्यपुरुषाभिधानोऽवर्तत। काव्यपुरुषोऽष्टादशशिष्यानष्टादशविषयानध्यापयामास। अष्टादशशिष्येषु प्रत्येकः स्वाधीतविषयकं ग्रन्थं प्राणयत्। तेषामष्टादशग्रन्थानां सारसंक्षेपं सङ्गृह्य राजशेखरः काव्यमीमांसाग्रन्थस्याऽष्टादशाऽधिकरणान्यलिखत्।

(ii) **द्वितीयोऽध्यायः -**

शास्त्रनिर्देशाभिधाने द्वितीयेऽध्याये लेखकेन प्रोक्तम् वाङ्मयं द्विविधं भवति - शाास्त्रं काव्यञ्च। तत्र शास्त्राणि द्विविधानि भवन्ति - अपौरुषेयाणि पौरुषेयाणि च। अपौरुषेयाणि शास्त्राणि सन्ति - चत्वारो वेदाश्चत्वार उपवेदाः षड्वेदाङ्गानि च। अलङ्कारः सप्तमं वेदाङ्गम्। तदनन्तरं ग्रन्थकारेण शास्त्राणां संख्या लक्षणानि, विद्यानाञ्च संख्या निर्दिष्टा। विद्याश्चतुर्दश भवन्ति ह्यष्टादश वा। साहित्यं पञ्चमी विद्या काव्यञ्च पञ्चदशी विद्या वर्तते। अस्मिन्नध्याये सूत्रभाष्यपद्धतिटीकासमीक्षापञ्चिकाकारिकाशब्दानां लक्षणानि लेखकेन सविस्तरं निर्दिष्टानि।

(iii) **तृतीयोऽध्यायः -**

तृतीयेऽध्याये सरस्वत्याः काव्यपुरुषोत्पत्तिवर्णनं विद्यते। अतोऽस्याऽध्यायस्य नामकरणं काव्यपुरुषोत्पत्तिरिति समुचितमेव। ब्रह्मणो वरप्रभावात् सरस्वती काव्यपुरुषं सुतं सुषुवे। काव्याङ्गान्येव तस्याऽङ्गानि बभूवुः।[2]

---

१. समाप्तमिदं प्रथममधिकरणं कविरहस्यं नाम काव्यमीमांसायाम्। ग्रन्थस्यान्तिम उल्लेखः।

२. शब्दार्थौ ते शरीरं, संस्कृतं मुखं, प्राकृतं बाहुः जघनमपभ्रंशः, पैशाचं पादौ, उरो मिश्रम्। समः प्रसन्नो मधुर उदात्त ओजस्वी चाऽसि। उक्तिचणं ते वचो, रस आत्मा रोमाणि छन्दांसि प्रश्नोत्तरप्रवह्लिकादिकं च वाक्केलिः। अनुप्रासोपमादयश्च त्वामलङ्कुर्वन्ति।

अथ विदर्भजनपदे वत्सगुल्मनगरेऽसौ काव्यपुरुष: साहित्यविद्यावधूपाणिं जग्राह। तदनन्तरमस्मिन्नध्याये काव्यपुरुषस्य विभिन्नदेशभ्रमणस्य तदुत्पन्नविभिन्नप्रवृत्तिवृत्तिरीतीनाञ्च वर्णनं लेखकेन कृतम्। यथा - दक्षिणदिशि भ्रमणेन दाक्षिणात्या प्रवृत्ति: कैशिकीवृत्तिर्वैदर्भीरीतिश्च जन्म लेभे।

(iv) **चतुर्थोऽध्याय: -**

अध्यायोऽयं वर्तते - शिष्यप्रतिभो नाम। अत्र लेखकेन शिष्याणां भेदा: गुणाश्च प्रोक्ता:। काव्यरचनाया: हेतुर्वर्तते - शक्ति:। अनयैव प्रतिभा च व्युत्पत्तिश्चोद्भवति। कवयस्त्रिविधा: भवन्ति – सारस्वता आभ्यासिका औपदेशिकाश्च। भावकत्वं कवित्वात् पृथग्भवति। तदनन्तरं लेखकेन भावकभेदलक्षणानि प्रोक्तानि।

(v) **पञ्चमोऽध्याय: -**

व्युत्पत्तिपरिपाकनामनि पञ्चमेऽध्याये व्युत्पत्तिप्रतिभयोर्व्याख्या वर्तते। त्रिविधा: कवयो भवन्ति - शास्त्रकवय:, काव्यकवय उभयकवयश्च। कवीनामेतेषां भेदा: लक्षणानि च राजशेखरोऽवर्णयत्। कवीनामवस्था: दश भवन्ति। तदनन्तरं पाकशब्दस्य व्याख्यां विधाय लेखको नवविधानि काव्यानि प्रोवाच।

(vi) **षष्ठोऽध्याय: -**

अयमध्यायो वर्तते - पदवाक्यविवेक:। अत्र पदानां तेषाञ्च पञ्च वृत्तीनां - सुप्समासतद्धितकृत्तिङानां निर्देशो विद्यते। ततो वाक्यस्य तस्य च त्रिविधविधानां व्याख्या वर्तते। राजशेखरेण वाक्यानि दशविधानि प्रोक्तानि। काव्यलक्षणमप्यत्र ग्रन्थकारेण कृतम् -

**"गुणवदलङ्कृतञ्च वाक्यमेव काव्यम्।"**

(vii) **सप्तमोऽध्याय: -**

अस्याऽध्यायस्य शीर्षकं वर्तते - वाक्यविधय: काकुप्रकारा: पादप्रतिष्ठा च। अत्र त्रयो वाक्यभेदा: प्रोक्ता: - ब्रह्मशैववैष्णवा:। तत: पञ्चविधानां वचनानां व्याख्या वर्तते। विभिन्नयोनीनां वाक्यसरण्यो निर्दिष्टा:। वैदर्भीगौडीपाञ्चालीनां रीतीनां वर्णनानि सन्ति। द्विविधस्य काकोस्तयोश्चोपभेदानां व्याख्यां वर्तते। भारतस्य विभिन्नप्रान्तवर्तिनां कवीनां विभिन्नोच्चारणविधीनां भाषादीनाञ्च चर्चा विद्यते।[1]

---

१. नातिस्पष्टो न चाश्लिष्टो न रूक्षो नातिकोमल:। न मन्द्रो नातितारश्च पाठो गौडेषु वाडव:।।
रस: कोऽप्यस्तु काऽप्यस्तु रीति: कोऽप्यस्तु वा गुण:। सगर्वं सर्वकार्णाटाष्टङ्कारोत्तरपाठिन:।।
गद्ये पद्येऽथवा मिश्रे काव्ये काव्यमना अपि। गेयगर्भे स्थित: पाठे सर्वोऽपि द्रविड: कवि:।।
पठन्ति लटभं लाटा: प्राकृतं संस्कृतद्विष:। जिह्वया ललितोल्लापलब्धसौन्दर्यमुद्रया।।
सुराष्ट्रत्रवणाद्या ये पठन्त्यर्पितसौष्ठवम्। अपभ्रंशावदंशानि ते संस्कृतवचांस्यपि।।
शारदाया: प्रसादेन काश्मीर: सुकविर्जन:। कर्णे गुडूचीगण्डूषस्तेषां पाठक्रम: किमु:।।
तत: पुरस्तात् कवयो ये भवन्त्युत्तरापथे। ते महत्यपि संस्कारे सानुनासिकपाठिन:।।
काव्यमीमांसा - सप्तमोऽध्याय:

**(viii) अष्टमोऽध्यायः -**

अष्टमाऽध्यायस्याभिधानं वर्तते - काव्ययोनयः। अत्र शास्त्रकृता काव्यविषयाणां स्रोतांसि निर्दिष्टानि। पूर्वस्मिन् काले काव्यस्रोतसां द्वादश आधाराः प्रसिद्धा आसन् - श्रुतिस्मृतिपुराणेतिहासप्रमाणविद्यासमयविद्याऽर्थशास्त्रनाट्यशास्त्रकामशास्त्रलोककविरचना-प्रकीर्णकाः। आधाराश्चाऽत्र चत्वारो राजशेखरेण संयोजिताः - उचितसंयोगयोक्तृसंयोगोत्पाद्य-संयोगसंयोगविकाराः। एतेषां व्याख्या शास्त्रकारेण सोदाहरणं समुपदिष्टा।

**(ix) नवमोऽध्यायः -**

वर्णानुशासन (अर्थव्याप्ति) नामन्यस्मिन्नध्याये वर्ण्यविषयाः (अर्थाः) सप्तसंख्यकाः सन्ति - दिव्यमानुषपातालीयमर्त्यपातालीयदिव्यपातालीयदिव्यमर्त्यपातालीयाः। वर्ण्यविषयो रसनिष्ठो भवितव्यः। अयञ्च द्विविधो भवति - प्रबन्धो मुक्तकञ्च। तत्र पञ्च भेदाः भवन्ति - शुद्धचित्रकथोत्थसंविधानकभूराख्यातवन्तः। काव्येषु संस्कृतनिबद्धेष्विवाऽन्यभाषानिबद्धेष्वप्यवधान-मावश्यकम्।

**(x) दशमोऽध्यायः -**

दशमाध्यायस्य विषयो वर्तते - कविचर्या राजचर्या च। कविः कथं काव्यं कुर्यादित्युपदेशोऽत्र वर्तते। चतस्रो विद्याः भवन्ति - नामधातुपारायणमभिधानकोशश्छन्दो-विचितिरलङ्कारतन्त्रञ्च। चतुःषष्टिकला उपविद्याः वर्तन्ते। अत्र काव्यनिर्माणहेतूनां शुद्धीनां लेखनसामग्रीणामित्यादिसाधनानां वर्णनानि सन्ति। लेखकेनाऽत्र कविचर्या निर्दिष्टा। स्त्रियोऽपि काव्यरचनासमर्थाः भवन्ति। नरपतिभिः सभागृहनिर्माणस्य कवीनां परीक्षणस्य च सोदाहरणानि वर्णनानि सन्ति।

**(xi) एकादशोऽध्यायः -**

शब्दहरणोपायाभिधानेऽध्यायेऽस्मिन् लेखकेनोपदिष्टम् - पूर्ववर्तिनां कवीनां शब्दाः भावाश्च कथं नूतनः कविर्गृहीतुं समर्थः। चतुर्विधाः भवन्ति कवयः - उत्पादकाः परिवर्तका आच्छादकाः संवर्गकाश्च। प्राचीनकवीनां शब्दार्थोक्तिष्वनिर्वचनीयत्वस्य नवत्वस्य च द्रष्टा वर्णनकर्ता च महाकविर्गण्यते।

**(xii) द्वादशोऽध्यायः -**

अर्थाहरणोपायनामन्यध्यायेऽस्मिन् लेखकेन निर्दिष्टम् - कथं नूतनः कविः प्राचीनकवीनामर्थान् विचारांश्च गृहीतुं समर्थो भवति। अत्रोपायास्त्रयो वर्तन्ते - अन्ययोनिर्निह्नुतयोनिरयोनिश्च। एषामपि भेदानां व्याख्या सोदाहरणं लेखकेन विहिता।

**(xiii) त्रयोदशोऽध्यायः -**

त्रयोदशाध्यायस्याऽभिधानं विद्यते - अर्थग्रहणेष्वालेख्यप्रख्यादिभेदाः। शब्दार्थाहरणस्य विविधा उपायाः सन्ति - आलेख्यप्रख्यतुल्यदेहितुल्यपरपुरप्रवेशसदृशाश्च। व्याख्याकरणे शास्त्रकृता तेषामष्टाष्टभेदाः सोदाहरणं वर्णिताः।

(xiv) **चतुर्दशोऽध्यायः -**

कविसमयनाम्न्यध्यायेऽस्मिन् वर्णनीयविषयेषु कविप्रसिद्धिवर्णनविषयाः प्रोक्ताः। कविसमयस्त्रिविधो भवति - स्वर्ग्यो भौमः पातालीयश्च। तत्र भौमः प्रधानश्चतुर्विधश्च - जातिद्रव्यगुणक्रियारूपः। चतुर्णामपि भेदानामेतेषां पुनस्त्रयो भेदाः वर्तन्ते - असतोनिबन्धः सतोऽप्यनिबन्धो नियमतश्च। सर्वेषामेतेषां व्याख्या सोदाहरणं राजशेखरेण कृता।

(xv) **पञ्चदशोऽध्यायः -**

अस्य पञ्चदशाध्यायस्य विषयो वर्तते - गुणसमयस्थापना। गुणसमयोऽपि त्रिविधो वर्तते - असतो गुणस्य निबन्धनं सतोऽप्यनिबन्धनं नियमतश्च।

(xvi) **षोडशोऽध्यायः -**

षोडशोऽध्यायो वर्तते - स्वर्ग्यपातालीयसमयस्थापनाविषयकः। लेखकेनाऽत्र वर्णितम् - भौमसमयसदृशः स्वर्ग्यसमयः पातालीयसमयश्चाऽपि कविना परिपालनीयः।

(xvii) **सप्तदशोऽध्यायः -**

देशविभागनाम्न्यध्यायेऽस्मिन् प्रथमं तावद् राजशेखरेण जगद्विभागो वर्णितः। भूलोकस्य द्वौ विभागौ वर्तेते - समुद्राः द्वीपाश्च। द्वीपेषु जम्बूद्वीपोऽपि वर्तते। अत्र भारतवर्षस्य नव विभागाः सन्ति - इन्द्रद्वीपकसेरुमत्ताम्रपर्णगभस्तिमन्नागद्वीपसौम्यगन्धर्ववरुणकुमारीद्वीपाः। द्वयोः समुद्रयोः विन्ध्यहिमवत्पर्वतयोश्च मध्ये ह्यार्यावर्तदेशो विद्यते।

आर्यावर्तस्य पञ्च विभागाः सन्ति - पूर्वदेशदक्षिणापथपश्चाद्देशोत्तरायणमध्यदेशाः। एतेषां विभागानामनेकदेशपर्वतसरिदादीनां वर्णनं राजशेखेरण कृतम्। ततो दिशां विभागाः वर्णिताः। अध्यायसमाप्तौ विभिन्नदेशवासिनां शरीरवर्णादय उल्लिखिताः।

(xvii) **अष्टादशोऽध्यायः -**

कालविभागनाम्न्यध्यायेऽस्मिन् कलामुहूर्तरात्रिदिनमासर्तुपक्षसंवत्सरादीनां समयविभाजनं राजशेखरेण प्रोक्तम्। ग्रन्थेऽस्थिन् षड्ऋतूणां तासाञ्च सन्धिशैशवप्रौढ्यनुवृत्त्यादीनां ह्यनुवस्थाविशेषाणां वर्णनमुदाहरणसहितं विद्यते। विभिन्नर्तुपवनपुष्पफलपक्षि-मृगाद्यनुरूपकाव्यव्यापारा अपि ग्रन्थकारेण निरूपिताः।

## ५. राजशेखरस्य वैशिष्ट्यम्

काव्यमीमांसाविषयाणामवलोकनेन निर्णेतुं शक्यते यदयं ग्रन्थो बहुविधवस्तुज्ञापको विशालकोषो वर्तते। राजशेखरवचनैरेवाऽस्य ग्रन्थस्य विशालभावोऽनुमीयते। मूलरूपेण ग्रन्थोऽयमष्टादशाधिकरणेषु विभक्त आसीत्। परं वर्तमानसमयेऽधिकरणमेकमेवोपलभ्यते। केशवमिश्रकृतालङ्कारशेखरग्रन्थस्य (षोडशताब्दी ई०) एकादशमरीच्यां राजशेखरकृतपद्यद्वय-मुल्लिखितमुपलभ्यते। परं पद्यद्वयमिदं वर्तमानसमयोपलब्धकाव्यमीमांसाग्रन्थे नाऽस्ति। अनयोः

पद्ययोर्लेखककेनोपमालङ्कारोऽलङ्कारसर्वस्वरूपेण प्रतिपादितः। अनेनाऽनुमीयते यदिमे पद्ये राजशेखरस्य ह्यलङ्कारवर्णनात्मकादधिकरणात् केशवमिश्रेणोद्धृते।

राजशेखरकृतकाव्यमीमांसाग्रन्थे काव्यस्यानिवार्याङ्गानामलङ्कारगुणदोषरसादीनां विवेचनं यद्यपि न वर्तते, तथापि कवीनामपेक्षितगुणानां सिद्धान्तानाञ्च सुविशदं निरूपणमस्ति।

काव्यमीमांसाग्रन्थस्य मुख्यसिद्धान्तभागो गद्यनिबद्धो वर्तते। सशक्तगद्यस्याऽप्यस्य ग्रन्थस्य भाषा क्वचित् क्वचिद् भारवती ह्यनुभूयते। उदाहरणानि वर्ण्यविषयसङ्ग्रहा अन्तिमपरिणामाश्च छन्दोबद्धाः वर्तन्ते।

काव्यमीमांसा प्राचीनकालवर्तिनामनेकेषां कवीनां रचनानाञ्च परिचयं प्रस्तौति। परिचयोऽयमन्यत्र न प्राप्यते। अत्राऽवन्तिसुन्दर्यानन्दापराजितोक्तिगर्भोद्भटकालिदासद्रौहिणी-पाल्यकीर्तिभरतमङ्गलरुद्रटवाक्पतिराजवामनश्यामदेवसुरानन्दादीनां लेखकानामुल्लेखाः समुपलभ्यन्ते। अथ च अनेकेषां काव्यानामंशा उद्धृताः सन्ति। प्राचीनलेखकसिद्धान्तानां व्याख्याकरणे राजशेखरेण स्वमन्तव्यमप्यभिव्यञ्जितम्। परं तत्र तेषामाचार्याणां नामानि तेन न प्रकटितानि।

राजशेखरस्य भौगोलिकज्ञानं सुविस्तृतमासीत्। पृथिव्याः भारतवर्षस्य च भौगोलिकविभागवर्णनेषु तेन तज्ज्ञानं प्रकटितम्। भारतवर्षस्य विभिन्नप्रदेशानां भाषोच्चारण-शैलीवेशभूषावर्णसामाजिकपरम्परादिभिश्चाऽसौ सुतरां परिचितोऽवर्तत।

काव्यमीमांसातोऽनेकेषामैतिहासिकतथ्यानामपि बोधो जायते। मेधाविरुद्रकुमारदासौ जन्मान्धौ कवी बभूवतुः। मगधाधीशेन शिशुनागेन, कुविन्ददेशाधिपेन शूरसेनेन, कुन्तलजनपदस्वामिना सातवाहनेनोज्जयिन्याश्च पार्थिवेन साहसाङ्केन नरपतिव्यवहारयोग्याः वर्णभाषासम्बन्धिनो नियमाः निबद्धाः। वासुदेवसाहसाङ्कसातवाहनशूद्रकनृपतीनां संरक्षणे महती समुन्नतिर्विद्यायाः सञ्जाता। उज्जयिन्यां कालिदासमेण्ठामररूपसूरभारविहरिचन्द्र-चन्द्रगुप्तानां कवीनां परीक्षा बभूव। पाटलिपुत्रे वर्षोपवर्षपाणिनिपिङ्गलवररुचिपतञ्जलयः शास्त्रकाराः परीक्षिताः।[1]

---

१. श्रूयते चोज्जयिन्यां काव्यकारपरीक्षा-

इह कालिदासमेण्ठावत्रामररूपसूरभारवयः।
हरिचन्द्रचन्द्रगुप्तौ परीक्षिताविह विशालायाम्।।

श्रूयते च पाटलिपुत्रे शास्त्रकारपरीक्षा -

अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः।
वररुचिपतञ्जली इह परीक्षिताः ख्यातिमुपजग्मुः।। काव्यमीमांसा - दशमोऽध्यायः।

# अभिनवगुप्तः

## १. अभिनवगुप्तस्य महत्त्वम्

काव्यशास्त्रस्येतिहासेऽभिनवगुप्तस्य प्रसिद्धिर्भरतानन्दवर्धनयोर्नाट्यशास्त्रध्वन्यालोकग्रन्थयोष्टीकाकाररूपेण सुतरां वर्तते। टीकयोर्वैदुष्यपूर्णत्वात् प्रौढभावाच्च ते काव्यशास्त्रमौलिकग्रन्थेभ्योऽप्यतितरां सम्माननीये महत्त्वपूर्णे च गण्येते। अभिनवगुप्तस्य दर्शनक्षेत्रेऽपि प्रवेशो बभूव। प्राधान्येनाऽसौ दार्शनिक एव बभूव। अयमेव हेतुर्यदस्य काव्यशास्त्रविषयककृतिष्वपि दार्शनिकसिद्धान्तानां समन्वयो नितरामनुभूयते। अभिनवगुप्तकृतदर्शनविषया अपि ग्रन्था अनेके महतीं प्रशंसनीयां ख्यातिं प्राप्नुवन्। शैवमतावलम्बिना तेन ग्रन्थकारेण शिवाद्वैतदर्शनस्य प्रतिपादनं विहितम्। तत्र विद्यापण्डितोऽप्यासीदसौ सुमहान् पण्डितः।

अभिनवगुप्तो विश्वसिति स्म -

तन्त्रयोगाभ्यासेनैवाऽसौ परमशिवतत्त्वमधिजगाम। भगवतः शिवस्य प्रेरणैव ह्याध्यात्मिकज्ञानान्वेषकेभ्यो मुमुक्षुभ्यो मुक्तिपदनिर्देशने सक्षमा भवति। तेन प्रतिपादितम् -

आध्यात्मिकसिद्धिप्राप्ताः जनाः प्रकृत्यैव पञ्चगुणसमन्विताः जायन्ते। पञ्चगुणाश्च सन्ति - सुनिश्चितत्वं, रुद्रभक्तिः सत्त्वसिद्धिः सर्वतत्त्ववित्त्वं कृत्यसम्पत्त्वञ्च।

## २. अभिनवगुप्तस्य जीवनवृत्तं समयश्च

अभिनवगुप्तजीवनवृत्तविषये प्रचुरा सामग्री समुपलभ्यते। ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिणीपरात्रिंशिकाविवरणादिग्रन्थेषु तेन स्वपूर्वजानां परिचयः प्रस्तुतः। काश्मीरवास्तव्यस्याऽप्यभिनवगुप्तस्य पूर्वजानां मूलस्थानं काश्मीरजनपदभिन्नमेवाऽवर्तत। तेऽन्तर्वेदी - (गङ्गायमुयोर्मध्यवर्ती प्रदेशः) वास्तव्या आसन्। अभिनवगुप्ताच्छतद्वयकल्पवर्षपूर्वं तेऽष्टमशताब्दिसमये (ई०) काश्मीरजनपदं समागताः। राजतरङ्गिणीकारेण कह्लणेन लिखितम् -

अष्टमशताब्द्यां कान्यकुब्जाधिपतिः यशोवर्मा (७३०-७४० ई०) बभूव। तस्मिन् समये काश्मीरजनपदं नरेशो मुक्तापीडो ललितापीडो वा (७२५-७६१ ई०) शशास। द्वयोनरेशयोर्मध्ये युद्धमजायत। काव्यकुब्जनरेशोऽत्र पराजितो बभूव। तस्मिन् कालेऽन्तर्वेद्यामधिगुप्तो नाम विद्वान् पण्डितोऽवर्तत। अस्य वैदुष्येण प्रभावितो ललितापीडोऽधिगुप्तं काश्मीरजनपदमानिनाय। अस्यैव वंशेऽभिनवगुप्तस्य जनिर्बभूव।

अभिनवगुप्तस्य पूर्वजानां वृत्तान्तो न विस्तरेणोपलभ्यते। परं तस्य पितामहो वराहगुप्तोऽवर्तत। वराहगुप्तस्य पुत्रो नृसिंहगुप्तो बभूव। नृसिंहगुप्तस्य सुतोऽभिनवगुप्तोऽजायत। परमशिवभक्तो नृसिंहगुप्तश्चुखलापरनाम्नाऽपि प्रथित आसीत्। तन्त्रालोकस्य टीकाकारेण जयरथेन लिखितम् -

अभिनवगुप्तस्य जनको नृसिंहगुप्तो बभूव, जननी च विमला विमलकला वा। अभिनवगुप्तस्याऽनुजोऽवर्तत मनोरथगुप्तः। तस्योपकाराय तेन परात्रिंशिकाग्रन्थस्य विवरणभाष्यं लिखितम्। तस्य पितृव्यभ्रातर आसन् - क्षेमगुप्त उत्पलगुप्तोऽभिनवगुप्तश्चक्रकगुप्तः पद्मगुप्तश्च। अभिनवगुप्तो स्वपितुर्मातामहं यशोराममप्युल्लिलेख, यो काले तस्मिन् प्रसिद्धो यशस्वी च विद्वान् पण्डितः प्रसिद्धोऽविद्यत।

अभिनवगुप्तेन स्वपरिवारस्य नोल्लेखः कृतः। अनेन तस्याऽऽजन्मब्रह्मचर्यनिष्ठत्वं सूच्यते। परमशैवेन तेनोत्पलदत्तप्रतिपादितप्रत्यभिज्ञादर्शनस्य विकासो विहितः। काशीपरम्परामनुसृत्याऽभिनवगुप्तः शतद्वयाधिकसहस्रैकपरिमितैः (१२००) शिष्यैः सह भैरवीस्तोत्रं पठन् गुहामेकां प्राविशत् तत्रैवाऽन्तर्हितश्च बभूव। डा० ग्रियर्सन महोदयेन प्रतिपादितम् -

कन्दरैषा श्रीनगराद् दक्षिणपश्चिमदिशि बीरूनामके स्थाने (प्राचीननाम बहुरूपम्) वर्तते।

अभिनवगुप्तसमयनिर्धारणे नाऽतिकाठिन्यमनुभूयते। स्वरचितासु कासुचिदपि रचनासु तेन लेखनसमयः सूचितः। ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिणीग्रन्थे तस्य लेखनसमयः ४११५ कलिवर्षो दश च लौकिकवर्षो (१०१४ ई०) ग्रन्थकारेण सूचितः। रचनेयं मार्गशीर्षमासस्य समाप्तौ पूर्णा जाता।[1] भैरवस्तवे तस्य रचनाकालः ६८ लौकिकवर्षो (९९२-९९३ ई०) लिखितो वर्तते।[2]

अभिनवगुप्तेन पार्थिवस्य यशस्करस्य मन्त्रिपुत्रस्य कर्णस्य हिताय मालिनीविजयवार्तिकग्रन्थस्य रचना कृता। यशस्करो ९४८ ई० तमेऽब्दे दिवङ्गतः। तन्त्रसिद्धान्तावबोधाय कर्णो यौवनमापन्नोऽवगन्तव्यः। यदि कर्णस्य जन्मसमयः ९५० खिष्टाब्दो गण्यते, परात्रिंशिकाविवरणरचनाकालः ९८० खिष्टाब्दोऽवगन्तव्यः।

क्षेमेन्द्रेण भारतमञ्जर्यां बृहत्कथामञ्जर्याञ्च लिखितम् -

**साहित्यस्याध्ययनमसावभिनवगुप्ताच्चकार।**

क्षेमेन्द्रः समयमातृकाग्रन्थरचनां १०५० खिष्टाब्दे दशावतारचरितस्य रचनां १०६६

---

१. इति नवतितमेऽस्मिन् वत्सरेऽन्ते युगांशे तिथिशशिजलधिस्थे मार्गशीर्षावसाने।
जगति विहितबोधामीश्वरप्रत्यभिज्ञां व्यवृणुत परिपूर्णां प्रेरितः शम्भुपादैः।।

२. वसुरसपौषे कृष्णदशम्यामभिनवगुप्तः स्तवमिममकरोत्।
येन विभुर्भव मरुसन्तापं शमयति झटिति जनस्य दयालुः।।

ख्रिष्टाब्दे चकार। अतोऽस्य साहित्यरचनासमयः १०३०-१०७८ ख्रिष्टाब्दमध्यवर्ती निश्चेतुं शक्यः। अभिनवगुप्तस्याऽपि तन्निकटसमयपूर्वभावात् साहित्यरचनाकालः ९०८-१०१० ख्रिष्टाब्दमध्यवर्ती निश्चेयः। तत्र न किमपि काठिन्यम्।

## ३. अभिनवगुप्तस्य गुरवः

अनेकशास्त्राभिज्ञेनाऽभिनवगुप्तेनाऽलङ्कारन्यायवैशेषिकवेदान्तशैवतन्त्रबौद्धवैष्णवशास्त्रसिद्धान्तानामध्यनमनेकेभ्यो गुरुभ्यो विहितम्। ईश्वरप्रत्यभिज्ञाविमर्शिणीग्रन्थे तेन लिखितम्-

नानागुरुवरप्रवरेभ्यस्तेन नानाविद्या अधीताः।[१] तस्य सर्वेषां गुरूणां नामानि न विज्ञायन्ते न च तेषां परिचयः प्राप्यते। परं केचन लोके प्रसिद्धाः सन्ति।

अभिनवगुप्तस्य साहित्यशास्त्रगुरुरासीद् - भट्टेन्दुराजः। इन्दुराजाभिधानेनाऽप्यसौ प्रथितोऽवर्तत। ध्वन्यालोकलोचनटीकायामभिनवगुप्तेन भट्टेन्दुराजो गुरुरूपेण स्मृतः। अस्य साहित्यशास्त्रगुरुः सिद्धिचेलोऽप्यासीत्। लोचनटीकायाश्चतुर्थोद्योते तेन द्वयोरेव गुर्वोरुल्लेखः कृतः।[२] अभिनवगुप्तकृतभगवद्गीताटीकातो वेद्यते -

भट्टेन्दुराजः कात्यायनगोत्रीयोऽवर्तत। तस्य पितामहः सौचुकः पिता च भूतिराजो बभूव।

अभिनवगुप्तस्य नाट्यशास्त्रगुरुरवर्तत - भट्टतौतः। नाट्यशास्त्रस्याऽभिनवभारतीटीकायां तेन स्वगुरोः स्मरणं कृतम्।[३] भट्टतौतेन काव्यकौतुकाभिधानो ग्रन्थो लिखितः। तत्र चाऽभिनवगुप्तेन काव्यकौतुकविवरणनाम्नी टीका लिखिता। परन्तु वर्तमानसमये न त्वयं ग्रन्थः समुपलभ्यते, न चाऽस्य सा टीका। ध्वन्यालोकलोचनटीकायामभिनवगुप्तेन ग्रन्थस्याऽस्य टीकायाश्चाऽस्या उल्लेखः कृतः।[४]

तन्त्रशास्त्रस्य शिवाद्वैतदर्शनस्य चाऽप्यभिनवगुप्तेन गुरुभ्योऽध्ययनं विहितम्। तन्त्रशास्त्रस्याऽध्ययने तत्रेयं गुरुशिष्यपरम्पराऽविद्यत -

---

१. नानागुरुप्रवरपादनिपातपूते।
संवित्सरोरुहविकासनिवेशितश्रीः।।

२. सिद्धिचेलचरणाब्जनिपातपूते।
भट्टेन्दुराजमतिसंस्कृतबुद्धिलेशः।।

३. द्विजवरतौतनिरूपितसन्ध्यध्ययनार्थतत्त्वघटनेयम्।
अभिनवगुप्तेन कृता शिवचरणाम्भोजमधुपेन।।

४. मोक्षफलत्वेन चाऽयं परमपुरुषार्थनिष्ठत्वात् सर्वरसेभ्यः प्रधानतमः। स चाऽयमस्मदुपाध्यायभट्टतौतेन काव्यकौतुकेऽस्माभिश्च तद्विवरणे बहुतरकृतनिर्णयपूर्वपक्षसिद्धान्त इत्यलं बहुना।
ध्वन्यालोक ३.२६ कारिकावृत्त्याः लोचनटीकातः

**सुमतिनाथ:-सोमदेव:-शम्भुनाथोऽभिनवगुप्तश्च।**

प्रत्यभिज्ञादर्शनक्षेत्रे (शिवाद्वैतदर्शने) ऽप्यभिनवगुप्तेन गुरुशिष्यपरम्पराया उल्लेख ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिणीग्रन्थे कृतः। अस्याः परम्परायाः संस्थापकस्त्र्यम्बक आसीत्। तस्य वंशे सोमानन्दोऽजायत। सोमानन्दस्य शिष्य उदयाकरसुत उत्पलगुप्तो बभूव। मूलरूपेण प्रत्यभिज्ञादर्शनस्योद्भावना ह्युत्पलगुप्तेन कृता। तत्र नवत्युत्तरशतैक (१९०) कारिका अवर्तन्त उत्पलगुप्तेन स्वयमेव कारिकाणां वृत्तिरपि विरचिता। उत्पलगुप्तस्य शिष्यो लक्ष्मणगुप्तो बभूव, लक्ष्मणगुप्तस्य च शिष्योऽभिनवगुप्तः। मालिनीविजयवार्तिकग्रन्थेऽभिनवगुप्तः स्वोपाध्यायं लक्ष्मणगुप्तं प्रशशंस।[१]

## ४. अभिनवगुप्तस्य कृतयः

अभिनवगुप्तेन विविधविधासु विशालं साहित्यं विरचितम्। वर्णनसारल्यार्थं तत्साहित्यं चतुर्षु वर्गेषु विभज्यते - काव्यशास्त्रीयग्रन्थाः, स्तोत्राणि, तन्त्रग्रन्थाः प्रत्यभिज्ञादर्शनञ्च।

(i) **काव्यशास्त्रीयग्रन्थाः -**

काव्यशास्त्रमधिकृत्याऽभिनवगुप्तो न कमपि ग्रन्थं स्वतन्त्रमौलिकरूपेण व्यरचयत्। परं तेन काव्यशास्त्रसम्बन्धिमहत्त्वपूर्णग्रन्थानां व्याख्या कृता। तत्र निम्नकृतयः सन्ति --

(क) **ध्वन्यालोकलोचनटीका -**

आनन्दवर्धनकृतध्वन्यालोकग्रन्थमभिनवगुप्तोऽटीकयत्। टीकैषा सहृदयालोकलोचनं, काव्यालोकलोचनं वा ध्वन्यालोकलोचनं वा निगद्यते। टीकामेनां विलिख्य ह्यभिनवगुप्तः साहित्यकृतां मध्ये लोचनकारनाम्ना प्राथितो बभूव। काव्यशास्त्रक्षेत्रे टीकैषा सुतरां प्रसिद्धा महनीया सम्मानिता च वर्तते। अभिनवगुप्तेन टीकायामस्यां येषां काव्यसमीक्षासिद्धान्तानां समर्थनं कृतं, तेषामुत्तरवर्तिभिराचार्यैः सर्वैरेव प्रायशोऽनुमोदनं कृतम्।

लोचनटीकायां ध्वनिरसनिष्पत्तिसम्बन्धे विस्तृता प्रमाणसिद्धा चर्चा वर्तते। अभिनवगुप्तेनाऽत्र ध्वनिविरोधिनां मतानि प्रस्तूय सुदृढं सप्रमाणञ्च खण्डितानि। अभिनवगुप्तो ध्वन्यालोकलोचनटीकायां पूर्वरचितप्रसिद्धचन्द्रिकाटीकाया अपि मन्तव्यान्युद्धृतवान्।[२] अनेकेषु प्रसङ्गेषु तेषां मन्तव्यानामसौ खण्डनमपि चकार। ध्वन्यालोकस्य सुगूढतत्त्वाभिप्रायमवबोधयितुं सक्षमाऽपि ध्वन्यालोकलोचनटीका क्वचित् क्वचिदतिदुरूहा प्रतीयते।

ध्वन्यालोकलोचनस्याऽपि टीकैका केरलजनपदवास्तव्येन विदुषोदयोत्तुङ्गेन लिखिता। सा कौमुदीटीकेति प्रसिद्धा बभूव। वर्तमानसमये टीकैषा केवलं प्रथमोद्योतपर्यन्तमेवोपलभ्यते।

---

१. तद्दृष्टिसंशयच्छेदि प्रत्यभिज्ञोपदेशिनः।
श्रीलक्ष्मणगुप्तस्य गुरोर्विजयते वचः।। मालिनीविजयवार्तिक श्लोक - ८

२. किं लोचनं विनालोको भाति चन्द्रिकयाऽपि हि।
तेनाऽभिनवगुप्तोऽयं लोचनोन्मीलनं व्यधात्।।

(ख) **अभिनवभारतीटीका -**

नाट्यवेदविवृतिनाम्नी टीकेयमभिनवगुप्तेन भरतमुनिकृतनाट्यशास्त्रमधिकृत्य विरचिता। नाट्यशास्त्रस्याऽनेकाष्टीकाः प्राचीनकाले विद्वद्भिर्मनीषिभिर्लिखिता अवर्तन्त, तथापि वर्तमानसमये केवलमभिनवभारतीटीकैव समुपलभ्यते। नाट्यवेदविषयानियं टीका सम्यगुन्मीलयति तदभिप्रायांश्चाऽवबोधयितुं क्षमते। टीकायामस्यामभिनवगुप्तेन प्राचीननाट्याचार्याणां टीकानाञ्च मन्तव्यानि बहुशः परीक्षितानि। अत्र प्राचीनभारतस्य नाट्यकलासङ्गीताभिनयछन्दोऽलङ्काररसादीनां काव्यशास्त्रविषयाणां सुविस्तृताऽतिगहनसूक्ष्मा च व्याख्या वर्तते। अभिनवभारतीयं न केवलं टीकैका वर्तते, परं नाट्यशास्त्रमधिकृत्य विरचितो मौलिकग्रन्थोऽप्यस्ति। दुःखस्याऽयं विषयो वर्तते, यदियं टीका न सम्पूर्णरूपेण समुपलभ्यते। तथाप्युपलब्धभागस्य प्रकाशनं सञ्जातम्।

(ग) **काव्यकौतुकविवरणम् -**

अभिनवगुप्तस्योपाध्यायो भट्टतौतः काव्यकौतुकाभिधानं ग्रन्थमरचयत्। अभिनवगुप्तेन तस्य ग्रन्थस्य विवरणनाम्नी टीका लिखिता। वर्तमानसमये नाऽप्ययं ग्रन्थः समुपलभ्यते, नाऽपि च सा टीका। तस्य ग्रन्थस्य सम्प्राप्तिस्तद्युगस्य काव्यसमीक्षासिद्धान्तान् सम्यगवबोधयितुं क्षमा। ग्रन्थस्याऽस्तित्वस्य प्रमाणानि ध्वन्यालोकलोचनटीकायामभिनवभारतीटीकायाञ्च यत्र तत्र प्रसङ्गेषु सम्प्राप्यन्ते।

(ii) **स्तोत्राणि -**

अभिनवगुप्तोऽनेकानि स्तोत्राण्यपि व्यरचयत्। तत्र कानिचित् स्तोत्राणि बृहदाकाराणि कानिचिच्च लघ्वाकाराणि वर्तन्ते। भैरवस्तवकर्मस्तोत्रादीनि बृहदाकाराणि सन्ति, बोध-पञ्चाशिकादीनि स्तोत्राणि लघ्वाकाराणि वर्तन्ते।

(iii) **तन्त्रग्रन्थाः -**

तन्त्रशास्त्रविषयका अप्यनेके ग्रन्था अभिनवगुप्तेन लिखिता। अत्र तस्य तन्त्रालोकाभि-धानो ग्रन्थः प्रसिद्धतमः। विशालाकारे ग्रन्थेऽस्मिन् त्रयोदशाह्निकानि सन्ति। अस्मिन् ग्रन्थे ह्यागमतन्त्राणां विवेचनं लेखकेन कृतम्। अस्य ग्रन्थस्य रचनाऽभिनवगुप्तेन स्वजीवनस्य प्रारम्भिककाले कृतेत्यनुमीयते। जयरथेन तन्त्रालोकस्य सुविशदा टीका लिखिता।

अभिनवगुप्तविरचिताः मालिनीविजयवार्तिकपरात्रिंशिकाविवरणतन्त्रालोकसाराः ग्रन्था अपि तन्त्रपरम्परासम्बद्धाः वर्तन्ते। अभिनवगुप्तेन निजशिष्ययोः कर्णमन्द्रयोराग्रहमङ्गीकृत्य मालिनीविजयवार्तिकग्रन्थस्य रचना कृता। अथ चाऽसौ भ्रातुर्मनोरथगुप्तस्य शिष्यस्य कर्णस्य रामदेवस्य चाऽऽग्रहेण परात्रिंशिकाभाष्यमप्यलिखत्।

(iv) **प्रत्यभिज्ञादर्शनम् -**

अभिनवगुप्तकृतकृतीनाञ्चतुर्थो वर्गो प्रत्यभिज्ञादर्शनविषयको (शिवाद्वैतदर्शनविषयकः) वर्तते। अत्र मूलकारिकाणां तद्वृत्तीनाञ्च रचना ह्युत्पलगुप्तेन कृता। असावभिनवगुप्तस्य

गुरोर्लक्ष्मणगुप्तस्य गुरुरवर्तत[१]। सम्भवतः कारिकाभाग ईश्वरप्रत्यभिज्ञानाम्ना वृत्तिभागश्च ईश्वरप्रत्यभिज्ञाविवृतिनाम्ना प्रथितोऽवर्तत। अभिनवगुप्तेन ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिणी टीका लिखिता।

लक्ष्मणगुप्तेन कस्याऽपि ग्रन्थस्य रचना कृता व्याख्या वा विहितेति सङ्केतो न प्राप्यते। परन्तु ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिणीटीकायाः समाप्तौ मालिनीविजयवार्तिकस्य चाऽष्टमे श्लोकेऽभिनवगुप्तः स्वगुरोः सस्मार। अनेनाऽभिनवगुप्ताय प्रत्यभिज्ञादर्शनमुपदिष्टम्।[२]

वर्णनेनाऽनेनाऽभिप्रायोऽयमभिव्यज्यते यदुत्पलगुप्तेन प्रत्यभिज्ञादर्शनं व्यवस्थापितं लक्ष्मणगुप्तेन च व्याख्यातम्। अभिनवगुप्तश्च दर्शनमेतद् व्यापकत्वमनयत्।

प्रत्यभिज्ञादर्शनमुपलक्ष्याऽभिनवगुप्तो द्वे विमर्शिणीटीकेऽलिखत्। प्रथमा तु टीका 'ईश्वर-प्रत्यभिज्ञाविमर्शिणी' प्रत्यभिज्ञासूत्राणि व्याकरोति, द्वितीया च टीका 'ईश्वरप्रत्यभिज्ञाविवृति-विमर्शिणी' प्रत्यभिज्ञाकारिकावृत्तीनां व्याख्यां विदधाति। अत्र प्रथमा लघुवृत्तिनाम्ना द्वितीया च बृहतीवृत्तिनाम्ना प्रसिद्धा। ग्रन्थसमाप्तावभिनवगुप्तेन लिखितम् -

"असौ भगवतः शिवस्य तं मार्गं सरलं सर्वजनसुलभञ्चकार, यस्तस्य गुरुभिर्निरूपितः। मार्गमितमनुसरञ्जनः परिपूर्णो भूत्वा शिवरूप एव भवति।

---

१. श्रीशास्त्रकृद्घटितलक्ष्मणगुप्तपादसत्योपदर्शितशिवाद्वयवाददृप्तः।

२. तद्दृष्टिसंसृतिच्छेदिप्रत्यभिज्ञोपदेशिनः।
श्रीलक्ष्मणगुप्तस्य गुरोर्विजयते वचः।। मालिनीविजयवार्तिक श्लोक - ८

एकोनविंशोऽध्यायः

# कुन्तकः

## १. कुन्तकस्य महत्त्वम्

वक्रोक्तिसम्प्रदायप्रवर्तकः कुन्तकः काव्यशास्त्रस्येतिहासे सुतरां प्रसिद्धोऽजायत। वक्रोक्ति-जीवितग्रन्थं विरच्याऽसौ वक्रोक्तिं काव्यस्याऽऽत्मानं प्रत्यापादयत्। कुन्तकस्य वक्रोक्तिसम्प्रदायो यद्यप्युत्तरवर्तिभिराचार्यैर्नाधिकं समर्थितस्तथाप्यभूतपूर्वमौलिकचिन्तनहेतोरसौ काव्यशास्त्रकृत्सु परां प्रतिष्ठां लेभे।

## २. कुन्तकस्य समयः

कुन्तकस्य समयनिर्धारणं नाऽतिदुष्करम्। यद्यपि कुन्तकः स्वजीवनवृत्तसमयादिविषये न किमप्यलिखत्, तथापि वक्रोक्तिजीवितग्रन्थे समुल्लिखितानां लेखकानामाश्रयेण तस्य समयो निर्धारयितुं शक्यते। अनेकैः समीक्षकैरपि वक्रोक्तिजीवितग्रन्थो वक्रोक्ति-सिद्धान्तश्च समीक्षितः। कुन्तकस्य समयनिर्धारणे तेऽपि सहायकाः वर्तन्ते।

आनन्दवर्धनं (८२० ई०) कुन्तकः सम्यक् परिचिनोति। तस्य ध्वनिसिद्धान्तमसौ समैक्षत। ध्वन्यालोकस्य "स्वेच्छाकेसरिण" इति मङ्गलाचरणश्लोकमसौ समुद्धृतवान्। कुन्तकेन रुद्रटो (८४० ई०) राजशेखरश्चापि (८८०--९२०) समुद्धृतः। अतस्तस्य समयः ख्रिष्टस्य दशमशताब्द्युत्तरार्धको निश्चेतुं शक्यते। जयरथेनाऽलङ्कारसर्वस्वटीकायां लिखितम् -

"वक्रोक्तिजीवितकारो हृदयदर्पणकारश्च द्वावेव ध्वनिकारानन्तरं बभूवतुः।[1]

व्यक्तिविवेककारो महिमभट्टः कुन्तकसिद्धान्तानुल्लिख्याखण्डयत्।[2] अतः कुन्तको निश्चयेन महिमभट्टपूर्ववर्ती निश्चीयते। महिमभट्टस्य समय एकादशशताब्द्युत्तरार्धकोऽवगम्यते। अतः कुन्तकोऽपि दशमशताब्द्युत्तरार्धकालीनो ह्येकादशशताब्दिपूर्वकालीनो वा गणनीयः।

अभिनवगुप्तकुन्तकयोः पूर्वापरसम्बन्धे डा० पी० वी० काणे महोदयेन विचारितम्। तेन प्रोक्तम् -

---

१. यद्यपि वक्रोक्तिजीवितहृदयदर्पणकारावपि ध्वनिकारानन्तरभाविनावेव तथापि तौ चिरन्तनमतानुयायिनावेवेति तन्मतम्। अलङ्कारसर्वस्वटीका पृ० १५

२. काव्यकाञ्चनकशाश्मवमानिना
कुन्तकेन निजकाव्यलक्ष्मणि।
यस्य सर्वस्वनिरवद्यतोदिता
श्लोक एष निदर्शितो मया।। व्यक्तिविवेक पृ० ५८

"लोचनकारेण वक्रोक्तिजीवितं नोल्लिखितम्। न च लोचनकारः कुन्तकेनोल्लिखितः। अतः समकालभाविनावेव तौ मन्तव्यौ।

परं डा० पी०सी० लाहिड़ी महोदयेन स्वकृतौ 'इन्डियन कल्चर' इति ग्रन्थे (भाग ३ पृ० ५३०-५३४), डा० संकरन् महोदयेन च निजलेखे (दी थ्योरी आफ रस एण्ड ध्वनि पृ० ११९-१२०) प्रतिपादितं यदभिनवगुप्तो वक्रोक्तिसिद्धान्तेन परिचित आसीत्। परमेतादृशैर्निबन्धैर्न कुन्तकोऽभिनवपूर्ववर्ती सिद्धो भवति। समकालभाविनावेव तावित्येवाऽवगन्तव्यम्।[1]

### ३. कुन्तकस्य कृतयः

कुन्तकस्य कृतिरेकैव वक्रोक्तिजीवितमित्युपलभ्यते। ग्रन्थोऽयं बहुकालं यावदनुपलब्ध एवाऽवर्तत। प्रथमं तावत् १९२३ तमे ख्रिष्टाब्दे डा० सुशीलकुमार डे महोदयस्य सम्पादकत्वेऽस्य ग्रन्थस्य प्रकाशनं बभूव। असौ ग्रन्थस्याऽस्य द्वावेवोन्मेषौ प्रकाशतामनयत्। तदनन्तरमस्य द्वितीयं संस्करणं १९२८ तमे ख्रिष्टाब्दे कलकत्ता ओरियन्टल सीरीज संस्थया सम्पूर्णरूपेण प्रकाशितम्।

### ४. वक्रोक्तिजीवितम्

चतुर्षून्मेषेषु विभक्तस्य वक्रोक्तिजीवितग्रन्थस्य द्वौ तून्मेषौ विद्वद्भिरखण्डितौ सम्प्राप्तौ, परं तृतीयचतुर्थोन्मेषौ खण्डितावेव समुपलब्धौ। कारिकावृत्तिसंयुतेऽस्मिन् ग्रन्थे केषुचित् प्रसङ्गेषु कारिकाणां वृत्तीनाञ्च तथा सम्मिश्रणमस्ति परस्परं, यथा तेषां विभागदर्शनं सुदुष्करमेव।

वक्रोक्तिजीवितग्रन्थस्य त्रयो विभागाः सुस्पष्टं लक्ष्यन्ते - कारिकावृत्त्युदाहरणानि। अत्र कारिकावृत्तीनां रचना स्वयं कुन्तककृता वर्तते। परमुदाहरणानि तेन विभिन्नप्रसिद्धसंस्कृतकाव्येभ्यः सङ्गृहीतानि। कानिचिदुदाहरणानि कुन्तककृतान्यपि सन्त्येव। डा० काणे महोदयस्य कथनमस्ति -

"वक्रोक्तिजीवितस्योदाहरणान्यपि कुन्तककृतान्येव सन्तीति न पूर्णरूपेण याथार्थ्यं भजते। ग्रन्थस्योदाहरणानां प्रचुरसंख्या प्राचीनसंस्कृतकाव्येभ्यः कुन्तकेन संकलिता। अथ च केषाञ्चिदुदाहरणानां रचना कुन्तककृता कल्पनीया।

वक्रोक्तिजीवितग्रन्थे कुन्तकेन प्रायशः सर्वेषामेव काव्याङ्गानां समुचिता विवेचना विहिता। उन्मेषक्रमेण तस्य विषयवस्तूनां विवेचना निम्नप्रकारेण प्रदर्श्यते -

(i) **प्रथमोन्मेषः** -

वक्रोक्तिजीवितस्य प्रथमोन्मेषे मङ्गलाचरणानन्तरं लेखकेन विषयाणामेतेषां विवेचना कृता --

---

१. बलदेव उपाध्याय : संस्कृत काव्यशास्त्र का इतिहास। पृ० २९४-२९५

काव्यप्रयोजनानि, अलङ्कारालङ्कार्यभेदः, काव्यसाहित्ययोर्भेदः, काव्यलक्षणं, वक्रोक्त्याः स्वरूपं भेदाश्च, वैचित्र्यगुणाः, वैचित्र्यमार्गा, औचित्यं सौभाग्यञ्च।

(ii) **द्वितीयोन्मेषः -**

द्वितीयोन्मेषे वक्रोक्त्याः प्रथमत्रयाणां भेदानां वर्णविन्यासवक्रतायाः, पदपूर्वार्द्धवक्रतायाः प्रत्ययवक्रतायाश्च वर्णनमस्ति।

(iii) **तृतीयोन्मेषः**

तृतीयोन्मेषे वाक्यवक्रतायाः विवेचनमस्ति। तदनन्तरमेव वस्तुवक्रताया अलङ्काराणाञ्च विवेचनं लेखकेन कृतम्। अर्थालङ्काराः वाक्यवक्रतायामन्तर्भाविताः कुन्तकेन।

(iv) **चतुर्थोन्मेषः -**

अस्मिन्नुन्मेषे प्रकरणवक्रतायाः प्रबन्धवक्रतायाश्च विवरणमस्ति।

## ५. वक्रोक्तिकल्पना

कुन्तकस्य वक्रोक्तिकल्पना महनीयाऽद्भुता चाऽस्ति। वक्रोक्तिस्तेन काव्यस्याऽऽत्मा निर्धारिता। वस्तुतो वक्रोक्तिकल्पना मूलरूपेण भामहकृता वर्तते। भामहेन साऽलङ्कारसर्वस्वरूपा काव्यजीवनञ्च प्रोक्ता। तां विना न कश्चिदलङ्कारः प्रवर्तते।[१] भामहस्यैनामुक्तिमादाय प्रेरणां च सम्प्राप्य कुन्तको वक्रोक्तिं काव्यस्य प्राणत्वेन प्रतिष्ठापयामास। कुन्तकोक्तं वक्रोक्तिलक्षणं विद्यते - **"वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।"**

कारिकामेनां निम्नप्रकारेणाऽसौ व्याचख्यौ -

"वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाऽभिधा। कीदृशी वैदग्ध्यभङ्गीभणितिः? वैदग्ध्यं विदग्धभावः कविकर्मकौशलं, तस्य भङ्गी विच्छित्तिः, तया भणितिः। विचित्रैवाभिधा वक्रोक्तिरित्युच्यते। कुन्तकमते वक्रोक्त्याः षड् भेदाः भवन्ति -

वर्णविन्यासवक्रता, पदपूर्वार्द्धवक्रता, प्रत्ययवक्रता, वाक्यवक्रता, प्रकरणवक्रता, प्रबन्धवक्रता च।

षड्भेदानामप्येतेषामनेकेऽवान्तरभेदाः कल्प्यन्ते। सर्वेऽप्यलङ्काराः वाक्यवक्रतायामन्तर्भाविताः भवन्ति।[२]

---

१. सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।। काव्यालङ्कार २.८५

२. कविव्यापारवक्रत्वप्रकाराः सम्भवन्ति षट्।
प्रत्येकं बहवो भेदास्तेषां विच्छित्तिशालिनः।।
वर्णविन्यासवक्रत्वं पदपूर्वार्द्धवक्रता।
वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः।।
वाक्यस्य वक्रभावोऽन्यो विद्यते यः सहस्रधा।
यत्राऽलङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति।।
वक्रभावः प्रकरणे प्रबन्धेऽप्यस्ति यादृशः।
उच्यते सहजाहार्यसौकुमार्यमनोहरः।। वक्रोक्तिजीवितम् १.१८-२१

कुन्तको वक्रोक्तिं काव्यस्याऽऽत्मानं प्रत्यापादयत्। इयं वक्रोक्तिरेव काव्ये प्राणान् सञ्चारयति। तत्र काव्यत्वं प्रतिष्ठापयति। वक्रोक्तिं विना काव्ये प्राणाः न सञ्चरन्ति। परन्तु वक्रोक्तिरचनाऽपि काव्ये तदैव सम्भवा, यदा कविरनिवार्यकल्पनाशक्तिसम्पन्नो भवति। अतः काव्ये कविव्यापारस्यैव प्राधान्यं वर्तते। कवेरयं व्यापारो वैचित्र्ययुतो भवति। इयं वैचित्र्यमेव वक्रोक्तिः काव्यस्य च प्राणाः।[1]

वक्रोक्तिरूपवैचित्र्यस्य कुन्तकश्चतुरो गुणान् प्रोवाच - माधुर्यप्रसादलावण्याभिजात्यानि। गुणानामेतेषां लक्षणान्युदाहरणानि च कुन्तकेन प्रस्तुतानि।

काव्यस्य त्रयो मार्गाः कुन्तकेनोपदिष्टाः - वैचित्र्यमार्गः, सुकुमारमार्गः सौकुमार्यवैचित्र्य-संवलितमार्गश्च। अन्तिमोऽत्र मध्यमार्गोऽप्युच्यते सर्वोत्तमश्चासौ वर्तते।

वर्णविन्यासं विवेचयता कुन्तकेन प्रोक्तम् -

"अनुप्रासयमकौ नाऽलङ्कारौ तयोरन्तर्भावो वर्णवक्रतायामेव सम्भवति।[2]

पदपूर्वार्द्धवक्रतायाः नवभेदाः कुन्तकेन प्रदर्शिताः। तदन्तर्गतैव वर्तते ह्युपचारवक्रता। उपचारवक्रतायां ध्वन्यालोकस्याऽर्थान्तरसङ्क्रमितवाच्यध्वनेरत्यन्ततिरस्कृतवाच्यध्वनेश्चा-ऽन्तर्भावो भवति।

वाक्यवक्रताप्रकरणे कुन्तकेन अचेतनसचेतनानां वस्तूनां वर्णननियमाः प्रोक्ताः। तेन प्रोक्तम् -

"रसभावादिपरिपोषे काव्यं कथं रमणीयं कर्तुं शक्यते। स्वपूर्ववर्तिग्रन्थकारैर्निरूपितानां रसवत्प्रेयऊर्जस्विसमाहितोदात्तदीपकरूपकाप्रस्तुतप्रशंसापर्यायोक्तव्याजस्तुत्युत्प्रेक्षाऽतिशयोक्त्य-लङ्काराणां लक्षणान्युक्त्वा पुनस्तेषां खण्डनं विधाय तेषां समावेशो वाक्यवक्रतायामेव तेन कृतम्। इत्थं कुन्तकेन वक्रोक्तिसिद्धान्तेन सहाऽलङ्काराणां सङ्गतिः प्रतिष्ठापिता।

कुन्तकः स्वभावोक्तिं नाऽलङ्कारतया मेने। स्वभावोक्त्या अलङ्कारत्वं तेन खण्डितम्। तेन प्रोक्तम् -

स्वमावोक्तिर्नाऽलङ्कारो वर्ततेऽलङ्कार्यतया तु सा कथनीया।[3] स्वभाववर्णने सत्येव स्वभावोक्तिर्भवति। यदि स्वभावोक्तिरेवाऽलङ्कारतया मन्यते, स्वभाववर्णनातिरिक्तस्य काव्यस्य

---

१. विचित्रो यत्र वक्रोक्तिर्वैचित्र्यं जीवितायते।
परिस्फुरति यस्यान्तः सा काऽप्यतिशयाऽभिधा।। वक्रोक्तिजीवितम् १.२७

२. वर्णच्छायानुसारेण गुणमार्गानुवर्तिनी
वृत्तिर्वैचित्र्ययुक्तेति सैव प्रोक्ता चिरन्तनैः।
यमकं नाम कोऽप्यस्याः प्रकारः परिदृश्यते।
स तु शोभान्तराभावादिह नातिप्रतन्यते।। वक्रोक्तिजीवित २.६६-६७

३. अलङ्कारकृतां येषां स्वभावोक्तिरलङ्कृतिः।
अलङ्कार्यतया तेषां किमन्यदवतिष्ठते।। वक्रोक्तिजीवितम् १.११

शरीरस्थानीयं किं वस्तु भवेद् यदलङ्कारतया मन्येत। अलङ्कार्यतया सा स्वभावोक्तिरेव भवति। सैव काव्यशरीरम्।

पूर्वाचार्यमन्तव्यानां कुन्तकेन नाऽनुसरणं विहितम्। परं तानालोचयन्नप्यसौ भामहदण्ड्यानन्दवर्धनादीन् प्रशशंस। स्वपूर्ववर्त्याचार्यप्रतिपादितमार्गास्तेन वक्रोक्त्यामेवाऽन्तर्भाविताः। केचन प्राचीनालङ्कारिकास्तं भक्तिवादिनं कथयन्ति। अथाऽलङ्कारसर्वस्वकारेण प्रोक्तम् -

" वक्रोक्तिजीवितकारेणोपचारवक्रतादिकं प्रतिपाद्य सर्वोऽपि ध्वनिविस्तारः स्वीकृतः।[1]

जयरथेन चाऽस्य वाक्यस्य व्याख्या कृता -

**इदानीं यदप्यन्यैरस्य भक्त्यन्तर्भूतत्वमुक्तं तदपि दर्शयितुमाह वक्रोक्तिजीवितकारः पुनर्वैदग्ध्यभङ्गीभणितिस्वभावां बहुविधां वक्रोक्तिमेव.........".**

विद्याधरेणाऽप्येकावल्यां वक्रोक्तिजीवितस्यान्तर्भावो भक्तिवादिसम्प्रदाये विहितः।

## ६. कुन्तलकः कुन्तको वा

कुन्तक इति नामग्रहणे कश्चित् सन्देहोऽप्यभिव्यज्यते। वक्रोक्तिजीवितग्रन्थस्य प्रथमोन्मेषस्य द्वितीयोन्मेषस्य च समाप्तौ लिखितमस्ति -

**"इति राजानककुन्तल (क) विरचिते वक्रोक्तिजीविते काव्यालङ्कारे प्रथमोन्मेषः"। अथ च - इति कुन्तल (क) विरचिते वक्रोक्तिजीविते द्वितीय उन्मेषः।"**

अनेन लेखेन केचन समालोचकाः विचारयन्ति, यद् वक्रोक्तिजीवितकृत् कुन्तकनामाऽविद्यत कुन्तलकनामा वा। परन्तु सर्वैरपि प्राचीनलेखकैरयं वक्रोक्तिजीवितकारः कुन्तकाभिधानेनैव स्मृतः। काव्यप्रकाशस्य टीकाकारेण गोपालेन स्वटीकायामयं कुन्तकनाम्नैव लिखितः।[2] अतो वक्रोक्तिजीवितकारस्य कुन्तक इति नामविषये न विवादः करणीयः।

---

१. उपचारवक्रतादिभिः समस्तो ध्वनिप्रपञ्चः स्वीकृतः। अलङ्कारसर्वस्व पृ० ९

२. वक्रानुरञ्जनीमुक्तिं चञ्चुमिव मुखे वहन्
कुन्तकः क्रीडति सुखं कीर्तिस्फटिकपिञ्जरे।।

# महिमभट्टः

## १. महिमभट्टस्य महत्त्वम्

व्यक्तिविवेकग्रन्थरचयितृरूपेण महिमभट्टः संस्कृतकाव्यशास्त्रस्येतिहासे सुतरां प्रसिद्धिमगात्। ग्रन्थस्यास्य रचना मूलरूपेण तेन ध्वन्यालोकप्रतिपादितं ध्वनिं खण्डयितुं कृता। महिमभट्टकृतप्रतिपादनं वर्तते यद् व्यङ्ग्यार्थरूपो ध्वनिर्न काव्यस्याऽऽत्माऽवगन्तुं शक्यः। ध्वनेरन्तर्भावोऽनुमाने करणीयः। तथ्यमिदं साधयितुं महिमभट्टेन व्यक्तिविवेकग्रन्थस्य रचना कृता।[१]

## २. महिमभट्टस्य परिचयः समयश्च

राजानकोपाधिविभूषितो महिमभट्टः काश्मीरप्रदेशवास्तव्योऽवर्तत। अस्य जनकः श्रीधैर्योऽवर्तत गुरुश्च श्यामलः। क्षेमेन्द्रेणौचित्यविचारचर्चायां सुवृत्ततिलके च श्यामलकृतपद्यान्युद्धृतानि। सुभाषितावल्यामपि तस्य पद्यानां सङ्ग्रहो वर्तते। क्षेमेन्द्रः स्वकृतैकग्रन्थे लिलेख –

व्यक्तिविवेकस्य रचना भीमस्य पुत्राणां दौहित्राणाञ्च कल्याणाय बभूव। सम्भवतो भीमो महिमभट्टस्य जामाताऽवर्तत। दौहित्राश्च क्षेमयोगयाजनामानश्चाऽऽसन्।[२]

महिमभट्टेन ध्वन्यालोकप्रतिपादितसिद्धान्तानां वक्रोक्तिजीविते च प्रोक्तानां नियमानां खण्डनं कृतम्। अथ चाऽसौ बालरामायणविद्धसालभञ्जिकारूपकाभ्यामुदाहरणानि सञ्जग्राह। अतोऽसावानन्दवर्धनराजशेखरकुन्तकपरवर्ती ध्रुवमवगन्तव्यः। प्रमाणैरेतैरस्य समयः १००० ख्रिष्टाब्दपश्चाद्वर्ती गण्यते।

अलङ्कारसर्वस्वग्रन्थे रुय्यको व्यक्तिविवेकग्रन्थस्य सारं प्रस्तूय तं समीक्षाञ्चकार। अतो महिमभट्टसमयो रुय्यकपूर्ववर्ती गणनीयः। रुय्यकस्य समयो विद्वद्भिः ११०० ख्रिष्टाब्दकल्पो मन्यते, महिमभट्टश्च तत्पूर्वकालीनः।

---

१. अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्।। व्यक्तिविवेक १.१

२. आधातुं व्युत्पत्तिं नप्तॄणां क्षेमयोगभाजाम्।
सत्सु प्रथितनयानां भीमस्यामितगुणस्य तनयानाम्।।

समालोचकानामियं मान्यता यन्मम्मटो दोषविवेचने महिमभट्टमतमनुसार। अथ चाऽसौ पञ्चमोल्लासे "ननु वाच्यादसम्बद्धं तावन्न प्रतीयत" इत्यत्र महिमभट्टमतस्य खण्डनञ्चकार यद् ध्वनिवादिनां व्यङ्ग्यार्थप्रतीतिरनुमानेनैव सिद्ध्यति। यद्यपि केचन समालोचकाः काव्यप्रकाशस्य प्रकरणेष्वेतेषु महिमभट्टं प्रति सङ्केतं नाङ्गीऽकुर्वन्ति, तथापि बहुसङ्ख्यकैः समीक्षकैरत्र तं प्रत्येव सङ्केतो मतः। अतो महिमभट्टो मम्मटपूर्ववर्ती खलु मन्तव्यः। मम्मटस्य समयः एकादशशताब्द्युत्तरार्धकालीनो गण्यते। एभिस्तर्कैर्महिमभट्टो रुय्यकमम्मटपूर्ववर्ती कुन्तकपरवर्ती च गणनीयः, स च समयः १०२०-१०५० ख्रिष्टाब्दोऽनुमातुं शक्यः।

## ३. महिमभट्टस्य कृतयः

महिमभट्टो व्यक्तिविवेककाररूपेण प्रसिद्धः : ध्वनिं खण्डयितुं तञ्चाऽनुमानेऽन्तर्भावयितुं तेन व्यक्तिविवेकग्रन्थस्य रचना कृता। व्यक्तिविवेकस्य वाक्येनैकेन प्रतीयते यदसावन्यमप्येकं तत्त्वोक्तिकोषनामकं ग्रन्थं लिलेख,[1] परं न वर्तमानसमये ग्रन्थोऽसौ समुपलभ्यते।

## ४. व्यक्तिविवेकः

ध्वनिं खण्डयितुं तञ्चाऽनुमानेऽन्तर्भावयितुं महिमभट्टो व्यक्तिविवेकग्रन्थमलिखत्। ग्रन्थस्याऽस्य नामकरणमप्यसौ तदनुरूपमेव चकार। अस्यार्थो वर्तते व्यक्तिः = व्यञ्जना, तस्याः विवेकः = समीक्षणम्। ग्रन्थोऽयं त्रिषु विमर्शेषु विभक्तः। तत्र विषयविवेचनं निम्नप्रकारेण वर्तते -

**(i) प्रथमो विमर्शः -**

प्रथमे विमर्शे लेखको ध्वनिमनुमानेऽन्तर्भावयितुं प्रतिज्ञाय ध्वनिकारप्रतिपादिते ध्वनिलक्षणे दश दोषान् प्रादर्शयत्। तदनन्तरं शब्दशक्त्यर्थादिविषयान् समीक्ष्याऽसौ काव्येऽभिधाशक्तिमेकां प्रत्यापादयत्। ध्वनिवादिनां व्यङ्ग्यार्थमनुमेयं प्रतिपाद्याऽसौ ध्वनेर्विभिन्नभेदप्रभेदभावाना- मुपहासमकरोत्।

**(ii) द्वितीयो विमर्शः -**

द्वितीये विमर्शे महिमभट्टोऽनौचित्यं महत्तमं दोषं काव्ये प्रतिपाद्य तस्य भेदानगणयत्।

**(iii) तृतीयो विमर्शः -**

तृतीये विमर्शे ध्वन्यालोकप्रतिपादितायाः ध्वनिस्थापनायाः प्रबलं खण्डनं महिमभट्टेन कृतम्। अत्राऽसौ ध्वन्यालोकाच्चत्वारिंशदुदाहरणानि सङ्गृह्य तत्र व्यङ्ग्यार्थप्रतीति- मनुमानेनाऽसाध नोत्।

---

१. इत्यादिप्रतिभातत्त्वमस्माभिरुपपादितम्। शास्त्रे तत्त्वोक्तिकोषाख्ये इति नेह प्रपञ्चितम्।
व्यक्तिविवेक पृ० ११८

## ५. व्यक्तिविवेकस्य वैशिष्ट्यम्

प्राचीनपरम्पराभ्योऽपसृत्य लेखकेन नवविचाराणां प्रस्तवनं कृतमित्येव व्यक्तिविवेक-ग्रन्थस्य वैशिष्ट्यमस्ति। यद्यप्युत्तरवर्तिभिराचार्यैर्महिमभट्टस्य विचाराणां समर्थनं न कृतं प्रबलप्रमाणैश्च खण्डनमेव विहितं, येन तस्य विचारसरणिः काव्यशास्त्रपरम्परास्ववरुद्धा, तथापि तस्य वैदुष्यमसन्दिग्धमेवाऽनुपमं प्रतिभा चाऽद्वितीया। महिमभट्टस्य रचनेयं वैदुष्यसम्भृता तर्कसङ्गता चाऽस्ति। ग्रन्थोऽयं लेखकस्य वैदुष्यं गहनविचारशक्तिं समीक्षणसामर्थ्यमनुपम-लेखनदाक्षिण्यञ्चाऽभिव्यनक्ति।

शब्दशक्तयस्तिस्रो गण्यन्ते - अभिधा, लक्षणा, व्यञ्जना च। महिमभट्टेन कथितम् -

न व्यञ्जना शब्दशक्तिरभिमता। काव्ये केवलमभिधैव शब्दशक्तिर्मन्तव्या। अभिधयैव सर्वेषामर्थानां प्रतीतिर्भवति।[1] ध्वनिवादिभिः प्रतिपाद्यमानः प्रतीयमानोऽर्थो वस्तुतोऽनुमेय एव। अभिधया प्रथमं वाच्यार्थप्रतीतिर्भवति, तदनन्तरञ्च प्रतीयमानोऽर्थोऽनुमीयते। तस्य प्रतीतिस्त्रिभिर्लिङ्गैः (हेतुभिः) जायते। अतो लिङ्गप्रतीतिरेव व्यङ्ग्यप्रतीतिर्भवति।

महिमभट्टेन प्रोक्तम् -

अर्थाः भवन्ति द्विविधाः - वाच्या अनुमेयाश्च। वाच्यार्थाः शब्दव्यापारविषयाः। वाच्यार्थ एव मुख्योऽर्थः। लिङ्गभूतः स एवाऽर्थोऽन्यमनुमेयार्थं प्रत्याययति। अनुमेयार्थस्त्रिविधो भवति - वस्तुरूपोऽलङ्काररूपो रसदिरूपश्च। अत्र वस्तुरूपा अलङ्काररूपाश्चाऽर्थाः वाच्या अपि सम्भवन्ति, परं रसादिरूपार्था अनुमेया एव भवन्ति।[2] महिमभट्टो ध्वन्यालोककारमुपजहास, यत्तेन काव्यलक्षणं तु न प्रस्तुतमथ च काव्यभेदप्रभेदानां लक्षणानि कथयितुमारब्धानि। काव्यलक्षणमनिर्दिश्य तस्य भेदेषु मुख्यगौणत्वकल्पना प्रयोजनरहितैवाऽवगन्तव्या।[3]

व्यक्तिविवेकस्य तृतीये विमर्शे महिमभट्टेन ध्वन्यालोककारो विशेषेणाऽधिक्षिप्तः। ध्वन्यालोकाच्चत्वारिंशदुदाहरणानि सङ्गृह्य, तेषाञ्च विवेचनां कृत्वाऽसौ साधयितुं प्रायतत, यदत्र ध्वनिवादिनां व्यङ्ग्यार्थस्य सिद्धिरनुमानेनैव भवति। ध्वनिकारस्य "भम धम्मिअ" इति वस्तुध्वन्युदाहरणे महिमभट्टेन धार्मिकस्याऽभ्रमणरूपार्थस्य प्रतीतिरनु-

---

१. नाऽपि शब्दस्याऽभिधाव्यतिरेकेण व्यापारान्तरमुत्पद्यते येनाऽर्थान्तरं प्रत्याययेत्, व्यक्तेरनुत्पत्तेः सम्बन्धान्तरस्य चाऽसिद्धेः। व्यक्तिविवेक पृ० २९

२. अर्थोऽपि द्विविधो वाच्योऽनुमेयश्च। तत्र शब्दव्यापारविषयो वाच्यः। स च मुख्य उच्यते। ...........तत एव तदनुमिताद्वा लिङ्गभूताद्यदर्थान्तरमनुमीयते सोऽनुमेयः। स च त्रिविधः - वस्तुमात्रमलङ्काररसादयश्चेति। तत्राद्यौ वाच्यावपि सम्भवतः। अन्यस्त्वनुमेय एवेति वक्ष्यते। व्यक्तिविवेक पृ० ११८

३. किञ्च काव्यस्वरूपमुत्पादयितुकामेन मतिमता तल्लक्षणमेव सामान्येनाऽऽख्यातव्यम्।...... यत्तु तदनाख्यायैव तयोः प्रधानेतरभावकल्पनेन प्रकारद्वयमुक्तं तदप्रयोजकमेव। व्यक्तिविवेक पृ० ३२

मानेनैव साधिता[1] परन्तूत्तरवर्तिभिर्ध्वनिवादिभिराचार्यैर्मम्मटविश्वनाथादिभिर्महिमभट्टस्य विवेचनं सुकठोरमालोचितं प्रतिपादितञ्च यदत्र धार्मिकस्याऽभ्रमणरूपोऽर्थो नानुमानेन, प्रतिपादयितुं शक्यो भवति। व्यङ्ग्यार्थ एवाऽसौ व्यञ्जनावृत्त्या च प्रतिपाद्यते।

महिमभट्टेन प्रतिपादितम् -

रसप्रतीतिरप्यनुमेया भवति। साऽनुमानान्तर्गता वर्तते तेन प्रोक्तम् -

**"यद्यपि विभावादिभ्यो रसादीनां प्रतीतिः साऽनुमान एवाऽन्तर्भावमर्हति विभावानुभावव्यभिचारिभावप्रतीतिर्हि रसादिप्रतीतेः साधनमिष्यते।"**

महिमभट्टेन रसप्रतीतिरनुमेया मतेति तथ्यमादाय केषाञ्चित् समीक्षकाणां मतं विद्यते -

शङ्कुकस्याऽनुमितिवादेन प्रभावितो बभूव महिमभट्टः। भरतरससूत्रस्य व्याख्यां कुर्वता शङ्कुकेन रसस्य निष्पत्तिरनुमितिरिति प्रतिपादिता।

महिमभट्टस्य दोषप्रकरणमतिमहत्त्वपूर्णमस्ति। दोषविवेचनं व्यक्तिविवेकग्रन्थस्य द्वितीये विमर्शे विद्यते। महिमट्टेन प्रोक्तम् -

काव्येऽनौचित्यमेव दोषः। अनौचित्यञ्च द्विविधं भवति - अर्थविषयकं शब्दविषयकञ्च। अन्तरङ्गबहिरङ्गभेदेनाऽपि द्विविधत्वमेतत् प्रोच्यते। अन्तरङ्गमनौचित्यं रसदोष एव। स च रसनिष्पत्तौ विभावानुभावव्यभिचारिभावानामनुचितयोजनेन सम्भवति।

बहिरङ्गानौचित्यस्य पञ्च भेदाः भवन्ति - विधेयाविमर्शः, प्रक्रमभेदः, क्रमभेदः, पौनरुक्त्यं वाच्यावचनञ्च। एतदेव दोषविवेचनमाश्रित्य महिमभट्टेन ध्वनिकारस्य ध्वनिपरिभाषायां दश दोषाः प्रदर्शिताः।[2]

समालोचकानां मतिरत्र वर्तते - मम्मटस्य दोषनिरूपणपद्धतौ महिमभट्टस्य प्रभावः सुपरिलक्ष्यते। दोषान् निरूपयन् मम्मटो महिमभट्टमनुससार। दोषाणां प्रथमं वैज्ञानिकं विवेचनं मम्मटश्चकारेति समालोचकेषु प्रसिद्धां भणितिमधिकृत्य डा० बलदेवोपाध्यायेन लिखितम् -

"तैः समीक्षकैर्व्यक्तिविवेकस्य दोषप्रकरणं नाऽवलोकितम्[3] ।

व्यक्तिविवेके महिमभट्टेन न केवलं ध्वनिकारमतमेव खण्डितं, तेन ध्वनिविरोधिन आचार्यकुन्तकस्याऽपि मतं निराकृतम्। कुन्तकप्रोक्तं काव्यलक्षणं[4] खण्डयता तेन वक्रोक्तिरपि

---

१. केवलं योऽसौ भ्रमणविधौ हेतुरनुमानेन दृप्तपञ्चाननव्यापारस्तत्रोपात्तः, स एव विमृश्यमानः परम्परया धार्मिकस्य तन्निषेधे पर्यवस्यति तयोर्बाध्यबाधकभावेनाऽवस्थानात्। व्यक्तिविवेक पृ० १२

२. अर्थस्य विशिष्टत्वं शब्दः सविशेषणस्तरः पुंस्त्वम्।
द्विवचने वा शब्दौ च व्यक्तिर्ध्वनिर्नाम काव्यवैशिष्ट्यम्।
वचनञ्च कविकर्तुः कथिताः ध्वनिलक्ष्मणि दश दोषाः।।

३. बलदेवोपाध्याय : साहित्यशास्त्र प्रथम खण्ड पृ० ८१

४. वक्रोक्तिजीवितम् १.७-८

खल्वनुमान एवाऽन्तर्भाविता। एवञ्चासावभिधामेव शब्दस्यैकमात्रार्थद्योतिकां शक्तिं प्रत्यापादयत्।

महिमभट्टकृतध्वनिविरोधस्य प्रबलं विरोधमुत्तरवर्तिन आचार्याश्चक्रिरे। एकावल्यां विद्यानाथेन प्रोक्तम् -

**"यत्पुनरनुमानतो नाऽतिरिच्यते ध्वनिरित्याचष्ट महिमभट्टस्तदपि पललायमानम्।"**

महिमभट्टो यद् ब्रवीति - अनुमानान्न भिन्नो ध्वनिस्तत्कथनं साररहितमेव।

काव्यप्रकाशे साहित्यदर्पणे च महिमभट्टस्य मान्यतायाः सुतीक्ष्णाऽऽलोचना विद्यते। स्वयं व्यक्तिविवेकटीकाकारेण महिमभट्टादसहमतिः प्रकटिता मतभेदश्च प्रदर्शितः। तथ्यमिदमग्रे दर्शयिष्यते।

## ६. व्यक्तिविवेकस्य प्राचीनाष्टीका:

व्यक्तिविवेकस्यैकैव प्राचीनटीका समुपलभ्यते, साऽप्यपूर्णैव। समुपलब्धटीकायां टीकाकारस्य नामाऽपि नाऽवलोक्यते। अस्मिन् विषये डा० बलदेवोपाध्यायस्य कथनमिदं विचारणीयम् -

" अलङ्कारसर्वस्वलेखको रुय्यक एवैनां टीकामलिखदित्यरन्तङ्गप्रमाणैः सिद्ध्यति। व्यक्तिविवेकटीकाकारेण प्रोक्तम् - टीकाकारोऽसौ साहित्यमीमांसां नाटकमीमांसाञ्चाऽपि व्यरचयत्। अलङ्कारसर्वस्वस्य लेखकोऽपि रुय्यक एव वर्तते, अतो व्यक्तिविवेकटीकाकारोऽपि रुय्यक एवाऽवगन्तव्यः।''

अथ च जयरथस्याऽपि मतमिदमेव -

अलङ्कारसर्वस्वकारो व्यक्तिविवेकटीकामलिखत्।[1]

परन्त्वत्र काणेमहोदयस्य मतवैभिन्न्यं वर्तते। तेन प्रोक्तम् -

व्यक्तिविवेकग्रन्थस्य टीका न खल्वलङ्कारसर्वस्वकारेण लिखिता, अपित्वलङ्कार-सर्वस्ववृत्तिकारेण लिखिता।''

एकस्मिन्नेव स्थाने टीकाकारः स्वात्मानं हर्षवार्तिकग्रन्थरचयितारं लिलेख, अन्यस्मिंश्च स्थानेऽसौ स्वात्मानं साहित्यमीमांसानाटकमीमांसारचयितारमप्युद्घोषयति। अलङ्कारसर्वस्व-वृत्तिकारेण तौ ग्रन्थौ स्वकृतौ सूचितौ। अतो व्यक्तिविवेकस्य टीकाकारोऽलङ्कारसर्वस्वस्य च वृत्तिकारोऽभिन्नत्वेनाऽवगन्तव्यः।[2] काणेमहोदयेनाऽस्य ग्रन्थस्य लेखनसमयः ११३०-११४५ ख्रिष्टाब्दः प्रोक्तः।

व्यक्तिविवेकग्रन्थस्य टीकेयमपूर्णैवोपलभ्यते। अथ चोन्मेषद्वयपर्यन्तमेवेयमस्ति। टीकाकारो विषयविशेषज्ञो मनीषी विद्वान् प्रतीयते। स्वयमसौ ध्वनिवादी वर्तते। अनेकेषु स्थलेषु तेन

---

१. बलदेव उपाध्याय : भारतीय साहित्यशास्त्र प्रथम खण्ड पृ० ९०
२. काणे, पी०वी० : संस्कृत काव्यशास्त्र का इतिहास पृ० ३१९

व्यक्तिविवेकमन्तव्यानामुपहासो विहितः। व्यक्तिविवेकस्य प्रस्तावनायास्तृतीये श्लोके ध्वनिकार-वचनोपहासप्रसङ्गे टीकाकारो महिमभट्टमेवमुपजहास -

**"यथास्थितपाठे तु ध्वनिकारस्येतिवचः शब्दान्वितमिष्यमाणं प्राधान्याद् विवेचनशब्दान्वितं प्रतीयते। एतच्चाऽस्य साहित्यविचारदुर्निरूपकस्य प्रमुख एव स्खलितमिति महान् प्रमादः।"**

टीकाकारो ध्वनिकारमतं समर्थयामास। अथ च महिमभट्टस्य गर्वोक्तीः सुकठोरमाचिक्षेप -

**"तदेतस्य विश्वमगणनीयं मन्यमानस्य स्वात्मनः सर्वोत्कर्षशालिताख्यापनमिति।"**

तथापि सामान्यतः टीकाकारेण टीकायामस्यां ग्रन्थलेखकं प्रति सम्मानं समुचितं प्रदर्शितमेव। अथ च तेन स्वरचिताः श्लोका अप्यनेके प्रस्तुताः।

डा० काणेमहोदयेन व्यक्तिविवेकस्याऽन्यैका टीका सूचिता तिलकरत्नाकराभिधाना। सा च सरयूसरितस्तटे राज्ञश्चामुण्डरायस्याऽनुरोधेन केनचिद् विदुषा लिखिता।[1]

---

१. काणे, पी०वी० : संस्कृत काव्यशास्त्र का इतिहास पृ० ३२०

एकविंशोऽध्याय:

# भोजराज:

## १. भोजराजस्य महत्त्वम्

संस्कृतसाहित्यजगति भोजराज: समुज्ज्वलनक्षत्रमिव प्रकाशते। असौ न केवलं कवीनां विदुषाञ्चाऽऽश्रयदाता बभूव, स्वयमपि महान् कवि: प्रकाण्डपण्डित:, प्रखरसमालोचको विविधविद्याविज्ञानविशारदश्चाऽवर्तत। साहित्यिकवैज्ञानिकविषयेषु यावद् विविधं साहित्यं महाराजेन भोजेन लिखितं तावन्न केनचिदन्येन विदुषा भारतवर्षे सम्भवतो विरचितम्। न केवलं भारतवर्षे, अपितु सर्वस्मिन्नेव विश्वे तथाविधकारयित्रीभावयित्रीप्रतिभासम्पन्नो कविर्विद्वांल्लेखको भारतीयेतिहासे नैव दरीदृश्यते। प्रसिद्धेयं वार्ता, यद् भोजराजेन मध्यकालीनभारते विकसितेषु सर्वेष्वेव विषयेषु साहित्यिकेषु, वैज्ञानिकेषु च प्रचुरं साहित्यं सृष्टम्। तेन लिखितानां ग्रन्थानां संख्या चतुरशीति: समीक्षकैर्गण्यते। ग्रन्थानामेतेषां सर्वेषामुल्लेख: डा० राघवन् महोदयेन शृङ्गारप्रकाशाध्ययने कृत:।[1] परं कीथमहोदयेन तथ्यस्याऽस्य खण्डनं विहितम्।

प्रतापशालिनो भोजस्य सकलं जीवनं सन्निकटवर्तिभि: पार्थिवै: कर्णाटचेदितुरुष्कगुर्जरशासकै: सह सङ्ग्रामेषु व्यतीतम्। एतासु विपरीतपरिस्थितिष्वप्यसौ तथाविधसाहित्यसाधनां ग्रन्थरचनाञ्च विधातुं समर्थो बभूवेति परमविस्मयोत्पादक: प्रसङ्ग:।

## २. भोजराजस्य जीवनवृत्तं समयश्च

भोजराजस्य जीवनवृत्तसम्बन्धिनी पुष्कला सामग्री समुपलभ्यते। परमारवंशजातस्य क्षत्रियकुलविभूषणस्याऽस्य नरेशस्य शासनं मालवजनपदे विस्तीर्णमासीत्। राजधानी च बभूव धारानगरी। भोजस्य जनको सिन्धुलो बभूव। सिन्धुलस्याग्रजो मुञ्जो वाक्पतिराजाभिधानेन जगति प्रथितोऽवर्तत। मुञ्जानन्तरं सिन्धुलो राज्यशासनधुरं बभार। सिन्धुलानन्तरं भोजो राजसिंहासनमध्यतिष्ठत्। भोजस्य शासनचक्रं सुदीर्घकालं प्रावर्तत। पञ्चपञ्चाशद्वर्षकल्पं तेन प्रजानां पालनं कृतम्।

परिमलकविकृतनवसाहसाङ्कचरितकाव्यवर्णनानि परमारवंशीयपार्थिवानां मूलपुरुषस्योत्पत्तिमग्निकुण्डाद्यज्ञीयात् प्रतिपादयन्ति। तेऽग्निवंशीया: क्षत्रियराजानो बभूवु:। शिलालेखादिप्रमाणैरपि तेषामग्निवंशीयक्षत्रियत्वं सिद्ध्यति। शिलालेखेषु परमारवंशीयनरपतीनां

---

१. काणे, पी०वी० : संस्कृत काव्यशास्त्र का इतिहास पृ० ३२७

वंशावली समुट्टङ्किता समुपलभ्यते। तदाश्रित्य केचन परमारवंशीया पार्थिवाः निम्नक्रमेण भुवः शासनकर्तारो विज्ञायन्ते -

| | | |
|---|---|---|
| (१) उपेन्द्रः (कृष्णराजः) | ८००-८२५ | ख्रिष्टाब्दाः |
| (२) वैरिसिंहः प्रथमः | ८२५-८५० | " |
| (३) सीयकः प्रथमः | ८५०-८७५ | " |
| (४) वाक्पतिः प्रथमः | ८७५-९१४ | " |
| (५) वैरिसिंहो द्वितीयः (वज्रटः) | ९१४-९४१ | " |
| (६) सीयको द्वितीयः (हर्षदिवः) | ९४१-९७७ | " |
| (७) वाक्पतिराजः (मुञ्जः) | ९७७-९९७ | " |
| (८) सिन्धुलः (सिन्धुराजः) | ९९७-१००५ | " |
| (९) भोजराजः | १००५-१०५५ | " |

इतिहासे प्रसिद्धेयं वार्ता - गुर्जरनरेशनृपतिस्तैलपो मुञ्जस्य समकालीनः समवर्तत। द्वयोरपि पार्थिवयोः परस्परं वैरं प्रावर्तत। मुञ्जेन तैलपः षड्वारं पराजितः। पुनरपि गोदावरीमुत्तीर्य मुञ्जस्तैलपमाचक्राम। परन्त्वस्मिन् कालेऽसौ पराजितस्तस्य तैलपस्य कारागृहे निबद्धो बभूव।

मेरुतुङ्गाचार्येण प्रबन्धचिन्तामणिग्रन्थे लिखितम् - तैलपस्य कारागृहे स्थितस्य मुञ्जस्य परिचर्यायां रता तैलपभगिनी विधवाऽपि मृणालवती मुञ्जप्रणयपाशवर्तिनी सञ्जाता। मुञ्जमन्त्रिभिः मुञ्जकारागृहकक्षपर्यन्तं सुगुप्तरूपेण सुरङ्गिका निर्मिता। सुरङ्गामार्गेण मृणालवतीमादाय मुञ्जो निर्यास्यतीति। परन्तु तस्मिन्नेव काले मृणालवत्याः मनः शङ्काक्रान्तं बभूवः कदाचिदयं मुञ्जः कारागृहान्निष्क्रम्य स्वकार्यं साधयित्वा वञ्चनाशीलस्तां परित्यजेत्। शङ्कावह्निना दग्धा सा ह्याभूषणानयनव्याजेन तैलपसमीपं गत्वा सकलं भेदं प्राकटत्। तैलपस्तं कोपेन प्रज्ज्वलितान्तःकरणो मुञ्जमपमानितं कृत्वा निगडबद्धं सकले नगरे भ्रामयामास। तदनन्तरमसौ मृत्युदण्डेन दण्डितः शूल्यामारोपितः।

कथाया अस्याः सत्यासत्यनिर्णयविधानं सुकठिनमेव। परमिदमैतिहासिकं सत्यम् - मुञ्जतैलपयोः ९९४-९९७ ख्रिष्टाब्दकाले सङ्गरो बभूव यत्र सङ्गरे पराजितो मुञ्जः पञ्चत्वङ्गतः।

मुञ्जानन्तरं तस्याऽनुजः सिन्धुलो धारानगरीशासनधुरमुवाह। सिन्धुलचरितस्य विस्तृतं वर्णनं नवसाहसाङ्कचरिते परिमलेन कृतम्। यदि मुञ्जनृपस्याऽवसानकल्पना ९९७ तमे ख्रिष्टाब्दे क्रियते, सिन्धुलेन तस्मिन्नेव वर्षे राजसिंहासनमधिष्ठितं भवेत्। सिन्धुराजस्य पराक्रमाणां विजययात्राणाञ्च वर्णनं नवसाहसाङ्कचरिते कविना कृतम्।

सिन्धुलमनु भोजराजो राजसिंहासनाधिकारी बभूव। भोजप्रबन्धे बल्लालेन तत्सम्बन्धिनी कथाऽन्येनैव प्रकारेण वर्णिता। मुञ्जस्तु सिन्धुराजस्याऽनुजोऽवर्तत। सिन्धुराजमृत्युकाले

भोजो बाल एवाऽऽसीत्। भोजमुत्तराधिकारिणं कृत्वा तञ्च मुञ्जस्याऽङ्कसंरक्षणे सन्निधायाऽसौ तस्मै राज्याधिकारं समर्प्य सिन्धुराजः परलोकाय प्रस्थितः। राज्यलोभेन मुञ्जेन भोजवधाय प्रयासो विहितः। परन्तु विधिर्भोजाय ह्यनुकूलोऽवर्तत। भोजराजस्य प्राणरक्षा बभूव। तदनन्तरं वैराग्यमापन्नो मुञ्जो भोजराजाय शासनाधिकारं समर्प्य संन्यासाश्रमञ्च स्वीकृत्य वनाय प्रातिष्ठत। मेरुतुङ्गाचार्येणाऽपि प्रबन्धचिन्तामणिग्रन्थे भोजं प्रति मुञ्जकृतानामत्याचाराणां कथा लिखिता।

प्राचीनग्रन्थेषु शिलालेखेषु च मुञ्जस्योत्तराधिकारी सिन्धुलो वर्णितः। सिन्धुलस्य चोत्तराधिकारी भोजः। नवसाहसाङ्कचरितस्यैकादशे सर्गे वाक्पतिराजो मुञ्जः सिन्धुराजस्याऽग्रजो वर्णितः। मुञ्जानन्तरं सिन्धुलो राजसिंहासनमध्यतिष्ठत्। १०७७ विक्रमसंवत्सरस्य बांसबाड़ाशिलालेखाः, १०७८ विक्रमसंवत्सरस्य उज्जयिनीशिलालेखाः, १२१२ विक्रमसंवत्सरस्य धारानगर्याः जयसिंह-मान्धातृशिलालेखास्तथ्यान्येतानि प्रतिपादयन्ति। सरस्वतीकण्ठाभरणे भोजेन मुञ्जस्य स्तुतिर्विहिता।[1] अनेन प्रतीयते, यद् भोजस्य मनसि मुञ्जं प्रति न कोऽप्यसद्भावोऽविद्यत। मुञ्जं प्रति भोजस्य मनसि श्रद्धाभावोऽतिशयेन खल्वासीत्। १९६१ विक्रमसंवत्सरस्यैकस्मिन् शिलालेखे लिखितमस्ति -

> वंशेऽस्मिन् वैरिसिंहः क्षितिपतिरभवद् भूरिभूरि प्रभावः।।
>
> तस्माद्वै.....................................श्रीसीयकोऽभून्नृपः।।
>
> तस्माद्वैरिविरूथिनीबहुविधप्रारब्धयुद्धाध्वर-
>
> प्रध्वंसैकपिनाकपाणिरजनि श्रीमुञ्जराजो नृपः।।
>
> .......................................................................................
>
> तस्यासीदथ पार्थिवः पृथुयशाः श्रीसिन्धुराजो नृपः।
>
> .......................................................................................
>
> तत्सूनुर्भुवनैकभूषणमभूद् भूपालचूडामणि-
>
> श्छायाडम्बरचुम्बितांघ्रिकमलः श्रीभोजदेवो नृपः।।[2]

शिलालेखेनाऽनेन सिद्धमेव यन्मुञ्जस्योत्तराधिकारी सिन्धुराजो बभूव, सिन्धुराजस्योत्तराधिकारी च भोजः।

---

१. सौजन्याम्बुनिधे बुधप्रिय गुणप्राकारधर्मद्रुम-
प्रारोह प्रतिपन्नवत्सल महात्यागिन् विवेकाश्रय।
लक्ष्म्यावास मनस्विनीमनसिजव्यापारदीक्षागुरो
श्रीमन्मुञ्ज किमित्यमुं जनमुपस्प्रष्टुं दृशा नार्हसि।। सरस्वतीकण्ठाभरण १.८

२. एपिग्राफिका इन्द्रिका-भाग-२, पृ० १८३-१८५

भोजस्य राज्यकालावधिरपि विचारणीयो वर्तते। अस्मिन् विषये निम्नतथ्यानि प्रस्तूयन्ते -

(i) भोजेन सुदीर्घकालं शासनं कृतम्। बल्लालसेनेन तस्य राज्यकालावधिः दिनत्रयोत्तरसप्तमासाधिकपञ्चपञ्चाशद्वर्षकल्पं निर्धारितः।[1]

(ii) भोजस्योत्तराधिकारिणो जयसिंहस्य ताम्रपत्रमेकं १११२ विक्रमसंवत्सरकालीनं (११५५-११५६ ई०) मुपलभ्यते। अनेन प्रतीयते, यत्तस्मिन् संवत्सरे धारानगर्यां जयसिंह एव राजसिंहासनारूढोऽवर्तत। अतो भोजशासनकालस्याऽन्तिमोऽवधिः १०५५ (ई०) निर्धारयितुं शक्यः। यदि भोजराजस्य राज्यकालः पञ्चाशद्वर्षाधिकोऽपि गण्यते, १००५ तमे ख्रिष्टाब्देऽसौ राजसिंहासनमध्यारुरोह।

(iii) भोजराजेन "राजमृगाङ्क" इति ज्योतिषविषयको ग्रन्थो लिखितः। लेखनकालस्तस्मिन् ग्रन्थे ९६४ शकसंवत्सरः (१०४२-१०४३ ई०) सूचितः।

(iv) उदयपुरप्रशस्तौ तुरुष्कैः सह भोजराजस्य युद्धस्य वर्णनमस्ति। महमूदगजनवीत्याख्येन तुरुष्केण क्षेत्रमिदं १०२१ तमे ख्रिष्टाब्दे (४१३ हिजरी) समाक्रान्तम्।

(v) राजतरङ्गिण्यां काश्मीरनरेशः कलशो भोजश्च द्वावेव समकालीनौ वर्णितौ।[2] कलशस्य समयो १०५० ख्रिष्टाब्दो गण्यते। डा० व्हूलरमहोदयः काश्मीरजनपदे कलशशासनसमयारम्भं १०६२ ख्रिष्टाब्दं प्रतिपादयति। परमन्यानि प्रमाणानि कलशं तत्कालपूर्ववर्तिनं प्रमाणयन्ति।

(vi) धाराप्रशस्तिषु (१२११, १२१३, १२२५ ख्रिष्टाब्दाः) पार्थिवोऽर्जुनवर्मा स्वात्मानं भोजस्योत्तराधिकारिणमवतारञ्च लिलेख। परं लेखमेनमेवाश्रित्य भोजराजमर्जुननिकटपूर्ववर्तिनमवगन्तुं नोचितम्। भोजस्त्वर्जुनवर्मणः शतद्वयवर्षपूर्वमभूत्। सम्भवतोऽर्जुनवर्मणा स्वमहत्त्वं प्रतिपादयितुं वाक्यमिदं समुत्कीर्णितम्।

(vii) गुर्जरजनपदराजानो धारानरेन्द्राश्च सततं परस्परं वैरभावमावहन्तो युद्धरता अवर्तन्त। भोजसमयेऽप्येषा परम्परा सुतरामवर्तत। भोजस्याऽन्तिमे काले गुर्जरप्रदेशस्य नरेशो भीमो धारानगरीमाक्रम्य तां विदध्वंस। सुकृतसङ्कीर्तनपुस्तके लेखकेन भोजस्य पराजयो वर्णितः। भीमस्य शासनसमयावधिः १०६२ तमख्रिष्टाब्दं यावदासीत्। सम्भवतस्तेन धारानगरी १०५४-५५ तमे ख्रिष्टाब्दे समाक्रान्ता।

---

१. पञ्चाशत्पञ्चवर्षाणि सप्तमासं दिनत्रयम्।
भोजराजेन भोक्तव्यः सगौडो दक्षिणापथः।। भोजप्रबन्ध - श्लोक ३

२. स च भोजनरेन्द्रश्च दानोत्कर्षेण विश्रुतौ।
सूरी तस्मिन् क्षणे तुल्यं द्वावास्तां कविबान्धवौ।। राजतरङ्गिणी ७.२५९

(viii) मम्मटः काव्यप्रकाशे भोजस्य दानातिशयकीर्तिमस्तौत्।[1] प्रसिद्धो भाष्यकार उव्वटो भोजस्य समकालीन आसीत्। तस्य वाजसनेयिसंहिताटीकया तथ्यमिदमभिव्यज्यते। तिलकमञ्जरीगद्यकाव्यलेखको धनपालो मुञ्जसिन्धुलभोजानां त्रयाणामपि समये विद्यमानो बभूव। तथ्यमिदं तिलकमञ्जर्यां सूचितम्। अनेन प्रमाणेनाऽपि भोजस्य शासनकाल एकादश शताब्दिपूर्वार्द्धकालीनः सिद्ध्यति।

(ix) भोजशासनकालवर्तीनि त्रीणि ताम्रपत्राणि तद्धस्ताक्षरयुक्तानि प्राप्यन्ते। तेषामेकस्य समयः १०७६ माघसुदी पञ्चमी विक्रमाब्द उट्टङ्कितः (१०१९ ई०)।

(x) विवरणैरेतैर्निश्चितमिदं यद् भोजराजस्य शासनमेकादशशताब्दिपूर्वार्द्ध-कालीनमविद्यत। तस्य शासनसमयावधिरपि पञ्चाशद्वर्षकल्पोऽविद्यत। यदि तस्याऽन्तिमसमयः १०५५ ख्रिष्टाब्दो गण्यते, तेन धारानगर्यां १००५-१०५५ ख्रिष्टाब्दपर्यन्तं शासनं विहितम्।

प्राचीनैर्विवरणैः प्रतीयते, यद् भोजराजस्याऽन्तिमः समयो न सुखमयो व्यतिक्रान्तः। अन्तिमसमयेऽसौ सन्निपातज्वरेणाक्रान्तो बभूव। तस्मिन्नेव काले चेदिनरेशेन कर्णेन गुर्जराधिपतिना भीमेन च सम्भूय धारानगरी समाक्रान्ता सम्पूर्णतश्च विनाशिता। कुमारपालस्य बड़नगरप्रशस्तौ (११५१ ई०) लिखितमिदं वर्तते - भीमस्याऽश्वारोहिभिः सैनिकैर्धारानगरी ध्वंसावशेषतां नीता।[2] नागपुरप्रशस्तावपि भोजराजस्याऽस्याः दयनीयदशायाः वर्णनमस्ति।[3] विक्रमाङ्कदेवचरिते बिह्लणेनाऽपि कर्णाटकनरेशैः सह भोजस्य पारस्परिकसंघर्षाणां वर्णनं कृतम्।

### ३. भोजराजस्य कृतयः

भोजराजस्य द्वौ ग्रन्थावलङ्कारशास्त्रविषयकौ समुपलभ्येते - सरस्वतीकण्ठाभरणं शृङ्गारप्रकाशश्च। अथ च भोजेनाऽन्येऽप्यनेके ग्रन्थाः विविधविषयानालम्ब्य लिखिताः। समालोचकानां कथनमस्ति - "भोजेन मध्ययुगीनवैज्ञानिकविषयानालम्ब्य चतुरशीतिपुस्तकानि लिखितानि। डा० राघवन् महोदयेन 'कैटालागस कैटागोरम' ग्रन्थे भोजराजस्य निम्नलिखितपुस्तकानामुल्लेखो विहितः -

(i) आदित्यप्रतापसिद्धान्त (ज्योतिषविषयक)
(ii) आयुर्वेदसर्वस्व (आयुर्वेदविषयक)
(iii) चम्पूरामायण (चम्पूकाव्य)

---

१. मुक्ताः केलिविसूत्रहारगलिताः सम्मार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः।
दूराद् दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु भोजनृपतेस्तत् त्यागलीलायितम्।।
काव्यप्रकाश-उदात्तालङ्कारस्योदाहरणम् श्लोक संख्या - ५००

२. एपिग्राफिका इन्डिका - भाग - १ पृ० २९३।।

३. वही भाग २ पृ० १८०-१८१ पृ० २९३

(iv) चाणक्यनीति (राजनीतिविषयक)
(v) चारुचर्या (धर्मशास्त्रविषयक)
(vi) तत्त्वप्रकाश (शैवमतविषयक)
(vii) नाममालिका (कोष)
(viii) युक्तिकल्पतरु (वास्तुविद्याविषयक)
(ix) राजमार्तण्ड (पातञ्जलयोगसूत्रटीका)
(x) राजमार्तण्ड (वेदान्तदर्शनविषयक)
(xi) राजमार्तण्ड (ज्योतिषविषयक)
(xii) राजमृगाङ्क (ज्योतिषविषयक)
(xiii) विद्याविनोद (काव्य)
(xiv) विद्वज्जनबल्लभ (ज्योतिषविषयक प्रबन्धग्रन्थ)
(xv) विश्रान्तविद्याविनोद (आयुर्वेदविषयक)
(xvi) व्यवहारसमुच्चय (धर्मशास्त्रविषयक)
(xvii) शब्दानुशासन (व्याकरणविषयक)
(xviii) शालिहोत्र (अश्वचिकित्साविषयक)
(xix) शिवरत्नकलिका (शैवदर्शनविषयक)
(xx) समराङ्गणसूत्रधार (शिल्पशास्त्रविषयक)
(xxi) सरस्वतीकण्ठाभरण (अलङ्कारशास्त्रविषयक)
(xxii) सिद्धान्तसङ्ग्रह (शैवसिद्धान्तविषयक)
(xxiii) सुभाषितप्रबन्ध (सुभाषितसंग्रह)

पी०वी० काणे महोदयेन 'संस्कृत काव्यशास्त्र का इतिहास' इति ग्रन्थे भोजस्य द्वयोर्ग्रन्थयोरधिकोल्लेखो विहितः -

(i) शृङ्गारमञ्जरी, (ii) भुजबलभीम

संस्कृतकविषु प्रसिद्धेयं किम्वदन्ती - पाषाणशिलासूत्कीर्णं समुद्रे च प्रक्षिप्तं हनूमन्नाटकं भोजराजो जलनिधिमध्यादुदाहरत्।

भोजराजो धारानगर्यां सरस्वतीकण्ठाभरणनाम्नीं पाठशालां प्रास्थापयत्। भोजसमये तत्र पाषाणशिलासु समुत्कीर्णा अनेके ग्रन्था आसन्। उत्तरवर्तिनि काले तुरुष्कैराक्रमण-कारिभिरियं पाठशाला मसजिदरूपेण परिवर्तिता। तदनन्तरमेताः पाषाणशिला उत्कीर्णभागेभ्यः परिवर्त्य सोपानेषु जटिताः। पुरातत्त्वविद्भिस्ताभ्यः शिलाभ्यः कूर्मशतकम् (प्राकृतग्रन्थ), अवनिशतकं (प्राकृतग्रन्थ), पारिजातमञ्जरी (नाटिका), भर्तृहरिकारिकेत्यादीनां ग्रन्थानामन्वेषणं कृतम्।[१]

---

१. सरस्वतीकण्ठाभरण - काव्यमाला सीरीज (१९३४ ई०) भूमिका पृ० १३

## ४. सरस्वतीकण्ठाभरणम्

ग्रन्थेऽस्मिन्नतिविस्तृते काव्यशास्त्रस्याऽनेकेषां तत्त्वानां विवेचनमस्ति। समन्वयप्रधाने ग्रन्थेऽस्मिन् प्राचीनाचार्याणां मन्तव्यान्येकत्रीकृत्य भोजराजस्तेषां समन्वयस्य प्रयासं व्यदधात्। ग्रन्थस्याऽस्य विरचने भोजराजो दण्डिनमतिमहत्त्वशालिनं मेने। दण्डिनः शतद्वयश्लोका अत्रोद्धृता वर्तन्ते। परं नाऽसौ भोजः सम्पूर्णरूपेण प्राचीनाचार्याननुचकार। नवान्यपि मन्तव्यानि तेन स्थापितानि। यथा, भोजेन चतुर्विंशतिप्रकाराः शब्दगुणाश्चतुर्विंशतिप्रकाराश्चार्थगुणा एवमष्टचत्वारिंशद्विधाः गुणाः प्रोक्ताः।

भोजेन रीतयः षट् प्रतिपादिताः - वैदर्भी, पाञ्चाली, गौडीया, आवन्तिका, लाटीया मागधी चेति। परमसौ ताः शब्दालंकाररूपेण प्रोवाच। अलङ्काराणां भोजेन त्रयो वर्गाः प्रोक्ताः - शब्दालङ्कारा अर्थालङ्कारा उभयालङ्काराश्च।

सरस्वतीकण्ठाभरणस्य विषयविभाजनं पञ्चसु परिच्छेदेषु वर्तते। परिच्छेदक्रमेणाऽस्य विषयवस्तु निम्नलिखितरूपेण प्रस्तूयते -

**(i) प्रथमः परिच्छेदः -**

प्रथमे परिच्छेदे षष्ट्युत्तरशतं कारिका अथ च चतुरुत्तरशतञ्चोदाहरणानि वर्तन्ते। प्रथमं तावल्लेखको देवीं सरस्वतीमभिवन्द्य काव्यलक्षणञ्चोक्त्वा काव्यप्रयोजनानि निरदिशत्। तदनन्तरं दोषाणां विवेचनं विद्यते। अत्र षोडश पददोषाः षोडश वाक्यदोषाः षोडश च वाक्यार्थदोषाः प्रोक्ताः। तदनन्तरं चतुर्विंशतिशब्दगुणानां चतुर्विंशत्यर्थगुणानाञ्च विवेचनमस्ति। अथ च काव्येऽलङ्काराणां महत्त्वं प्रतिपादितम्।

**(ii) द्वितीयः परिच्छेदः -**

द्वितीये परिच्छेदेऽष्टपञ्चाशदुत्तरैकशतं कारिका एकोत्तरचतुःशतञ्चोदाहरणानि (४०१) विद्यन्ते। अत्र शब्दालङ्काराणां विवेचनं लेखकश्चकार। प्रथमं तावदलङ्काराणां त्रयो भेदा भोजेन प्रोक्ताः - शब्दालङ्कारा अर्थालङ्कारा उभयालङ्काराश्च। एते क्रमशो बाह्या आभ्यन्तराः बाह्याभ्यन्तराश्चापि प्रोच्यन्ते। शब्दालङ्काराश्चतुर्विंशतिसङ्ख्यकाः सन्ति - जातिगतिरीतिवृत्तिच्छायामुद्रायमकश्लेषानुप्रासचित्रप्रहेलिकादयः। अत्र भोजराजो रीतीनां विवेचनां कृत्वा तासां शब्दालङ्कारत्वं प्रत्यापादयत्। तदनन्तरमस्मिन्नेव परिच्छेदे साहित्यस्य षड् भेदाः वर्णिताः - काव्यं शास्त्रमितिहासः काव्यशास्त्रं काव्येतिहासः शास्त्रेतिहासश्च। अथ च श्रव्यकाव्यदृश्यकाव्यचित्राभिनयानां भेदाः लक्षणानि च सन्ति।

**(iii) तृतीयः परिच्छेदः -**

तृतीये परिच्छेदे चतुर्विंशत्यर्थालङ्काराणां भेदाः वर्तन्ते। केचनार्थालङ्काराः सन्ति - जातिविभावनाहेत्वहेतुसूक्ष्मोत्तरविशेषसम्भवान्योन्यपरिवृत्तिनिदर्शनभेदसमाहितभ्रान्तिवितर्कमीलितस्मृतिभावप्रत्यक्षानुमानोपमानार्थापत्त्यभावाः। अस्मिन् परिच्छेदे पञ्चपञ्चाशत् कारिका अष्टषष्ट्युत्तरोदाहरणानि च सन्ति।

(iv) चतुर्थ: परिच्छेद: -

अस्मिन् परिच्छेदे एकनवति (९१) कारिकास्त्रिचत्वारिंशदुत्तरशतद्वयञ्चो (२४३) दाहरणानि सन्ति। अत्र चतुर्विंशत्युभयालङ्काराणां वर्णनं विद्यते। केचनोभयालङ्काराः सन्ति - उपमारूपकसाम्यसंश्रयापह्नुतिसमाधिसमासोक्त्युत्प्रेक्षाप्रस्तुतप्रशंसातुल्ययोगितालेशसमासोक्ति-समुच्चयाक्षेपार्थान्तरन्यासविशेषोक्तिपरिकरदीपकक्रमपर्यायातिशयोक्तिश्लेषभाविकसंसृष्टय:।

(v) पञ्चम: परिच्छेद: -

परिच्छेदे पञ्चम एकोनाशीत्युत्तरैकशतं (१७९) कारिका: पञ्चदशोत्तरपञ्चशत-(५१५) मुदाहरणानि च वर्तन्ते। अस्मिन् परिच्छेदे लेखकेन रसविवेचनं कृतम्। अथ चाऽस्मिन्नेवाऽध्याये भावादीनां, नायकनायिकाभेदोपभेदानां तद्विशेषतानां, सन्धीनां भारत्यादिवृत्तीनां तत्सम्बन्धितानाञ्चाऽन्यविषयाणां वर्णनमस्ति।

एवञ्च सरस्वतीकण्ठाभरणे ६४३ कारिका १४६१ उदाहरणानि च सन्ति। उदाहरणानि प्रायश: पूर्वकवीनां रचनाभ्य: सङ्कलितानि वर्तन्ते। अत: कालानुक्रमदृष्ट्याऽपि तेषां महत्त्वमनुभूयते। सरस्वतीकण्ठाभरणे निम्नलिखितानां कवीनां काव्यकृतीनाञ्चोल्लेखो विद्यते -

अद्भुतपुण्याभिनन्दामरुकानन्दवर्धनोदात्तराघवरचयितृकालिदासकुमारदासचण्डकचाणक्य-चिन्नमजैमिनिसूत्रवृत्तिदण्डिदीपकद्रोणपर्वधनिकधाराकदम्बनमिसाधुनारायणनिद्रादरिद्र-निशानारायणपञ्चस्तवीप्रभाकरप्रवरसेनबाणबृहदारण्यकोपनिषद्ब्रह्मबिन्दूपनिषद्भट्ट-पर्दिभट्टिभरतभर्तृहरिभल्लटभामहभारविभासभोजराजमञ्जीरमहानाटककर्तृमाघमालवरुद्रमुञ्ज-मेण्ठयशोवर्मराजशेखररुद्रटलक्ष्मीधरवामनवाक्पतिविकटनितम्बाविजयपालबिज्जिकाविद्या-पतिविशाखदत्तविष्णुवर्मबिह्लणशूद्रकश्रीहर्षसातवाहना:।

## ५. सरस्वतीकण्ठाभरणस्य टीका

सरस्वतीकण्ठाभरणस्यैकैव टीका समुपलभ्यते - रत्नदर्पणटीका महामहोपाध्यायरत्नेश्वरकृता। भरहुतनरेशस्य रामसिंहस्याऽनुरोधेन[१] लेखकेनेयं टीका लिखिता। वैदुष्यसम्भृतायां टीकायामस्यामनेकेषां प्राचीनाचार्याणामानन्दवर्धनादीनां मतान्युद्धृतानि सन्ति। परमियं टीका तृतीयपरिच्छेदपरिमितैव प्राप्यते। प्रकाशनमस्या: काव्यमालासीरीजसंस्थया चतुर्नवत्यन्तर्गतं (काव्यमाला सीरीज - ९४) कृतम्।

### ६. शृङ्गारप्रकाश:

भोजस्य शृङ्गारप्रकाशोऽतिविशालकायो ग्रन्थो वर्तते। हस्तलिखितरूपेणाऽयं ग्रन्थ: सम्पूर्ण एवोपलब्ध:, परं प्रकाशनमस्य २२-२३-२४ अध्यायानामेव केवलं बभूव। सम्पूर्णो ग्रन्थ: षट्त्रिंश-

---

१. श्रीरामसिंहदेवस्याज्ञामादाय रचितो मया।
दर्पणाख्य: सदा तेन तुष्यतां श्रीसरस्वती।।
रत्नेश्वरो नाम कवीश्वरोऽसौ विराजते काव्यसुधाभिषेकै:।
दुस्तर्कवक्राहृतदुर्विदग्धां वसुन्धरां पल्लवयन्नजस्रम्।।
सरस्वतीकण्ठाभरणस्य रत्नेश्वरकृतटीकायास्तृतीयपरिच्छेदस्य समाप्तौ

दध्यायेषु (प्रकाशेषु) विभक्तो वर्तते। डा० राघवेन्द्रमहोदयः स्वग्रन्थे सकलग्रन्थस्याऽध्ययनं विधाय विषयवस्तुनः प्रकाशनमकरोत्। अस्मिन् ग्रन्थे नाट्यशास्त्रकाव्यशास्त्रयोर्द्वयोरेव विषययोर्विवेचनमस्ति। डा० पी०वी० काणे महोदयेन प्रकाशक्रमेण ग्रन्थस्य विषयविवरणमेवं सूचितम् -

(i) काव्यस्य शब्दार्थयोश्च परिभाषाः प्रत्येकस्य च द्वादशकार्याणि।
(ii) प्रातिपदिकास्तेषाञ्च भेदोपभेदाः।
(iii) पदस्य वाक्यस्य चाऽर्थस्तयोश्च प्रकाराः।
(iv) अर्थस्य क्रियाकालकारणादयो द्वादश प्रकाराः।
(v) उपाधेरर्थः।
(vi) विभक्तेरर्थः।
(vii) शब्दस्य विभिन्नाः शक्तयः अभिधाविवक्षातात्पर्यादयः।
(viii) अपरशब्दसम्बन्धेन शब्दशक्तीनां विकासः। यथा - व्यपेक्षासामर्थ्यादयः।
(ix) काव्यदोषाणां त्यागो गुणानाञ्च ग्रहणम्।
(x) शब्दालङ्कारा अर्थालङ्कारा उभयालङ्काराश्च।
(xi) रसाः।
(xii) नाटकानि तेषाञ्च अष्टषष्टिवैशिष्ट्यानि।
(xiii) रतिः, धर्मशृङ्गारो मोक्षशृङ्गारो वृत्तयो रीतयश्च।
(xiv) हर्षोऽष्टचत्वारिंशच्च भावाः।
(xv) रतेरालम्बनविभावाः।
(xvi) रतेरुद्दीपनविभावाः।
(xvii) अनुभावाः।
(xviii) धर्मशृङ्गारः।
(xix) अर्थशृङ्गारः।
(xx) कामशृङ्गारः।
(xxi) मोक्षशृङ्गारः, नायक-नायिकाविभागाः, नायक-नायिकागुणाः।
(xxii) अनुरागः
(xxiii) विप्रलम्भशृङ्गारः सम्भोगशृङ्गारश्च
(xxiv) विप्रलम्भः
(xxv) पूर्वानुरागविप्रलम्भः।
(xxvi) (प्रकाशोऽयमनुलब्ध एव)।
(xxvii) अभियोगविधिः।
(xxviii) दूती-विशेषदूत-कर्मोपवर्णनम्
(xxix) दूतसम्प्रेषणसन्देशदानादयः

(xxx) भावस्वरूपम्
(xxxi) प्रवासोपवर्णनम्।
(xxxii) करुणरसविनिर्णयः।
(xxxiii) सम्भोगस्वरूपम्।
(xxxiv) प्रथमानुरागानन्तरं सम्भोगः।
(xxxv) मानप्रवासकरुणानन्तरं सम्भोगः।
(xxxvi) चतुर्विधसम्भोगावस्थानां वर्णनम्।

भोजकृतशृङ्गारप्रकाशस्य काऽपि टीका यद्यपि नोपलभ्यते, तथापि प्राचीनसमये ग्रन्थोऽयमतिलोकप्रियोऽवर्तत। अस्याऽध्ययनं बाहुल्येन प्रचलितमासीदित्यनुमीयते। काव्यशास्त्र-नाट्यशास्त्रयोर्बहुविधविषयनिरूपणमस्मिन् ग्रन्थे वर्तते। अतोऽनेकैः शास्त्रकृद्भिरयं स्वग्रन्थेषूद्धृतः। एकावली[1] रत्नापण[2] भावप्रकाशनमन्दारमन्दचम्पू[3] माणिक्यचन्द्रकृत-काव्यप्रकाशसङ्केतटीकाहेमचन्द्रकृतकाव्यानुशासनग्रन्थेष्वयं शृङ्गारप्रकाशग्रन्थ उद्धृतो वर्तते।

## ७. भोजस्य वैशिष्ट्यम्

काव्यशास्त्रस्य प्रायशः सर्वेषां विषयाणां विवेचना भोजेन विहिता। प्राचीनाचार्यमन्त-व्यानां समन्वयोऽनेन स्वकृतिषु विहितः। अथ च तेन नवीनं मौलिकं चिन्तनमपि कृतम्। भोजकृतविषयविवेचने विशेषोऽनुपातो लक्ष्यते। दोषविभाजनं यदि तेन त्रिषु वर्गेषु पदवाक्यवाक्यार्थेषु कृतं, तेषाञ्च षोडश-षोडश उपभेदा अपि निर्दिष्टाः। गुणान् द्वयोर्वर्गयोर्विभज्य प्रत्येकस्य चतुर्विंशति-चतुर्विंशतिभेदान् प्रदर्श्याऽसौ तेषां संख्यामष्टचत्वारिंशत् निर्दिदेश। अलङ्कारान् त्रिषु वर्गेषु शब्दार्थोभयालङ्कारेषु विभज्य प्रतिवर्गं चतुर्विंशतिभेदानसौ निरूपयामास। जातिगतिरीतिवृत्तयोऽपि तेन प्रतितत्त्वं षट्सु भेदेषु विभक्ताः।

भोजस्य वैशिष्ट्यं रसविवेचने सर्वोत्कृष्टतां भजते। सरस्वतीकण्ठाभरणे शृङ्गारप्रकाशे च द्वयोरेव ग्रन्थयोः रसस्य विस्तृता विवेचना विद्यते। प्राचीनाचार्याननुसृत्य रसास्तु भोजेन दश प्रोक्ताः, परं सर्वेषां रसानां मूलं शृङ्गार एव मतः।[4] भोज एवमभिमानमहङ्कारञ्चोक्त्वा

---

१. राजा तु शृङ्गारमेकमेव शृङ्गारप्रकाशे रसमुररीचकार - एकावली।

२. शृङ्गार एक एव रस इति शृङ्गारप्रकाशः। रत्नापण

३. अथ भोजनृपादीनां मतमत्र प्रकाश्यते
रसो वै स इति श्रुत्वा रस एकः प्रकीर्तितः।
अतो रसः स्याच्छृङ्गार एक एवेतरे तु न।
धर्मार्थकाममोक्षाख्यभेदेन स चतुर्विधः।। मन्दारमन्दचम्पू

४. शृङ्गारवीरकरुणाद्भुतरौद्रहासबीभत्सवत्सलभयानकशान्तनाम्नः।
आम्नासिषुर्दश रसान् सुधियो वयं तु शृङ्गारमेव रसनाद् रसमामनामः।। शृङ्गारप्रकाश

शृङ्गारमात्रमाह। अयमेव काव्ये कमनीयतामावहति।[१] कविर्यदि शृङ्गारी भवति, काव्ये जगद् रसमयं भवति, यदि च न शृङ्गारी भवति, सर्वमेव नीरसं जायते।[२]

रसं तथा महत्त्वशालिनं भोजः प्रतिपादयामास। तथाऽपि विस्मयकरोऽयं विषयो यत्तस्य विस्तृतां विवेचनां कृत्वाऽपि भोजेन रसो गुणैः सहालङ्कार एव मतः। दण्डिनः "काव्यशोभाकरान्" इति शब्दानुद्धृत्य तेन लिखितम् -

**गुणरसभावतदाभासा अपि श्लेषोपमाद्यलङ्कारसदृशाः काव्यमलङ्कुर्वन्ति।**

अत्र भोजस्य निरूपणमेवंविधो वर्तते -

**इत्युक्तं तत्र "अलङ्कारसंसृष्टेः" इतीयत्येव वक्तव्ये नानालङ्कारग्रहणं गुणरसानामुपसंग्रहार्थम्। तेषामपि काव्यशोभाकरत्वेनाऽलङ्कारत्वम्। यावदाह -**

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।**
**ते चाऽद्यपि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति।।**
**काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रियाः।**
**साधारणमलङ्कारजातमन्यत् प्रदर्श्यते।।**

**तत्र काव्यशोभाकरानित्यनेन श्लेषोपमादिवद् गुणरसतदाभासप्रशमादीनप्युपगृह्णाति।**[३]

मध्यकालीनराजसु सुप्रसिद्धो भोजराजः स्वशौर्येण सह विद्यया काव्यकरणप्रतिभया चाऽपि कीर्तिमविनश्वरामुपलेभे। अयं न केवलं विदुषां कवीनाञ्चाऽप्याश्रयो बभूव, स्वयमपि काव्यशास्त्रकृद्भिर्जगति समादरणीयो जातः। एवमसौ देव्याः सरस्वत्याः याथार्थ्येनोपासकोऽवर्तत। जगदुपकारकोऽसौ सर्वजनश्रद्धेयोऽवर्तत। प्राचीनलेखकैरसौ कविबान्धवः प्रोक्तः। उदयपुरप्रशस्तौ भोजविषये सत्यमेवोत्कीर्णं विद्यते[४] -

**साधितं विहितं दत्तं ज्ञातं तद्यन्न केनचित्।**
**किमन्यत् कविराजस्य श्रीभोजस्य प्रशस्यते।।**

---

१. रसोऽभिमानोऽहङ्कारः शृङ्गार इति गीयते।
योऽर्थस्तस्याऽन्वयात् काव्यं कमनीयत्वमश्नुते। सरस्वतीकण्ठाभरण ५.१

२. शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत्।
स एव चेदशृङ्गारी नीरसं सर्वमेव तत्।। सरस्वतीकण्ठाभरण ५.३

३. सरस्वतीकण्ठाभरण - काव्यमाला सीरीज - (संस्करण १९३४) पृ० ७०३

४. एपिग्राफिका इण्डिका - उदयपुरप्रशस्ति भाग - १ पृ० १२२

द्वाविंशोऽध्यायः

# क्षेमेन्द्रः

## १. क्षेमेन्द्रस्य महत्त्वम्

काव्यशास्त्रस्येतिहासे क्षेमेन्द्रो ह्यौचित्यविचारचर्चां प्रणीयौचित्यमार्गञ्च प्रतिष्ठाप्य महतीं कीर्तिमानर्ज। क्षेमेन्द्रस्तु तथाविध आचार्यो येन सर्वाधिकविधासु साहित्यसाधना विहिता। तं विना न कोऽपि तथाविधो ह्याचार्यो बभूव, येन तथाऽनेकविधासु प्रभूतसंख्यायां ग्रन्थानां रचना कृता। विविधविषयाचार्योऽसौ प्रतिभान्वितः कविरनेकानि काव्यानि प्रणिनाय। क्षेमेन्द्रेण चत्वारिंशदधिकग्रन्थानां प्रणयनं विहितम्। केषुचिद् ग्रन्थेष्वप्राप्येषु सत्स्वपि बहुसंख्यकास्तस्य ग्रन्थाः समुपलभ्यन्ते।

## २. क्षेमेन्द्रस्य जीवनवृत्तं समयश्च

क्षेमेन्द्रेण स्वग्रन्थेषु स्वजीवनवृत्तस्य स्वल्पपरिचयः प्रस्तुतः। तस्य पूर्वजाः काश्मीरनरपतीनाममात्यपदेषु प्रतिष्ठिता अवर्तन्त। तस्य जनकः प्रकाशेन्द्राभिधानः पितामहश्च सिन्धुनामाऽऽसीत्। परिवारश्चापि समृद्धोदारगुणवानवर्तत।[1] बृहत्कथामञ्जर्यां वर्णितम् - क्षेमेन्द्रोऽभिनवगुप्तात् साहित्यविद्यामधीयाय।[2]

परम्परासु प्रसिद्धमिदं यन्मूलतः शैवोऽप्ययं क्षेमेन्द्रः सोमाचार्यप्रभावाद् वैष्णवमतमङ्गीचकार। काव्यरचनासु क्षेमेन्द्रः सम्भवतो महर्षिव्यासमेव स्वादर्शरूपेण मेने। अनेकेषु ग्रन्थेषु स्वात्मानमसौ व्यासदासमित्युपनाम्ना लिलेख।[3]

---

१. काश्मीरेषु बभूव सिन्धुरधिकः सिन्धोश्च निम्नाशयः
प्राप्तस्तस्य गुणप्रकर्षयशसः पुत्रः प्रकाशेन्द्रताम्।
विप्रेन्द्रप्रतिपादितान्नधनभूगोसंघकृष्णाजिनैः
प्रख्यातातिशयस्य तस्य तनयः क्षेमेन्द्रनामाऽभवत्।। दशावतारचरितसमाप्तौ

२. श्रुत्वाऽभिनवगुप्ताख्यात् साहित्यं बोधवारिधेः।
आचार्यशेखरमणेः विद्याविवृतिकारिणः। बृहत्कथामञ्जरी १९.३७

३. (क) इत्येष विष्णोरवतारमूर्तेः काव्यामृतास्वादविशेषभक्त्या।
श्रीव्यासदासान्यतमाभिधेन क्षेमेन्द्रनाम्ना विहितः प्रबन्धः।। दशावतारचरितम् १०.४१
(ख) तस्यात्मजः सर्वमनीषिशिष्यः श्रीव्यासदासापरपुण्यनामा।
क्षेमेन्द्र इत्यक्षयकाव्यकीर्तिश्चक्रे नवौचित्यविचारचर्चाम्।।
औचित्यविचारचर्चा - अन्तिमश्लोकेषु

क्षेमेन्द्रस्य समयविषये नाऽधिको विवादः। स्वग्रन्थेष्वसौ समकालीननरेशानां नामान्युल्लिलेख। तस्य कृतयः प्रायशोऽनन्तकलशाभिधानयोः पार्थिवयोः शासनकाले प्रणीता अभवन्। अस्मिन् काले काश्मीरेषु षड्यन्त्ररक्तपातासन्तोषादीनां प्राबल्यमासीत्। स्वरचनामाध्यमेन क्षेमेन्द्रो वातावरणमिदं शुद्धं पवित्रं स्वस्थञ्च विधातुं प्रायतत।

अनन्तस्य राज्ञो शासनकालावधिः १०२८ - १०६३ खिष्टाब्दं यावदवर्तत। कलशस्य च शासनावधिरासीत् १०६३-१०८९ खिष्टाब्दपर्यन्तम्। द्वयोरेतयोः पार्थिवयोः शासनसमये क्षेमेन्द्रस्य साहित्यरचना समजायत। अस्य समयमातृकाग्रन्थस्य रचना पञ्चविंशतितमे लौकिकेऽब्दे (१०५० ई०) अनन्तशासनसमये बभूव। दशावतारचरितस्य च निर्मितिरेकचत्वारिंशत्तमे लौकिकेऽब्दे (१०६६ ई०) कलशराज्यकाले समजायत। औचित्यविचारचर्चाग्रन्थस्य रचनाऽप्यनन्तशासनसमये बभूव।[1] कविकण्ठाभरणमपि तेन तस्मिन्नेव समये लिखितम्।[2] एतैर्विवरणैः सिद्धमिदं यत् क्षेमेन्द्रस्य ग्रन्थरचनाकालः १०६६ खिष्टाब्दपूर्वकोऽवर्तत। क्षेमेन्द्रस्य गुरोरभिनवगुप्तस्य साहित्यरचनाकालः ९८०-१०२० खिष्टाब्दः कल्प्यते। सम्भवतः क्षेमेन्द्रेण १०००तमे खिष्टाब्देऽभिनवगुप्तस्य शिष्यत्वमङ्गीकृतम्। अतः क्षेमेन्द्रस्य ग्रन्थरचनासमयः १०२०-१०६६ खिष्टाब्दः कल्पनीयः।

## ३. क्षेमेन्द्रस्य कृतयः

क्षेमेन्द्रस्य द्वौ ग्रन्थौ काव्यशास्त्रविषयकौ प्रसिद्धौ - औचित्यविचारचर्चा कविकण्ठाभरणञ्च। सुवृत्ततिलकञ्चाऽपि तस्य काव्यशास्त्रविषयिका कृतिरस्ति। अथ चाऽसौ विविधविषयेषु विविधविधासु प्रभूतं साहित्यमकल्पयत्। पी०वी० काणे महोदयेन लिखितम् -

क्षेमेन्द्रेण चत्वारिंशद्ग्रन्थानां प्रणयनं कृतम्।[3] परं न तस्य सर्वे ग्रन्थाः समुपलभ्यन्ते। अनेकेषु ग्रन्थेषु समुपलभ्यमानेषु सत्स्वपि न सर्वे ग्रन्थाः मनीषिभिरधिगताः। क्षेमेन्द्रस्य समुपलब्धग्रन्थेभ्यस्तस्य निम्नलिखितग्रन्थानां सूचनोपलभ्यते -

१. अमृततरङ्गकाव्यम्
२. अवसरसारः
३. औचित्यविचारचर्चा
४. कनकजातकी
५. कविकण्ठाभरणम्
६. अमृतविलासः
७. कविकर्णिका

---

१. तस्य श्रीमदनन्तराजनृपतेः काले किलाऽयं कृतः। औचित्यविचारचर्चा - अन्तिमश्लोकः
२. राज्ये श्रीमदनन्तराजनृपतेः काव्योदयोऽयम्। कविकण्ठाभरणम् - अन्तिमश्लोकः
३. काणे, पी०वी०: संस्कृत काव्यशास्त्र का इतिहास - पृ० ३१९

८. चतुर्वर्गसङ्ग्रहः
९. चारुचर्या
१०. चित्रभारतनाटकम्
११. दर्पदलनम्
१२. दशावतारचरितम्
१३. देशोपदेशः
१४. नीतिकल्पतरुः
१५. नीतिलता
१६. पद्यकादम्बरी
१७. पवनपञ्चाशिका
१८. बृहत्कथामञ्जरी
१९. बोधसत्त्वावदानकल्पलता
२०. भारतमञ्जरी
२१. मुक्तावली
२२. मुनिमतमीमांसा
२३. रामायणमञ्जरी
२४. लावण्यवती
२५. ललितरत्नमाला
२६. वात्सायनसूत्रकारः
२७. विनयवल्ली
२८. व्यासाष्टकम्
२९. शशिवंशमहाकाव्यम्
३०. समयमातृका
३१. सुवृत्ततिलकम्
३२. सेव्यसेवकोपदेशः
३३. नृपावलिः

कह्लणो राजतरङ्गिण्यां क्षेमेन्द्रकृतां नृपावलिमप्युल्लिलेख। परं नाऽसौ ग्रन्थः प्राप्यते। क्षेमेन्द्रस्य काव्यशास्त्रविषयकास्त्रयो ग्रन्थाः वर्तन्ते। तेषां परिचयोऽत्र प्रस्तूयते।

### ४. औचित्यविचारचर्चा

काव्यशास्त्रग्रन्थेषु क्षेमेन्द्रकृतौचित्यविचारचर्चाग्रन्थस्य महत्त्वमतितरां प्रसिद्धम्। एकोनविंशाति (१९) कारिकापरिमिते ग्रन्थेऽस्मिन् लेखकेनान्तिमकारिकासु स्ववंशपरिचयोऽपि- संक्षेपेण सूचितः। कारिकाव्याख्यानाय लेखकः स्वयमेव वृत्तिमपि लिलेख। अथ चोदाहरणैरसौ

स्वप्रतिपादितसिद्धान्तानां पुष्टिमपि चकार। अत्र कानिचिदुदाहरणानि क्षेमेन्द्ररचितानि सन्ति, परमधिकानि त्वन्यकविकृतानि कालिदासभवभूतिश्रीहर्षबाणव्यासामरुककुमारदासमातृगुप्तादिकविकाव्येभ्य: सङ्ग्रहीतानि सन्ति।

औचित्यविचारचर्चा विरच्य क्षेमेन्द्रेणौचित्यसम्प्रदाय: काव्यसमीक्षाविषयक: प्रवर्तित:। औचित्यमसौ व्याचष्ट। क्षेमेन्द्रेण प्रोक्तम् -

रससिद्धस्य काव्यस्य जीवितमौचित्यमेव वर्तते।[1] वस्तूनि स्वस्थानेष्वौचित्येनैव स्थितानि शोभन्ते। अथ चौचित्यं विना गुणा अलङ्काराश्चाऽपि न शोभन्ते।[2]

क्षेमेन्द्रेणौचित्यस्य व्याख्या निम्नप्रकारेण कृता -

**उचितं प्राहुराचार्या: सदृशं किल यस्य तत्।**
**उचितस्य च यो भावस्तदौचित्यं प्रचक्षते।।**

यद्वा यो यस्यानुरूपो भवति तदेवोचितं प्रोच्यते। उचितस्य च भाव औचित्यं भवति।

औचित्यं परिभाष्य क्षेमेन्द्रेणौचित्यस्य क्षेत्राणि निर्दिष्टानि। यद्यपि क्षेत्राणामेतेषां गणना न सम्भवति, तथापि प्रधानरूपेण तस्य सप्तविंशतिक्षेत्राणि सन्ति -

पद(१)वाक्य(२)प्रबन्धार्थ(३)गुणा(४)ऽलङ्कार(५)रस(६)क्रिया(७)कारक(८)लिङ्ग(९)वचन(१०)विशेषणो(११)पसर्ग(१२)निपात(१३)काल(१४)देश(१५)कुल(१६)व्रत(१७)तत्त्व(१८)सत्त्वा(१९)भिप्राय(२०)स्वभाव(२१)सारसङ्ग्रह(२२)प्रतिभा(२३)ऽवस्था(२४)विचार (२५)नामा(२६)ऽऽशीर्वादात्मकानि(२७)।[3]

औचित्यस्य क्षेत्राण्यनन्तानीति क्षेमेन्द्रस्य मतम्। तानि तु तथैव विचारणीयानि। परमनन्तत्वात् सर्वेषां निदर्शनमसम्भवमेव। औचित्यक्षेत्राणामत्र शास्त्रै: सह सम्बन्धोऽपि ज्ञेय: -

(i) पदवाक्यप्रबन्धानां त्रयाणां भेदानां सम्बन्धो मीमांसादर्शनेन विद्यते।

---

१. अलङ्कारास्त्वलङ्कारा: गुणा एव गुणा: सदा।
औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्।। औचित्यविचारचर्चा - ५

२. कण्ठे मेखलया नितम्बफलके तारेण हारेण वा
पाणौ नूपुरबन्धनेन चरणे केयूरपाशेन वा।
शौर्येण प्रणते रिपौ करुणया नायान्ति के हास्यता-
मौचित्येन विना रुचिं प्रतनुते नाऽलङ्कृतिर्नो गुण:।। औचित्यविचारचर्या - ६

३. पदे वाक्ये प्रबन्धार्थे गुणेऽलङ्करणे रसे।
क्रियायां कारके लिङ्गे वचने च विशेषणे।।
उपसर्गे निपाते च काले देशे कुले व्रते।
तत्त्वे सत्त्वेऽप्यभिप्राये स्वभावे सारसङ्ग्रहे।।
प्रतिभायामवस्थायां विचारे नाम्न्यथाशिषि।
काव्याङ्गेषु च प्राहुरौचित्यं व्यापि जीवितम्।। औचित्यविचारचर्चा - ८-१०

(ii) गुणालङ्काररसानां सम्बन्धः काव्यशास्त्रेणाऽस्ति।

(iii) क्रियाकारकलिङ्गवचनविशेषणोपसर्गनिपातकालानां सम्बन्धो व्याकरणशास्त्रेण वर्तते।

(iv) देशकुलव्रतानां सम्बन्धो लोकेन भवति।

(v) तत्त्वसत्त्वाभिप्रायस्वभावसारसङ्ग्रहप्रतिभावस्थाविचारनामाऽऽशिषां सम्बन्धः स्वयं कविना विद्यते।

क्षेमेन्द्रः सर्वेषामेतेषामौचित्यभेदप्रभेदानां व्याख्यामुदाहरणानि प्रत्युदाहरणानि च प्रस्तूय ह्यौचित्यसिद्धान्तस्य प्रतिष्ठाञ्चकार।

## ५. कविकण्ठाभरणम्

क्षेमेन्द्रेणाऽयं ग्रन्थः कविशिक्षामधिकृत्य लिखितः। पी०वी० काणेमहोदयस्य मतमिदमप्यस्ति यत् क्षेमेन्द्रकृतौ कविकर्णिकाकविकण्ठाभरणग्रन्थावभिन्नत्वेनैव सम्भाव्येते। कविकर्णिका-भिधानो ग्रन्थो न कश्चिदप्यन्यः प्राप्यते।

कविकण्ठाभरणग्रन्थः पञ्चपञ्चाशत्कारिकासु सङ्कलितं पञ्चसन्धिषु (अध्यायेषु) विभक्तमस्ति। क्षेमेन्द्रेण काव्यनिबन्धनस्य पञ्च सन्धयः पञ्च सरणयो वा निम्नप्रकारेण प्रतिपादिताः -

तत्राकवेः कवित्वप्राप्तिः शिक्षाप्राप्तगिरः कवेः।
चमत्कृतिश्च शब्दाप्तौ गुणदोषोद्गतिस्ततः
पश्चात्परिचयप्राप्तिरित्येते पञ्च सन्धयः।।

ग्रन्थेऽस्मिन् क्षेमेन्द्रः शिष्याणां वर्गत्रयमाह। कवीनां तेन पञ्च वर्गा विहिताः - छायोपजीवी, पदकोपजीवी, पादोपजीवी, सकलोपजीवी भुवनोपजीवी च। अत्र तेन दशविध ाश्चमत्कारा अपि वर्णिताः।

## ६. सुवृत्ततिलकम्

ग्रन्थेऽस्मिन् क्षेमेन्द्रश्छन्दसां सविस्तरं वर्णनञ्चक्रे। अत्र वृत्तौचित्यं (छन्दसामौचित्यम्) तेन व्याख्यातम्। वृत्तौचित्यसम्बन्धत्वादयं ग्रन्थः पूरकग्रन्थ एवौचित्यविचारचर्याया अवगन्तव्यः।

अभिनवगुप्तस्यैकोऽन्यः शिष्यः क्षेमसारोऽवर्तत। तेन शैवदर्शनमधिकृत्य ह्यनेके ग्रन्थाः प्रणीताः। अभिनवगुप्तस्यैकं ग्रन्थं परमार्थसारमप्यसौ व्याख्यातवान्। नामसाम्यात् केचन समीक्षकाः क्षेमेन्द्रमेव क्षेमसारं प्रतिपादयन्ति। परन्तु धारणेयं न पारमार्थिकी। द्वयोरेव क्षेमेन्द्रक्षेमसारयोर्व्यक्तित्वं भिन्नमेव।

## ७. काव्यशास्त्रजगत्यौचित्यस्य महत्त्वम्

औचित्यं काव्यजीवितं प्रतिपाद्य क्षेमेन्द्रो ह्यौचित्यसम्प्रदायं प्रवर्तितवान्। परन्तु काव्यसमीक्षाक्षेत्रमौचित्यसिद्धान्तादपरिचितमेव सर्वथाऽवर्ततेति न। भरतमुनेरारभ्य क्षेमेन्द्रपर्यन्तं सर्वैरेवाऽऽचार्यैः काव्ये महत्त्वमौचित्यस्य स्वीकृतम्। आनन्दवर्धनेनौचित्यस्य काव्ये महती प्रतिष्ठा प्रतिपादिता। अथ चाऽनौचित्यं रसभङ्गस्य प्रधानतमं कारणं प्रोक्तम्।[1] ध्वन्यालोकेऽसावलङ्कारौचित्यं गुणौचित्यं संघटनौचित्यं प्रबन्धौचित्यं रीत्यौचित्यं रसौचित्यं सर्वमेव व्यचारयत्।

परन्तु महत्या प्रतिष्ठया सम्मानितमपीदमौचित्यं न ह्यानन्दवर्धनेन काव्यात्मरूपेण स्वीकृतम्। काव्यस्यात्मा तेन ध्वनिरेव प्रतिपादितः। वस्तुतः क्षेमेन्द्रेण ध्वन्यालोककारस्याऽय-मौचित्यसिद्धान्तः सुसूक्ष्मं सुगहनञ्चाऽधीतः। तदनन्तरमसौ क्षेत्रमौचित्यस्य सुविस्तृतञ्चक्रे। अथ चौचित्यं काव्यस्यात्मपदे प्रतिष्ठितञ्चकार।

---

१. अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा।। ध्वन्यालोक (३.१४) वृत्तिः

# मम्मट:

## १. मम्मटस्य महत्त्वम्

क[illegible]व्यशास्त्राचार्येषु मम्मटो महत्तममादरगौरवास्पदं स्थानममजत। गौरवस्य हेतुस्तत्र तत्कृत[illegible]व्यप्रकाशग्रन्थो वर्तते। अस्मिन् ग्रन्थे काव्यस्य सर्वेषामपि तत्त्वानां साङ्गोपाङ्गं विवेचनम[illegible]स्ति। नाट्यशास्त्रसम्बन्धिविषयान् परिवर्ज्य सर्वाण्यपि काव्याङ्गानि लेखकेनाऽत्र निरूपितानि। भरतादारभ्य स्वसमयपर्यन्तं काव्यशास्त्रक्षेत्रे यावन्त: सिद्धान्ता: निरूपिता: स्थिरीकृताश्च, सर्वेषामपि तेषां मम्मटेन गहनमध्ययनं कृतम्। सर्वस्याऽपि साहित्यस्य मन्थनं कृत्वा यत्साररूपनवनीतसङ्ग्रहस्तेन कृत:, तस्य सर्वस्य साररूप: पदार्थ एव काव्यप्रकाश:। सर्वेषामपि सिद्धान्तानां समन्वयं विधाय मम्मटेन प्रवर्तितमेव काव्यशास्त्रं समीक्षकै: स्वीकृतम्। तदनुवर्तनञ्चोत्तरवर्तिभि: काव्यशास्त्रकृद्भिरङ्गीकृतम्।

म[illegible]म्मटपूर्ववर्तिन आचार्या: प्रायश: कतिपयानामेव काव्याङ्गानां स्पर्शञ्चक्रिरे। भामहद[illegible]ण्डिनौ काव्यप्रयोजनलक्षणालङ्कारपर्यन्तमेव सीमितावास्ताम्। ताभ्यां शब्दशक्ति-रसध्वनिप्रभृतीनां तत्त्वानां विवेचना न कृता। रीतीनामसाधारणं महत्त्वं मन्यमानो वामनस्तास्वेव निमग्न:। गुणदोषालङ्काराणां विवेचनं कृत्वाऽप्यसौ रसञ्च ध्वनिञ्चाऽपि न समुचितरूपेण व्याचष्ट। उद्भट: स्वात्मानमलङ्कारपर्यन्तमेव सीमितञ्चक्रे। अथ चैकचत्वारिंशदलङ्काराणां व्याख्याने तस्य प्रतिभाऽस्तङ्गता। रुद्रट: किञ्चिदग्रयायी बभूव। काव्यलक्षणेन सहाऽसावलङ्काररसनायकनायिकाभेदादीनपि सविशदं वर्णयामास। परन्तु काव्यस्य प्रमुखतत्त्वरूपं ध्वनिं विना तस्य सकलं विवेचनमपूर्णमिव प्रतिभाति। रुद्रटानन्तरमानन्दवर्धनाभिनवगुप्तौ बभूवतु:। आनन्दवर्धनो ध्वनिं काव्यस्याऽऽत्मानं प्रतिपाद्य तस्य तथा सुविशदं प्राञ्जलञ्च स्वरूपं प्रादर्शयद् यथा सर्वाणि सहृदयहृदयान्यानन्दपूर्णानि सञ्जातानि। परन्तु काव्ये न ध्वनिरेवैकं तत्त्वम्। गुणालङ्कारादीनां विशदविवेचनस्याऽभावात् तस्य ग्रन्थोऽपूर्ण एव। भरतनाट्यशास्त्रस्याऽभिनवभारतीटीकां ध्वन्यालोकस्य च लोचनटीकां विरच्याऽभिनव-गुप्तोऽतितरां काव्यशास्त्रमुपचकार। परन्तु शब्दशक्तिगुणदोषालङ्कारादिविवेचनाभावात् काव्यशास्त्रविषये तस्य कार्यमपूर्णमिव लक्ष्यते।

मम्मटाचार्येण प्राचीनाचार्याणामेतदपूर्णत्वं पूर्णत्वं प्रापितम्। प्राचीनग्रन्थानधीत्य काव्यसमीक्षाया अनिवार्यसिद्धान्तानां समन्वयमसौ काव्यप्रकाशग्रन्थे चकार। तेन नवसिद्धान्ता

अपि स्थापिताः। प्राचीनपरम्परागतान् काव्यप्रयोजनहेतुलक्षणभेदशब्दशक्तिगुणदोषालङ्कारानसौ स्वकृतकाव्यप्रकाशग्रन्थे समीक्षाञ्चक्रे। अथ चाऽऽनन्दवर्धनेन प्रस्थापितमभिनवगुप्तेन च परिपोषितं ध्वनिसिद्धान्तमपि पुनर्जीवयामास। आनन्दवर्धनाभिनवगुप्तयोरनन्तरं ध्वनिसिद्धान्तोऽनैकैः काव्यशास्त्रिभिः प्रबलं प्रहतः। भट्टनायकमहिमभट्टादिभिः काव्यशास्त्रकृद्भिः ध्वनिं खण्डयितुमेव ग्रन्थानां रचना विहिता। परन्तु मम्मटाचार्यो ध्वनिविरोधिनामेतेषां युक्तीः सुदृढप्रबलप्रमाणैः खण्डयित्वा ध्वनिसिद्धान्तं पुनः प्रास्थापयत्। अतोऽयं ध्वनिस्थापनपरमाचार्यो लोके प्रसिद्धो बभूव।

ध्वनेर्यस्य रमणीयस्य सिद्धान्तस्य विनाशाय व्यक्तिविवेककारः सङ्कल्पञ्चकार, मम्मटेन तस्य युक्तीः सबलसशक्तप्रमाणैस्तथा विखण्डिताः, यथाऽसौ ध्वनिविरोधी काव्यशास्त्रसरण्यां ह्येकाकी वर्तमानो न केनाऽपि समर्थितः। आनन्दवर्धनेन प्रस्थापितोऽभिनवगुप्तेन च परिपोषितो ध्वनेरयं सिद्धान्तः काव्यप्रकाशे समीक्षितः पूर्वपिक्षयाऽपि रमणीयो व्यवस्थितश्च सञ्जातः।

पूर्ववर्तिनामाचार्याणां कृतिभ्यस्तर्कसम्मतसिद्धान्तानां मधु सञ्चित्य मम्मटः काव्यप्रकाशे समायोजयत्। अथ च पूर्ववर्तिनां त्रुटीः संस्कृत्यासौ सर्वाङ्गपूर्णं सारगर्भितमेकं महत्त्वशालिनं ग्रन्थं तथा व्यरचयद्, यथा ग्रन्थस्यैकस्याध्ययनेनैव सम्पूर्णं काव्यशास्त्रं विदितं भवति। अत एव समालोचकाः काव्यप्रकाशं श्रेष्ठं काव्यशास्त्रविषयक ग्रन्थं वदन्ति सम्मटाचार्यञ्च वाग्देवतावतारोपाधिना विभूषयन्ति।

## २. मम्मटस्य जीवनवृत्तम्

निजजीवनवृत्तविषये न मम्मटो किमप्यलिखत्। तथापि नाम्नैवाऽसौ काश्मीर-वास्तव्योऽनुमीयते। काव्यप्रकाशस्य सुधासागरटीकालेखकेन भीमसेनेन मम्मटपरिचयं विवृण्वता केचन श्लोकाः लिखिताः।[१] तदनुसारेण मम्मटः काश्मीरजनपदे जन्म लेभे। अथ चाऽसौ वाग्देवताया अवताररूपेण प्रसिद्धो बभूव। तस्य जनको जय्यटोऽनुजौ च कैय्यटोव्वटौ

१. शब्दब्रह्मसनातनं न विदितं शास्त्रैः क्वचित् केनचित्
तद्देवी हि सरस्वती स्वयमभूत् काश्मीरदेशे पुमान्।
श्रीमज्जैय्यटगेहिनीसुजठराज्जन्माप्य युग्मानुजः
श्रीमन्मम्मटसंज्ञयाश्रिततनुं सारस्वतीं सूचयन्।।
मर्यादां किल पालयन् शिवपुरीं गत्वा प्रपठ्यादरात्
शास्त्रं सर्वजनोपकाररसिकः साहित्यसूत्रं व्यधात्।
तद्वृत्तिञ्च विरच्य गूढमकरोत् काव्यप्रकाशं स्फुटं
वैदग्ध्यैकनिदानमर्थिषु चतुर्वर्गप्रदं सेवनात्।।
कस्तस्य स्तुतिमाचरेत् कविरहो को वा गुणान् वेदितुं
शक्तः स्यात् किल मम्मटस्य भुवने वाग्देवतारूपिणः।
श्रीमान् कैयट औव्वटो ह्यवरजो यच्छात्रतामागतो
भाष्याब्धिं निगमं यथाक्रममनुव्याख्यानसिद्धिङ्गतः।।

श्रीभीमसेनकृतकाव्यप्रकाशकीर्तिसुधाकरटीकायाः प्रस्तावनातः

बभूवतुः। कैय्यटेन महामाष्यस्य उव्वटेन च वेदमन्त्राणां व्याख्याः लिखिताः। काश्यां गत्वा मम्मटेन विद्या अधीताः, काव्यप्रकाशाभिधानश्च काव्यशास्त्रविषयको ग्रन्थोऽपि लिखितः।

परं कथनमिदं भीमसेनस्य वर्तमानकालीनसमीक्षकाः न प्रामाणिकं मन्यन्ते। तत्र द्वे कारणे स्तः।

प्रथमं तावत् "काव्यशास्त्राध्यनविषये" वर्तते। काव्यशास्त्राध्ययनाथ न काशी तथा प्रसिद्धा सम्मता च बभूव, यथा काश्मीरप्रदेशः। अतः काव्यशास्त्रमध्येतुं मम्मटः काश्मीरं परित्यज्य वाराणसीं गत, इत्यसङ्गतमेव प्रतीयते।

द्वितीयं तावत् -

भीमसेनो ह्युव्वटं मम्मटस्याऽनुजं लिलेख। वाजसनेयिसंहिताभाष्यभूमिकायामुव्वटः स्वात्मानमानन्दपुरवास्तव्यं वज्रटसुतञ्च समसूचयत्। तेन लिखितम् - "संहिताभाष्यमसौ भोजनृपतेः शासनकाले चकार।[1] परं मम्मटस्तु जैय्यटसुतो भोजानन्तरं बभूव। कैयटस्त्वात्मानं ध्रुवं जैय्यटसुतमलिखत्।

भीमसेनेन काव्यप्रकाशसुधामागरटीका १७२३ तमे ख्रिष्टाब्दे लिखिता। समयश्चायं मम्मटात् षट्कशतवर्षानन्तरीणः। अतस्तस्य तद्वर्णनं भ्रान्तिपूर्णं सम्भवति।

काश्मीरपण्डितपरम्परानुसारं मम्मटो नैषधचरितमहाकाव्यरचयितृश्रीहर्षस्य मातुलोऽवर्तत। परमियमपि किम्वदन्ती प्रसिद्धिश्चाऽसङ्गतैव प्रतिभाति। यदि श्रीहर्षः काश्मीरजनपदवास्तव्योऽभविष्यत् कथमसौ स्वग्रन्थं प्रमाणयितुं काश्मीरमेवाऽगमिष्यत्। पुनश्च, श्रीहर्षो मम्मटोत्तरवर्ती निश्चीयते।

### ३. मम्मटस्य समयः

मम्मटस्य समयो नाऽतिविवादास्पदः। मम्मटेन काव्यप्रकाशेऽभिनवगुप्ताचार्यस्योल्लेखो विहितः। अभिनवगुप्तो १०१५ तमे ख्रिष्टाब्दे जीवित आसीत्। पद्मगुप्तकृतनवसाहसाङ्कचरित-काव्यस्योद्धरणानि (१०५५ ख्रिष्टाब्दे लिखितं काव्यम्) काव्यप्रकाशे वर्तन्ते। भोजस्य दानवीरत्वं मम्मटेन प्रशंसितम्।[2] भोजो १०५५ तमं ख्रिष्टाब्दं यावद् भुवं प्रशशास। अतो मम्मटो भोजानन्तरं ख्रिष्टस्यैकादशशताब्द्युत्तरार्द्धकालीनोऽवगन्तव्यः।

काव्यप्रकाशस्य प्राचीनतमा टीका वर्तते माणिक्यचन्द्रकृतसङ्केतटीका। इयं टीका माणिक्यचन्द्रेण ११६० तमे ख्रिष्टाब्दे लिखिता। हेमचन्द्रस्तु काव्यानुशासने (११४३ ई०) मम्मटाचार्यमुद्धृतवान्। रुय्यकोऽलङ्कारसर्वस्वे (११३५ ई०) मम्मटमतमखण्डयत्। मम्मटो ध्रुवं

---

१. आनन्दपुरवास्तव्यबज्रटाख्यस्य सूनुना।
मन्त्रभाष्यमिदं क्लृप्तं भोजे पृथिवीं प्रशासति।।

२. काव्यप्रकाशे दशमोल्लासेऽलङ्कारोदात्तस्योदाहरणम्

तत्पूर्वकालीनो निश्चेयः। अतो मम्मटस्य समयः १०५० - ११०० ख्रिष्टाब्दमध्यवर्ती निश्चेतुं शक्यते।

## ४. मम्मटस्य कृतयः

मम्मटस्य प्रसिद्धतमः प्रामाणिकश्च ग्रन्थो वर्तते - काव्यप्रकाशः। काव्यसमीक्षा-नियमावबोधायाऽस्मिन् ग्रन्थे द्विचत्वारिंशदुत्तरैकशतं (१४२) कारिकाः सन्ति। दशसूल्लासेषु विभक्तेऽस्मिन् ग्रन्थे कारिकाभिः सह वृत्तयोऽपि लेखकेन लिखिताः। काव्यसमीक्षाविषय-नियमान् स्पष्टीकर्तुमवबोधयितुञ्च मम्मटेन विभिन्नकाव्येभ्यः सङ्ग्रहीतान्युदाहरणान्यपि प्रस्तुतानि।

मम्मटनाम्ना ग्रन्थोऽन्योऽप्येकः प्रसिद्धः - शब्दव्यापारविचारः। निर्णयसागरप्रेससंस्थया ग्रन्थोऽसौ प्रकाशितः। अत्राऽभिधायाः लक्षणायाश्च विस्तरेण विवेचनमस्ति।

## ५. काव्यप्रकाशः

काव्यप्रकाशे सर्वेषां काव्याङ्गानां विवेचनमस्ति। नाट्यसम्बन्धिविषयानपहाय काव्यशास्त्रविषयाः सर्वे मम्मटेनाऽस्मिन् ग्रन्थे सन्निवेशिताः। ग्रन्थस्याऽस्य त्रयो भागा वर्तन्ते - कारिकाः वृत्तय उदाहरणानि च। कारिकासु प्रथमं मम्मटेन काव्यशास्त्रनियमाः प्रोक्ताः। तदनन्तरं वृत्तिषु कारिकाणां व्याख्या कृता। नियमानां स्पष्टीकरणाय ह्युदाहरणानि प्रस्तुतानि। प्राचीनकाव्येभ्य उदाहरणान्येतानि मम्मटेन सङ्गृह्य काव्यप्रकाशे स्थाने स्थाने सन्निवेशितानि। मम्मटस्यैताः कारिकाः सूत्राण्यप्युच्यन्ते। काव्यप्रकाशो दशसूल्लासेषु विभक्तः। उल्लासक्रमेणाऽस्य ग्रन्थस्य विषयवस्तु निम्नक्रमेण वर्ण्यते -

**(i) प्रथमोल्लासः -**

काव्यप्रकाशस्य प्रथमोल्लासे मम्मटो देवीं भारतीमभिवन्द्य काव्यप्रयोजनहेतुलक्षणानि प्रोवाच। तदनन्तरं काव्यस्य भेदत्रयस्य परिभाषा प्रोक्ता। काव्यं त्रिविधं भवति - उत्तमकाव्यं (ध्वनिः), मध्यमकाव्यम् (गुणीभूतव्यङ्ग्यम्) अधमञ्च काव्यम् (चित्रम्)।

**(ii) द्वितीयोल्लासः -**

द्वितीयोल्लासे शब्दशक्तीनां विवेचनमस्ति। शब्दस्त्रिधा भवति - वाचको लाक्षणिको व्यञ्जकश्च। अर्थोऽपि त्रिविधो भवति - वाच्यो लक्ष्यो व्यङ्ग्यश्च। शब्दशक्तयोऽपि त्रिविधाः सन्ति - अभिधा, लक्षणा व्यञ्जना च। केचन विद्वांसस्तात्पर्यां वृत्तिं तात्पर्यार्थञ्च प्रमाणयन्ति। मम्मटेन प्रतिपादितम् - लक्षणायाः मुख्यं प्रयोजनं वर्तते व्यङ्ग्यार्थस्य प्रतीतिः। तदर्थमेव लक्षणा प्रयुज्यते। व्यङ्ग्यार्थस्य प्रतीतिर्व्यञ्जनया भवति। व्यञ्जनावृत्तिश्च द्विविधा वर्तते - लक्षणामूला अभिधामूला च। अभिधामूला व्यञ्जनाऽपि द्विविधा भवति - शाब्दी आर्थी च।

(iii) **तृतीयोल्लासः -**

तृतीयोल्लासे लेखकेन आर्थीव्यञ्जनायाः (अभिव्यञ्जकतायाः) विशदं विवेचनं कृतम्।

(iv) **चतुर्थोल्लासः -**

उल्लासे चतुर्थे ध्वनिकाव्यभेदाः लेखकेन प्रोक्ताः। ध्वनिकाव्यं द्विविधं भवति - अविवक्षितवाच्यं विवक्षितान्यपरवाच्यञ्च। अविवक्षितवाच्यस्य द्वौ भेदौ भवतः - अर्थान्तरसङ्क्रमितमत्यन्ततिरस्कृतञ्च। विवक्षितान्यपरवाच्यध्वनिकाव्यस्य त्रयो भेदाः भवन्ति वस्तुध्वनिरलङ्कारध्वनी रसध्वनिश्च। अस्मिन्नुल्लासे रसस्वरूपनिष्पत्तिस्थायिभाव-विभावानुभावव्यभिचारिभावादीनां विशदं निरूपणमस्ति। रसध्वनावेव भावरसाभासभावाभास-भावशान्तिभावोदयभावसन्धिभावशबलतानां विवेचना विद्यते।

रसध्वनिं निरूप्य मम्मटेन वस्तुध्वनिरलङ्कारध्वनिश्च निरूपितः। अथ च तत्र ध्वने-रन्ये त्रयो भेदाः प्रोक्ताः - शब्दशक्त्युद्भवध्वनिरर्थशक्त्युद्भवध्वनिरुभयशक्त्युद्भवध्वनिश्च। तेषामपि ह्यन्येऽवान्तरभेदाः सन्ति।

(v) **पञ्चमोल्लासः -**

उल्लासे पञ्चमे प्रथमं तावद् गुणीभूतव्यङ्ग्यकाव्यस्याऽष्टौ भेदाः प्रकीर्तिताः। तदनन्तरं ग्रन्थकृता व्यञ्जनावृत्तेरनिवार्यत्वं प्रतिपादितम्। व्यङ्ग्यार्थप्रतीतिर्व्यञ्जनयैव सम्भवति। (प्रतीयमानार्थो) व्यङ्ग्यार्थस्त्रिविधो भवति - वस्तुरूपोऽलङ्काररूपो रसरूपश्च। वस्त्वलकारादर्यौ वाच्यावपि सम्भवतः, परन्तु रसरूपोऽर्थः सर्वदा प्रतीयमान एव भवति। अस्मिन् प्रकरणे मम्मटो व्यञ्जनाविरोधिनां युक्तीः प्रमाणानि च समीक्ष्य खण्डयित्वा च ध्वनेः प्रतिष्ठाञ्चकार।

(vi) **षष्ठोल्लासः -**

स्वल्पकाये षष्ठोल्लासे चित्रकाव्यस्य (अधमकाव्यस्य) विवेचनं विद्यते। चित्रकाव्यस्य द्वौ भेदौ भवतः - शब्दचित्रमर्थचित्रञ्च।

(vii) **सप्तमोल्लासः -**

उल्लासे सप्तमे दोषनिरूपणं वर्तते। मुख्यार्थहतिर्दोषो भवति। रस एव मुख्योऽर्थः। रसस्य शब्दार्थाश्रयत्वात् तावपि दुष्टौ सम्भवतः। दोषाश्चापि द्विविधाः भवन्ति - नित्या अनित्याश्च।

दोषाः पञ्चसु वर्गेषु विभक्ताः - पददोषाः, पदांशदोषाः, वाक्यदोषा, अर्थदोषा रसदोषाश्च। दोषाणां निरूपणं कृत्वा मम्मटेन प्रोक्तम् -

केचन दोषाः कुत्रचिद् दोषा भवन्ति कुत्रचिच्च तेऽदोषत्वमावहन्ति। तेऽनित्यदोषाः प्रोच्यन्ते। दोषाणां निराकरणोपायोऽपि मम्मटेन वर्णितः। रसदोषान्निरूप्याऽसौ तेषां

परिहारोपायान् कथितवान्। ध्वनिकारमतं समर्थयता मम्मटेन प्रोक्तम् - "अनौचित्यमेव रसस्य महत्तमो दोषः।[१]

(viii) **अष्टमोल्लासः** -

उल्लासेऽष्टमे गुणानां विवेचनमस्ति। प्रथमं तावन्मम्मटो गुणालङ्कारयोः परिभाषामुक्त्वा तयोर्भेदं जगाद। मम्मटेन प्रोक्तम् -

गुणास्त्रय एव भवन्ति - माधुर्यमोजः प्रसादश्च। प्राचीनाचार्यैर्विशेषतो वामनेन दश शब्दगुणाः दश चार्थगुणाः प्रोक्ताः। मम्मटेन वामनप्रोक्ताः दशशब्दगुणास्त्रिषु गुणेषु माधुर्यौजःप्रसादेषु ह्यन्तर्भाविताः। वामनप्रोक्तदशार्थगुणविषये तेन प्रोक्तम् -

"ते वस्तुतो गुणा एव न वर्तन्ते।"

तदनन्तरमस्मिन्नुल्लासे गुणाभिव्यञ्जकानां वर्णसमासरचनानां निरूपणं विद्यते।

(ix) **नवमोल्लासः** -

नवमोल्लासे शब्दालङ्काराणां विवेचनं विद्यते। सोदाहरणञ्च ते व्याख्याताः। वक्रोक्ति-र्द्विविधा भवति - श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च। अनुप्रासस्याऽनेके भेदाः भवन्ति। उपनागरिकापरुषाकोमलावृत्तयो वैदर्भ्यादिरीतयश्चाऽनुप्रासान्तर्गता एव भवन्ति। तदनन्तरं यमकश्लेषचित्रालङ्काराणां विवेचनं विधाय मम्मटः पुनरुक्तवदाभासालङ्कारं न्यरूपयत्।

(x) **दशमोल्लासः** -

अस्मिन्नुल्लासेऽर्थालङ्काराणां सोदाहरणं विवेचनं मम्मटेन कृतम्। मम्मटस्याऽय-मलङ्कारविवेकः प्रौढो व्यावहारिकश्च विद्यते। अत्रैकषष्ट्यलङ्काराणां (६१) स्वरूपविवेचनं वर्तते। अलङ्कारभेदानामपि व्याख्या वर्तते। उपमाभेदाः मुख्यतः व्याकरणमाश्रित्य प्रतिपादिताः। ते च द्वाविंशतिसंख्यकाः वर्तन्ते। एकषष्ट्यलङ्काराणां विवेचनं कृत्वा सङ्करः संसृष्टिश्च प्रदर्शितः। अस्मिन्नुल्लासे ग्रन्थस्याऽन्तेऽलङ्कारदोषाणां निरूपणं वर्तते। अलङ्कारदोष-निरूपणप्रसङ्गे पी०वी० काणे महोदयेन मम्मटस्याऽवधानराहित्यं निर्दिष्टम्। अलङ्कारदोषाणा-मन्तर्भावः सप्तमोल्लासे निरूपितेषु दोषेष्वेव सम्भवति।[२]

काव्यप्रकाशस्य दशोल्लासनिर्दिष्टविषयवस्तुविवेचनेन सिद्धमिदं यदस्मिन् ग्रन्थे सर्वेषां काव्याङ्गानां निरूपणं समीक्षा च वर्तते। केवलं नाट्यसम्बन्धिनो विषयाः न सन्ति।

काव्यप्रकाशस्य त्रयो भागाः सन्ति - कारिकाः वृत्तय उदाहरणानि च। कारिकाः वृत्तयश्च मम्मटविरचिताः सन्ति, परमुदाहरणानां सङ्ग्रहस्तेन प्राचीनकाव्येभ्यः कृतः। काव्यशास्त्रसिद्धान्तान्नुदाहरणानि च प्रस्तुवन् मम्मटोऽनेकान् प्राचीनाचार्यान् कवींस्तत्कृत-कृतयश्चोल्लिलेख। तत्र कानिचिन्नामान्यधो लिख्यन्ते -

---

१. काव्यप्रकाश - सप्तमोल्लासः - रसदोषप्रकरणम्

२. काणे, पी०वी०: संस्कृत काव्यशास्त्र का इतिहास पृ० ३३३

भरतमहाभाष्यकारभामहध्वनिकारभट्टलोल्लटभट्टनायकशङ्कुकाभिनवगुप्तरुद्रटोद्भट-कालिदासकामशास्त्रबाणमयूरश्रीहर्षभवभूतिकुट्टनीमतामरुशतककर्पूरमञ्जरीनागानन्दरत्नावली-विद्धसालभञ्जिकारामायणबालरामायणभासवेणीसंहारचण्डीशतकनवसाहसाङ्कचरितभट्टिकाव्य-भर्तृहरिशतकत्रयशिशुपालवधबिज्जकाहयग्रीवबधहरविजयविष्णुपुराणादय: ।

## ६. काव्यप्रकाशस्य कर्तृत्वम्

काव्यप्रकाशस्य कर्ता मम्मट एव प्रसिद्धः । परं प्राचीनविवरणेषु माणिक्यचन्द्रकृत-सङ्केतटीकायाञ्च कतिपयैर्विवरणैरनुमीयते यदल्लटसूरिनामको मनीषी कश्चिदपि काव्यप्रकाशस्य लेखने सहयोगी बभूव। काव्यप्रकाशस्य लेखनेऽल्लटस्य सहायोगं सर्वे विद्वांस: समीक्षकाश्चाऽङ्गीकुर्वन्ति । काव्यप्रकाशसमाप्तौ निम्नश्लोको वर्तते -

**इत्येष मार्गो विदुषां विभिन्नोऽभिन्नरूप: प्रतिभासते यत् ।**
**न तद्विचित्रं यदमुत्र सम्यग् विनिर्मिता संघटनैव हेतु: ।।**

श्लोकस्याऽस्य व्याख्यां कुर्वता काव्यप्रकाशस्य प्राचीनतमटीकाकारेण माणिक्यचन्द्रेण सूचितम् -

अथ चाऽयं ग्रन्थो द्वाम्यां लेखकाभ्यां लिखित:, परं संघटनावशादखण्ड एव प्रतिभाति। तेन लिखितम् -

**"अथ चाऽयं ग्रन्थोऽन्येनारब्धो अपरेण च समापित इति द्विखण्डोऽपि संघटना-वशादखण्डायते ।"**

एवमेव काव्यप्रकाशस्याऽन्यो व्याख्याकारो रुचकोऽलिखत् -

**"एतेन महामतीनां प्रसरणहेतुरेष ग्रन्थो ग्रन्थकृताऽनेन कथमप्यसमाप्तत्वादपरेण पूरितावशेषत्वाद् द्विखण्डोऽपि.............. ।**

सोमेश्वराभिधानेन टीकाकारेणाऽपि काव्यप्रकाशस्य लेखकद्वयकर्तृकत्वं सूचितम् -

**अत्र च सुधियां विकासहेतुग्रन्थोऽयं कथञ्चिदपूर्णत्वादन्येन पूरित इति द्विखण्डोऽपि..... ।**

टीकाकारैरेतै: काव्यप्रकाशस्य कर्तृकद्वयं तु सूचितं परं केन लेखकेन कियानंशो लिखित इति न सङ्केतितम्। प्रश्नमेनं तु काव्यप्रकाशनिदर्शनटीकाया: लेखको राजानकानन्द (१६८५ ई०) उदतरत्। तेन सूचितम् -

मम्मटेन काव्यप्रकाशग्रन्थस्य रचना दशमोल्लासे परिकरालङ्कारपर्यन्तं कृता। शेषोंऽशोऽलकसूरिणा लिखित: । एवञ्च काव्यप्रकाशो लेखकद्वयकृतो वर्तते। राजानकानन्देन लिखितम् -

कृत: श्रीमम्मटाचार्यवर्यै: परिकरावधि: ।
प्रबन्ध: पूरित: शेषो विधायालकसूरिणा ।।

**अन्येनाऽप्युक्तं काव्यप्रकाशदशकोऽपि निबन्धकृद्भ्यां द्वाभ्यां कृतोऽपि कृतिनां रसत्वलाभ: ।**

टीकाकारो रुचक: काव्यप्रकाशस्य प्रथमोल्लासस्य टीकाया: समाप्तावलिखत् -

**इति श्रीराजानकामल्लमम्मटरुचकविरचिते निजग्रन्थे काव्यप्रकाशसङ्केते प्रथम उल्लास: ।**

काव्यप्रकाशसम्बन्धेऽन्यलेखकलेखैरपि सङ्केतोऽयमुपलभ्यते, यदलकेनाऽलकसूरिणा वा न केवलं दशमोल्लासे, अपित्वन्येष्वप्युल्लासेषु मम्मटस्य साहाय्यं कृतम् । अमरुकशतकटीकाकारोऽर्जुनवर्मदेवो (१२११-१२१६ ई०)'' भवतु विदितम्'' इति श्लोकस्य टीकायामलिखत् -

**''यथोदाहृतं दोषनिर्णये मम्मटालकाभ्यां प्रसादे वर्तस्व.........'' ।**

**''लीलातामरसाहतो०.........'' श्लोकस्य टीकायामसौ लिलेख -**

**''अत्र केचिद् वायुपदेन जुगुप्साश्लीलर्भिति दोषमाचक्षते..........तदा वाग्देवतादेश इति व्यवसितव्य एवाऽसौ । किन्तु ह्लादैकमयीवरलब्धप्रसादौ काव्यप्रकाशकारौ प्रायेण दृष्टदोषौ............ ।**

अनेनाऽनुगीयते यदलकसूरिर्वा अल्लटो वा न केवलं दशमोल्लासे काव्यप्रकाशलेखने मम्मटस्य सहायो बभूव, अपितु सप्तमोल्लासेऽप्यसौ साहाय्यमकरोत् ।

एतैरुद्धरणैरिदं तु निश्चितमेव, यत् काव्यप्रकाशो न केवलं मम्मटस्य कृतिरपितु अलको वाऽल्लटो वाऽपि तस्य सहायकोऽवर्तत । परन्तु तयो: कार्यसीमा न यथार्थरूपेण ध्रुवं निर्धारयितुं शक्या ।

काव्यप्रकाशस्य द्वितीयलेखकस्य नामाऽपि संशयपदवीमारूढम् । अलकनामाऽसावासीदल्लटनामा वा बभूवाऽसौ । प्राचीनसाहित्येऽलकोऽल्लटश्चेति द्वे नामनी समुपलभ्येते । परं काश्मीरपरम्परामनुसृत्य अल्लट इत्यभिधानमेव सत्यं प्रतिभाति । कर्नल जैकबमहोदयेन अल्लट इत्यभिधानं समर्थितम् । परं प्राचीनहस्तलिखितप्रतिषु अलक इत्यभिधानमेव बाहुल्येनोपलभ्यते । पी०वी० काणे महादयेनाऽप्यस्यैव मतस्य समर्थनं कृतम् ।[1]

## ७. कारिकाकारो वृत्तिकारश्च

काव्यप्रकाशस्य कारिकाणां वृत्तीनाञ्च कर्तृत्वसम्बन्धेऽपि विवाद: समुपस्थितो बभूव । अयं सिद्धान्तस्तु सर्वमान्यो बभूव, यद् वृत्तीनां रचयिता मम्मट एवाऽवर्तत । परन्तु

१. पी०वी० काणे : संस्कृत काव्यशास्त्र का इतिहास पृ० ३३९-३४०

कारिकाकर्तृत्वमुपलक्ष्य कैश्चित् समीक्षकैः सन्देहः प्रकटितः । केषाञ्चित् समीक्षकाणां वर्तते मतमिदम् -

काव्यप्रकाशस्य कारिकाः भरतमुनिविरचिताः वर्तन्ते, मम्मटस्ताः व्याख्यातुं वृत्तीर्व्यरचयत्। विवादोऽयं प्रथमं बङ्गप्रदेशे समुत्पन्नः । युक्तयश्चाऽधोलिखिताः प्रस्तूयन्ते -

(i) साहित्यकौमुदीकारो विद्याभूषणः काव्यप्रकाशस्य कारिकाः भरतमुनिप्रोक्ताः जगाद । स्वरचितग्रन्थेऽस्य तथ्यस्योल्लेखो वारद्वयं तेन विहितः -

**(क) मम्मटाद्युक्तिमाश्रित्य मितां साहित्यकौमुदीम् ।**

**वृत्तिं भरतसूत्राणां विद्याभूषणो व्यधात् ।।**

**(ख) सूत्राणां भरतमुनीशवर्णितानां वृत्तीनां मितवपुषां कृतौ ममाऽस्याम् ।**

(ii) काव्यप्रकाशस्याऽऽदर्शटीकाकारो महेश्वरः काव्यप्रकाशस्य कारिकाः भरतमुनिरचिताः प्राह ।

(iii) काव्यप्रकाशं कुर्वन् प्रारम्भे ग्रन्थकार एवमलिखत् - **"ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत् परामृशति ।"**

अनेन प्रतीयते, ग्रन्थकारो मम्मटो यां कारिकामग्रे वक्तुमभिलषति, तस्याः रचयिता तद्भिन्न एव । अस्मादेव हेतोः "परामृशति" पदे प्रथमपुरुषस्य प्रयोगो वर्तते नोत्तमपुरुषस्य । यदि कारिकाकारो वृत्तिकारश्चैक एव मनीषी अभविष्यत्, तदत्रोत्तमपुरुषस्य प्रयोगोऽवर्तिष्यत । अतो वृत्तिकारः कारिकाकाराद् भिन्न एव ।

(iv) दशमोल्लासे रूपकालङ्कारविवेचने कारिकेयं वर्तते -

**"समस्तवस्तुविषयं श्रौता आरोपिता यदा" ।**

अथ च कारिकाया अस्या वृत्तौ लिखितमस्ति -

**"बहुवचनमविवक्षितम्" ।**

यदि च कारिकाकारो वृत्तिकारादभिन्नो भवेत् कारिकायां बहुवचनप्रयोगस्य वृत्तौ च **"बहुवचनमविवक्षितम्"** इति द्रविडप्राणायामसम्पादनस्य काऽऽवश्यकता वर्तते । कारिकायामेवाऽसौ स्वमन्तव्यानुसारं वचनप्रयोगाधिकारं भजते । अतः कारिकाकारो वृत्तिकाराद् भिन्न एवेति मन्तव्यम् । कारिकाणां रचयिता भरतो मन्तव्यः ।

परं कारिकाकारवृत्तिकारयोर्भिन्नत्वं प्रतिपादयितुं भरतमुनिञ्च कारिकाकारं प्रमाणयितुं प्रस्तुताः युक्तयो न तथा सामर्थ्यशालिन्यः । काव्यप्रकाशस्य कारिकाः सर्वतोभावेन न भरतकृताः प्रतिपादयितुं शक्याः । सत्यमिदं यत् काव्यप्रकाशे रसविवेचनं कुर्वता लेखकेन

भरतोऽनुसृतो भरतस्य च त्रीणि सूत्राणि काव्यप्रकाशे वर्तन्ते। तथाऽप्यनेन काव्यप्रकाशकारिका: न भरतकृता: सिद्ध्यन्ति। रसविषयककारिकात्रयव्यतिरिक्ता न काऽपि कारिका भरतकृता काव्यप्रकाशे वर्तते। न चाऽपि नाट्यशास्त्रव्यतिरिक्ता काऽपि कृति: भरतस्य प्रसिद्धा। अत: काव्यप्रकाशकारिका: भरतकृता: वर्तन्त इति कथमपि न वक्तुं शक्यते।

काव्यप्रकाशस्य चतुर्थ उल्लासे प्रथमं तावल्लेखकेन "**कारणान्यथ कार्याणि**" इति कारिकाद्वयं लिखित्वा तदनन्तरं वृत्तौ लिखितम् -

"**तदुक्तं भरतेन विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरिति।**"

यदि च काव्यप्रकाशकारिका: भरतमुनिकृता इति कश्चिन्मन्यते, तत: प्रथमं तावत् कारिकाद्वयं विरच्य तदनन्तरं "**तदुक्तं भरतेन**" इत्युद्धरणस्य अथवा भरतसूत्रोद्धरणस्य न काऽप्यावश्यकता लक्ष्यते। अत: कारिकालेखको मम्मट इत्येवाऽवगन्तव्य:। असौ प्रथमं कारिका: विरच्य, तदनन्तरं तासामभिप्रायं स्पष्टं कर्तुं वृत्ती: विरचितवान्।

**ग्रन्थकृत् परामृशतीति** प्रथमपुरुषस्याऽऽश्रयेणाऽपि कारिकाकारवृत्तिकारयोर्भिन्नत्व-प्रतिपादनं न तर्कसङ्गतम्। शास्त्रीयग्रन्थरचनासु परम्परेयं प्रायशो दृग्गोचरीभवति, यद् ग्रन्थकार आत्मानं प्रथमपुरुषेण कथयति। अनेन लेखकस्य निरभिमानिता ह्यहंकारशून्यता च परिलक्ष्यते। साहित्यदर्पणकारेण विश्वनाथेन "**वाग्देवताया: साम्मुख्यमाधत्त**" इति लिखित्वा नागेशभट्टेन च "**नागेश: कुरुते सुधी**" रिति लिखित्वा स्वनिरभिमानिता प्रकटिता।

स्वात्मानं सूचयितुं वक्तृभि: प्रथमपुरुषप्रयोगा: काव्येषु प्रायशो दृश्यन्ते। अत: **समुचितेष्टदेवतां ग्रन्थकृत् परामृशतीति** कथनमाश्रित्य कारिकाकारो मम्मटादन्य एव कश्चिदिति प्रतिपादनं न तर्कसङ्गतम्।

"**समस्तवस्तुविषयं श्रौता आरोपिता यदा०**" इति बहुवचनमाश्रित्याऽपि कारिकाकर्तृत्वं मम्मटाद् भिन्नत्वेन न प्रतिपादयितुं शक्यम्। कारिकाया अस्या: वृत्तौ "**बहुतवचनमविवक्षितम्**" इति लेखो लेखकस्य विशिष्टं प्रयोजनमभिव्यनक्ति। कारिकायामत्र बहुवचनप्रयोगस्य हेतुरयमेव यत् समस्तवस्तुविषये ह्यनेका आरोप्यमाणा: भवेयु:। वृत्त्याश्च - "**आरोपविषया इव आरोप्यमाणा यद०**" इत्यनेन स्पष्टमेतत्। अथ च बृत्तौ "**बहुवचनमविवक्षितम्**" इति वचनस्याभिप्राय: - आरोप्यमाणविषयबहुत्वेऽपि समस्तवस्तुविषयकरूपकालङ्कारो भवति। अत एतत्प्रमाणमपि कारिकाकारवृत्तिकारयो: पृथक्त्वं न प्रमाणयति।

रूपकालङ्कारविषये कारिकेयं निम्नलिखिता वर्तते -

"**साङ्गमेतन्निरङ्गं तु शुद्धं माला तु पूर्ववत्**"

अत्र रूपकालङ्कारस्यैकस्यान्यस्य भेदस्य सङ्केतो विद्यते। अनेन प्रतीयते - मालारूपकमपि मालोपमावद् भवति। परन्तु तथ्यमिदं कारिकायां नोक्तं वृत्तावेव प्रदर्शितम् -

"**मालोपमायामिवैकस्मिन् बहव आरोपिता:।**"

यदि कारिकाकारवृत्तिकारौ भिन्नावेवाभविष्यतां, तथ्यमिदं द्वयोः स्थानयोः कथितमभविष्यत्। अतः कारिकाकारो वृत्तिकारादभिन्नो ध्रुवमस्ति, स च मम्मटाचार्यः।

मम्मटकृतकाव्यप्रकाशे तथ्यमिदं न कुत्रचिदपि लक्ष्यते, यदसौ केनचिदन्येन विरचितानां कारिकाणां व्याख्यानाय वृत्तिरचनाञ्चकार। कारिकासु केनचिदन्येन विदुषा विरचितासु सतीषु मम्मटे च केवलं दृत्तिकर्तरि सति प्राचीनपरम्परानुसारं कारिकाणां वृत्तीनाञ्चाऽऽरम्भे पृथक् पृथग् मङ्गलाचरणं भवितव्यम्। परन्तु कारिकाणां वृत्तीनाञ्चाऽऽरम्भे ह्येकस्यैव मङ्गलाचरणस्य सद्भावाद् द्वयोरपि भागयोरेककर्तृकत्वं कल्पनीयम्।

काव्यप्रकाशस्य प्राचीनटीकाकारैर्माणिक्यचन्द्रानन्तभट्टनरहरिसरस्वतीसोमेन्द्रादिभिः कुत्रचिदपि न कारिकाकारवृत्तिकारयोर्भिन्नत्वं प्रकटितम्। अथ चाऽनेकैः प्राचीनटीकाकारैः कारिकाकारो वृत्तिकारश्चैक एव मनीषी प्रतिपाद्तिः, स च वर्तते मम्मटः। हेमचन्द्रः काव्यानुशासने "काव्यं यशसेऽर्थकृत" इत्यत्र वृत्तिसहितां कारिकां मम्मटकृतां मेने। मम्मटमनु पञ्चाशद्वर्षमात्रव्यतीते समये हेमचन्द्रो बभूव। अतस्तस्य कथनं प्रामाणिकमेवाऽवगन्तव्यम्। प्रतापरुद्रयशोभूषणकर्ता विद्यानाथश्चित्रमीमांसाकारोऽप्पयदीक्षितो रसशङ्गाधरकृत् पण्डितराजो जगन्नाथः, सर्वेऽप्येते काव्यप्रकाशस्य कारिकाणां वृत्तीनाञ्च रचयितारमभिन्नत्वेन मम्मटमेव जगदुः।

काव्यप्रकाशस्य प्रकाशतिलकटीकायाः लेखको जयरामः प्रथमं तेषां विदुषां पक्षं प्रास्तौद् ये कारिकाकारं भरतं वृत्तीनाञ्च लेखकं मम्मटं प्रतिपादयन्ति। तदनन्तरमसौ पृथक्त्ववादिनां युक्तीनां खण्डनं विधाय कारिकाकारं मम्मटमेव प्रत्यापादयत्। तस्य युक्तीनां सारांशो ह्युपरिवर्णितमेव विज्ञेयः।

एवञ्च कारिकाकारवृत्तिकारयोरभिन्नत्वं निर्विवादरूपेण सिद्धमवगन्तव्यम्। द्वयोर्भागयोः रचनाकारो मम्मट एव ज्ञातव्यः।

## ८. काव्यप्रकाशस्य प्राचीनटीकाः

काव्यप्रकाशग्रन्थं समीक्षमाणैर्विद्वद्भिरस्य ग्रन्थस्य प्राचीनटीकाकाराणां परिचयोऽप्यवगन्तव्यः। टीकाभिर्विना काव्यप्रकाशरहस्योद्बोधो न सम्भवति। काव्यशास्त्रवित्सु काव्यप्रकाशग्रन्थोऽतितरां लोकप्रियो बभूव, तस्य टीकाश्चाधिकतमसंख्यायां विरचिताः। काव्यप्रकाशटीकालेखनं वैदुष्यमानदण्डः कल्प्यते। न केवलं टीकाकारा एव टीका अलिखन् स्वातन्त्र्येण काव्यशास्त्रग्रन्थप्रणेतारो मनीषिणोऽप्यत्र समाकृष्टाः बभूवुः। ग्रन्थोऽयमपि प्रौढो दुरूहश्च विद्वत्सु प्रसिद्धः। काव्यप्रकाशटीकाविषयकः श्लोकोऽयं लोकेषु प्रसिद्धः -

**काव्यप्रकाशस्य कृताः गृहे गृहे।**
**टीकास्तथाऽप्येष तथैव दुर्गमः।।**

निम्नलिखिताः प्राचीनटीकाः काव्यप्रकाशस्य प्रसिद्धाः -

**(i) रुय्यककृता (रुचककृता) सङ्केतटीका -**

टीकाया अस्या रचना द्वादशशताब्दिख्रिष्टाब्द (१२००) मध्यसमये (११७५ ई०) बभूव।

**(ii) माणिक्यचन्द्रकृतसङ्केतटीका -**

काव्यप्रकाशस्य टीकेयं प्रसिद्धतमा वर्तते। गुर्जरप्रदेशवास्तव्यो माणिक्यचन्द्रो जैनमतावलम्बी बभूव। इयं टीका तेन १२१६ वैक्रमाब्दे (११६० ई०) लिखिता।[1]

**(iii) चित्तानुरञ्जिनी टीका -**

श्रीनरहरिसरस्वतीतीर्थमहोदयेन काव्यप्रकाशस्य चित्तानुरञ्जिनी टीका १२४२ तमे ख्रिष्टाब्दे लिखिता।

**(iv) दीपिका टीका -**

गुर्जरनृपतिपुरोहितशार्ङ्गदेवसुतजयन्तभट्टेनेयं टीका १२९४ तमे ख्रिष्टाब्दे विरचिता।

**(v) काव्यादर्शटीका सङ्केतटीका वा -**

त्रयोदशशताब्द्युत्तरार्धसमये सोमेश्वराभिधानेन विदुषा टीकाया अस्याः लेखनं कृतम्।

**(vi) वाचस्पति टीका -**

मिथिलाप्रदेशनिवासिना वाचस्पतिमहोदयेन टीकेयं त्रयोदशशताब्द्युत्तरार्धसमये लिखिता।

**(vii) दीपिकाटीका -**

दीपिकाभिधाना टीकेयं त्रयोदशशताब्दिजातेन चण्डीदासनाम्ना विदुषा विरचिता। चण्डीदासोऽयं कविराजविश्वनाथपितामहस्याऽनुजोऽवर्तत।

**(viii) काव्यप्रदीपटीका -**

गोविन्दठक्करकृता काव्यप्रकाशटीका काव्यप्रदीपाभिधाना विद्वत्स्वतितरां प्रसिद्धा। समयोऽस्य पञ्चदशशताब्द्युत्तरार्धवर्ती वर्तते। वैदुष्यपूर्णां टीकामिमां व्याख्यातुमपि विद्वांसष्टीका अलिखन्। यथा वैद्यनाथेन प्रभाटीका, नागोजिभट्टेनोद्योतटीका च लिखिता।

**(ix) काव्यप्रकाशदर्पणटीका -**

साहित्यदर्पणकारो विश्वनाथकविराजोऽपि **काव्यप्रकाशदर्पणाभिधां** टीकां ख्रिष्टस्य चतुर्दशशताब्यामलिखत्।

---

१. रसवक्त्रग्रहाधीशवत्सरे (१२१६ विक्रमाब्दे) मासि माधवे मया काव्यप्रकाशस्य सङ्केतोऽयं समर्पितः।

(x) सुधासागरटीका सुबोधिनीटीका वा –

पण्डितभीमसेनविरचितायाष्टीकाया अस्या लेखनकालो वर्तते १७२३ ख्रिष्टाब्दः।

(xi) सुबोधिनी टीका –

वामनाचार्यझलकीकरकृता सुबोधिनीटीकेयमतिशयेन विद्वत्सु समादरणीया लोकसम्मता च वर्तते। लेखकेनाऽत्र काव्यप्रकाशरहस्यमतिसरलमार्गेण स्पष्टीकृतम्। अन्येषां टीकाकाराणां विदुषाञ्च मतान्यप्यत्र झलकीकरमहोदयेन प्रस्तुतानि। टीकेयं १७४७ ख्रिष्टाब्दे विरचिताऽऽसीत्।

वामनाचार्येण स्वटीकायां निम्नटीकाकाराः सङ्केतिताः –

(१) परमानन्दभट्टाचार्यकृतविस्तारिकाटीका
(२) आनन्दकविकृतनिदर्शनाटीका
(३) श्रीवत्सलाञ्छनकृतसारबोधिनीटीका
(४) महेश्वरकृतादर्शटीका
(५) कमलाकरभट्टकृतविस्तृताटीका
(६) नरसिंहकृतनरसिंहमनीषाटीका
(७) नागेशभट्टकृतलघ्वीटीका
(८) महेशचन्द्ररचिततात्पर्यविवृतिटीका
(९) वैद्यनाथकृतोदाहरणचन्द्रिकाटीका
(१०) राघवकृतावचूरिटीका
(११) श्रीधरकृतटीका
(१२) देवनाथकृतटीका
(१३) भास्करकृतसाहित्यदीपिकाटीका
(१४) सुबुद्धिमिश्रकृतटीका
(१५) पद्मनाभकृतटीका
(१६) मिथिलेश्वरमन्त्रि (अच्युत) कृतटीका
(१७) अच्युतपुत्ररत्नपाणिकृतटीका
(१८) भट्टाचार्यकृतकाव्यदर्पणटीका
(१९) भट्टाचार्यसुतरविकृतमधुमतीटीका
(२०) तत्त्वबोधिनीटीका (टीकाकारोऽविदितः)
(२१) कौमुदीटीका (टीकाकारोऽविदितः)

(२२) आलोकटीका (टीकाकारोऽविदितः)
(२३) जयरामकृतप्रकाशतिलकटीका
(२४) यशोधरकृतटीका
(२५) विद्यासागरकृतटीका
(२६) मुरारिमिश्रकृतटीका
(२७) मणिसारकृतटीका
(२८) पक्षधरकृतटीका
(२९) सूरिकृतरहस्यप्रकाशटीका
(३०) भास्कररचितरहस्यनिबन्धटीका
(३१) रामकृष्णरचितकाव्यप्रकाशभावार्थटीका

वर्तमानसमयेऽपि काव्यप्रकाशस्य बह्व्यष्टीका अंग्रेजी हिन्दीसंस्कृतभाषास्वन्यभाषासु च सम्मान्यविद्वद्भिर्लिखिताः वर्तन्ते।

चतुर्विंशोऽध्यायः

# रुय्यकः

## १. रुय्यकस्य महत्त्वम्

अलङ्कारसर्वस्वकृद् रुय्यकः काव्यशास्त्रस्येतिहासेऽलङ्कारनिरूपणप्रसङ्गे मेरुदण्ड इव गण्यते। अलङ्कारसर्वस्वेऽसौ पूर्ववर्तिनामाचार्याणामलङ्कारान्वेषणविषयकमन्तव्यानां समन्वयञ्चकार। आभरतभामहादिकं मम्मटपर्यन्तमसौ पूर्ववर्तिनां काव्यशास्त्राचार्याणां कृतिष्वलङ्कारनिरूपणदोषाननुभूय तेषां परिहारमकरोत्। रुय्यकं यावदाचार्यैः ११८ अलङ्कारा उद्भाविता आसन्। रुय्यकेन तत्र पञ्चसप्तत्यलङ्काराः स्वीकृताः सप्त च नवालङ्कारा उद्भाविताः। एवं रुय्यको द्व्यशीत्यलङ्कारान् न्यरूपयत्।

उत्तरवर्तिनामलङ्कारशास्त्रिणामलङ्कारनिरूपणे रुय्यकः प्रेरणास्रोतो वर्तते। रुय्यकानन्तरं सर्वैरेवाऽऽचार्यैर्विश्वनाथजगन्नाथविश्वेश्वरादिभिरलङ्कारविवेचनेऽलङ्कारसर्वस्वग्रन्थात् प्रेरणोपलब्धा मार्गनिर्देशनमपि चाऽधिगतम्। एवमलङ्कारविषयकचिन्तने विवेचने च रुय्यको मेरुदण्ड इवाऽवस्थितो लक्ष्यते। रुय्यकस्याऽनुशीलनं विना नाऽलङ्काराणामध्ययनं पूर्णं भवति।

## २. रुय्यकस्य जीवनवृत्तं समयः स्थानञ्च

रुय्यकेन स्वकृतौ निजजीवनपरिचयो न लिखितः। परमन्येभ्यः प्राचीनग्रन्थेभ्यो रुय्यकस्य जीवनवृत्तविषयिका स्वल्पसामग्री समुपलभ्यते। रुय्यक इत्यभिधानेन अन्योपलब्ध-सामग्र्या चाऽसौ काश्मीरवास्तव्यो ह्यनुमीयते। काव्यप्रकाशसङ्केतटीकाकारोऽप्यसाववर्तत। अतोऽयं ध्रुवं मम्मटो (११०० ई०) त्तरवर्ती बभूव। तेन व्यक्तिविवेक (१०५० ई०) ग्रन्थस्याऽपि टीका लिखिता। अलङ्कारसर्वस्वग्रन्थेऽसौ विक्रमाङ्कदेवचरितकाव्यस्य (१०८५ ई०) कानिचित् पद्यान्युदाहरत्। अतोऽस्य समयो महिमभट्टबिह्लणमम्मटाद्याचार्योत्तरवर्ती मन्तव्यः।

श्रीकण्ठचरितकाव्यकारेण मङ्खकेन रुय्यकः स्वोपाध्यायो वर्णितः। अथ च श्रीकण्ठचरितकाव्यस्य केचन श्लोका अलङ्कारसर्वस्वग्रन्थे रुय्यकेनोदाहरणरूपेणोपन्यस्ताः। अनेन रुय्यकमङ्खकयोः समकालीनत्वमवगम्यते। मङ्खकः काश्मीरनरपतिजयसिंहस्य सन्धि-विग्रहिकपदं व्यभूषयत्। जयसिंहस्य राज्यकालः ११२८-११४० ख्रिष्टाब्दोऽवर्तत। अतो रुय्यकस्य तच्छिष्यस्य मङ्खकस्य च समयो द्वादशशताब्दीमध्यवर्ती गणयितुं शक्यः।

रुय्यको रुचकनाम्नाऽपि प्रसिद्ध आसीत्। रुचक इति पदं संस्कृतभाषाविशिष्टं रुय्यक इति पदञ्च स्थानीयप्राकृतभाषाविशिष्टमस्ति। सहृदयलीलाग्रन्थेऽस्य काव्यशास्त्रकारस्य द्वे एवाऽभिधाने रुय्यकरुचकाविति लभ्येते। परमुत्तरवर्तिषु ग्रन्थेषु रुय्यक इति नामैवाधिकं प्रचलितमभूत्।

सहृदयलीलाग्रन्थो विज्ञापयति यद् रुय्यकस्य जनकस्तिलकोऽवर्तत। तिलकस्तस्य गुरुरप्यवर्तत। रुय्यककृतकाव्यप्रकाशसङ्केतटीकायाः मङ्गलाचरणश्लोकाज्ज्ञायते यदस्य पितैवोपाध्यायो बभूव। तिलकेनोद्भटकृतालङ्कारसारसङ्ग्रहग्रन्थस्य टीका विवरणनाम्नी लिखिता। जयरथेन तस्या उल्लेखोऽनेकशो विहितः।

तिलको रुय्यकश्च द्वावेव पितापुत्रौ स्ववैदुष्येण राजानक इत्युपाधिं प्राप्नुताम्।

### ३. रुय्यकस्य कृतयः

रुय्यकस्य प्रसिद्धा रचना वर्तते - अलङ्कारसर्वस्वम्। तद्व्यतिरिक्तानप्यसावनेकान् ग्रन्थान् लिलेख। रुय्यककृतग्रन्थसूची निम्नलिखिता वर्तते -

(i) अलङ्कारसर्वस्वम्
(ii) काव्यप्रकाशसङ्केतटीका
(iii) सहृदयलीला
(iv) नाटकमीमांसा
(v) व्यक्तिविवेकविचारः
(vi) हर्षचरितवार्तिकम्
(vii) साहित्यमीमांसा
(viii) श्रीकण्ठस्तवः
(ix) अलङ्कारानुसारिणी
(x) अलङ्कारमञ्जरी
(xi) अलङ्कारवार्तिकम्

एतेषु ग्रन्थेषु पञ्च ग्रन्था उपलभ्यन्ते प्रकाशिताश्च सन्ति - काव्यप्रकाशसङ्केतटीका, व्यक्तिविवेकविचारः, सहृदयलीला, साहित्यमीमांसा, अलङ्कारसर्वस्वञ्च। एतेषां संक्षिप्तपरिचयोऽत्र प्रस्तूयते -

**(i) काव्यप्रकाशसङ्केतटीका -**

ग्रन्थेऽस्मिन् रुय्यकेन मम्मटकृतकाव्यप्रकाशग्रन्थस्य टीका लिखिता।

(ii) **व्यक्तिविवेकविचारः -**

ग्रन्थस्याऽस्याऽभिधानं व्यक्तिविवेकव्याख्यानमपि प्रसिद्धम्। अस्मिन् ग्रन्थे रुय्यकेन महिमभट्टकृतव्यक्तिविवेकग्रन्थप्रतिपादितसिद्धान्तानां परीक्षा विहिता। ग्रन्थोऽयमपूर्ण एव प्राप्यते। प्रकाशनमस्य त्रिवेन्द्रमनगराद् बभूव। चौखम्बासंस्कृतसीरीजप्रकाशनसंस्थयाऽप्येषो ग्रन्थः प्रकाशितः।

(iii) **सहृदयलीला -**

लघुपुस्तिकेयं सहृदयलीला चतुर्षूल्लेखेषु प्रकाशिता वर्तते। प्रकाशनमस्य ग्रन्थस्य पिशेलमहोदयस्य सम्पादकत्वे काव्यमाला सीरीज इत्यन्तर्गतं (१८८६ ई०) बभूव। उल्लेखक्रमेणाऽस्य विषयवस्तु निम्नप्रकारेण वर्तते -

(क) प्रथमोल्लेखो गुणोल्लेखः प्रसिद्धः। अत्र युवतीनां दशगुणाः रूपवर्णप्रभारागाभिजात्यविलासितालावण्यलक्षणछायासौभाग्याः प्रकीर्तिताः।[1]

(ख) द्वितीयोल्लेखो विद्यते - अलङ्कारोल्लेखः। अत्र रत्नस्वर्णांशुमाल्यादयो विविधाः पदार्था अलङ्कारद्रव्यरूपेण प्रोक्ताः।[2]

(ग) तृतीयोल्लेखो जीवितोल्लेखोऽस्ति। अत्र यौवनं सौन्दर्यस्य जीवितं प्रोक्तम्।[3]

(घ) उल्लेखश्चतुर्थः परिकरोल्लेखो वर्तते। अत्र लेखकेन सौन्दर्यवर्धनसाधनानि प्रोक्तानि।

(iv) **साहित्यमीमांसा -**

विशालाकारस्य साहित्यमीमांसाग्रन्थस्य प्रकाशनं त्रिवेन्द्रमसीरीज इत्यन्तर्गतं (१९३४ ई०) बभूव। ग्रन्थस्याऽस्य त्रयो भागाः वर्तन्ते - कारिकाः वृत्तय उदाहरणानि च। उदाहरणरूपेणाऽत्र शतकषट्कं (६००) श्लोकाः सन्ति। तत्र श्लोकशतकं प्राकृतभाषायां विद्यते शेषाश्च श्लोकाः संस्कृतभाषायां भवन्ति। यद्यपि ग्रन्थेऽस्मिन् कुत्रचिदपि ग्रन्थकर्तुर्नामनिर्देशो नाऽस्ति, तथाप्यलङ्कारसर्वस्वस्योल्लेखप्रसङ्गेनैवाऽयं ग्रन्थो रुय्यककृतो विद्वद्भिरङ्गीकृतः।

अष्टसु प्रकरणेषु विभक्तस्य साहित्यमीमांसाग्रन्थस्य विषयवस्तु निम्नक्रमेण वर्तते -

(क) प्रथमे प्रकरणे वाच्यवाचकयोर्वन्दनां कृत्वा लेखको वर्ण्यविषयान् प्रोवाच। तदनन्तरं काव्यपरिष्कारकविभेदरसिकभेदादीनां वर्णनमस्ति।

---

१. रूपं वर्ण प्रभा राग आभिजात्यं विलासिता।
लावण्यं लक्षणं छाया सौभाग्यं चेत्यमी गुणाः।।

२. रत्नं हेमांशुके माल्यं मण्डनं द्रव्ययोजने।
प्रकीर्णं चेत्यलङ्काराः सप्तैवैते मया मताः।।

३. शोभाया अनुप्राणकं यौवनाख्यं जीवितम्।

(ख) द्वितीयप्रकरणे वृत्तयः, साहित्यसर्जकघटतत्त्वानि साहित्यकाव्यभेदा इत्यादीनां विषयाणां वर्णनमस्ति।

(ग) तृतीये प्रकरणे दोषनिरूपणं वर्तते।

(घ) चतुर्थे प्रकरणे गुणानां विवेचनमस्ति।

(ङ) पञ्चमे प्रकरणे लेखकेनाऽलङ्काराः निरूपिताः।

(च) षष्ठे प्रकरणेऽतिविस्तृते रसवृत्तिभावादीनां विवेचना विद्यते।

(छ) प्रकरणे सप्तमे कविसाधनानि, कविप्रकाराः, कविसमयाः, सम्बोधनशैली इत्यादिविषयाः रुय्यकेन प्रकीर्तिताः। अस्मिन् प्रकरणे विविधप्रदेशीयानां नारीणां गुणप्रवृत्तिक्रीडर्तुपर्वव्रतादीनामपि वर्णनमस्ति।

(ज) अष्टमे प्रकरणे काव्यास्वादनकविशब्दादीनां निरूपणमस्ति। ग्रन्थकारेण साहित्यमीमांसायामस्यामनेकेषां प्राचीनकवीनां शास्त्रकाराणाञ्चोल्लेखो विहितः।

(v) **अलङ्कारसर्वस्वम्** -

रुय्यकस्याऽयं प्रसिद्धः प्रौढो विद्वद्वन्दितो ग्रन्थोऽलङ्कारान् सम्यक् व्याचष्टे। ग्रन्थस्याऽस्य विस्तृतः परिचयोऽग्रे प्रस्तूयते।

## ४. अलङ्कारसर्वस्वम्

अलङ्कारसर्वस्वं रुय्यकस्य श्रेष्ठा प्रौढतमा च कृतिः काव्यशास्त्रकृत्सु प्रसिद्धा। अनेन ग्रन्थेन तस्मै काव्यशास्त्रकृतां मध्येऽविनश्वरं यशः प्रदत्तम्। पूर्ववर्तिनामाचार्याणां कृतीनां सम्यगध्ययनं विधाय रुय्यकोऽलङ्काराणां सम्यङ्निरूपणमकरोत् प्राचीनाचार्याणाञ्च दोषान् दूरीचकार। रुय्यको मम्मटोत्तरवर्ती तन्निकटस्थ एव बभूव। अथ चाऽसौ मम्मटकृतकाव्यप्रकाशस्य टीकामपि लिलेख। अतोऽलङ्कारसर्वस्वे मम्मटकृतालङ्कारप्रकरणस्य प्रभावः स्वाभाविकोऽवश्यम्भावी च। तथाऽप्यलङ्काराणां विवेचने रुय्यकेन स्वतन्त्रमार्ग एवाऽवलम्बितः।

मम्मटवद् रुय्यकोऽप्याचार्येषु ध्वनिवादी गण्यते। एतां दृष्टिमवलम्ब्यैव तेनाऽलङ्कारसर्वस्वग्रन्थस्य रचना विहिता। अलङ्कारसर्वस्वग्रन्थेऽष्टाशीतिसूत्राणि वर्तन्ते। ग्रन्थारम्भे रुय्यकेनाऽऽमुखे पूर्ववर्तिनामाचार्याणां मतानि विवेचितानि। काव्यात्मसम्बन्धे भामहोद्भटरुद्रटवामनकुन्तकमहिमभट्टानन्दवर्धनमतानां सारांशः प्रस्तुतः। तदनन्तरमसौ ध्वनिकारमतमेव पुपोष।

आमुखानन्तरं रुय्यकेनैकादशसूत्रेषु षट्संख्यकानां पुनरुक्तवदाभासछेकानुप्रास-वृत्त्यनुप्रासलाटानुप्रासयमकचित्राणां शब्दालङ्काराणां निरूपणं विहितम्। तदनन्तरमेक-सप्तत्यर्थालङ्काराणां परम्पराप्राप्तानां निरूपणमस्ति। अनेकेषामलङ्काराणामुद्भावना स्वयं रुय्यककृता वर्तते। तदनन्तरं त्रिषु सूत्रेषु प्राचीनपरम्परां निर्वाहयन्नसौ रसवत्प्रेयऊर्ज-

स्विसमाहितभावोदयभावसन्धिभावशबलतालङ्कारान् न्यरूपयत्। एतेऽलङ्कारा रुय्यकेन पृथगलङ्काराः प्रोक्ताः[1], परं ध्वनिवादिन आचार्यास्तान् गुणीभूतव्यङ्ग्यत्वेनोदाहरन्ति। इत्थञ्च रुय्यकेनैतेऽलङ्कारास्तु प्रोक्ताः, परमन्येभ्योऽलङ्कारेभ्यस्ते भिन्ना एव प्रतिपादिताः। तदनन्तरं रुय्यकेन त्रिषु सूत्रेषु सङ्करसंसृष्ट्योरलङ्कारयोर्विवेचनं कृतम्।

अलङ्कारसर्वस्वस्य विषयप्रतिपादनशैली प्रायशः प्राचीनाचार्यप्रतिपादनशैलीसदृशी संलक्ष्यते। प्रथमं तावल्लेखकः सूत्रेष्वलङ्कारलक्षणानि प्रास्तौत्। तदनन्तरं वृत्तिषु तानि व्याचष्ट। अथ चोदाहरणैस्तां व्याख्यां पुपोष।

भरतादारभ्य मम्मटपर्यन्तं विभिन्नैः काव्यशास्त्रिभिः प्रतिपादितानामलङ्काराणां संख्याऽष्टादशोत्तरशतं वर्तते। अत्र रुय्यकस्त्रयश्चत्वारिंशदलङ्कारान् न स्वीकृत्य केवलं पञ्चसप्तत्यलङ्कारानेवाऽङ्गीचकार। अथ च प्राचीनाचार्यप्रोक्तालङ्कारलक्षणेभ्यो रुय्यकप्रोक्तं स्वरूपं किञ्चिद् भिद्यते। एतद्व्यतिरिक्तं सप्तालङ्कारान् रुय्यकः स्वयमुद्भावयामास। अतो रुय्यकप्रोक्तालङ्कारसंख्या द्व्यशीतिर्वर्तते।

रुय्यकप्रतिपादितालङ्कारलक्षणे क्रमेण च तस्याऽलङ्काराणां वर्गीकरणे नवैव कल्पनाऽभिव्यज्यते। अलङ्कारसर्वस्वस्य व्याख्यां कुर्वन् रेवाप्रसादद्विवेदीमहोदयो वर्गीकरणमेतन्निम्नप्रकारेण प्रास्तौत्[2] -

### १. शुद्धखण्डः

वर्ग (१) शब्दालङ्कारवर्गः (पौनुरुक्त्यवर्गो वा)

(i) **पौनरुक्त्यविचिच्छत्तिः -**

| | |
|---|---|
| (१) अर्थपौनरुक्त्यम् | पुनरुक्तवदाभास |
| (२) व्यञ्जनपौनरुक्त्यम् | छेकानुप्रास, वृत्त्यनुप्रास |
| (३) स्वरव्यञ्जनपौनरुक्त्यम् | यमक |
| (४) शब्दार्थोभयपौनरुक्त्यम् | लाटानुप्रास |
| (५) स्थानविशेषश्लिष्टवर्णपौनरुक्त्यम् | चित्र |

वर्ग (२) अर्थालङ्कारवर्गः

(i) **सादृश्यविच्छित्तिः -**

| | |
|---|---|
| (क) भेदाभेदतुल्यतामूलक | उपमा, अनन्वय, उपमेयोपमा, स्मरण |
| (ख) अभेदप्राधान्यमूलक | |

१. एते पृथगलङ्काराः। अलङ्कारसर्वस्व सूत्र ८५

२. द्विवेदी, रेवाप्रसाद : हिन्दी अलङ्कारसर्वस्व (चौखम्बा) पृ० ४६-४७

| | |
|---|---|
| (अ) आरोपाश्रित | रूपक, परिणाम, भ्रान्तिमान्, सन्देह, उल्लेख, अपह्नुति |
| (ब) अध्यवसायाश्रित | उत्प्रेक्षा, अतिशयोक्ति |
| (ग) गम्यौपम्यमूलक | तुल्ययोगिता, दीपक, प्रतिवस्तूपमा, दृष्टान्त, निदर्शना |
| (घ) भेदप्राधान्यमूलक | व्यतिरेक, सहोक्ति, विनोक्ति |
| (ii) विशेषणविच्छित्तिः | |
| (क) केवलविशेषणविच्छित्ति | समासोक्ति, परिकर |
| (ख) सविशेष्यविशेषणविच्छित्ति | श्लेष, अप्रस्तुतप्रशंसा, अर्थान्तरन्यास |
| (iii) गम्यतार्थविच्छित्तिः | पर्यायोक्त, व्याजस्तुति, आक्षेप |
| (iv) विरोधविच्छित्तिः | |
| (क) शुद्धविरोध | विरोध |
| (ख) कार्यकारणभावाश्रित विरोधमूलक | विभावना, विशेषोक्ति, अतिशयोक्ति, असङ्गति, सम,विषम, विचित्र, व्याघात |
| (ग) आश्रयाश्रितविरोधमूलक | अधिक, विशेष |
| (घ) व्यतिहारविरोधमूलक | अन्योन्य |
| (v) शृङ्खलाविच्छित्तिः | कारणमाला, एकावली, मालादीपक, सार |
| (vi) न्यायविच्छित्तिः | काव्यलिङ्ग, अनुमान, यथासंख्य, पर्याय, परिवृत्ति |
| (क) तर्कन्यायमूलक | परिसंख्या, अर्थापत्ति, विकल्प |
| (ख) वाक्यन्यायमूलक | समुच्चय, समाधि |
| (ग) लोकन्यायमूलक | प्रत्यनीक, प्रतीप, मीलित, तद्गुण, अतद्गुण, उत्तर |
| (vii) गूढार्थपरताविच्छित्तिः - | |
| (क) शुद्धा | सूक्ष्म, व्याजोक्ति, वक्रोक्ति, स्वभावोक्ति |
| (ख) स्फुटार्थता | भाविक |
| (ग) उदात्तता | उदात्त |
| (घ) चित्तवृत्त्याश्रित | रसवत्, प्रेय, ऊर्जस्वि, समाहित, भावोदय, भावसन्धि, भावशबलता |

## २. मिश्रखण्डः

(१) संसृष्टिः शब्दालङ्कारसंसृष्टि,
अर्थालङ्कारसंसृष्टि,
उभयालङ्कारसंसृष्टि

(२) सङ्करः

रुय्यकः काव्यप्रकाशमनेकेषु स्थानेषूल्लिलेख। अथ च ततः प्रेरणामपि सम्प्राप। परन्त्वसौ न मम्मटस्याऽन्धानुसरणमकरोत्। अनेकेषु प्रसङ्गेषु तस्य मम्मटाद् भिन्नत्वमभिलक्ष्यते। यथा मम्मटेन

राजति पटीयमभिहतदानवरा सा साऽतिपाति सारा वनदा।
गजता च यूथमविरतदानवरा सा साऽतिपाति सारा वनदा।।

इत्युदाहरणे सङ्करालङ्कारः प्रोक्तो, यत्र अनुलोमप्रतिलोमयमकयोः परस्परापेक्षयाऽङ्गाङ्गिभावो वर्तते। परं रुय्यकोऽत्र शब्दालङ्कारयोः संसृष्टिमेव प्रतिपादयति। तथाऽप्यनेकालङ्काराणां लक्षणानि तेन काव्यप्रकाशादेव गृहीतानि। अलङ्कारसर्वस्वस्य षट्सप्तत्युदाहरणानि काव्यप्रकाशस्य दशमोल्लासेऽवलोक्यन्ते।

उत्तरवर्तिनः काव्यशास्त्रिणोऽलङ्कारसर्वस्वकारेणाऽतितरां प्रभाविताः वर्तन्ते। विश्वनाथजगन्नाथाप्पयदीक्षितविद्याधरादयः काव्यशास्त्रकर्तारो रुय्यकात् प्रेरणां स्फूर्तिञ्च प्राप्नुवन्। तैः स्वपक्षपरिपोषणाय रुय्यकः प्रमाणरूपेण स्वीकृतः।

## ५. अलङ्कारसर्वस्वस्य कारिकाकारो वृत्तिकारश्च

अलङ्कारसर्वस्वस्य रचयिता सामान्यतो रुय्यक एव प्रसिद्धः। ग्रन्थस्याऽस्य त्रयो भागाः सन्ति - सूत्राणि, वृत्तय उदाहरणानि च। सामान्यतः सम्पूर्ण एव ग्रन्थोऽलङ्कारसर्वस्वमित्युच्यते। वस्तुतः सूत्रभागोऽलङ्कारसूत्रनाम्ना, शेषश्चाऽलङ्कारसर्वस्वनाम्ना ज्ञातव्यः।

अलङ्कारसूत्रस्य रचयिता रुय्यक एवाऽवर्ततेति नास्ति कोऽपि संशयः। परन्तु वृत्तिरचनाविषये विवादः समुपस्थितो बभूव। केषाञ्चिदाचार्याणामत्राऽभिमतं विद्यते, यद् वृत्तिभागस्याऽपि रचना रुय्यकेनैव कृता, परमन्ये समीक्षकाः वृत्तिभागकारं मंखं मंखकं वा कथयन्ति। अस्य विवादस्य मुख्यो हेतुर्मङ्गलश्लोकोऽसौ वर्तते योऽलङ्कारसर्वस्वस्योत्तरीयभारतसंस्करणे काव्यमालासीरीजनिर्णयसागरसंस्थातो जयरथस्य विमर्शिनीटीकासहितः प्रकाशितो बभूव। मङ्गलश्लोकश्चैवं वर्तते -

**नमस्कृत्य परां वाचं देवीं त्रिविधविग्रहाम्।**
**निजालङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते।।**

अनेन श्लोकेन सुस्पष्टमेव यदलङ्कारसूत्रस्य रचयिता रुय्यकः स्वयमेव स्वसूत्राणां वृत्तिं लिखति। परन्त्वलङ्कारसर्वस्वस्य दक्षिणभारतसंस्करणे, यस्य प्रकाशनं समुद्रबन्धटीकासहितं त्रिवेन्द्रमनगराद् बभूव, मङ्गलश्लोको निम्नवदस्ति -

**नमस्कृत्य परां वाचं देवीं त्रिविधविग्रहाम्।**
**गुर्वलङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते।।**

अनेन श्लोकेन प्रतीयते, यद् वृत्तिकारः सूत्रकाराद् भिन्नो वर्तते, यः स्वगुरुकृतसूत्राणि व्याख्यातुं वृत्तिमरचयत्। समुद्रबन्धेन प्रोक्तम् - वृत्तिकारो मंखोऽस्ति। वृत्तिकारव्यक्तित्वं निम्नलिखितपङ्क्तिषु विशदीक्रियते -

(क) **मङ्खपरम्परा** -

केषाञ्चिदाचार्याणां मतं यदलङ्कारसर्वस्वग्रन्थस्य वृत्तीनां रचना मङ्खेन कृता। तस्य त्रीणि नामानि प्रसिद्धानि सन्ति - मङ्खो मङ्खको मङ्खुको वा। वृत्तिकारं मङ्खं प्रमाणयितुं निम्नयुक्तयः प्रस्तूयन्ते -

(i) त्रिवेन्द्रमनगरात् प्रकाशितेऽलङ्कारसर्वस्वग्रन्थसंस्करणे मङ्गलपद्यानां पाठो निम्नवदस्ति -

**कदाचिन्मङ्खुकोपज्ञं काव्यालङ्कारलक्षणम्।**
**प्रदर्श्य रविनिर्माणं प्रार्थयन्तो विपश्चितः।।**
**गम्भीरं नस्तितीर्षूणां मङ्खुकग्रन्थसागरम्।**
**नौरस्तु भवतः प्रज्ञा स्थेयसी रघुनन्दन।।**

अस्मिन् पाठे मङ्खुको (मङ्खो) ग्रन्थस्य रचयिता प्रोक्तः।

(ii) त्रिवेन्द्रमसंस्करणस्य ग्रन्थस्य समाप्तौ निम्नपाठो वर्तते -

**इति मङ्खुको वितेने काश्मीरक्षितिपसन्धिविग्रहीकः।**
**सुकविमुखालङ्कारं तदिदमलङ्कारसर्वस्वम्।।**

अस्मिन् पाठे मङ्खुको (मङ्खो)ऽलङ्कारसर्वस्वस्य (वृत्तिभागस्य) रचयिता प्रोक्तः।

(iii) त्रिवेन्द्रमसंस्करणग्रन्थे सुस्पष्टं मङ्गलश्लोके लिखितमस्ति यद् वृत्तिकारः स्वगुरुरचितालङ्कारसूत्राणां रचयिता कश्चिदन्य एव सिद्धो भवति, तस्य च शिष्यो गुरुरचितसूत्राणि व्याख्यातुं वृत्तिरचनातत्परो वर्तते। प्राचीनेतिहासात् स्पष्टमेव यद् रुय्यकस्य शिष्यो मङ्खोऽवर्तत।

(iv) मङ्खः श्रीकण्ठचरितं नाम काव्यं व्यरचयत्। तेन तत्र रुय्यको निजोपाध्यायः प्रोक्तः।[1] यदि मङ्खः स्वगुरुकृतसूत्राणां व्याख्यां विधत्ते, तत् स्वाभाविकमेव।

---

१. श्रीकण्ठचरितम् १.५६, ३.६३, ३.७२

(v) अलङ्कारसर्वस्वव्याख्याकारेण समुद्रबन्धेन व्याख्यां समाप्य मङ्खको वृत्तिकारोऽभिमतः -

**मङ्खुकनिबन्धविवृतौ विहितायां मया समुद्रबन्धेन।**
**गुणलेशमात्रमित्रैर्भविषीष्टादोषदर्शिभिः सद्भिः।।**

(vi) चित्रमीमांसायामप्ययदीक्षितो ह्युपमाप्रकरणे श्लेषमन्यालङ्कारबाधकं प्रतिपादयन् मङ्खुकं तस्य प्रतिष्ठातारं प्रोवाच।[१] अभिमतमिदमलङ्कारसर्वस्वेऽपि लक्ष्यते।

(vii) वृत्तिभागे मङ्खककृतश्रीकण्ठचरितस्याऽनेके श्लोका उदाहरणरूपेणोपन्यस्ताः सन्ति। यदि च रुय्यक एव वृत्तिभागस्य रचयिता मन्यते, तत् कथं तदुत्तरवर्तिमङ्खकृतश्लोका अत्रोदाहरणरूपेण प्रस्तुताः स्युः ? अतो वृत्तिभागस्य रचना मङ्खकस्यैव मन्तव्या। तेन स्वरचितश्लोका उदाहरणरूपेणोपन्यस्ताः।

प्रमाणैरेतैर्विदितं भवति, यदलङ्कारसर्वस्वस्य वृत्तिभागस्य रचनां मंखक एव चकार। समुद्रबन्धेनाऽपि लिखितम् -

काश्मीरवास्तव्यो मङ्खकः काश्मीराधिपतेः सन्धिविग्रहिकपदे नियुक्तोऽवर्तत।''

कह्लणेन राजतरङ्गिण्यां सूचितम् -

काश्मीराधिपतिर्जयसिंहो मङ्खकं सन्धिविग्रहिकपदे न्ययोजयत्। तेनैव मङ्खकेन श्रीकण्ठचरितं नाम काव्यं रचितम्।[२]

(ख) रुय्यकपरम्परा -

काश्मीरपरम्परामनुसृत्याऽलङ्कारसर्वस्वस्य सूत्रभागस्य वृत्तिभागस्य च रचीयता रुय्यक एव मन्यते। असौ रुचकनाम्नाऽपि प्रसिद्धो बभूव। वृत्तिभागस्याऽपि कर्ता रुय्यक एवाऽवर्तत, इत्यत्र निम्नयुक्तयः प्रस्तूयन्ते -

(i) जयरथस्य विमर्शिनीटीकायां मङ्गलश्लोको वर्तते "निजालङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते।'' अस्मिन् पाठे सुस्पष्टं सूचितम्, यदलङ्कारसूत्राणां रचयिता स्वरचितसूत्राणां व्याख्यां स्वरचितवृत्तिभिः कुर्वन् तात्पर्यं लिखति।

(ii) यदि च मङ्गलश्लोके पाठः -"गुर्वलङ्कारसूत्राणां'' यथार्थमेव मन्येत, तदा तस्य भावः कल्पनीयः - सूत्रकारः स्वयं गौरवसम्भृतस्वसूत्राणां स्वरचितवृत्तिभिस्तात्पर्यं लिखति।

(iii) काश्मीरपरम्परासु रुय्यक एव सूत्रवृत्त्योर्द्वयोर्भागयोः रचयिता प्रसिद्धः। रुय्यकमङ्खकौ द्वावेव काश्मीरवास्तव्यावास्ताम्। अतः परम्परेयमधिकं प्रामाण्यं प्रकटयति।

---

१. उपमाप्रतिभानेऽपि तत्प्रतिभोत्पत्तिहेतुः श्लेष एव नोपमेति मङ्खकादिभिरभ्युपेयते।
चित्रमीमांसा (कालिकाप्रसाद सम्पादित) पृ० ५६

२. सन्धिविग्रहिको मङ्खकाख्योऽलङ्कारसोदरः।
समठस्याऽभवत्प्रष्ठः श्रीकण्ठस्य प्रतिष्ठया।। राजतरङ्गिणी ८.३५४

(iv) अलङ्कारसर्वस्वविमर्शिनीटीकाकारो जयरथो रुय्यकमनु पञ्चसप्ततिवर्षानन्तरं बभूव। तेन सूत्रकारो वृत्तिकारश्च रुय्यक एवाऽभिमतः। जयरथो ग्रन्थकारस्य द्वे अन्ये कृती काव्यप्रकाशसङ्केत[१] मलङ्कारानुसारिणी[२] ञ्चोल्लिलेख। काव्यप्रकाशसङ्केतटीकायाः प्रारम्भे ग्रन्थकारस्य नाम रुय्यको (रुचको) वर्णितः।[३] अथ च स्तुतिकुसुमाञ्जलिकाव्यस्य ८.१९ श्लोकस्य टीकायां रत्नकण्ठेनाऽलङ्कारानुसारिणी रुचककृता प्रोक्ता।

(v) अलङ्कारसर्वस्वस्य सञ्जीविनीटीकालेखकेन श्रीविद्याचक्रवर्तिना मङ्गलश्लोके रुय्यक(रुचक)एव सम्पूर्णग्रन्थस्य लेखकः प्रोक्तः।[४]

(vi) अप्पयदीक्षितश्चित्रमीमांसायामलङ्कारसर्वस्वपंक्तीरुद्धृत्य ताः रुचक(रुय्यक)कृताः जगाद।[५] अतोऽप्पयदीक्षितस्याऽभिमतेऽलङ्कारसर्वस्य सम्पूर्णस्य कर्ता रुय्यक एवाऽवर्तत।

(vii) सहृदयलीलाग्रन्थेऽलङ्कारसर्वस्वस्य सञ्जीविनीटीकालेखकेन श्रीविद्याचक्रवर्तिना मङ्गलश्लोके रुय्यक(रुचक)एव सम्पूर्णग्रन्थस्य लेखकः प्रोक्तः।[६]

(viii) समुद्रबन्धव्यतिरिक्तेन न केनाऽप्यन्येन विदुषा अलङ्कारसर्वस्ववृत्तिभागकर्ता मङ्खकः प्रोक्तः। दाक्षिणात्येनैव कुमारस्वामिना प्रतापरुद्रयशोभूषणटीकायामनेकेषु स्थानेषु ह्यलङ्कारसर्वस्वपङ्क्तय उद्धृतास्ताश्च रुचककृताः प्रोक्ताः।[७]

---

१. यत्तु काव्यप्रकाशसङ्केतग्रन्थकृता वस्तुध्वनेः शब्दशक्तिमूलत्वमुक्तम्.... .....।
अलङ्कारसर्वस्वग्रन्थे श्लेषालङ्कारविवेचने विमर्शिनीटीकातः।

२. ग्रन्थकृताऽप्यलङ्कारानुसारिण्यामत्र। अलङ्कारसर्वस्वे रूपकालङ्कारविवेचने विमर्शिनीटीकातः।

३. ज्ञात्वा श्रीतिलकात् सर्वालङ्कारोपनिषद्रसम्।
काव्यप्रकाशसङ्केतो रुचकेनेह लिख्यते।।

४. रुचकाचार्योपज्ञे सेयमलङ्कारसर्वस्वे।
सञ्जीविनीति टीका श्रीविद्याधरचक्रवर्तिना क्रियते।।
इत्थं भूम्ना रुचकवचसा विस्तरः कर्कशोऽयम्।।

५. अभेदमपह्नुतिकथनं व्याजोक्त्यलङ्कारं पृथगनङ्गीकुर्वतामुद्भटादीनां मतमनुसृत्य ये तु उद्भिन्नवस्तुनिगूहनं व्याजोक्तिरिति व्याजोक्त्यलङ्कारं पृथगिच्छन्ति, तेषामिहापि व्याजोक्तिरेव नाऽपह्नुतिरिति रुचकादयः। चित्रमीमांसा पृ० २४२

६. कृतिः श्रीविपश्चिद्वरराजानकतिलकात्मजश्रीमदालङ्कारिकसमाजाग्रगण्यराजानकरुय्यकस्य राजानकरुचकापरनाम्नोऽलङ्कारसर्वस्वकृतः।

७. (क) तदुक्तं रुचकेन एषाऽर्थाऽऽश्रयाऽपि धर्मविषये श्लिष्टशब्दहेतुका क्वचिद् दृश्यते।
प्रतापरुद्रयशोभूषण-रत्नापणटीका पृ० ३९३

(ख) न चेदं विषमाद्यभेदेऽन्तर्भवति। इह हि स्वनिषेधो वैपरीत्यं गमयति, विषये तु व्यत्यय इति भेदस्य रुचकेनोक्तत्वात्। वही पृ० ४२५

(ग) काव्यग्रहणं तर्कवैलक्षण्यार्थम्। तेन व्याप्तिधर्मपक्षतादयो न क्रियन्ते, इति रुचकाः
वही पृ० ४०८

(ix) रुय्यकस्य शिष्यो मङ्खकः स्वगुरोः ग्रन्थं सम्पाद्य व्याख्याय च तस्य प्रसाराय प्रयेते। सम्पादनकाल एवाऽसौ स्वरचितश्रीकण्ठचरितस्य काश्चन श्लोकांस्तत्रोदाहरणरूपेण समावेशयत्। सम्भवतोऽयमेव हेतुरवर्तत, यत्केचन समीक्षकाः मनीषिणोऽलङ्कारसर्वस्वलेखकं मङ्खकमपि युयोजुः।

(x) रसगङ्गाधरादिषु प्रौढग्रन्थेष्वपि रुय्यक एव सूत्रकारो वृत्तिकारश्चाऽभिमतः।

(xi) पुणेनगरस्य पाण्डुलिपिसङ्ग्रहेषु शारदालिप्यां लिखितस्यालङ्कारसर्वस्वस्य द्वे पाण्डुलिपी वर्तेते। तयोः रुय्यक एवाऽलङ्कारसर्वस्वस्य प्रणेता सूचितः। यथा -

(क) **समापितमिदमलङ्कारसर्वस्वमिति श्रेयः।**
**कृतिस्तत्र भगवद्राजानकरुय्यकस्येति।।**

(ख) **सम्पूर्णमिदमलङ्कारसर्वस्वमिति श्रेयो भवतु।**
**लेखकपाठकयोः कृती राजानकरुय्यकस्येति।।**

उपरिलिखितविवेचनेन स्पष्टमेव यदलङ्कारसर्वस्वस्य सम्पूर्णस्य लेखको रुय्यक एवाऽवर्तत। सम्भवतस्तच्छिष्येण तस्य सम्पादनं संशोधनं परिष्करणञ्च कृतं भवेत्।

## ६. अलङ्कारसर्वस्वस्य प्राचीनटीकाः

प्राचीनकालादेवाऽलङ्कारसर्वस्वस्य टीकाः काव्यशास्त्रव्याख्याकारा अलिखन्। अत्र चतस्रष्टीकाः प्रसिद्धाः सन्ति - राजानकालकसमुद्रबन्धविद्याचक्रवर्तिजयरथकृताः।

(i) राजानकोऽलकः -

स्तुतिकुसुमाञ्जलिटीकायां लेखकेनाऽलकोऽलङ्कारसर्वस्वटीकाकाररूपेणोल्लिखितः। परमियं टीका वर्तमानसमये नोपलभ्यते। अतोऽलकस्य परिचयोऽपि न प्राप्यते। अलकोऽलङ्कारसर्वस्वस्य टीकाकारः प्रोक्तः। अतोऽसौ ध्रुवं तस्मादलकाद् भिन्नो, येन काव्यप्रकाशस्य दशमोल्लासः पूर्णतां नीतः।

(ii) **समुद्रबन्धः** -

दाक्षिणात्येन समुद्रबन्धेन लिखिताऽलङ्कारसर्वस्वटीका दक्षिणभारतेऽस्य ग्रन्थस्य लोकप्रियतां सूचयति। सम्भवतः सा विवरणाभिधानाऽवर्तत। समुद्रबन्धः केरल (मलाबार)-नरेशस्य यदुवंशीयस्य रविवर्मणो राजसभापण्डितपदमलञ्चक्रे। रविवर्मणो जन्मसमयः १२६५ खिष्टाब्दोऽवर्तत। अतः समद्रबन्धस्य समयस्त्रयोदशशताब्द्युत्तरार्द्धवर्ती निश्चेतुं शक्यते। टीकायामस्यां समुद्रबन्धो नरेशं बन्धुवर्माणमनेकेषु श्लोकेषु प्रशशंस।

समुद्रबन्धोऽलङ्कारसर्वस्वस्य लोकप्रसिद्धानां विभिन्नपाठानां समीक्षाञ्चकार। परं तस्येयं टीकाऽलङ्कारसर्वस्वप्रोक्तविषयवस्तूनां विशदीकरणे वैदुष्यपूर्णाऽपि न तथा समर्था, यथा जयरथकृतटीका। समुद्रबन्धः काव्यगुणविषये प्रचलितानि सप्तमतान्युल्लिलेख।

समुद्रबन्धेन स्वटीकायां प्रतिपादितं यदलङ्कारसर्वस्वग्रन्थस्य वृत्तिभागस्य रचना मङ्खककृता वर्तते।

(iii) **विद्याधरचक्रवर्ती** -

विद्याधरचक्रवर्तिनाऽलङ्कारसर्वस्वस्य सञ्जीविनीटीका लिखिता। टीकेयमलङ्कार-सञ्जीविनीति नाम्ना सर्वस्वसञ्जीविनीति नाम्ना वा प्रसिद्धा। मल्लिनाथो ह्येकावल्यास्तर-लटीकायामेनां टीकामुल्लिलेख। मल्लिनाथसुतेन कुमारस्वामिनाऽपि प्रतापरुद्रयशोभूषणग्रन्थस्य रत्नापणटीकायां विद्याधरचक्रवर्तिकृता ह्येषा टीका समुल्लिखिता। अतोऽयं विद्याधरचक्रवर्ती तत्पूर्वकालीनो विद्यते।

विद्याधरचक्रर्ती स्वात्मानं महाविद्वांसं पण्डितं साधकञ्च प्रोवाच। असौ होयसलनरेशस्य बल्लालतृतीयस्य सभापण्डितोऽवर्तत। बल्लालतृतीयस्य राज्यारोहणकालः १२९१-९३ खिष्टाब्द इतिहासविद्भिर्निर्णीतः। अतो विद्याधरचक्रवर्तिकृतटीकारचनाकालश्चतुर्दशशताब्दीपूर्वार्द्धवर्ती ह्यवगन्तव्यः।

विद्याधरचक्रवर्तिना स्वटीकायामलङ्कारविवेचनं विदधता सङ्ग्रहकारिका अपि लिखिताः। इमाः कारिकाः निसृष्टार्थकारिकारूपेण पृथगपि प्राप्यन्ते। अयं विद्याधरचक्रवर्ती मम्मटकृतकाव्यप्रकाशस्य टीकामप्यलिखत्।

(iv) **जयरथः** -

अलङ्कारसर्वस्वटीकासु जयरथकृतटीका श्रेष्ठा प्रसिद्धतमा वैदुष्यसम्भृता च वर्तते। जयरथपरिचयः सुतरामुपलभ्यते। टीकासमाप्तौ तेन स्वजीवनपरिचयः प्रस्तुतः। टीकाकारस्य जनकः काश्मीरनरेशस्य राजराजस्याऽमात्यपदमलञ्चकार। जयरथेनाऽभिनवगुप्तकृततत्त्वा-लोकग्रन्थस्याऽपि टीका लिखिता। तत्राऽप्यसौ स्वजीवनवृत्तं प्राकाशयत्। तदाश्रित्य तस्य वंशावली निम्नप्रकारेणाऽस्ति -

पूर्णमनोरथः- काश्मीराधिपतेर्यशस्करस्य (९३० ई०) मन्त्री,
उत्पलरथः प्रथमः
प्रकाशरथः
सूर्यरथः - भ्रातरः - धर्मरथोत्तमरथमनोरथाः
उत्पलरथो द्वितीयः - भ्राता - अमृतरथः - काश्मीरनरेशस्याऽनन्तस्य (१००८-१०३३ ई०) आश्रितः
सम्मरथः - भ्रातरः - शिवरथचक्ररथनन्दिरथाः
गुणरथः - भ्राता - देवरथः
राजानको गङ्गरथः - भ्राता- लङ्करथः - पत्नी-सत्त्वदाशी
शृङ्गाररथः - काश्मीरनरेशराजराजस्य (राजदेवस्य) मन्त्री (१२०३-१२२६ ई०)
जयरथः

जयरथस्योपाध्यायौ शङ्खधरश्रीसङ्गरथावास्ताम् । तस्य दीक्षागुरुः श्रीसुभटरत्नोऽवर्तत । असौ तस्य पितुरपि दीक्षागुरुरासीत् । जयरथः स्वजनकादपि विद्यामध्यैष्ट । शैवागमक्रमदर्शनस्य कुलदर्शनस्य चाऽयं प्रकाण्डपण्डितो गण्यते स्म । अनेकास्वप्यन्यासु विद्यासु वैदुष्यमनेनोपलब्धम् ।

जयरथः स्वयमसूचयत् - तस्य जनकः शृङ्गाररथः काश्मीरनरेशस्य राजराजस्याऽमात्योऽवर्तत । परं काश्मीरस्येतिहासे राजराजाभिधानस्य न कस्यचिद्राज्ञो वर्णनमुपलभ्यते । अतः समयमेव हेतुमाश्रित्य समीक्षकाः राजदेवं (१२०३-१२२६ ई०) राजराजन्वाऽभिन्नत्वेन प्रतिपादयन्ति । अतः शृङ्गाररथस्त्रयोदशशताब्दीपूर्वार्द्धकालीनो निश्चेतुं शक्यते । तस्य च सुतो जयरथस्तदुत्तरकालीनोऽवगन्तव्यः ।

जयरथेन पृथ्वीराजविजयकाव्यमुल्लिखितम् ।[1] मुहम्मदगौरीति यवनराजः पृथ्वीराजं समराङ्गणे ११९३ तमे खिष्टाब्दे बन्दीचकार । एनामप्युक्तिमाश्रित्य जयरथस्य समयस्त्रयोदशशताब्दिको निश्चेतुं शक्यते ।

जयरथकृतटीकाऽलङ्कारविमर्शिनीनाम्ना प्रसिद्धा । तथापि सा सामान्येन विमर्शिनीत्यभिधीयते । ग्रन्थोऽयं न केवलं सामान्यटीकामात्रमेव, परमलङ्काराणां बृहद्भाष्यमेवाऽस्ति । अलङ्कारविवेचनप्रसङ्गे जयरथः स्वयमप्यनेकैरुदाहरणैस्तान् व्याचख्यौ । अलङ्काराणां विश्लेषणे विमर्शने च जयरथकृतटीकाया अध्ययनमनिवार्यमस्ति ।

अलङ्कारविमर्शिनीटीकायां जयरथेन ह्यलङ्कारसारालङ्कारभाष्ययोर्ग्रन्थयोरुल्लेखो विहितः । परं न वर्तमानसमये तौ ग्रन्थौ प्राप्येते । तयोर्ग्रन्थयोरुपलब्धिरलङ्कारशास्त्रविकासेतिहासमधिकं स्पष्टं कुर्यात् । जयरथेन ध्वनिविरोधिमतप्रकाशिका अपि काश्चन टीकाः लिखिताः ।

जयरथोऽभिनवगुप्तकृततन्त्रालोकग्रन्थमप्यटीकत । तस्याऽन्योऽप्येको ग्रन्थः प्रसिद्धः - अलङ्कारोदाहरणम् । परमप्रकाशितोऽयं वर्तते । ग्रन्थस्याऽस्य पाण्डुलिपिः पुणेनगरस्य पुस्तकालये वर्तते । ग्रन्थेऽस्मिन् जयरथेन केचनाऽन्येऽप्यलङ्काराः कल्पिताः सोदाहरणं च व्याख्याताः । यथा - तात्पर्याङ्गानङ्गाप्रत्यनीकाभ्यासाभीष्टादयः । जयरथकृतालङ्कारविमर्शिनीटीकां विनाऽलङ्काराणामध्ययनमपूर्णमिव ।

---

१. तत्र भेदेऽभेदो यथा पृथ्वीराजविजये-
गृह्णद्भिः परया भक्त्या बाणलिङ्गपरम्परा ।
अनर्मदेव यत्सैन्यैर्निरमीयत नर्मदा ।।
अलङ्कारसर्वस्वविमर्शिनीटीकायामुत्प्रेक्षालङ्कारविवेचने

पञ्चविंशोऽध्यायः

# सागरनन्दी

## १. सागरनन्दिनो महत्त्वम्

नाटकलक्षणरत्नकोशग्रन्थं विरच्य सागरनन्दिना काव्यशास्त्रकर्तृषु महन्महत्त्वमधिगतम्। ग्रन्थस्याऽस्य प्रणयनेन तस्य नाट्यशास्त्रसिद्धान्तविकासे महान् योगः परिलक्ष्यते। नाटकलक्षणरत्नकोशस्य प्रथमं सम्पादनं डबलिनविश्वविद्यालयस्य संस्कृताऽध्यापको माइलेस डिलन महोदयश्चकार। प्रकाशनं चाऽस्य ह्यौक्सफोर्डविश्वविद्यालयेन कृतम्।

## २. सागरनन्दिनः समयः परिचयश्च

सागरनन्दी स्वजीवनवृत्तविषयकं स्वग्रन्थे किञ्चिदपि न लिलेख। तथाऽपि बाह्यप्रमाणान्याश्रित्य तस्य जीवनवृत्तसमयादिपरिचयादिकं कथञ्चिल्लभ्यते। सागरनन्दिना ह्येषामाचार्याणां नामानि स्वग्रन्थे सूचितानि, तेषामर्वाचीनतमो वर्तते राजशेखरः। राजशेखरस्य समयः ९२० ख्रिष्टाब्दकल्पः कल्प्यते। सागरनन्दी च ध्रुवमेव तत्पश्चाद्वर्त्यवगन्तव्यः।

उत्तरवर्तिभिर्लेखकैरपि सागरनन्दी समुल्लिखितः। सुभूतिसर्वानन्दजातवेदराय-मुकुटैरमरकोषग्रन्थस्य टीकाः लिखिताः। तत्र ते सागरनन्दिनमप्युल्लिलिखुः। नाट्यसङ्गीतशास्त्ररचयितृभ्यां कुम्भकरणशुभङ्कराभ्यां नाटकलक्षणरत्नकोशस्य कानिचित् पद्यान्युद्धृतानि। जगद्धरो मालतीमाधवं मुद्राराक्षसञ्चाऽटीकत। तत्र तेन नाटकसमीक्षायां नाटकलक्षणरत्नकोषस्य प्रामाण्यमाश्रितम्। एतेषां सर्वेषामाचार्याणां प्राचीनतमो वर्तते सुभूतिः (१०६०-११५० ई०)। अतः सागरनन्दी तत्पूर्ववर्ती गणनीयः।

## ३. सागरनन्दिनः कृतयः

सागरनन्दिकृतग्रन्थो ह्येक एवोपलभ्यते - नाटकलक्षणरत्नकोषः। अतिविशालकाये ग्रन्थेऽस्मिन् नाट्यशास्त्रसिद्धान्तानां विस्तृतं विवेचनं लेखकेन कृतम्। ग्रन्थेऽस्मिन् ग्रन्थकारेण सूचितम् - हर्षविक्रमादित्यमातृगुप्तगर्गाश्मकुट्टबादराननुसृत्य भरतमतावगाहनं कृत्वा ग्रन्थमेनमसौ लिलेख। परन्तु सागरनन्दिनो मन्तव्यानामुल्लेखो नाधिकैराचार्यैर्विहितः।

## ४. नाटकलक्षणरत्नकोशस्य परिचयः

सागरनन्दिकृतनाटकलक्षणरत्नकोशे नाट्यशास्त्रीयसिद्धान्तानामथ च नाट्यरचना-नियमानां लेखकेन सरलसंस्कृतभाषामवलम्ब्योपदेशो विहितः। ग्रन्थस्याऽस्य विषयवस्तु निम्नक्रमेण वर्तते -

रूपकावस्थापञ्चकभाषाप्रकारार्थप्रकृत्यर्थोपक्षेपकाङ्गसन्धिप्रदेशपताकास्थानकवृत्तिलक्षणालङ्काररसभावनायकनायिकाभेदगुणाः। अथ च रूपकोपरूपकभेदस्वरूपाण्यपि वर्णितानि।

सागररन्दिना न सर्वेषु स्थलेषु प्राचीनाचार्याणामनुसरणं कृतम्। अनेकेषु स्थानेषु तेन स्वमन्तव्यान्यपि स्वातन्त्र्येण प्रकटितानि। सागरनन्दिना प्रोक्तम् -

वर्तमानकालीनोऽपि नरपतिर्नायकरूपेण प्रयोक्तव्यः। परमभिनवगुप्तस्य मतमेतद्विपरीतमेव वर्तते। तेन प्रोक्तम् - न वर्तमानकालीनः पार्थिवो नाटकेषु नायकः करणीयः। प्रख्यातचरित एव राजा नाटकादिषु नायकत्वेन प्रकल्पनीयः।[१]

सागरनन्दी प्राचीनाचार्याननुसरन् "वृत्तीना विभाजनं प्रयोजनञ्च रसापेक्षया भवितव्यमिति" प्रत्यापादयत्। परन्त्वस्मिन् विषये भरतमनुसरन्नसौ कोहलमतमप्यङ्गीचकार। तेन प्रोक्तम् -

वीराद्भुतहास्यरसानामभिव्यक्तये भारती वृत्तिः प्रयोजनीया। अथ चाऽद्भुतरौद्ररसनिष्पत्त्यै सात्त्वती वृत्तिः प्रयोज्या। कैशिकी वृत्तिः शृङ्गारहास्यकरुणरसानामभिव्यक्तये प्रयुज्यते। अथ चाऽऽरभटी वृत्तिर्भयानकरौद्ररसयोरभिव्यक्तये प्रयोजनीया।

एवं सागरनन्दिना रसानामभिव्यक्तये वृत्तीनां विभाजनं कृतम्। तेन प्रोक्ताः वृत्तिविभाजननियमाः नाट्यानामभिनये प्रयोजनीयाः। एष एव वृत्तिविभाजनविषये नियमः।[२] अन्येष्वपि केषुचित् स्थानेषु सागरनन्दिनः प्राचीनाचार्येभ्यो भेदो लक्ष्यते।

सागरनन्दिनो ग्रन्थोऽयमतिप्रशंसनीयो नाट्यकाव्यशास्त्ररहस्यगर्भश्च वर्तते। तथाऽप्यसौ काव्यशास्त्रवित्सु न तथाविधं महनीयं समादरं लेभे यस्याऽसौ ध्रुवमधिकारी विद्यते। वर्तमानसमयेऽपि ग्रन्थस्याऽस्याऽध्ययनमनुशीलनं न तथा प्राचुर्येणाऽवलोक्यते।

---

१. वर्तमानराजचरितमवर्णनीयमेव। तत्र विपरीतप्रसिद्धिबाधया अध्यारोपितस्य अकिञ्चित्करत्वाद् योगानन्दरावणादिविषयचरिताध्यारोपवत्। एतदर्थमेव प्रख्यातग्रहणं प्रकर्षद्योतकं पुनः पुनरुपात्तम्। नाट्यशास्त्र (१८.१२) अभिनवगुप्तकृतटीका

२. वीराद्भुतप्रहसनैरिह भारती स्यात्
सात्त्वत्यपीह गदिताद्भुतवीररौद्रैः।
शृङ्गारहास्यकरुणैरपि कैशिकी स्या-
दिष्टा भयानकयुताऽऽरभटी सरौद्रा।। नाटकलक्षणरत्नकोश

षड्विंशोऽध्यायः

## वाग्भटः प्रथमः

### १. वाग्भटस्य महत्त्वं परिचयः समयश्च

भारतीयकाव्यशास्त्रस्येतिहासे द्वयोर्वाग्भटयोः सन्दर्भाः प्राप्यन्ते। तत्रैकेन वाग्भटेन वाग्भटालङ्कारस्य द्वितीयेन च वाग्भटेन काव्यानुशासनस्य रचना विहिता। वाग्भटालङ्कारलेखको वाग्भटः प्रथमोऽभिधीयते, काव्यानुशासनकृच्च वाग्भटो द्वितीयः पश्चाद्वर्ती वर्तते।

जैनमतावलम्बी वाग्भटः प्रथमो हेमचन्द्रसमकालीनोऽवर्तत। सोमसुतोऽसौ कस्यचिद् राज्ञो मन्त्रिपदप्रतिष्ठितो बभूव। वाग्भटालङ्कारग्रन्थस्य पद्यमेकं सूचयति, यत् प्राकृतभाषायां लेखकोऽयं ब्राहडनाम्ना बाहडनाम्ना वा प्रथितोऽभवत्।[१] वाग्भटालङ्कारे वाग्भटेन समुदाहृतानि सर्वाण्येवोदाहरणानि स्वरचितानि संस्कृतप्राकृतभाषाद्वयनिबद्धानि तस्य विदुषो मनीषिणो ह्युमयभाषाविज्ञत्वं निदर्शयन्ति।

वाग्भटप्रथमसमयनिर्धारणे न काऽपि बाधा न च किमपि काठिन्यं न च कोऽपि संशयो वर्तते। वाग्भटालङ्कारस्योदाहरणेषु लेखकेन अनहिलवाडनरेशस्य चालुक्यवंशीयस्य कर्णस्य सुतो जयसिंहोऽनेकेषु स्थानेषु प्रस्तुतः।[२] अतो जयसिंहेन सह लेखकस्य

---

१. वभंडसुत्तिसंपुडमुत्तिअमणिणो पहासमूह व्व।
सिरिवाहडत्ति तणओ आसि बुहो तस्स सोमस्स।। वाग्भटालङ्कार ४.१४८
पद्यस्याऽस्य टीकेयम् -
इदानीं ग्रन्थकार इदमलङ्कारकर्तृत्वमाख्याय वाग्भटाभिधस्य महाकवेर्माहात्म्यस्य तन्नामगाथयैकया निदर्शयति।

२. (क) इन्द्रेण किं यदि स कर्णनरेन्द्रसूनु-
रैरावतेन किमहो यदि तद् द्विपेन्द्रः।
दम्भोलिनाप्यलमयं यदि तत्प्रतापः
स्वर्गोऽप्ययं ननु मुधा यदि तत्पुरी सा।। वाग्भटालङ्कारः - ४.७५

(ख) जगदात्मकीर्तिशुभ्रं जनयन्नुदामधामदोःपरिघः।
जयति प्रतापपूषा जयसिंहः क्ष्माभृदधिनाथः।। वही ४.४५

(ग) अणहिल्लपाटलं पुरमवनिपतिः कर्णदेवनृपसूनुः।
श्रीकलशनामधेयः करी च जगतीह रत्नानि ।। वही ४.१३२

विशिष्टसम्बन्धः कल्पयितुं शक्यः। जयसिंहः १०९३-११४३ ख्रिष्टाब्दकाले भुवमशासत्। अतो वाग्भटस्य समयो द्वादशशताब्दीपूर्वार्द्धकः कल्पनीयः।

## २. वाग्भटप्रथमस्य कृतयः

वाग्भटप्रथमस्य काव्यशास्त्रविषयको ह्येक एव ग्रन्थः समुपलभ्यते - वाग्भटालङ्कारः। ग्रन्थेऽस्मिन् लेखकेन नेमिनिर्माणमहाकाव्यस्य पद्यान्युदाहृतानि। अस्य काव्यस्य रचयिता कोऽपि वाग्भटो वर्तते। परमयं सन्देहविषयो यद् वाग्भटालङ्कारस्य रचयिता नेमिनिर्माणमहाकाव्यस्य च रचयिता द्वावेतौ भिन्नौ वाऽभिन्नौ वाऽऽस्ताम्। नेमिनिर्माणकाव्यस्यैकः श्लोकः "क" व्यञ्जनमाश्रित्य लिखितो वाग्भटालङ्कारे ह्युदाहृतः।[1] अस्य श्लोकस्य व्याख्या निम्नप्रकारेण विहिता -

**"काकु इत्येष श्लोक एकव्यञ्जनगतो न नेमिनिर्माणमहाकाव्यराजमतीपरित्यागाधिकारे समुद्रवर्णनरूपो ज्ञेयः।"**

परमयं श्लोकस्तत्र न नेमिनिर्माणमहाकाव्ये समुपलभ्यते, यद्यप्यन्ये श्लोकास्तत्र विद्यन्ते। पी०वी काणे महोदयस्य मतमिदमत्र वर्तते - काव्यस्याऽस्याऽपि वाग्भटप्रथमेनैव रचना कृता।[2]

## ३. वाग्भटालङ्कारः

पञ्चसु परिच्छेदेषु विभक्ते वाग्भटालङ्कारे षष्ट्युत्तरशतद्वयपद्यानि वर्तन्ते। काव्यशास्त्रविषयाणामत्र संक्षेपेण विमर्शनमस्ति। श्लोकाश्चाऽत्र बाहुल्येन अनुष्टुप्छन्दोबद्धाः वर्तन्ते। परिच्छेदक्रमेणाऽत्र विषयवस्तु निम्नक्रमेण वर्तते -

(i) **प्रथमः परिच्छैदः -**

प्रथमे परिच्छेदे काव्यस्वरूपं निर्वर्ण्य लेखकेन काव्यनिर्माणहेतवः प्रोक्ताः। काव्यलक्षणं व्याख्याय वाग्भटेन प्रतिभा काव्यहेतुत्वेन प्रतिपादिता। परं काव्यनिर्माणे व्युत्पत्त्यभ्यासावनिवार्यौ वर्तेते। अतः काव्यहेतवस्त्रयः सन्ति - प्रतिभा व्युत्पत्तिरभ्यासश्च। अत्र वाग्भटेन काव्यनिर्माणानुकूलपरिस्थितीनामपि निरूपणं कृतम्। अनुकरणीयपरम्पराश्चाऽप्यसाववर्णयत्।

(ii) **द्वितीयः परिच्छेदः -**

द्वितीये परिच्छेदे प्रथमं तावत् काव्यरचनानुकूलभाषाणां वर्णनमस्ति। ताश्च चतस्रः - संस्कृतप्राकृतापभ्रंशभूतभाषाः। काव्यस्य त्रयो भेदाः वर्तन्ते - छन्दोबद्धं गद्यबद्धं गद्यपद्यमिश्रञ्च। अस्मिन्नध्याये दोषाणामपि विवेचनमस्ति। तेषां त्रयो वर्गाः सन्ति - पददोषाः वाक्यदोषा अर्थदोषाश्च।

(iii) **तृतीयः परिच्छेदः -**

तृतीये परिच्छेदे काव्यगतदशगुणानां व्याख्या वर्तते।

---

१. ककाकुकंकके काक केकिकोकैककुः ककः।
अकुकौकः काककाक्कत्रक्काकुककुककांककुः।। वाग्भटालङ्कार ४.१२

२. काणे, पी०वी० : संस्कृत काव्यशास्त्र का इतिहास पृ० ३५७

**(iv) चतुर्थः परिच्छेदः -**

परिच्छेदे चतुर्थेऽलङ्काराणां निरूपणमस्ति। वाग्भटेन चत्वारः शब्दालङ्काराः पञ्चत्रिंशच्चाऽर्थालङ्काराः प्रोक्ताः। तदनन्तरं वैदर्भीरीत्याः गौडीरीत्याश्च निरूपणमस्ति।

**(v) पञ्चमः परिच्छेदः -**

पञ्चमे परिच्छेदे वाग्भटेन नवरसानां, नायक-नायिकाभेदानां तत्सम्बन्धिनामन्येषाञ्च विषयाणां निरूपणं विहितम्।

## ४. वाग्भटालङ्कारस्य प्राचीनटीकाः

वाग्भटप्रथमकृतवाग्भटालङ्कारेण प्रचुरा लोकप्रियताऽधिगता। अतोऽस्य ग्रन्थस्याऽनेकाष्टीकाः विद्वद्भिर्लिखिताः। नवटीकानां प्रमाणान्युपलभ्यन्ते -

**(i) जिनवर्धनसूरिकृतटीका -**

टीकायाः जिनवर्धनसूरिकृतायाः प्रकाशनं काव्यमाला सीरीज मुम्बई संस्थया कृतम्। जिनवर्धनोऽयं नरेशस्य सरतरगच्छस्य पुरोहितोऽवर्तत। टीकेयं तेन १४०५- १४१९ तमे ख्रिष्टाब्दसमये लिखिता।

**(ii) सिंहदेवगणिकृतटीका -**

टीकेयं सिहदेवगणिकृता काव्यमालासीरीज (सं० ४८) मुम्बई संस्थया प्रकाशिता।

**(iii) क्षेमहंसगणिकृतटीका -**

समासान्वयटिप्पणीनाम्नी क्षेमहंसगणिकृतटीका सम्प्रत्यप्यप्रकाशिता वर्तते।

**(iv) गणेशकृतटीका -**

विवरणनाम्नी टीका गणेशकृता गणेशभट्टेनाऽनन्तसुतेन लिखिता। परमियम-प्रकाशिताऽस्ति।

**(v) राजहंसोपाध्यायकृतटीका -**

राजहंसोपाध्यायेन जिनतिलकसूरिशिष्येण टीकेयं १३५०-१४०० ख्रिष्टाब्दमध्ये लिखिता।

**(vi) समयसुन्दरकृतटीका -**

सकलचन्द्रशिष्येण समयसुन्दरेण अहमदाबादनिवासिना टीकेयं १६२६ ख्रिष्टाब्दे लिखिता।

**(vii) अवचूरिटीका -**

अवचूरिनाम्नी टीकेयं केन कदा लिखितेत्यविज्ञातमेव।

**(viii) कृष्णशर्मकृतटीका -**

कृष्णशर्मणा टीकेयं कदाचित् प्राचीनसमये लिखिता। पर लेखकपरिचयस्त्वविदित एव।

**(ix) ज्ञानप्रमोदिका -**

**(ix) वामनाचार्यकृतटीका -**

ज्ञानप्रमोदिनीनाम्नी टीकेयं वामनाचार्यज्ञानप्रमोदगणिमहोदयेन १६२४-२५ ख्रिष्टाब्दे विरचिता।

सप्तविंशोऽध्यायः

# वाग्भटो द्वितीयः

## १. वाग्भटस्य द्वितीयस्य महत्त्वं

वाग्भटाभिधानो कश्चिद् विद्वान् काव्यानुशासनं नाम काव्यशास्त्रविषयकं ग्रन्थमलिखत्। परमयं वाग्भटो वाग्भटालङ्कारकृतो वाग्भटाद् भिन्नो ह्युत्तरवर्ती च वर्तते। काव्यशास्त्रस्येतिहासेऽयं वाग्भटद्वितीयनाम्ना प्रसिद्धः। अस्य कृतिभ्योऽन्येभ्यश्च विवरणेभ्यः स्पष्टं परिलक्ष्यते यदयं वाग्भटो वाग्भटालङ्कारकारवाग्भटान्नामैक्ये सत्यपि भिन्नः। द्वयोर्वाग्भटयोर्मध्ये समयस्य दीर्घान्तरालोऽवर्तत।

वाग्भटो द्वितीयः पूर्ववर्तिनं वाग्भटालङ्कारकारं वाग्भटं स्वकाव्यानुशासनेऽवर्णयत्। तेन लिखितम् -

असौ (वाग्भटः) काव्ये दशगुणान् प्रतिपादितवान् परं काव्ये गुणास्त्रय एव भवन्ति।[१]

## २. वाग्भटद्वितीयस्य समयः परिचयश्च

काव्यानुशासनकारस्य वाग्भटस्य जीवनवृत्तविषये नाधिका सूचना सामग्री वा प्राप्यते। एतावानेव परिचयस्तस्य ज्ञायते, यज्जैनमतावलम्बिनस्तस्य जनको नेमिकुमारनामाऽवर्तत। लेखकेन स्वग्रन्थे मेदपाट(मेवाड़)राहणपुरनलोटकपुरादीनां स्थानानां वर्णनं कृतम्। अतोऽसौ मेवाड़निवासीत्यनुमीयते।

वाग्भटद्वितीयेन काव्यानुशासने मम्मटवाग्भटयोरुल्लेखो विहितः। अतोऽस्य समयस्तदुत्तरवर्ती द्वादशशताब्दीपश्चात्कालीनो भवितव्यः। विदुषां समीक्षकाणां सम्मतिरस्ति, यदसौ चतुर्दशशताब्द्यां बभूव।

## ३. वाग्भटद्वितीयस्य कृतयः

काव्यानुशासनं वर्तते वाग्भटद्वितीयस्य काव्यशास्त्रविषयिका प्रसिद्धा कृतिः। ग्रन्थेऽस्मिन् तेन ऋषभदेवचरितछन्दोऽनुशासनग्रन्थयोरुल्लेखः कृतः। इमौ ग्रन्थौ तद्रचिताववेति समीक्षकाणां कल्पना। परमेतौ न वर्तमानसमये लभ्येते।

## ४. काव्यानुशासनम्

वाग्भटद्वितीयकृतं काव्यानुशासनं हेमचन्द्रकृतकाव्यानुशासनग्रन्थाद् भिन्नमेव ज्ञातव्यम्। मूलरूपेणाऽयं ग्रन्थो गद्यनिबद्धसूत्रेषु लेखकेन लिखितः। सूत्राणि व्याख्यातुं वाग्भटेन स्वयमेवाऽस्याऽलङ्कारतिलकनाम्ना वृत्तिः प्रस्तुता। अथ चोदाहरणैर्नियमानां

१. दण्डिवामनवाग्भटादिप्रणीताः दश काव्यगुणाः, परन्तु माधुर्यौजःप्रसादलक्षान् त्रीनेव गुणान् मन्यामहे। काव्यानुशासनवृत्ति पृ० ३१

पुष्टिर्विहिता। ग्रन्थकारेण सूत्राणि स्वयं लिखितानि, परं वृत्तिभागस्य प्रचुरोंऽशोऽन्येभ्यो ग्रन्थेभ्यो गृहीतः। उदाहरणानाञ्च सङ्ग्रहोऽप्यन्येभ्यो ग्रन्थेभ्यः सङ्कलितः। काव्यमीमांसाकाव्य-प्रकाशादिभ्यो ग्रन्थेभ्यो लेखकेन सामग्रीसङ्कलनं कृतम्।

पञ्चस्वध्यायेषु विभक्ते काव्यानुशासने सर्वेषां काव्याङ्गानां निरूपणं वर्तते। अध्यायक्रमेणाऽस्य विषयवस्तूनि निम्नप्रकारेण वर्ण्यन्ते -

(i) **प्रथमोऽध्यायः -**

काव्यानुशासनस्य प्रथमेऽध्याये लेखकः प्रथमं काव्यप्रयोजनान्युक्त्वा काव्यहेतूनाह। काव्यरचनायाः मुख्यो हेतुर्वर्तते - प्रतिभा। व्युत्पत्त्यभ्यासौ सहायकौ प्रतिभायाः वर्तेते। तदनन्तरं प्रथमाध्याये कविसमयान् वर्णयित्वा वाग्भटः काव्यस्वरूपं काव्यभेदांश्च व्याचख्यौ। अथ महाकाव्याख्यायिकाकथाचम्पूमिश्रकाव्यानां परिभाषाः वर्तन्ते। तदनन्तरञ्च दशरूपकाणां गेयकाव्यानाञ्च विवेचनमस्ति।

(ii) **द्वितीयोऽध्यायः -**

अध्याये द्वितीये दोषाणां गुणानाञ्च विवेचना वर्तते। अत्र षोडशपदवाक्यदोषा-णाञ्चतुर्दशार्थदोषाणाञ्च निर्देशो विद्यते। तदनन्तरं गुणानां निर्देशो वर्तते। अत्र वाग्भटद्वितीयेन प्रोक्तम् -"दण्डिवामनवाग्भटादयो दश गुणानाहुः। परं गुणास्त्रय एव भवन्ति - माधुर्यौजःप्रसादाः।"

(iii) **तृतीयोऽध्यायः -**

अध्याये तृतीयेऽर्थालङ्काराणां निरूपणमस्ति। अत्र वाग्भटेन द्विषष्ट्यलङ्काराः निरूपिताः। तत्र अन्यापरपूर्वलेशपिहितमतोभयन्यासभावाशिषोऽलङ्काराः नवा अन्यग्रन्थ-व्यतिरिक्ताश्च सन्ति।

(iv) **चतुर्थोऽध्यायः -**

अध्याये चतुर्थे शब्दालङ्काराणां व्याख्यानं विद्यते। वाग्भटद्वितीयेन षट् शब्दालङ्काराः प्रोक्ताः - चित्रश्लेषानुप्रासवक्रोक्तियमकपुनरुक्तवदाभासाः।

(v) **पञ्चमोऽध्यायः -**

अध्याये पञ्चमे रसानां रसदोषाणाञ्च विवेचनमस्ति। प्रथमं तावन्नवरसानां तत्प्रतिपादकविभावानुभावव्यभिचारिभावानां निरूपणं विद्यते। तदनन्तरं नायकनायिकाभेदानां प्रेम्णो दशावस्थानामित्यादितत्त्वानां वर्णनं विद्यते। अथ ग्रन्थस्यान्ते लेखको रसदोषान् समैक्षत।

काव्यानुशासनग्रन्थस्याध्ययनेन प्रतीयते, यदत्र प्राचीनकाव्यशास्त्राचार्याणां मन्तव्यानि विवेचनानि विश्लेषणानि चैव बाहुल्येन सङ्गृहीतानि वर्तन्ते। मौलिकता नवोद्भावना वाऽतिन्यूना। लेखकेन स्वग्रन्थेऽनेके प्राचीनग्रन्थाः ग्रन्थकाराश्चोद्धृताः सन्ति।

अब्धिमन्थनकाव्यप्रकाशचन्द्रप्रभकाव्यत्रिविक्रमदमयन्तीनेमिनिर्माणबालरामायण-भीमकाव्यराजीमतीपरित्यागपद्यमयीकथावासवदत्ताविष्णुविजयशृङ्गारतिलकानन्दवर्धनशीलादयोऽत्र वर्णिताः सन्ति।

अष्टाविंशोऽध्यायः

# हेमचन्द्रः

## १. हेमचन्द्रस्य महत्त्वं परिचयः समयश्च

काव्यानुशासनग्रन्थस्य रचयिता हेमचन्द्रः स्वविद्याप्रभावेण गुर्जरप्रदेशे परां प्रसिद्धिमवाप। जैनमतावलम्बिना तेन अन्येषामप्यनेकेषां ग्रन्थानां रचना कृता। असौ गुर्जरप्रदेशनरपतीनां गुरुरवर्तत।

हेमचन्द्रस्य जीवनवृत्तसमयादिसम्बन्धिनी प्रचुरा सामग्री समुपलभ्यते। सोमप्रभकृत-कुमारपालप्रतिरोधे (१२०५ ई०), प्रभाचन्द्ररचितप्रभावकचरिते (१२०० ई०), मेरुतुङ्गरचित-प्रबन्धचिन्तामणौ (१३०७ ई०), राजशेखरकृतप्रबन्धकोषे (१४०५ ई०) च हेमचन्द्रजीवनवृत्तविषयिका पुष्कलसामग्री सन्निहिताऽस्ति।

एतेषां ग्रन्थानामध्ययनेन ज्ञायते - हेमचन्द्रोऽहमदाबादजनपदस्य धुन्धुकनामनि ग्रामे ११४५ वैक्रमाब्दे (१०८८ ई०) जन्म लेभे। मौडवैश्यजातीयस्याऽस्य जनकश्चाचो जननी च पाहिनी ह्यवर्तत। असौ बाल्यावस्थायां चंगदेवनाम्नाऽभिहितः। गुरुणा देवचन्द्रेण तस्य शिक्षणं ११६६ वैक्रमाब्दे (११०९ ई०) प्रारब्धम्। असौ सूरिपदेन ह्याचार्यपदेन च सम्मानितो बभूव। १२२९ वैक्रमाब्दे (११७२ ई०) तेन निर्वाणं प्राप्तम्।

हेमचन्द्रो गुर्जरप्रदेशस्य चालुक्यवंशीयानां नरपतीनां गुरुपदमलञ्चकार। अनहिलपाटननरेशस्य सिद्धराजजयसिंहस्या(१०९३-११४३ ई०)ऽसौ गुरुरवर्तत।

जयसिंहसुतः कुमारपालश्चाऽपि (११४३-११७२ ई०) तस्य शिष्यत्वमुपागतः। जयसिंहस्याऽनुरोधेन हेमचन्द्रः सुप्रसिद्धं व्याकरणग्रन्थं शब्दानुशासनं (सिद्धहेमचन्द्रम्) प्रणिनाय। तदनन्तरं तेन काव्यानुशासनं लिखितम्। एतयोर्ग्रन्थयोः कुमारपालस्योल्लेख-भावादनुमीयते, यदेतौ ग्रन्थौ तेन ११४३ ख्रिष्टाब्दात् पूर्वमेव लिखितौ।

## २. हेमचन्द्रस्य कृतयः

हेमचन्द्रस्य काव्यशास्त्रविषयको ग्रन्थो वर्तते - काव्यानुशासनम्। तदतिरिक्तान-प्यनेकान् ग्रन्थानसावलिखत्। आफ्रेक्टमहोदयेन कैटालोगसकैटागोरम ग्रन्थे हेमचन्द्ररचित-ग्रन्थानां सूची निम्नक्रमेण प्रस्तुता -

१. अनेकार्थकोष
२. अनेकार्थशेष

३. अभिधानचिन्तामणि
४. अलङ्कारचूडामणि
५. उणादिसूत्रवृत्ति
६. काव्यानुशासन
७. छन्दोऽनुशासन
८. छन्दोऽनुशासनवृत्ति
९. देशीनाममाला
१०. द्व्याश्रयकाव्य
११. धातुपाठ
१२. धातुपारायण
१३. धातुमाला
१४. नाममाला
१५. नाममालाशेष
१६. निघण्टुशेष
१७. प्रमाणमीमांसा
१८. बलाबलसूत्रबृहद्वृत्ति
१९. बालभाषाव्याकरणसूत्रवृत्ति
२०. योगशास्त्र
२१. विभ्रमसूत्र
२२. लिङ्गानुशासन
२३. शब्दानुशासन
२४. शेषसङ्ग्रह
२५. शेषसङ्ग्रहसारोद्धार

ग्रन्थेष्वेतेषु हेमचन्द्रकृतकाव्यानुशासनं काव्यशास्त्रस्येतिहासे महनीययशोभाजनं बभूव।

## ३. काव्यानुशासनम्

हेमचन्द्रकृतकाव्यानुशासनं काव्यशास्त्रविषयकग्रन्थेषु महनीयं गण्यते। ग्रन्थकृता प्रोक्तम् - "शब्दानुशासनेऽसौ वाचः सम्यग् विवेच्य साम्प्रतं काव्यानुशासनं प्रणीय तासां काव्यत्वस्याऽनुशासनं विदधाति।[1] अष्टस्वध्यायेषु विभक्तस्याऽस्य ग्रन्थस्य त्रयो भागाः

---

१. शब्दाऽनुशासनेऽस्माभिः साध्व्यो वाचो विवेचिताः।
तासामिदानीं काव्यत्वं यथावदनुशिष्यते।। काव्यानुशासनम् १.२

वर्तन्ते - कारिकाः वृत्तय उदाहरणानि च। अत्र कारिकाभागः काव्यानुशासनमित्युच्यते। वृत्त्युदाहरणभागौ ह्यलङ्कारचूडामणिरिति नाम्ना प्रसिद्धौ। एनं ग्रन्थं ग्रन्थकारः स्वयमेव विवेकटीकया व्याख्यातवान्। यद्यपि हेमचन्द्रेण विवेकटीका वृत्तिं व्याख्यातुं लिखिता, तथापि तया टीकया नवार्था अपि प्रतिपाद्यन्ते। लेखकेन स्वयमेव तथ्यमिदं स्पष्टीकृतम्।[१] टीकेयं केषुचित्स्थानेष्वपूर्णेवोपलभ्यते।

अष्टस्वध्यायेषु विभक्तस्य काव्यानुशासनस्य विषयवस्त्वध्यायक्रमेण निम्नप्रकारेण वर्ण्यते -

(i) **प्रथमोऽध्यायः -**

प्रथमेऽध्याये मङ्गलाचरणानन्तरं हेमचन्द्रः काव्यप्रयोजनान्युक्त्वा काव्यहेतून्नुपदिदेश। तदनन्तरं तेन काव्यपरिभाषा, काव्यभेदाः गुणानामलङ्काराणाञ्च स्वरूपं, शब्दार्थयोः स्वरूपञ्चेति विषयाः व्याख्याताः। अथ चाऽसौ मुख्यार्थं गौणार्थञ्च व्याख्याय व्यङ्ग्यार्थं सभेदं न्यरूपयत्।

(ii) **द्वितीयोऽध्यायः -**

द्वितीयोऽध्यायो रसविषयको वर्तते। अत्र शास्त्रकारो रसस्वरूपं, रसभेदान्, नवरसस्वरूपाणि, स्थायिभावसात्त्विकभावरसादीन् न्यरूपयत्।

(iii) **तृतीयोऽध्यायः -**

तृतीयेऽध्याये काव्यदोषाणां विवेचना विद्यते। अत्र शास्त्रकृता रसदोषाणां पददोषाणां वाक्यदोषाणां पदवाक्यदोषाणामर्थदोषाणाञ्च निरूपणं विहितम्।

(iv) **चतुर्थोऽध्यायः -**

चतुर्थोऽध्यायो वर्तते - गुणविवेचनविषयकः। गुणास्त्रयो भवन्ति - माधुर्यौजःप्रसादाः। अत्र तेषां स्वरूपस्य व्यञ्जकतत्त्वानाञ्च विवेचनमस्ति।

(v) **पञ्चमोऽध्यायः -**

पञ्चमेऽध्याये शब्दालङ्काराः निर्दिष्टाः सन्ति। अस्मिन्नध्याये षण्णां शब्दालङ्काराणां निरूपणमस्ति। ते च सन्ति - अनुप्रासयमकचित्रश्लेषवक्रोक्तिपुनरुक्तवदाभासाः।

(vi) **षष्ठोऽध्यायः -**

षष्ठेऽध्यायेऽर्थालङ्काराः सन्ति। अत्र हेमचन्द्रेण उपमारूपकनिदर्शनादीपकान्योक्ति-पर्यायोक्तातिशयोक्त्याक्षेपविरोधसहोक्तिसमासोक्तिविभावनाजातिव्याजस्तुतिश्लेष-व्यतिरेकार्थान्तरन्याससन्देहापह्नुतिपरावृत्त्यनुमानस्मृतिभ्रान्तिविषमसमसमुच्चयपरि-

---

१. विवरीतुं क्वचिद् द्रब्धं नवं सन्दर्भितं क्वचित्।
काव्यानुशासनस्याऽयं विवेकः प्रवितन्यते।। काव्यानुशासनम् - विवेकटीकाप्रारम्भे

संख्याकारणमालासङ्कराणामित्येकोनत्रिंशदलङ्काराणां विवेचनं कृतम्। हेमचन्द्रो रसवदाद्यलङ्कारान् न न्यरूपयत्।

(vii) **सप्तमोऽध्यायः** -

सप्तमेऽध्याये नायकनायिकानां भेदानां गुणानाञ्च वर्णनमस्ति। स्त्रीणां विंशतिः स्वाभाविका अलङ्कारा अप्यत्र हेमचन्द्रेण निर्दिष्टाः।

(viii) **अष्टमोऽध्यायः** -

अष्टमेऽध्याये काव्यभेदानां विवेचनमस्ति। प्रथमं काव्यस्य श्रव्यप्रेक्ष्यौ भेदावुक्तौ। अथ तयोरन्ये प्रभेदाः शास्त्रकृता प्रोक्ताः।

काव्यानुशासने हेमचन्द्रः प्रायशः सर्वाण्येव काव्याङ्गानि न्यरूपयत्। परन्तु काव्यशास्त्रस्येतिहासे ग्रन्थेन काव्यानुशासनेन हेमचन्द्रकृतेन न तथा महत्त्वमधिगतं यथा मम्मटादिकृतमौलिकग्रन्थानां विद्यते। अयं सङ्ग्रहग्रन्थ एव गण्यते समीक्षकैर्यत्र प्राचीनाचार्याणां मन्तव्यानां सिद्धान्तानाञ्च समन्वयः सङ्कलितो वर्तते। काव्यानुशासनप्रणयने हेमचन्द्रः प्राधान्येन सलोचनं ध्वन्यालोकं मम्मटकृतं काव्यप्रकाशं राजशेखरकृतकाव्यमीमांसाञ्चाऽऽशिश्रिये। स्वयमेव हेमचन्द्रेण केषुचित् स्थानेषु लिखितम् -

"स्वग्रन्थनिर्माणेऽसौ भरतस्याऽभिनवगुप्तस्य च ग्रन्थानाधाररूपेण स्वीचकार।

काव्यानुशासने हेमचन्द्रः १५०० श्लोकानुदाहरणरूपेण प्रास्तौत्। तान्युदाहरणानि तेन प्राचीनग्रन्थेभ्यः सङ्गृहीतानि। तेनाऽनेके प्राचीनाऽऽचार्या लेखकाः ग्रन्थाश्च स्वग्रन्थे समुल्लिखिताः। केचन नामान्यधोलिखितानि वर्तन्ते -

अवन्तिसुन्दरी, उषाहरणं, दण्डी, भट्टतौतो, भट्टनायकः, पञ्चशिखः, शूद्रककथा, भामहविवरणं, भोजराजो, मम्मटो, मङ्गलो मायुराजो, यायावरीयो, रावणविजयं, वामनो, राहुलो, राजशेखरो, हरविलासो, हरिप्रबोधो, हृदयदर्पणमित्यादयः।

हेमचन्द्रो न केवलं सङ्ग्रहकर्ता वर्तते, अनेन ह्यनेकेषु प्रसङ्गेषु प्राचीनाचार्येभ्यो भिन्नानि मन्तव्यानि प्रस्तुतानि। अथ च मौलिकत्वमपि प्रदर्शितम्।

अथ काव्यप्रयोजनप्रतिपादने लक्षणायाश्च वर्गीकरणे तेन मम्मटाद् भिन्नो मार्गः प्रदर्शितः। तथाप्यधिकांशतोऽसौ प्राचीनाचार्याननिवाऽनुससार। यद्यपि परवर्तिष्वाचार्येषु हेमचन्द्रस्य प्रभावः स्वल्प एव परिलक्ष्यते, प्रमाणरूपेण च नाऽसौ परवर्तिभिराचार्यैर्बहुश उद्धृतः, तथापि तस्य वैदुष्यं प्रौढत्वञ्च नोपेक्षितुं शक्यम्।

---

एकोनत्रिंशोऽध्यायः

# अमरचन्द्रः

## १. अमरचन्द्रस्य महत्त्वम्

संस्कृतकाव्यशास्त्रस्येतिहासेऽमरचन्द्रस्य विशिष्टं महत्त्वं वर्तते। यद्यपि काव्याङ्गानां विवेचनमनेन न कृतं तथापि काव्यरचनां व्यावहारिकरूपेण शिक्षयितुमसौ प्रशंसनीयं प्रयासमकरोत्। काव्यशिक्षाप्रदाः ग्रन्थाः कविशिक्षेत्यभिधीयन्ते। काव्यनिर्माणशिक्षाविषयमधिकृत्य तेन काव्यकल्पलतेति ग्रन्थो लिखितः।

## २. काव्यकल्पलताग्रन्थस्य लेखकः

काव्यकल्पलता नैकस्यैव लेखकस्य कृतिः सम्भाव्यते। इयमरिसिंहामरचन्द्रयोः सम्मिलिता कृतिर्वर्तते। अस्य ग्रन्थस्य लेखनकार्यमरिसिंहः प्रारभत। परं कैश्चिदप्यविज्ञातैर्हेतु-भिर्नाऽसौ तत्कार्यं सम्पूरयितुं समर्थो बभूव। तदनन्तरममरचन्द्रस्तं ग्रन्थं पूर्णमकरोत्। प्रथमं तावत् काव्यकल्पलताग्रन्थः सूत्ररूपेण लिखित आसीत्। तं व्याख्यातुममरचन्द्रो वृत्तिमपि लिलेख, या च कविशिक्षावृत्तिनाम्ना काव्यकल्पलतावृत्तिनाम्ना वा प्रथिता सञ्जाता। वृत्तिपुष्पिकायाममरचन्द्रेण स्वयमेव लिखितम् -

"ग्रन्थस्यास्य निर्मितिर्मयाऽरिसिंहेन च विहिता, अत्र तस्य व्याख्या क्रियते।[1] "

## ३. ग्रन्थकर्तुः परिचयः

अरिसिंहामरचन्द्रावेकस्य जिनदाससूरिनाम्नो गुरोः शिष्यावास्ताम्। एवं तौ सहाध्यायिना-ववर्तेताम्। अरिसिंहस्य जनको लावण्यसिंहो लवणसिंहो वा सुकृतसङ्कीर्तनाभिधानं काव्य-मेकमलिखत्। अस्मिन् काव्येऽसौ ढोलका(गुजरात)धीश्वरस्य धीरधवलस्य मन्त्रिणं जैनमतावलम्बिनं वस्तुपालं प्रशशंस। धीरधवलो वस्तुपालश्च त्रयोदशशताब्दिकौ गण्येते। अतोऽरिसिंहामरचन्द्रयोः समयोऽपि त्रयोदशशताब्दिकोऽवगन्तव्यः।

## ४. अमरचन्द्रस्य कृतयः

परमविदुषा मनीषिणा लेखकेनाऽमरचन्द्रेण काव्यकल्पलता तु कृता, परमन्येऽप्यनेके ग्रन्थास्तेन विरचिताः। तस्य द्वे काव्ये प्रसिद्धेस्तः - जिनेन्द्रचरितं (पद्मानन्दकाव्यम्) बालभारतञ्च। अथ चैको व्याकरणग्रन्थोऽपि तेन लिखितः - "स्यादिशब्दसमुच्चयः"। काव्यकल्पलतावृत्तावमरचन्द्रः स्वरचितकाव्यशास्त्रविषयकग्रन्थत्रयस्योल्लेखमकरोत् -

१. किञ्चिच्च तद्रचितमात्मकृतञ्च किञ्चित्।
व्याख्यास्यते त्वरितमात्मकृतेऽत्र सूत्रम्।। काव्यकल्पलतावृत्तिः पृ० १

छन्दोरत्नावली काव्यकल्पलतापरिमलमलङ्कारप्रबोधश्च। परं नैते ग्रन्थाः वर्तमानसमये समुपलभ्यन्ते।

### ५. काव्यकल्पलता

विशालकायोऽयं ग्रन्थोऽमरचन्द्रस्य कवितारहस्यनाम्नाऽपि प्रसिद्धो वर्तते। ग्रन्थोऽयं चतुर्षु प्रतानेषु विभक्तः, प्रतानाश्चाऽनेकेषु स्तबकेषु (अध्यायेषु) विभक्ताः सन्ति।

प्रथमे प्रताने छन्दःसिद्धिविवेचना विद्यते। द्वितीये प्रताने शब्दसिद्धिवर्णनमस्ति। तृतीये प्रताने श्लेषसिद्धिकथनं लेखकेन कृतम्। चतुर्थे च प्रतानेऽर्थसिद्धिविषयाणां निरूपणमस्ति।

### ६. काव्यकल्पलतावृत्तिः

काव्यकल्पलताग्रन्थं व्याख्यातुं विवरीतुं वा स्वयममरचन्द्रेण वृत्तिर्लिखिता, या काव्यकल्पलतावृत्तिनाम्ना वा कविशिक्षावृत्तिनाम्ना वा काव्यकल्पलतापरिमलनाम्ना वा प्रथिता बभूव।

शुभविषयगणिनाम्ना विदुषा ग्रन्थस्याऽस्य टीका मकरन्दनाम्नी १६०९ खिष्टाब्दे लिखिता।

त्रिंशोऽध्याय:

## देवेश्वर:

### १. देवेश्वरस्य महत्त्वं परिचयश्च

कविशिक्षाविषयमधिकृत्य देवेश्वरो नाम मनीषी कविकल्पलताऽभिधानं सुप्रसिद्धं सुललितं ग्रन्थं प्रणिनाय। लेखकोऽसौ देवेन्द्रनाम्नाऽपि प्रथितो बभूव। मालवजनपदाधीश्वरस्य महामात्यस्य वाग्भटस्याऽसौ सुतोऽवर्तत।

देवेश्वरश्चतुर्दशशताब्दीपूर्वार्द्धकालीनोऽवगम्यते। ग्रन्थारम्भेऽसावलिखत् -

" ग्रन्थमेनं प्रणेतुं तेनाऽमरचन्द्रस्य कृतिः काव्यकल्पलताऽऽश्रिता।

अतो देवेश्वरोऽमरचन्द्रोत्तरवर्ती कल्पनीयः।

देवेश्वरस्य पद्यमेकं शार्ङ्गधरपद्धतावुद्धृतमस्ति। सूक्तिसंग्रहस्य शार्ङ्गधरपद्धतिग्रन्थस्य रचना १३६२ तमे ख्रिष्टाब्दे सञ्जाता। देवेश्वरस्तत्पूर्वकालीनोऽवर्तत। देवेश्वरस्य समयः १२४०-१३९३ ख्रिष्टाब्दमध्यवर्ती भवितव्यः। अतो देवेश्वरो ध्रुवं चतुर्दशशताब्दीपूर्वार्द्धक एव मन्तव्यः।

### २. कविकल्पलता

कविकल्पलताग्रन्थं प्रणेतुं देवेश्वरोऽमरचन्द्रकृतकाव्यकल्पलताग्रन्थमेवाऽऽदर्शरूपेणाऽङ्गीचकार। स्वग्रन्थस्याऽनेकेषु स्थानेषु लक्षणेषु नियमेषु च तेनाऽमरचन्द्रकृतिरक्षरश उद्धृता।

### ३. कविकल्पलताटीकाः

कविकल्पलताग्रन्थमधिकृत्य ह्यनेकैर्विद्वद्भिष्टीकाः प्राचीनसमये लिखिताः। अनेनाऽस्य ग्रन्थस्य लोकप्रियत्वमनुमीयते। निम्नलिखितटीकानां प्रमाणान्युपलभ्यन्ते -

(i) देवेश्वरेण स्वयंकृता टीका
(ii) बेचाराललिखिता सार्वभौमटीका
(iii) रामगोपालकविरत्नकृता टीका
(iv) सूर्यकविकृता बालबोधिनी टीका
(v) विवेकटीका

# धनञ्जयः

## १. धनञ्जयस्य महत्त्वम्

सारगर्भितं नाट्यशास्त्रविषयकं दशरूपकं विरच्य धनञ्जयेन काव्यशास्त्रस्येतिहासे महती प्रसिद्धिरधिगता। यद्यपि दशरूपकं विशेषेण नाट्यशास्त्रीयविषयान् व्याचष्टे, तथापि रसस्य विशिष्टविवेचनहेतोरयं ग्रन्थः काव्यशास्त्रीयग्रन्थेषु विशिष्टगौरवमधिजगाम। भरतस्य नाट्यशास्त्रमनु धनञ्जयस्य दशरूपकमेव विशेषेण माहात्म्यं दधाति। केषाञ्चिदन्येषां नाट्यशास्त्रीयग्रन्थानां लेखनसम्भावनायां सत्यामपि न ते ग्रन्थाः वर्तमानसमये समुपलभ्यन्ते। दशमशताब्द्यां धनञ्जयेनेयं रिक्तता दशरूपकं विरच्य सम्पूरिता। यदि च मध्यकाले किमपि कार्यं गणनीयं वर्तते, तत्त्वभिनवगुप्तकृता भरतनाट्यशास्त्रस्याऽभिनवभारती टीकाऽवगन्तव्या।

अतिविशालकाये नाट्यशास्त्रेऽनेकेषां विषयाणां समावेशः समजायत। तत्र प्रवेशस्ततस्तदुत्तरणं विशिष्टविद्वद्भ्योऽपि सुकठिनमेव। तत् संक्षिप्य धनञ्जयो नाट्यशास्त्राभिरुचिहृदयान् सहृदयानुपचकार।[1]

धनञ्जयकृतदशरूपकस्याऽवलोकटीका तस्यैवाऽनुजेन धनिकेन कृता प्रसिद्धा। तां टीकां विना ग्रन्थोऽयमपूर्ण एवाऽवगन्तव्यः। ग्रन्थस्याऽस्य प्रकाशनं प्रायः सावलोकमेवाऽवलोक्यते।

## २. धनञ्जयस्य जीवनवृत्तं समयश्च

धनञ्जयस्य परिचयसमयादिविषयेऽद्यतनीनः पाठको न नितान्तमपरिचितः। स्वयमेव तेन सूचितं यद् दशरूपकमिदं मुञ्जमहीशराजसभासदस्येन विष्णुसूनुना विरचितम्।[2]

---

१. उद्धृत्योद्धृत्य सारं यमखिलनिगमान्नाट्यवेदं विरिञ्चि-
श्चक्रे यस्य प्रयोगं मुनिरपि भरतस्ताण्डवं नीलकण्ठः।
शर्वाणी लास्यमस्य प्रतिपदमपरं लक्ष्मकः कर्तुमीष्टे
नाट्यानां किन्तु किञ्चित् प्रगुणरचनया लक्षणं संक्षिपामि।। दशरूपक १.१

२. विष्णोः सुतेनाऽपि धनञ्जयेन
विद्वन्मनोरागनिबन्धहेतुः।
आविष्कृतं मुञ्जमहीशगोष्ठी-
वैदग्ध्यभाजा दशरूपमेतत्।। दशरूपक ४.८६

लेखेनाऽनेन सिद्धमेव यद्धनञ्जयो मुञ्जराजशासनकाले दशरूपककारिकाः न्यबध्नात्। प्रतिहारवंशीयस्याऽस्य नरपतेर्धारानगरी राजधान्यवर्तत। वाक्पतिराजापराभिधानेनाऽप्यसौ प्रसिद्धोऽवर्तत। मुञ्जानन्तरं तस्याऽनुजः सिन्धुराजस्तदनन्तरञ्च सिन्धुराजसुतो भोजराजो राजसिंहासनमध्यतिष्ठत्। विद्याव्यसनी शारदोपासको भोजराजो विदुषामाश्रयदाता समादरकर्ता च लोके प्रसिद्धः। स्वयमप्यसौ विविधविधानिबद्धानां ग्रन्थानां प्रभूतसंख्यां लोकोपकारहेतो-र्निबबन्ध।

इतिहासप्रसिद्धिरियं मालवराजो मुञ्जो गुर्जरजनपदाधिपस्तैलपश्च द्वावेव परस्परं प्रायशो युद्धसाम्मुख्यशीलाववर्तेताम्। एकस्मिन्नवसरे समराङ्गणे पराजितो मुञ्जो लोहशृंखलानिबद्धस्तैलपेन गुर्जरराजेनाऽनहिलपाटननगरे समानीतो प्रथमं कारागारे निबद्धः पुनः मृत्युदण्डेन दण्डितो यमालयं प्रेषितः। युद्धोऽयं ९९३-९९९ खिष्टाब्दे बभूवेत्यनुमीयते। तस्य मुञ्जस्य शासनसमयावधिर्यदि विंशतिवर्षीयोऽनुमीयते, तच्छासनं ९७४-९९४ ख्रिष्टाब्दकालीनमवधारणीयम्। तस्मिन्नेवावधिमध्ये धनञ्जयेन दशरूपककारिका आविष्कृताः। अतो दशरूपककारिकाणां रचनाकालो दशमशताब्द्युत्तरार्धको निर्धारणीयः।

### ३. धनिकः

धनिककृतावलोकटीकां विना दशरूपकमपूर्णमेव विद्वद्भिरनुमीयते। धनिकः स्वयमेवाऽऽत्मानं विष्णुसुतं सूचयति। दशरूपकस्य चतुर्ष्वेव प्रकाशेषु टीकान्तभागे धनिकः स्वात्मानं विष्णुसुतं परिचाययामास।[1] अतो धनिकस्य धनञ्जयानुजभावः सुनिश्चितः। अवलोकटीका च तेन दशरूपककारिकारचनानन्तरं कञ्चित्समयं व्यतीत्य लिखिता।

अवलोकटीकायां धनिकेन नवसाहसाङ्कचरितस्य कानिचित् पद्यान्युद्धृतानि। काव्यञ्चेदं मुञ्जानुजसिन्धुराजशासनकाले परिमलगुप्तेन विरचितम्। अतो रचनाक्रमोऽयमवगन्तव्यः -

मुञ्जशासनकाले धनञ्जयेन दशरूपककारिका आविर्भाविताः। तदनन्तरं सिन्धुराज-शासनसमये परिमलगुप्तेन नवसाहसाङ्कचरितकाव्यं निबद्धम्। तदनन्तरञ्च धनञ्जयस्या-ऽनुजेन धनिकेनाऽवलोकटीका लिखिता।

दशरूपकावलोकटीका धनिकेन लिखिता। अथ चाऽसौ काव्यनिर्णयाभिधानमपि ग्रन्थं लिलेखेति लोके प्रसिद्धिः। परं नाऽसौ ग्रन्थो वर्तमानसमये समुपलभ्यते। केवलं तस्य ग्रन्थस्य केचन श्लोका अवलोकटीकायामुल्लिखिताः दृश्यन्ते।

### ४. धनञ्जयो धनिकश्च

केषाञ्चिदितिहासविदां समीक्षकाणां मनीषिणां मन्तव्यमिदं यद् दशरूपकं सावलोकटीकमेकस्यैव लेखकस्य कृतिरिति। तेन धनञ्जयधनिकयोरभिन्नत्वं निश्चीयते। परमियं धारणा भ्रान्तिपूर्णा निराधारा चाऽवगन्तव्या। परं मन्तव्यस्याऽस्य निम्नाङ्किताः हेतवः कथ्यन्ते -

---

१. इति विष्णुसूनोर्धनिकस्य कृतौ दशरूपकावलोके प्रथमः प्रकाशः समाप्तः।

(i) केषुचिदलङ्कारशास्त्रग्रन्थेषु दशरूपकं धनिकविरचितं प्रोक्तम्।

(ii) विनावलोकं दशरूपककारिकाणामवबोधो दुष्करः।

(iii) अवलोकटीकयैव दशरूपककारिकाणां ह्यर्थसङ्गतिर्व्याख्या च परिपूर्णा भवति।

परं हेतवो ह्येते न स्वसाध्यसाधने समर्थाः सन्ति। अवलोकटीकायामेव कानिचिद् वर्णनानि कारिकाकारस्य वृत्तिकारस्य च भिन्नव्यक्तित्वं प्रमाणयन्ति।

### ५. धनञ्जयस्य कृतयः

धनञ्जयस्य कृतिरेकैव समुपलभ्यते दशरूपकम्। नाऽन्यस्य कस्यचित् प्रबन्धस्य धनञ्जयरचितस्य सङ्केतमात्रमपि क्वचिल्लभ्यते।

### ६. दशरूपकम्

दशरूपके नाट्यशास्त्रविषयाः धनञ्जयेन सङ्कलिताः। ग्रन्थोऽयं दशरूपनाम्नाऽपि लोके प्रथितां गतः। चतुर्षु प्रकाशेषु विभक्तेऽस्मिन् ग्रन्थे द्व्यधिकशतत्रय (३०२) कारिकाः (श्लोकाः) वर्तन्ते। कारिकासु धनिककृता वृत्तिर्गद्यमयी वर्तते। उदाहरणानामपि सङ्ग्रहो धनिककृतो वर्तते। दशरूपकस्य विषयवस्तु संक्षेपेण निम्नप्रकारेण वर्णयितुं शक्यते -

**(i) प्रथमः प्रकाशः**

प्रथमे प्रकाशे प्रथमं तावद् धनञ्जयो गणेशस्य विष्णोर्भरतस्य सरस्वत्याश्चाऽभिवन्दनमकरोत्। तदनन्तरं दशरूपकाणि कथयित्वा नृत्तनृत्यनाट्यलास्यताण्डवानां स्वरूपं तेनोद्घाटितम्। ततः कथानकस्य (वस्तुनः) समालोचना विद्यते। रूपकं तु वस्तुनेतृरसैर्भिद्यते।

कथावस्तुसमीक्षायां तस्य भेदा अर्थप्रकृतयः कार्यावस्थाः सन्धयः सन्ध्यङ्गानीति वस्तुतत्त्वानि सविस्तरं सभेदं ग्रन्थकृता व्याख्यातानि। सूच्यान्यभिनेयानि च वस्तूनि निर्दिष्टानि। अर्थोपक्षेपकाणां विष्कम्भकप्रवेशकचूलिकाऽङ्कास्याऽङ्कावताराणां परिभाषाः व्याख्याताः। संवादभेदानां सर्वश्राव्याश्राव्यनियतश्राव्यजनान्तिकापवारितकाकाशभाषितानां लक्षणान्यत्र धनञ्जयेन निगदितानि।

**(ii) द्वितीयः प्रकाशः -**

द्वितीये प्रकाशे पात्र(नेतृ)वैशिष्ट्यविवेचनं विद्यते। लेखकः प्रथमं नायकस्वरूपमुक्त्वा तस्य चतुर्णां भेदानां धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्तानां सप्रभेदं व्याख्यानमकरोत्। नायकसहायकानामन्येषाञ्च पुरुषपात्राणां वैशिष्ट्यान्यपि तेन वर्णितानि। तदनन्तरं ग्रन्थकृता नायिकाभेदाः प्रोक्ताः।

नायिकास्त्रिविधाः भवन्ति - स्वीयाऽन्या साधारणस्त्री च। तत्र नायिकानां भेदाः प्रभेदाः गुणाश्च ग्रन्थेऽस्मिन् विस्तरशो व्याख्याताः सन्ति। अवस्थानुसारं नायिकानामष्टभेदानुक्त्वा लेखकेन नायिकासहायिका अपि निर्दिष्टाः। नायिकानां

विंशत्यलङ्कारा: भवन्ति, ते च त्रिषु वर्गेषु विभज्यन्ते शरीरजा अयत्नजाः स्वाभाविकाश्च। तदनन्तरं नायकस्य विशिष्टसहायका: सचिवादयो निर्दिष्टाः सन्ति।

नायकनायिकादीनां स्वरूपाणि व्याख्यायाऽस्मिन्नेव द्वितीये प्रकाशेऽभिनयोचितवृत्तीनां चतसृणां कैशिकीसात्त्वत्यारभटीभारतीनां सविशदं व्याख्या लेखकेन विहिता। कस्मिन् रसे का वृत्तिरभिनेयेत्यत्र निर्देशो विद्यते। रूपकेषु पात्राणि कां भाषां प्रयुञ्जीरन्, संवादेषु च कं जनं कथं सम्बोधयेयुरिति विषयस्याऽप्यत्र चर्चा विद्यते।

(iii) **तृतीयः प्रकाशः -**

तृतीयप्रकाशे प्रथमं तावद् रूपकाभिनयप्रारम्भविधिर्लेखकेन निर्दिष्टा। अभिनयः पूर्वरङ्गं सम्पाद्याऽऽरभ्यते। तदनन्तरमामुखं प्रस्तावना वा प्रस्तूयते। प्रस्तावनायाश्च त्रीण्यङ्गानि भवन्ति - कथोद्घातः प्रवृत्तकं प्रयोगातिशयश्च। अथ त्रयोदश वीथ्यङ्गान्युक्त्वा शास्त्रकारो हीतिवृत्तसिद्धान्तञ्च प्रतिपाद्याऽङ्कयोजनामबोधयत्। तदनन्तरमस्मिन्नध्याये रूपकाणां दशभेदानां नाटिकायाश्च लक्षणानि विस्तरेण व्याख्यातानि।

(iv) **चतुर्थः प्रकाशः -**

चतुर्थे प्रकाशे ग्रन्थकारेण रसविवेचनं सुविशदं कृतम्। रसनिष्पत्तिव्याख्यामुपलक्ष्याऽयं चतुर्थः प्रकाशोऽतिशयमहत्त्वशालितां भजते। रसस्य सामान्यपरिभाषामुक्त्वा धनिकोऽत्र तस्य साधनानि विभावानुभावव्यभिचारिभावरूपाणि विस्तरेण व्याचख्यौ। अस्मिन् प्रकरणेऽसौ सोदाहरणमेतेषां व्याख्यां कृत्वा स्वरूपं स्पष्टीचकार। तदनन्तरं स्थायिभावाः सभेदाः लक्षिताः। अत्र दशरूपककारस्य मन्तव्यमिदं यन्नाट्ये शमस्थायिभावस्याऽभिनययोजनमनुचितं वर्तते।

धनञ्जयो रसनिष्पत्तिमानन्दवर्धनाभिनवगुप्तमम्मटादिभ्यः प्राचीनशास्त्रकारेभ्यो भिन्नरूपेण समैक्षत। तेन प्रोक्तम् - रसो न व्यङ्ग्यः। रसनिष्पत्तौ न रसादीनां काव्येन सह व्यङ्ग्यव्यञ्जकभावः कल्पनीयः। ध्वनिकारमतमुद्धृत्य ग्रन्थकारोऽत्र व्यञ्जनाव्यापारस्य खण्डनमकरोत्। तेन प्रतिपादितम् - रसनिष्पत्तौ भाव्यभावकसम्बन्धोऽवगन्तव्यो न व्यङ्ग्यव्यञ्जकभावः। काव्यं हि भावकं रसाश्च भाव्याः।[१] तदनन्तरमस्मिन् प्रकाशे ग्रन्थकृता रसानां भेदाः सलक्षणस्वरूपं व्याख्याताः।

रूपकसंरचनां तदङ्गानि च दशरूपककारो वैशिष्ट्येन सविशदं समैक्षत। रसनिष्पत्तिमुपलक्ष्याऽप्यसौ काव्यशास्त्रकृत्सु विशिष्टो भिन्नविचारश्च समुपलक्ष्यते। दशरूपके

---

१. अतो न रसादीनां काव्येन सह व्यङ्ग्यव्यञ्जकभावः। किं तर्हि भाव्यभावकसम्बन्धः। काव्यं हि भावकं, भाव्या रसादयः। ते तु स्वतो भवन्त एव भावकेषु विशिष्टविभावादिमता काव्येन विभाव्यन्ते। दशरूपके (४.३७) धनिकवृत्तिः

तदवलोकवृत्तौ च ध्वनिसिद्धान्तस्य रसाभिव्यञ्जकत्वस्य व्यञ्जनाव्यापारस्य च प्रबलो विरोधो वर्तते। रसो न ध्वन्यतेऽपितु पाठकैः प्रेक्षकैश्चाऽऽस्वाद्यते। अस्मिन् विषये दशरूपककारो भट्टनायकस्य भावकत्वसिद्धान्तमेवाऽनुससार।

दशरूपकस्य कारिकाकारस्याऽवलोकटीकाकारस्य च समयसमीक्षणेन तयोरभिनवगुप्त-समकालभावः प्रायशोऽनुमीयते। अवलोकवृत्तिसहितस्य दशरूपकस्य, नाट्यशास्त्रस्याऽभिनव-भारतीटीकायाः ध्वन्यालोकस्य च लोचनटीकायाः लेखनमेकस्मिनन्नेव काले प्रायशः सञ्जातमिति केषाञ्चित् समीक्षकाणामनुमानम्। तथाऽप्येतासु कृतिषु न त्वेषां परस्परं नामानि निर्दिष्टानि सन्ति। मतवैभिन्न्येषु सत्स्वपि पारस्परिकयुक्तयोऽपि खण्डनमण्ड-नात्मिकाः न प्रस्तुताः सन्ति। तेषामनुमानमत्र विद्यते - सम्भवतो दशरूपकारिकाणां लेखनं प्रथमं सञ्जातं, तदनन्तरमभिनवगुप्तस्य लोचनटीकाया आविष्करणं बभूव, तदनन्तरञ्च दशरूपकस्याऽवलोकवृत्तिर्धनिकेन विरचिता।

### ७. दशरूपकस्य प्राचीनटीकाः

दशरूपरूपकस्य धनञ्जयकृतस्य प्रथमा टीका तस्याऽनुजेन धनिकेन लिखिता। इयमवलोकटीका वृत्तिर्वा मूलग्रन्थस्यैवाऽविकलभागोऽभिन्नत्वेन संलक्ष्यते। अवलोकवृत्तिं विना मूलग्रन्थस्याऽवबोधनं न सुकरम्। अतिदुष्करमेव तत्। अवलोकटीकारचनानन्तरं लिखिताष्टीका अवलोकवृत्तिव्याख्यानरता एव दरीदृश्यन्ते। अत्र निम्नटीकानां प्रमाणानि समुपलक्ष्यन्ते -

(i) नृसिंहभट्टस्य टीका

(ii) देवपाणिकृतटीका

(iii) कुरविरामस्य टीका

(iv) बहुमिश्रकृतटीका

टीकाश्चैताः हस्तलिखितपाण्डुलिपिरूपेणैव प्राप्याः, न तु प्रकाशिता इति बलदेवोपाध्यायस्य मतम्।[1] नृसिंहभट्टकृता सरस्वतीकण्ठाभरणटीकाऽपि प्रसिद्धा वर्तते।

---

१. उपाध्याय बलदेव : भारतीय साहित्यशास्त्र पृ० ८३

# रामचन्द्रगुणचन्द्रौ

## १. रामचन्द्रगुणचन्द्रयोर्महत्त्वम्

नाट्यदर्पणं रामचन्द्रगुणचन्द्रयोः सम्मिलिता कृतिर्नाट्यशास्त्रदशरूपकानन्तरं नाट्यशास्त्रीयेषु ग्रन्थेषु प्रमुखं स्थानं भजते। लेखकद्वयेनाऽत्र नाट्यतत्त्वव्याख्याने प्राचीन-परम्पराणामनुसरणं कुर्वता मौलिकचिन्तनमपि विहितम्। मुख्यरूपेण नाट्यसम्बन्धिविषया-नालोचनयन्नपि नाट्यदर्पणकारो रसविवेचनं वैशिष्ट्येन चकार। अत एव काव्यविषयाणां समीक्षणे नाट्यदर्पणमतिप्रसिद्धं महनीयञ्च बभूव। नाट्यदर्पणनाम्ना प्रसिद्धोऽप्ययं ग्रन्थो नाटकदर्पणनाम्नाऽपि प्रथितोऽस्ति।

केषाञ्चित् समीक्षकाणां मतमत्र विद्यते यद् रामचन्द्रगुणचन्द्रकृतवर्तमानसमयसमुपलब्ध-नाट्यदर्पणव्यतिरिक्ता प्राचीनसमये काचिदन्यलेखकरचिता नाट्यदर्पणाभिधाना कृतिर्निश्चयेना-ऽऽसीदिति।

विक्रमोर्वशीयटीकायां रङ्गनाथेन[१] भट्टिकाव्यटीकायाञ्च भरतमल्लिकेन[२] नाट्यदर्पण-ग्रन्थस्य काश्चन पङ्क्तय उद्धृताः। परं नैताः पङ्क्तयो वर्तमानसमये समुपलब्धे प्रकाशिते च नाट्यदर्पणे वर्तन्ते। अतोऽनुमीयते यदन्यः कश्चिन्नाट्यदर्पणाभिधानो ग्रन्थः केनचिदन्येन शास्त्रकारेण रचितो यस्य पंक्तयो रङ्गनाथेन भरतमल्लिकेन चोल्लिखिताः।

## २. रामचन्द्रगुणचन्द्रयोः समयो जीवनवृत्तञ्च

रामचन्द्रस्य समयः ११००-११७५तमः ख्रिष्टाब्दो गण्यते। गुर्जरप्रदेशाधिपस्य सिद्धराजजयसिंहस्य (१०९३-११४३ ई०) कुमारपालस्य (११४४-११७२ ई०) च समकालीनोऽसाववर्तत। कुमारपालानन्तरमजयपालो राजसिंहासनमधिचक्रे। केनचित् कारणेन रुष्टेन राज्ञाऽसौ रामचन्द्रो मृत्युदण्डेन दण्डितः। सुतप्तरक्तवर्णकृते ताम्रकटाहे संस्थापितोऽसौ यमलोकं प्रापितः। मृत्युदण्डस्याऽयं समयः ११७५ ख्रिष्टाब्दोऽनुमीयते।

---

१. तथा चोक्तं नाट्यदर्पणकृता। अत्र च समासोक्त्या पूर्वोक्तप्रकारेण काव्यार्थप्रकाशनात् पत्रावली समाख्येयं नान्दी -

यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः।
श्लेषेण वा समासोक्त्या नाम्ना पत्रावली तु सा।।

विक्रमोर्वशीयम् - रङ्गनाथकृतटीका - निर्णयसागरप्रेस पृ० ७

२. शुद्धताम्रमयी मध्यसुषिरा काहला मतेति नाट्यदर्पणः। भट्टिकाव्य (१४.३) टीका

काव्यानुशासनग्रन्थकारः प्रसिद्धो जैनाचार्यो हेमचन्द्रो रामचन्द्रस्य गुरुरासीत्। ११०० तमे खिष्टाब्दे गुर्जरप्रदेशपार्थिवास्तं जैनाचार्यपदेनाऽलञ्चक्रुः। अतो रामचन्द्रस्य जीवनकालः ११००-११७५ ख्रिष्टाब्दं यावदनुमातुं शक्यते। हेमचन्द्रस्योत्तराधिकारी (पट्टधरः) रामचन्द्र एव बभूव। को भवतामुत्तराधिकारी भवेदिति सिद्धराजेन पृष्टो हेमचन्द्र उदतरत् - रामचन्द्र एव ममोत्तराधिकारं भजताम्।''

परमविद्वान् मनीषी विद्याप्रतिभान्वितो रामचन्द्रो नाट्यदर्पणाभिधानं ग्रन्थमकरोत्। अथ चाऽसावनेकानन्यानपि ग्रन्थान् व्यरचयत्। जैनसाहित्येऽसौ प्रबन्धशतकर्ता प्रसिद्धः। तेन रचितान्येकादशनाटकानि नाट्यदर्पणे निर्दिष्टानि सन्ति, परं नाऽद्य तान्युपलभ्यन्ते। नाटकेष्वेतेषु नलविलासमतिप्रसिद्धम्।

रामचन्द्रस्य सहयोगिनो गुणचन्द्रस्य विषये नाऽधिकानि विवरणानि समुपलभ्यन्ते। केवलमेतदेव विवरणमुपलभ्यते यदसौ रामचन्द्रस्य शिष्यः सहाध्यायी वाऽवर्तत। परं नाट्यदर्पणव्यतिरिक्ता न काऽप्यन्या कृतिस्तस्योपलभ्यते न च लोके प्रसिद्धाऽस्ति।

## ३. रामचन्द्रगुणचन्द्रयोः कृतयः

रामचन्द्रगुणचन्द्रयोः सम्मिलिता कृतिर्विद्यते 'नाट्यदर्पणम्'। अन्यान्यप्यनेकानि पुस्तकानि रामचन्द्रेण लिखितानि। जैनसाहित्येऽसौ प्रबन्धशतकर्ता प्रसिद्ध इति पूर्वमेव लिखितम्। नाट्यदर्पणे रामचन्द्रस्य निम्नाङ्कितानां कृतीनां सङ्केताः लभ्यन्ते -

(१) कौमुदीमित्रानन्दप्रकरणम्
(२) नलविलासनाटकम्
(३) निर्भयभीमव्यायोगः
(४) मल्लिकामकरन्दप्रकरणम्
(५) यादवाभ्युदयनाटकम्
(६) रघुविलासनाटकम्
(७) रोहिणीमृगाङ्कप्रकरणम्
(८) वनमालानाटिका
(९) राघवाभ्युदयनाटकम्
(१०) सत्यहरिश्चन्द्रनाटकम्
(११) सुधाकलशनाटकम्

## ४. नाट्यदर्पणम्

नाट्यदर्पणे नाट्यशास्त्रीयविषयाणां सुविशदं विवेचनं विद्यते। भरतधनञ्जययो-र्नाट्यशास्त्रदशरूपकयोरनन्तरमिदं नाट्यदर्पणं महनीया विद्वद्वरेण्या च कृतिः। मूलरूपेणेदं नाट्यदर्पणं कारिकासु निबद्धमुपलभ्यते। लेखकौ स्वयमेव कारिकाः व्याख्यातुं विवरणनाम्नीं

वृत्तिमप्यलिखताम्। चतुर्ष्वध्यायेषु (विवेकेषु) विभक्तस्याऽस्य ग्रन्थस्य विषयवस्तुविवेचनं निम्नक्रमेण वर्तते -

(i) **प्रथमो विवेकः -**

नाटकनिर्णयविवेकनाम्नि प्रथमे विवेके नाटकस्य रूपकप्रथमभेदस्य विवेचनमस्ति।

(ii) **द्वितीयो विवेकः -**

प्रकरणाद्येकादशरूपनिर्णयविवेकनाम्न्यस्मिन् द्वितीये विवेकेऽन्येषामेकादशरूपकभेदानां प्रकरणादीनां निरूपणं लेखकेन कृतम्।

(iii) **तृतीयो विवेकः -**

वृत्तिभावाभिनयविचाराभिधाने तृतीये विवेके कैशिक्यादीनां वृत्तीनां रसानां भावानाञ्चाऽभिनयस्य विचारो वर्तते।

(iv) **चतुर्थो विवेकः -**

सर्वरूपकसाधारणलक्षणनिर्णयाभिधानेऽस्मिन् विवेके सर्वेषां रूपकभेदानां सामान्यसंघटनतत्त्वानि लेखकद्वयेन निरूपितानि।

## ५. नाट्यदर्पणस्य महत्त्वम्

नाट्यदर्पणकृद्भ्यां नाटकतत्त्वनिरूपणे प्रायशो भरत एवाऽनुसृतः। परन्त्वनेकेषु प्रसङ्गेषु तौ मौलिकचिन्तनमप्यभिव्यनक्तः। दशरूपककारेण धनञ्जयेन प्रमुखरूपकाणां संख्या दश मता, तदनन्तरञ्च नाटिकाभेदोऽपि निर्दिष्टः। परं रामचन्द्रगुणचन्द्राभ्यां द्वादश रूपकभेदाः प्रोक्ताः। नाटिकासहिता एकादशभेदाः दशरूपककारमनुसृत्य प्रोक्ताः। तदनन्तरं द्वादशं प्रकरणीभेदमुक्त्वाऽसौ स्वातन्त्र्यमाचचार। परन्तु प्रकरणीभेदस्य न किमप्युदाहरणं नाट्यदर्पणे समुपलभ्यते। अथ च त्रयोदशोपरूपकाण्यपि नाट्यदर्पणे समुल्लिखितानि सन्ति -

सट्टकश्रीगदितदुर्मीलितप्रस्थानगोष्ठीहल्लीसकनर्तनकप्रेक्षणकरासकनाट्यरासककाव्य-भाणभाणिकानि।

नाट्यदर्पणे रसस्वरूपसंख्याविवेचनं वैशिष्ट्येन लेखकाभ्यां निरूपितम्। भरतादारभ्य सर्वैराचार्यैः सर्वे रसा सुखात्मकाः प्रतिपादिताः। परं प्रथमं तावद् रामचन्द्रेणोद्घोषितम् -

" न सर्वे रसाः सुखस्वरूपाः। द्विविधाः रसाः - सुखात्मकाः दुःखात्मकाश्च। अत्र शृङ्गारहास्यवीराद्भुतशान्तरसाः सुखात्मकाः करुणरौद्रबीभत्सभयानकरसाश्च दुःखात्मका अवगन्तव्याः।[1]

---

१. सुखदुःखात्मको रसः।....... तत्रेष्टविभावादिप्रथितस्वरूपसम्पत्तयः शृङ्गारहास्यवीराद्भुतशान्ताः पञ्च सुखात्मानोऽपरे पुनरनिष्टविभावाद्युपनीतात्मानः करुणरौद्रबीभत्सभयानकाश्चत्वारो दुःखात्मानः। नाट्यदर्पण (३.७) वृत्तितः।

दुःखात्मकेष्वप्येतेषु रसेषु कथं सहृदयाः प्रवर्तन्ते ? प्रश्नमेतं ग्रन्थकारः समादधाति - "कवेरभिनेतुर्वा नैपुण्येन चमत्कृताः सहृदयास्तान् रसान् प्रति प्रवर्तन्ते ।[१]

नाट्यदर्पणकारेणैतदपि प्रतिपादितं यन्नाट्यमभिनयन्तोऽभिनेतारस्तद्रसमनुभवितुं पारयन्ति यद्रसं ते सहृदयाननुभावयितुं प्रवृत्ताः भवन्ति। वेश्याः रतिसुखमिव ते तद्रसमनुभवन्ति ।[२]

रससंख्याविषयेऽपि रामचन्द्रगुणचन्द्रयोर्मौलिकं चिन्तनमभिलक्ष्यते। भरतेन नाट्यशास्त्रेऽष्टौ रसाः प्रतिपादिताः[३]। तदनन्तरं मम्मटादिभिराचार्यैर्नाट्येऽष्टौ रसाः प्रोक्ताः।[४] परन्तु काव्ये नवमो रसः शान्तोऽपि भवति।[५] धनञ्जयेन दशरूपकेऽष्टौ स्थायिभावाः प्रोक्ताः, शमस्य स्थायिभावस्य शान्तरसस्य च न पुष्टिर्विहिता ।[६]

कैश्चिदुत्तरवर्तिभिराचार्यैर्नाट्येष्वपि नव रसाः प्रोक्ताः। नाट्येषु नव रसानामभिव्यक्तिर्भवति। अत्र रुद्रटाचार्यो मुख्यः।[७] संगीतरत्नाकरग्रन्थेऽपि नाट्येषु नव रसाः प्रतिपादिताः।[८] भरतमननुकुर्वन् नाट्यदर्पणकारोऽपि नाट्येषु नव रसान् प्रोवाच।[९] एवमेव नाट्यदर्पणकारः प्राचीनाचार्येभ्योऽनेकेषु प्रसङ्गेषु मतभेदमुद्वहति ।

संस्कृतसाहित्येतिहासदृष्ट्यापि नाट्यदर्पणस्य महत्त्वं वर्तते। अत्र तथाविधानां ग्रन्थानां काव्यानाञ्चोद्धरणानि वर्तन्ते येषां वर्तमानसमये नोपलब्धिर्भवति। अत्र विशाखदत्तरचितदेवी-

---

१. अनेनैव च सर्वाङ्गाह्लादकेन कविनटशक्तिजन्मना चमत्कारेण विप्रलब्धाः परमानन्दरूपतां तु दुःखात्मकेष्वपि करुणादिषु प्रतिजानते। एतदास्वादलौल्येन प्रेक्षका अपि एतेषु प्रवर्तन्ते। नाट्यदर्पण (३.७) वृत्तितः।

२. पण्यस्त्रियो हि धनलोभेन परत्यर्थं रत्यादिविपञ्चयन्त्यः कदाचित् स्वयमपि परां रतिमनुभवन्ति। गायनाश्च परं रञ्जयन्तः कदाचित् स्वयमपि रज्यन्ते। नाट्यदर्पण (३.७) वृत्तितः।

३. (क) शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्साद्भुतसंज्ञाश्चेत्यष्टौ नाट्ये रसाः स्मृताः।। भरतनाट्यशास्त्र ७.१५
(ख) एवमेते रसाः ज्ञेयास्त्वष्टौ लक्षणलक्षिताः।। भरतनाट्यशास्त्र ७.८३

४. अष्टौ नाट्ये रसाः स्मृताः। काव्यप्रकाश ४.२९

५. शान्तोऽपि नवमो रसः। पुष्टिर्नाट्येषु नैतस्य। काव्यप्रकाश ४.२९

६. रत्युत्साहजुगुप्साः क्रोधो हासः स्मयो भयं शोकः।
शममपि केचित्प्राहुः पुष्टिर्नाट्येषु नैतस्य।। दशरूपक ४.३५

७. शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः।। रुट-काव्यालङ्कार ४.४

८. सङ्गीतरत्नाकर श्लोक १३१०-१३१२

९. शृङ्गारहास्यकरुणाः रौद्रवीरभयानकाः।
बीभत्साद्भुतशान्ताश्च रसाः सद्भिर्नव स्मृताः।। नाट्यदर्पण ३.९

चन्द्रगुप्तनाटकस्याऽनेकान्युद्धरणानि समाविष्टानि, यानि नाऽन्यत्र समुपलभ्यन्ते। एतैरुद्धरणैर्वयं जानीमो यच्चन्द्रगुप्तात्पूर्वं तस्याऽग्रजो रामगुप्तो गुप्तवंशीयो राजा बभूव। असौ युद्धे पराजितः शकराजाय स्वभार्यायाः ध्रुवदेव्याः समर्पणमङ्गीचकार। पर तदनुजश्चन्द्र-गुप्तो ध्रुवदेवीरूपमास्थाय शकशिविरं गत्वा शकराजं जघान।[1]

नाट्यशास्त्रीयसिद्धान्ताध्ययनदृष्ट्याऽपि नाट्यदर्पणस्य महान् महिमा समादरश्च वर्तते। लेखकस्य स्वकीयेयं घोषणा वर्तते -

रूपकस्य यथार्थस्वरूपस्याऽवबोधनाय नाट्यदर्पणं निश्चयेनाऽध्येयम्।[2]

---

१. यथा देवीचन्द्रगुप्ते द्वितीयेऽङ्के प्रकृतीनाश्वास्य शकस्य ध्रुवदेवीसम्प्रदाने अभ्युपगते राज्ञा रामगुप्तेनारिवधार्थं यियासुः प्रतिपन्नध्रुवदेवीनेपथ्यः कुमारचन्द्रगुप्तो विज्ञपयन्नुच्यते।
नाट्यदर्पण - गायकवाड ओरियन्टल सीरीज द्वि० सं० पृ० १२४

२. रूपस्वरूपं विज्ञातुं यदीच्छत यथास्थितम्।
सन्तस्तदानीं गृह्णीत निर्मलं नाट्यदर्पणम्।। नाट्यदर्पणस्यान्तिमभागे वृत्तितः।

# जयदेव:

## १. जयदेवस्य महत्त्वम्

जयदेवस्य काव्यशास्त्रीयो ग्रन्थश्चन्द्रालोको भाषासौकर्येणाऽवबोधसौकर्येण च काव्यशास्त्रजगत्यतिलोकप्रियो प्रावर्तत। जयदेवेनाऽतिरुचिरसरलशैल्यां काव्यशास्त्रस्था: सर्वे विषया: विद्यार्थिनां हृदयङ्गमा: कारिता:। राज्ञा जसवन्तसिंहेन भाषाभूषणनाम्ना ग्रन्थोऽयं हिन्दीभाषायामप्यनूदित:।

## २. जयदेवस्य जीवनवृत्तं समयश्च

जयदेवस्य कृतयस्तस्य स्वल्पं परिचयं वितन्वते। तस्य द्वे रचने लोके प्रसिद्धे स्त: - काव्यशास्त्रीयो ग्रन्थश्चन्द्रालोक: प्रसन्नराघवञ्च नाटकम्। अत्र तेन स्वजनको महादेव: प्रोक्तो जननी च सुमित्रा।[1] चन्द्रालोकस्य मयूखान्तभागेषु तेन स्वपितरौ सङ्केतितौ।

जयदेव: पीयूषवर्ष इत्युपाधिविभूषित: प्रसिद्ध:। पीयूषवर्ष इति तस्योपाधिरासीदुपनाम चेति ग्रन्थे सङ्केतो लभ्यते।[2] चन्द्रालोकव्याख्याकारो गागाभट्टो ब्रवीति - पीयूषवर्ष इति तस्य द्वितीयमभिधानमवर्तत।[3]

प्रसन्नराघवस्य रचयिता जयदेवो न्यायशास्त्रप्रवीणोऽपि प्रसिद्ध आसीदिति तथ्यं नाटकप्रस्तावनाया अभिव्यज्यते।[4] भाष्यालोकाभिधानं न्यायशास्त्रग्रन्थं कश्चिन्नैयायिको जयदेवो नाम मनीषी विद्वान् लिलेख। मिथिलापण्डितेषु किम्वदन्तीयं प्रसिद्धा, यद् भाष्यालोकस्य लेखको जयदेवश्चन्द्रालोककारश्च जयदेव एकमेव व्यक्तित्वं दधाति। यद्यपि द्वयोरेतयोर्जयदेवयो-रेकत्वं न केनचिदन्येन प्रमाणेन सिद्ध्यति, तथापि पी०वी० काणेमहोदयस्तयोरेकत्वं प्रमाणयत्येव।[5]

---

१. (क) महादेव: सत्रप्रमुखमखविघ्नैकचतुर:।
सुमित्रातद्भक्तिप्रणिहितमतिर्यस्य पितरौ।। चन्द्रालोक १.१६
(ख) प्रसन्नराघव प्रस्तावना पृ० १४-१५

२. चन्द्रालोकममुं स्वयं वितनुते पीयूषवर्ष: कृती।। चन्द्रालोक १.२

३. जयदेवस्यैव पीयूषवर्ष इति नामान्तरम्। गागाभट्ट

४. नन्वयं प्रमाणप्रवीणोऽपि श्रूयते -
येषां कोमलकाव्यकौशलकलालीलावती भारती।
तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते।। प्रसन्नराघव १.१८

५. काणे, पी०वी० : संस्कृत काव्यशास्त्र का इतिहास पृ० ३६२

गीतगोविन्दमिति गीतिकाव्यमपि केनचिज्जयदेवनाम्ना कविना कृतमिति प्रसिद्धम्। जयदेवोऽयं बङ्गाधिपस्य लक्ष्मणसेनस्य पञ्चरत्नेष्वेकोऽविद्यत। निवासस्थानमस्य वीरभूमजनपदस्य बिन्दुबिल्वलग्रामोऽविद्यत। स्थानमिदं वर्तमानसमये बङ्गराज्ये केंदुलीनाम्ना प्रसिद्धम्। अद्याऽप्यत्र वैष्णवजना उत्सवमायोज्य कवेस्तस्य स्मरणं कुर्वन्ति।

केचन समालोचकाः मतमिदं प्रकटयन्ति -

अनर्घराघवचन्द्रालोकयोः रचयिता जयदेव एव गीतगोविन्दकारो वर्तते। परं नाऽयं विचारस्तर्कसङ्गतः प्रमाणपरिपुष्टश्च प्रतिभाति। गीतगोविन्दकारेण स्वजनको भोजदेवः प्रोक्तो माता च रामादेवी।[1] बङ्गजनपदवास्तव्योऽसावर्तत। परन्तुचन्द्रालोककारो जयदेवो न बङ्गवासी प्रतीयते। पित्रोर्नामनी अपि विभिन्ने। परन्तु द्वयोरेतयोर्जयदेवयोरेकत्वप्रतिपादिनः समीक्षकाः गीतगोविन्दस्य तं श्लोकं प्रक्षिप्तमामनन्ति, यत्र भोजदेवो जयदेवस्य जनकः प्रोक्तो रामादेवी च जननी। परन्त्वत्राऽपि न किमपि प्रामाण्यम्। प्रसन्नराघवनाटके जयदेवः स्वात्मानं कौण्डिन्यं (कुण्डनपुरनिवासिनम्) ब्रवीति।[2] कुण्डिनपुरं विदर्भजनपदे वर्तते।

जयदेवेन स्वसमयसम्बन्धे न कोऽपि सङ्केतः प्रदत्तः। बाह्यप्रमाणान्याधारीकृत्य तस्य समयोऽनुमातुं शक्यते। काव्यलक्षणप्रसङ्गे जयदेवेन स्वग्रन्थे मम्मटाचार्यस्यैवमालोचना कृता -

अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।
असौ न मन्यते कस्मादनुष्णमनलं कृती।।[3]

अस्मिन् पद्ये काव्यमनलङ्कृतीति कथनकारकं मम्मटमेव जयेदवः सङ्केतितवान्।[4] दोषविवेचने जयदेवो मम्मटमनुचकार। अलङ्कारविवेचनेऽसौ प्रायशो रुय्यकमाशिश्रिये। चन्द्रालोके विचित्रविकल्पालङ्कारलक्षणेऽसौ प्रायशो रुय्यकशब्दानेव प्रयुयुजे। अतोऽयं चन्द्रालोककारो जयदेवो मम्मटरुय्यकपरवर्त्येवाऽनुमन्तव्यः। रुय्यकश्च १२०० ख्रिष्टाब्द-कालीनोऽवगम्यते।

---

१. श्रीभोजदेवप्रभवस्य रामादेवीसुतश्रीजयदेवकस्य।
पाराशरादिप्रियवर्गकण्ठे श्रीगीतिगोविन्दकवित्वमस्तु।। गीतगोविन्द

२. विलासो यद्वाचामसमरसनिष्यन्दमधुरः
कुरङ्गाक्षीबिम्बाधरमधुरभावं गमयति।
कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः।। प्रसन्नराघव १.१४

३. चन्द्रालोक १.८

४. तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि। काव्यप्रकाश १.४

विश्वनाथेन (१३००-१३८४ ई०) साहित्यदर्पणे ध्वनिकाव्यस्योदाहरणरूपेणाऽनर्घराघवस्यैकः श्लोक उद्धृतः।[१] शार्ङ्गधरपद्धतौ (१३६१-१३६३ ई०) अनर्घराघवस्य केचन श्लोका उद्धृताः सन्ति। अतो जयदेवस्य समयस्तत्पूर्वकालीनो मन्तव्यः। विवेचनमिदमाश्रित्य जयदेवः १२००-१३०० ख्रिष्टाब्दमध्यवर्त्यनुमातुं शक्यते।

## ३. जयदेवस्य कृतयः

चन्द्रालोको जयदेवस्य प्रसिद्धः काव्यशास्त्रीयो ग्रन्थो वर्तते। अनर्घराघवनाटकमपि तेनैव विरचितम्। भाष्यालोकाभिधानो न्यायग्रन्थोऽपि तेनैव विरचित इति केचन समीक्षकाः कथयन्ति। परं नाऽत्र किमपि निश्चयेन वक्तुं शक्यते। साधकबाधकप्रमाणाभावे न तत्र कोऽपि निर्णयः।

## ४. चन्द्रालोकः

ग्रन्थोऽयं ग्रन्थकारेणाऽतिसरलसुबोधशैल्या कृतः। अत एवाऽनेन ग्रन्थेनाऽतितरां लोकप्रियताऽर्जिता। कुवलयानन्दलेखकोऽप्पयदीक्षितो ग्रन्थस्याऽस्य पञ्चममयूखस्याऽर्थालङ्कार-प्रकरणमाश्रित्य कुवलयानन्दं स्वग्रन्थविस्तरञ्चकार।

दशसु मयूखेषु विभक्ते चन्द्रालोके पञ्चाशदुत्तरशतत्रय (३५०) श्लोका अनुष्टुप्छन्दसि वर्तन्ते। मयूखक्रमेण विषयवस्तूनि निम्नवद् वर्तन्ते -

**(i) प्रथमो मयूखः -**

प्रथमे मयूखे जयदेवः काव्यपरिभाषां काव्यहेतूंश्च प्रस्तूय शब्दस्य त्रिविधत्वं साधितवान्। शब्दास्त्रिविधाः भवन्ति - रूढाः यौगिका योगरूढाश्च।

**(ii) द्वितीयो मयूखः -**

द्वितीयो मयूखो दोषनिरूपणात्मको वर्तते। शब्दवाक्यार्थादिभेदेन दोषाणां वर्गीकरणमत्र वर्तते। अस्मिन् प्रकरणे मम्मटस्य स्पष्टः प्रभावः संलक्ष्यते।

**(iii) तृतीयो मयूखः -**

तृतीये मयूखे लक्षणरूपं काव्याङ्गनिरूपणं वर्तते। काव्यरमणीयत्वापादनोपाया-नामायोजनमत्र शास्त्रकृता निर्दिष्टम्।

**(iv) चतुर्थो मयूखः -**

चतुर्थे मयूखे गुणविवेचनं लेखकेन कृतम्। भरतवामनादीननुकुर्वता जयदेवेन दश गुणाः प्रोक्ताः।

---

१. कदली कदली करभः करभः करिराजकरः करिराजकरः।
भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः।।
साहित्यदर्पणस्य चतुर्थोद्योते ध्वनिकाव्यस्योदाहरणम्

**(v) पञ्चमो मयूखः -**

अलङ्कारविवेचनात्मकेऽस्मिन्नध्याये जयदेवेन चत्वारः शब्दालङ्कारा अनुप्रासपुनरुक्तवदाभासयमकचित्राः व्याख्याताः। अथ च शतानामर्थालङ्काराणां विवेचनं विहितम्।

**(vi) षष्ठो मयूखः -**

षष्ठे मयूखे रसानां भावानां तिसृणां पाञ्चालीगौडीलाटीनां रीतीनां पञ्चवृत्तीनां मधुराप्रौढापरुषाललितामुद्राणां निरूपणं वर्तते।

**(vii) सप्तमो मयूखः -**

सप्तमे मयूखे जयदेवो व्यञ्जनां वृत्तिं प्रतिपाद्य ध्वनिभेदान् व्याचख्यौ।

**(viii) अष्टमो मयूखः -**

मयूखेऽस्मिन् गुणीभूतव्यङ्ग्यभेदानां निरूपणमस्ति।

**(ix) नवमो मयूखः -**

नवमे मयूखे लक्षणायाः विशदं विवेचनमस्ति।

**(x) दशमो मयूखः -**

दशमो मयूखोऽभिधानिरूपणात्मको वर्तते।

चन्द्रालोकस्य पञ्चमो मयूखोऽलङ्कारविवेचनात्मको महत्त्वमतितरां भजते। एकस्मिन्नेव श्लोके शास्त्रकृताऽलङ्कारलक्षणं सोदाहरणं प्रोक्तम्। एषो विधिरलङ्कारस्य लक्षणोदाहरणयोरवबोधने स्मरणे च छात्रेभ्योऽतिहितकारिणी ह्युपयोगिनी च वर्तते। उपमाया अनन्वयस्य चाऽलङ्कारस्य लक्षणोदाहरणप्रस्तवनमत्रोदाह्रियते -

उपमा -

**उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः।**
**हृदये खेलतोरुच्चैस्तन्वङ्गीस्तनयोरिव।।**

अनन्वय -

**उपमानोपमेयत्वे यत्रैकस्यैव जागृतः।**
**इन्दुरिन्दुरिवेत्यादौ भवेदेवमनन्वयः।।**

चन्द्रालोकस्य सरलसुबोधशैली कुवलयानन्दग्रन्थरचनायामप्पयदीक्षितमतिशयेन प्रभावितञ्चकार। अत्राऽसौ पाण्डित्यपूर्णां वृत्तिमायोज्य नवीनमेव ग्रन्थं कुवलयानन्दमरचयत्। कुवलयानन्दग्रन्थविरचनेऽसौ चन्द्रालोकस्य ऋणं निस्सङ्कोचं स्वीचकार।[1]

---

१. चन्द्रालोको विजयतां शरदागमसम्भवः।
हृद्यः कुवलयानन्दो यत्प्रसादयमभूत्।।

## ५. चन्द्रालोकस्य प्राचीनाष्टीकाः

चन्द्रालोकस्य सारल्येन सुबोधत्वेन लोकप्रियभावेन च समाकृष्टाः विद्वांसोऽनेके ग्रन्थमेनमटीकयन्। वर्तमानसमये समुपलब्धासु षट्टीकासु काश्चन प्रकाशिताः सन्ति। काश्चन च पाण्डुलिपिरूपेणाऽवस्थिताः हस्तलिखिताः प्रकाशनप्रतीक्षमाणाः वर्तन्ते। प्रकाशितटीकानां संक्षिप्तपरिचयोऽधः प्रस्तूयते -

**(i) शारदागमटीका -**

टीकेयं १५८३ ख्रिष्टाब्दे प्रसिद्धविदुषा प्रद्योतनमिश्रेण लिखिता। तस्य जनको बलभद्रमिश्रो बुन्देलखण्डाधिपस्य वीरभद्रदेदस्य वीररुद्रदेवस्य वाऽऽश्रयं जगृहे। प्रद्योतनमिश्रेण कामशास्त्रस्याऽप्येका टीका कन्दर्पचूडामणिः १५७७ ख्रिष्टाब्दे लिखिता।

**(ii) रमाटीका -**

टीकाया अस्याः लेखनं वैद्यनाथपायगुण्डेन विहितम्। एकोऽन्योऽपि वैद्यनाथस्तत्सद्-गोत्रीयोऽवर्तत। असौ गोविन्दठक्करकृतकाव्यप्रदीपस्याऽप्पयदीक्षितकृतकुवलयानन्दस्य च टीकाकारो बभूव। परमयं चन्द्रालोकटीकाकाराद् वैद्यनाथपायगुण्डाद् भिन्न एवाऽवगन्तव्यः। रमाटीकायाः रचना १७५०-१८०० ख्रिष्टाब्दसमये बभूव।

**(iii) राकागमटीका सुधाटीका वा -**

टीकाया अस्याः लेखनं सप्तदशशताब्द्युत्तरार्धकाले बभूव। अस्याः लेखको विश्वेश्वरभट्टो गागाभट्टोऽपरनामधेयः प्रसिद्धो मनीषी विद्वानवर्तत। मीमांसादर्शनं स्मृतिशास्त्रञ्चाश्रित्याऽप्य-सावनेकान् ग्रन्थान् लिलेख। सुप्रसिद्धो धर्मशास्त्री कमलाकरभट्टस्तस्य पितृव्योऽवर्तत। असौ शिवराजस्य राज्याभिषेकोत्सवसम्पादनाय निमन्त्रितो बभूव।

चन्द्रालोकस्योपरिवर्णिताः तिस्रष्टीकाः प्रकाशिताः वर्तन्ते। अथ च हस्तलिखित-पाण्डुलिपिरूपसंस्थितास्तिस्रष्टीकाः निम्नाङ्किताः सन्ति -

(i) प्रदीपिकाटीका दीपिकाटीका वा
(ii) शारदशर्वरीटीका
(iii) बाजचन्द्रकृतटीका

चतुस्त्रिंशोऽध्यायः

# विद्याधरः

## १. विद्याधरस्य महत्त्वं परिचयश्च

एकावलीरचयितृरूपेण प्रसिद्धो विद्याधरः काव्यशास्त्रस्येतिहासे महनीयां कीर्तिमभजत। ग्रन्थस्याऽस्य रचना विद्याधरेण त्रयोदशशताब्द्या अन्तिमभागे चतुर्दशशताब्दीप्रारम्भभागे च विहिता। काव्यशास्त्रविकासे तस्य महान् योगोऽनुभूयते समीक्षकैः। एकावल्यां काव्यसमीक्षासम्बद्धाः प्रायशः सर्वे विषयाः सन्निविष्टाः सन्ति। विद्याधरकृतग्रन्थस्याऽस्य महत्त्वपूर्णं वैशिष्ट्यं वर्तते - अस्मिन् ग्रन्थे सर्वाण्युदाहरणानि विद्याधरकृतानि वर्तन्ते।

## २. विद्याधरस्य समयः

विद्याधरसमयनिर्धारणं न कठिनम्। एकावल्यां स्वरचितोदाहरणेष्वसौ स्वाश्रयदातारमुत्कलनरेशं नरसिंहं प्रशशंस। तेन स्वयमेवोद्घोषितं, यदसौ नरसिंहस्तुतिमेव स्वकृतोदाहरणेषु प्रास्तौत्।[1] तस्य समयनिर्धारणाय निम्नलिखितानि तथ्यानि प्रस्तूयन्ते -

(i) विद्याधर उत्कलनरेशं नरसिंहमाशिश्रिये। उत्कलजनपदे नरसिंहनामानौ द्वौ पार्थिवावभूताम् - केसरिनरसिंहः प्रतापनरसिंहश्च। केसरिनरसिंहस्य शासनावधिः १२८२-१३०७ खिष्टाब्दं यावदवर्तत। प्रतापनरसिंहस्य च शासनावधिः १३०७-१३२७ खिष्टाब्दपर्यन्तमासीत्। नरसिंहं स्तुवता विद्याधरेणेदं न सूचितं, यदसौ कं नरसिंहं प्रशंसन्नास्ते। तथापि यद्यसौ द्वयोर्नरसिंहयोर्मध्यवर्तिकालीनो गण्यते, तस्य समयस्त्रयोदशशताब्द्या अन्तिमो भागश्चतुर्दशशताब्द्याश्च पूर्वो भागो निर्धारयितुं शक्यः।

(ii) एकावल्याः प्रस्तावनायां विद्याधरः कविं हरिहरं पार्थिवमर्जुनञ्चोल्लिलेख। तयोः समयस्त्रयोदशशताब्दीपूर्वभागः समीक्षकैर्निश्चितः। अत एव विद्याधरं त्रयोदशशताब्द्युत्तरार्धवर्तिनं निर्णेतुं न काऽपि बाधो वर्तते।

(iii) एकावल्यां रुय्यकस्योल्लेखो वर्तते। रुय्यको द्वादशशताब्दीमध्यवर्ती समीक्ष्यते। विद्याधरस्य स्थितिस्तदुत्तरवर्त्येवाऽवगन्तव्या।

(iv) विद्याधरेण सूचितं यन्नैषधीयचरितकाव्यस्य कर्ता श्रीहर्षो वर्तते। हर्षस्य समयो द्वादशशताब्द्युत्तरार्धको गण्यते। विद्याधरस्तदुत्तरवर्त्येव स्वीकरणीयः।

---

१. एष विद्याधरस्तेषु कान्तासम्मितलक्षणम्।
करोमि नरसिंहस्य चाटुश्लोकानुदाहरन्।।

(v) शिङ्गभूपाल उत्कलनरेशमेकावलीकर्तारञ्च विद्याधरं प्रास्तौत्।[१] शिङ्गभूपालस्त्रयोदशशताब्दीमध्यकालवर्ती समीक्ष्यते। अतो विद्याधरस्तत्समकालीनः पूर्वकालीनो वा गणनीयः।

(vi) मल्लिनाथो ह्येकावलीमटीकयत्। मल्लिनाथस्य समयश्चतुर्दशशताब्द्यन्तिमभागः समीक्ष्यते। विद्याधरस्तत्पूर्ववर्ती मन्तव्यः।

उपरिवर्णितानि तथ्यान्यवलोक्य विद्याधरस्य तद्रचितैकावल्याश्च रचनायाः समयः १२८०-१३२८ ख्रिष्टाब्दमध्यवर्ती सम्भाव्यते।

## ३. विद्याधरस्य कृतयः

विद्याधरस्य कृतिद्वयमुपलभ्यते - एकावली केलिरहस्यञ्च। विद्याधरस्य काव्यशास्त्रीयो ग्रन्थो वर्तते - एकावली। अत्र काव्यसमीक्षागतसकलविषयाणां निरूपणं लेखकेन कृतम्। ग्रन्थस्याऽस्यान्यद् वैशिष्ट्यमपि वर्तते। अत्रोदाहरणानि लेखककृतान्येव वर्तन्ते।

एकावल्या उदाहरणेषु विद्याधरेण स्वाश्रयदातुनरेशस्य नरसिंहस्य प्रशंसा विहिता। एवंविधा अन्येऽप्यनेके काव्यशास्त्रग्रन्थाः विद्यन्ते, यत्रोदाहरणेषु काव्यशास्त्रकृद्भिः स्वाश्रयदातारः प्रशंसिताः। यथा - चमत्कारचन्द्रिकां प्रतापरुद्रयशोभूषणं नञ्जराजयशोभूषणं रघुनाथभूपालीयमित्यादयो ग्रन्था: प्रसिद्धाः सन्ति।

## ४. एकावली

एकावलीरचनायां विद्याधरो मम्मटकृतकाव्यप्रकाशमाधाररूपेण स्वीचकार। परमलङ्कारनिरूपणेऽसौ रुय्यकमेवाऽनुचक्रे।

अष्टसून्मेषेसु विभक्तायामेकावल्यां विषयविभाजनं निम्नक्रमेण वर्तते -

**(i) प्रथम उन्मेषः -**

उन्मेषे प्रथमे काव्यहेतूनां काव्यस्वरूपस्य च विवेचनं विद्यते। अस्मिन् प्रकरणे विद्याधरेण प्राचीनानामाचार्याणां भामहमहिमभट्टादीनामभिमतानां पर्यालोचनं कृतम्।

**(ii) द्वितीय उन्मेषः -**

उन्मेषे द्वितीये त्रिविधानां शब्दानां वाचकलाक्षणिकव्यञ्जकानां विविधानामर्थानां वाच्यलक्ष्यव्यङ्ग्यानां तिसृणां वृत्तीनामभिधालक्षणाव्यञ्जनानां निरूपणमस्ति।

**(iii) तृतीय उन्मेषः -**

उन्मेषे तृतीये ध्वनेः स्वरूपं भेदाश्च व्याख्याताः।

---

१. उत्कलाधिपतेः शृङ्गाररसाभिमानिनो नरसिंहदेवस्य चित्तमनुवर्तमानेन विद्याधरेण कविना बाढमभ्यन्तरीकृतोऽसौ। एवं खलु समर्थितमेकावल्यामनेन। रसार्णवसुधाकर पृ० २०६

(iv) **चतुर्थ उन्मेषः -**

अस्मिन्नुन्मेषे गुणीभूतव्यङ्ग्यकाव्यस्य स्वरूपं भेदाश्च निरूपिताः।

(v) **पञ्चम उन्मेषः -**

उन्मेषे पञ्चमे त्रयाणां गुणानां माधुर्यौजःप्रसादानां समीक्षां विधाय तिसृणां रीतीनां वैदर्भीगौडीपाञ्चालीनां स्वरूपं विद्याधरो व्याचख्यौ।

(vi) **षष्ठ उन्मेषः -**

उन्मेषः षष्ठो वर्तते - दोषनिरूपणात्मकः।

(vii) **सप्तम उन्मेषः -**

सप्तम उन्मेषे विद्याधरेण शब्दालङ्काराः व्याख्याताः।

(viii) **अष्टम उन्मेषः -**

उन्मेषेऽष्टमेऽर्थालङ्काराणां व्याख्यानं वर्तते।

### ५. एकावल्याः प्राचीनटीका

एकावल्याः प्राचीनटीका केवलमेका तरलानाम्नी मल्लिनाथकृता समुपलभ्यते। मल्लिनाथोऽनेकानि काव्यान्यटीकयद् यत्राऽलंकारस्वरूपनिदर्शनेऽसौ प्रायश एकावली-मुद्धृतवान्।

# विद्यानाथः

## १. विद्यानाथः प्रतापरुद्रश्च

प्रतापरुद्रयशोभूषणाभिधानस्य काव्यशास्त्रीयग्रन्थस्य कर्ता विद्यानाथोऽभवत्। ग्रन्थोऽयं दक्षिणभारते सुतरां लोकप्रियो बभूव। अस्मिन् ग्रन्थे ग्रन्थकृत् स्वाश्रयदातारं प्रतापरुद्रदेवं काकतीयवंशीयं सप्तमं नरेशं प्रशशंस।[1] प्रतारुद्रयशोभूषणस्य तृतीयेऽध्यायेऽलङ्काराणां साङ्गोपाङ्गानामुदाहरणानि संयोज्यमानेन विद्याधरेण प्रतापकल्याणं नाम नाटकं सन्निवेशितम्।

तेलङ्गानाप्रदेशाधिपस्य काकतीयवंशीयस्य प्रतापरुद्रदेवस्य राजधानी एकशिलानगरी (वर्तमान वारङ्गल) ह्यवर्तत। प्रतापरुद्रोऽसौ यादववंशीयं नरपतिं सेवणं (देवगिरिनरेशं रामदेवम् - १२७१-१३०९ ई०) समराङ्गणे पराजयत्। अनेन वृत्तान्तेन प्रतापरुद्रदेवस्त्रयोदशशताब्द्यन्तिमभागवर्ती चतुर्दशशताब्दीप्रारम्भिकभागवर्ती च सिध्यति। अस्य शिलालेखाः १२९८-१३१७ ख्रिष्टाब्दकालीनाः समुपलभ्यन्ते। विद्यानाथस्याऽप्ययं समयोऽवगन्तव्यः।

## २. प्रतापरुद्रयशोभूषणम्

ग्रन्थोऽयं दक्षिणभारते सुतरां लोकप्रियो बभूव। अत्र काव्यसमीक्षासिद्धान्तानां सर्वेषां समावेशः सुस्पष्टं ग्रन्थकृता विहितः। प्रतापरुद्रयशोभूषणे नव प्रकरणानि वर्तन्ते। तेषु नव प्रकरणेषु क्रमशो नायककाव्यनाटकरसदोषगुणशब्दालङ्कारार्थालङ्कारमिश्रालङ्काराणां नव विषयाणां विवेचनं विद्यते। विषयविवेचने विद्यानाथः प्रायशो मम्मटमनुससार। परमलङ्कार-निरूपणेऽसौ रुय्यकमनुसरंल्लक्ष्यते। प्रतापरुद्रयशोभूषणे प्रोक्ताः परिणामोल्लेखविचित्र-विकल्पालङ्काराः काव्यप्रकाशे न विद्यन्ते, परं रुय्यकेन तेषां निरूपणं कृतम्।

## ३. प्रतापरुद्रयशोभूषणस्य प्राचीनटीका

प्रतापरुद्रयशोभूषणमुपलक्ष्य मल्लिनाथसुतः कुमारस्वामी रत्नापणाभिधानां पाण्डित्यपूर्णां महत्त्वशालिनीञ्च टीकामलिखत्। अत्राऽनेकेषां प्राचीनग्रन्थानामुद्धरणानि ग्रन्थकाराणाञ्च नामानि प्राप्यन्ते। कानिचिन्नामानि निम्नलिखितानि वर्तन्ते -

---

१. प्रतापरुद्रदेवस्य गुणानाश्रित्य निर्मितः।
अलङ्कारप्रबन्धोऽयं सान्तःकरणोत्सवोऽस्तु वः।। प्रतापरुद्रयशोभूषण १.९

"अलङ्कारचूडामण्येकावलीकविकल्पद्रुमनाटकप्रकाशगोपालचक्रवर्तिभावप्रकाशभट्ट-मल्लभोजशृङ्गारप्रकाशशिंगभूपालरसार्णवसुधाकरपञ्चपादिकापदमञ्जरीमहिमभट्टमानसोल्लास-रसनिरूपणवसन्तराजवासन्तराजीयनाट्यशास्त्ररसमञ्जरीरुचकविदग्धमुखमण्डनसाहित्य-चिन्तामणिहेमचन्द्रसाहित्यदर्पणादीनि।''

एषु ग्रन्थेषु केचन एव ग्रन्थाः वर्तमानसमये समुपलभ्यन्ते।

प्रतापरुद्रयशोभूषणस्यैकाऽन्या टीका रत्नशाणाभिधाना समुपलब्धा। परन्त्वियमपूर्णैव वर्तते। द्वाभ्यां टीकाभ्यां सहाऽयं ग्रन्थो बोम्बे संस्कृत सीरीज, इति प्रकाशनसंस्थया प्रकाशितः।

# कविराजो विश्वनाथः

## १. विश्वनाथस्य महत्त्वम्

कविराजोपाधिधारिणा विश्वनाथेन स्वकीयकाव्यशास्त्रीयग्रन्थे साहित्यदर्पणे काव्यशास्त्रविषया अतिसरलसुबोधशैल्या सहृदयानामवबोधाय प्रस्तुताः। ग्रन्थोऽयं विद्वत्सु छात्रेष्वध्यापकेषु चाऽतिलोकप्रियो बभूव। लोकप्रियत्वस्य च हेतवो वर्तन्ते - सारल्यं बोधगम्यत्वं विषयव्यापकत्वञ्च।

साहित्यदर्पणे सर्वाणि काव्यसमीक्षातत्त्वानि सन्निविष्टानीति ग्रन्थस्याऽस्य महन्महत्त्वम्। अत्र श्रव्यकाव्यसमीक्षा कविराजेन सम्पूर्णरूपेण विवृता। अथ च दृश्यकाव्यसमीक्षातत्त्वान्यपि साकल्येन वर्णितानि। दृश्यकाव्यानां वैशिष्ट्यानि भेदाश्च साङ्गोपाङ्गा निरूपिताः लभ्यन्ते।

केचन काव्यसमीक्षकाः समुद्घोषयन्ति -

आनन्दवर्धनमम्मटजगन्नाथादिशास्त्रकृतां समक्षं विश्वनाथो द्वितीयामेव कोटिमाचार्यत्वस्योद्वहति। परन्तु विश्वनाथस्य विषयप्रतिपादनपद्धतिर्विषयव्यापकत्वञ्च तथा समुत्कृष्टं यथाऽसौ काव्यशास्त्रकृत्सु प्रथमकोटिक एवाऽऽचार्यो गणनीयः। सत्यं तथ्यञ्च कथनमिदं यत् साहित्यदर्पणलेखने विश्वनाथेन प्राचीनकाव्यशास्त्रकृतामाचार्याणामनुसरणं यद्यपि प्रायशो विहितं, तथापि तस्य स्वकीयानि वैशिष्ट्यान्यपि संलक्ष्यन्ते।

साहित्यदर्पणस्य प्रथमे परिच्छेदे काव्यलक्षणं विशदीकुर्वन् विश्वनाथः स्ववैशिष्ट्यं मौलिकत्वञ्च प्रादर्शयत्। आनन्दवर्धनमम्मटादीनां विशिष्टप्रतिष्ठितानां काव्यशास्त्रकृतां काव्यलक्षणं खण्डयित्वा तेन काव्यस्य विशिष्टं लक्षणं नवं प्रतिष्ठापितम्। सुदृढं सप्रमाणं तेन साधितम् - वाक्यं रसात्मकं काव्यम्, इत्येव काव्यलक्षणं समुचितम्। एवमेव ह्यलङ्कारविवेचने रुय्यकस्याऽलङ्कारसर्वस्वमनुसरन्नप्यसौ स्वातन्त्र्येण कांश्चिदलङ्कारान् नवानुद्भावयामास।

मम्मटस्य विषयप्रतिपादनपद्धतिरतिसूक्ष्मभावात् संक्षिप्तत्वाच्चाऽतिदुरवबोध्या सञ्जाता। पण्डितराजो जगन्नाथः पूर्ववर्त्यालङ्कारिकमन्तव्यानि खण्डयित्वा दुरूहतर्कैश्च कटु समालोच्य स्वग्रन्थं रसगङ्गाधरं कटुतरं दुःखगम्यञ्च समापादयत्। एतद्विपरीतं विश्वनाथस्य विषयप्रतिपादनं क्वचित् क्वचित् सूक्ष्मं जटिलञ्च सदपि सामान्यतः सुविशदं सुस्पष्टं सुखावबोधञ्चाऽस्ति। डा० सत्यव्रतसिंहेन सत्यमेवोक्तम् -

"काव्यप्रकाशो दुरूहतया सहृदयानुद्वेजयति, परं साहित्यदर्पणं सुखगम्यतया काव्यरसस्निग्धान् सहृदयानाकर्षति।[1]

विश्वनाथो ह्येकस्मिनन्नेव ग्रन्थे साहित्यदर्पणे काव्यशास्त्रविषयान्नाट्यशास्त्रविषयांश्च सर्वान् समावेशयत्। भामहदण्डिवामनमम्मटजगन्नाथादिभिराचार्यैर्न नाट्यशास्त्रविषयाः निरूपिताः। अथ च तैः विविधविधानां महाकाव्यगद्यकाव्यादीनां विवेचने स्पर्शमात्रमेव कृतम्। परं विश्वनाथो विविधविधानि काव्यानि निरूपयन् नाट्यरचनासंविधानाभिनयनाट्यालङ्काररूपकोपरूपकलक्षणभेदादिविषयान् विद्यार्थिनां काव्यशास्त्राध्ययनाभिलाषिणां सुखावबोधार्थं सन्न्यवेशयत्। अत एव संस्कृताध्ययनपाठ्यक्रमेषु संस्कृतछात्राः साहित्यपर्दणमधीत्य तदनन्तरं मम्मटादीनामाचार्याणां दुरूहग्रन्थानामध्ययनं प्रति प्रवर्तन्ते।

## २. विश्वनाथस्य जीवनवृत्तं समयश्च

विश्वनाथेन स्वकृतिषु स्वकीयजीवनपरिचयः स्वयमेव प्रस्तुतः। अथ च तस्य तावानेव परिचय उपलभ्यते यावास्तेन स्वयमेव सूचितः।

विश्वनाथो ह्युत्कलप्रदेशस्य प्रतिष्ठिते प्रसिद्धे च ब्राह्मणकुले जन्म लेभे। विश्वनाथस्य प्रपितामहो नारायणः स्वयमुद्भटो विद्वान् मनीषी प्रतिभाशाली ग्रन्थमेकमलङ्कारशास्त्रविषयकमलिखत्।[2] स्वकृतकाव्यप्रकाशटीकायां विश्वनाथो नारायणं स्वपितामहमकथयत्।[3] एतैर्वचनैरनुमीयते यन्नारायणो विश्वनाथस्य वस्तुतः प्रपितामहोऽवर्तत, परं संक्षेपतस्तु सः पितामह इति लिखितः।

विश्वनाथेन स्वपितुश्चन्द्रशेखरस्योल्लेखः साहित्यदर्पणस्याऽन्तिमभागे कृतः।[4] उत्तमकाव्यकर्तुश्चन्द्रशेखरस्य द्वयोर्ग्रन्थयोरुल्लेखं कविराजः साहित्यदर्पणेऽकरोत् - पुष्पमालां[5] भाषार्णवञ्च।[6] जनकरचिता अनेके श्लोकाः विश्वनाथेन साहित्यदर्पणे लिखिताः।[7]

काव्यप्रकाशस्य दीपिकाटीकायाः लेखकः प्रसिद्धो विद्वांश्चण्डीदासो विश्वनाथपितामहानुजोऽवर्ततेत्युल्लेखः साहित्यदर्पणे समुपलभ्यते।

---

१. डा० सत्यव्रतसिंह : हिन्दी साहित्यदर्पण - भूमिका पृ० ६४

२. तत्प्राणत्वं मास्मद् वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीनारायणपादैरुक्तम्।
साहित्यदर्पण (३-२-३) वृत्तितः

३. यदाहुः। श्रीकलिङ्गभूमण्डलाखण्डलमहाराजाधिराजश्रीनरसिंहदेवसभायां धर्मदत्तं स्थगयन्तं . ......... अस्मत् पितामहश्रीनारायणपादाः। काव्यप्रकाशदर्पणस्य भूमिका पृष्ठ २१

४. श्रीचन्द्रशेखरमहाकविचन्द्रसूनुश्रीविश्वनाथकविराजकृतं प्रबन्धम्।
साहित्यदर्पणममुं सुधियो विलोक्य साहित्यतत्त्वमखिलं सुखमेव वित्त।। साहित्यदर्पण १०.९९

५. द्वादशपदा नान्दी यथा मम तातपादानां पुष्पमालायाम्। साहित्यदर्पण (६.२५) वृत्तितः

६. भाषालक्षणानि यथा मम तातपादानां भाषार्णवे। साहित्यदर्पण (६.१६९) वृत्तितः

७. साहित्यदर्पण (३.५८, ३.८२, ३.२०७, ३.२१३) स्योदाहरणेषु

विश्वनाथकृतकाव्यप्रकाशटीकायां संस्कृतशब्दानां व्याख्याने ह्युत्कलजनपदभाषा-पर्यायपदानां बाहुल्यात् कविराजोऽयमुत्कलजनपदवासी ह्यनुमीयते।[१] विश्वनाथस्तस्य जनकश्च द्वावेव कस्यचित् पार्थिवस्य सन्धिविग्रहिकप्रतिष्ठितपदमलङ्कुर्वाणावास्तामिति निश्चयः। यतो द्वावपि सन्धिविग्रहिकपदविभूषितनामानौ वर्ण्येते। सम्भवतोऽयं पार्थिवः कलिङ्गाधिपतिरेवाऽऽसीत्।

साहित्यदर्पणस्य पदान्येतदपि सूचयन्ति यद् विश्वनाथो वैष्णवसम्प्रदायानुयायी ह्यवर्तत। तत्र तस्य श्रद्धाभावस्य प्रमाणानि साहित्यदर्पणस्य प्रथमपरिच्छेदे प्रयोजनव्याख्यायां[२], ग्रन्थसमाप्तौ च मङ्गलाशंसनश्लोके समुपलभ्यन्ते।[३]

एतैर्वर्णनैरनुमीयते यद् विश्वनाथेन स्वजीवनकाले ह्येव प्रचुरं ससम्मानं यशोऽर्जितम्। साहित्यदर्पणेऽसौ स्वनिम्नविरुदानामुल्लेखमकरोत् -

(i) नारायणचरणारविन्दमधुव्रत
(ii) साहित्यार्णवकर्णधार
(iii) ध्वनिस्थापनपरमाचार्य
(iv) कविसूक्तिरत्नाकर
(v) अष्टादशभाषावारविलासिनीभुजङ्ग
(vi) आलङ्कारिकचक्रवर्ती
(vii) सन्धिविग्रहिक
(viii) महापात्र

विश्वनाथसमयनिर्धारणसम्बन्धे न किमपि काठिन्यं विप्रतिपत्तिर्वाऽनुभूयते। एकाधिकप्रमाणान्याश्रित्य तस्य समयो निश्चेतुं शक्यते। यथा -

(i) विश्वनाथः साहित्यदर्पणे मुसलिमनरपतिमलाउद्दीनमुल्लिलेख, यः सन्धिं कृत्वा सर्वस्वमपजहार, युद्धञ्च विधाय प्राणापहारकोऽभवत्।[४] अयमलाउद्दीननरपतिर्मुसलिमधर्मानुयायी खिलजीवंशीयः सुलतान अलाउद्दीन एवाऽभवत्। तस्य शासनकालः १२९६-१३१६ ख्रिष्टाब्दो

---

१. वैपरीत्ये रुचिङ्कुर्विति पाठः। अत्र चिङ्कुपदं काश्मीरादिभाषायामश्लीलार्थबोधकमुत्कलभाषायां घृतकाण्डक इव" इति।
काव्यप्रकाशस्य वामनाचार्यझलकीकरकृतटीकायाः भूमिका पृ० २५

२. किञ्च काव्याद्धर्मप्राप्तिर्भगवन्नारायणचरणारविन्दस्तवादिना स्वर्गे लोके कामधुग्भवति।
साहित्यदर्पण (१.२) वृत्तितः

३. यावत्प्रसन्नेन्दुनिभानना श्रीर्नारायणस्याङ्कमलङ्करोति।
तावन्मनः सम्मदयन् कवीनामेषः प्रबन्धः प्रथितोऽस्तु लोके।। साहित्यदर्पण १०.१००

४. सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः।
अल्लाउद्दीननृपतौ न सन्धिर्न च विग्रहः।। साहित्यदर्पणे ४.१४ उदाहरणम्

बभूव। विजयशीलोऽसौ बहून् हिन्दूभूपालान् पराजित्य शासनाधिकारं वितस्तार। अस्य सुलतानस्याऽत्याचारान् विश्वनाथः क्रियोत्प्रेक्षोदाहरणे व्यानङ्क्त।[1] सुलतानाय विश्वनाथेन सुरत्राणपदं प्रयुक्तम्। लोकप्रसिद्धिरियं यदलाउद्दीनोऽयं षड्यन्त्रकारिभिः १३१६ ख्रिष्टाब्दे विषप्रयोगेण व्यापादितः। अल्लाउद्दीनविषयकश्लोकानां रचना विश्वनाथेन तस्य जीवनकाले मृत्योरनन्तरं वा तस्मिन्नेव काले कृता। अतः विश्वनाथस्य समयः १३०० ख्रिष्टाब्दपरवर्ती ज्ञेयः।

(ii) साहित्यदर्पणस्यैका हस्तलिखिता पाण्डुलिपिर्मनीषिभिर्जम्मूप्रदेशादधिगता। अस्याः प्रतिलिपिकरणसमयः १३८४ ख्रिष्टाब्दो निश्चीयते। अतो विश्वनाथः १३८४ ख्रिष्टाब्दपूर्ववर्ती मन्तव्यः।

प्रमाणान्येतानि विश्वनाथं १३००-१३८४ ख्रिष्टाब्दमध्यवर्तिनं प्रतिपादयन्ति। एतत्सुनिश्चितप्रमाणव्यतिरिक्तानि कानिचिदन्यान्यपि प्रमाणानि विश्वनाथसमयनिर्धारणे सहायकानि सन्ति। तैरपि विश्वनाथस्याऽयमेव समयः प्रतिपाद्यते। तानि प्रमाणानि निम्नाङ्कितानि सन्ति -

(i) निश्चयालङ्कारोदाहरणत्वेन विश्वनाथेन गीतगोविन्दकाव्यस्य पद्यमेकमुद्धृतम्।[2] गीतगोविन्दरचयितुर्जयदेवस्य समयः ख्रिष्टस्य द्वादशशताब्दीपूर्वार्द्धको गण्यते। अनेकैः कविभिर्गोवर्धनादिभिः सहाऽसौ बङ्गनरेशस्य लक्ष्मणसेनस्य राजसभामलञ्चकार। लक्ष्मणसेनस्यैकः शिलालेखः ११९६ ख्रिष्टाब्दकालीन उपलभ्यते। अतो विश्वनाथो जयदेवानन्तरं बभूव।

(ii) विश्वनाथेन श्रीहर्षकृतनैषधचरितस्यैकः श्लोक उद्धृतः।[3] श्रीहर्षस्य समयः ११६७-७४ ख्रिष्टाब्दो ज्ञायते।

(iii) अनर्घराघवस्याऽप्येकः श्लोको विश्वनाथेनोद्धृतः।[4] अनर्घराघवनाटक-कर्तुर्जयदेवस्य समयः १२००-१२५० ख्रिष्टाब्दः प्रसिद्धः।

(iv) विश्वनाथो रुय्यकस्याऽलङ्कारसर्वस्वं प्रायशोऽनुससार। अनेकान्युदाहरणानि तेन तस्मादेव ग्रन्थादक्षरशो गृहीतानि। रुय्यकः ख्रिष्टस्य द्वादशशताब्दीनध्यवर्ती निश्चीयते। अतो विश्वनाथस्तदुत्तरवर्त्येव ध्रुवं बभूव।

---

१. गङ्गाम्भसि सुरत्राण तव निःषाणनिस्वनः।
स्नातीवारिवधूवर्गगर्भपातनपातकी।। साहित्यदर्पण १०.४२ उदाहरणम्

२. हृदि बिसलताहारो नाऽयं भुजङ्गमनायकः। साहित्यदर्पणे १०.३९ कारिकाया उदाहरणम्

३. धन्याऽसि वैदर्भि गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि।
इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति।।
साहित्यदर्पण १०.५० कारिकाया उदाहरणम्

४. कदली कदली करभः करभः करिराजकरः करिराजकरः।
भुवनत्रयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः।।
साहित्यदर्पणे ४.३ कारिकाया उदाहरणम्

(vi) काव्यप्रकाशस्य दीपिकाटीकाकारो विश्वनाथस्य पितामहस्याऽनुजोऽवर्तत। टीकेयं १२५० खिष्टाब्दे लिखिताऽनुमीयते। अतो विश्वनाथस्य समयस्त्रयोदशशताब्दीपश्चाद्वर्ती मन्तव्यः।

(vi) कलिङ्गनरेशस्य नरसिंहस्य राजसभायां विश्वनाथपितामहनारायणस्य धर्मदत्तस्य च शास्त्रार्थो बभूवेति कविराजेन सङ्केतितम्। धर्मदत्तस्योल्लेखो विश्वनाथेन निम्नप्रकारेण कृतः[1] -

तदाह धर्मदत्तः स्वग्रन्थे -

**रसे सारश्चमत्कारः सर्वत्राऽप्यनुभूयते।**
**तस्माच्चमत्कारसारत्वे सर्वत्राऽप्यद्भुतो रसः।।**
**तस्मादद्भुतमेवाह कृती नारायणो स्वयम्।।**

नरसिंहस्याऽस्य नरपतेः समयः १२७०-१३०३ खिष्टाब्दमध्यवर्ती निश्चीयते।

उपरिलिखितोद्धरणैर्ध्रुवमिदं प्रतिष्ठितं यद् विश्वनाथः १३०० खिष्टाब्दपश्चाद्वर्ती मन्तव्यः। विश्वनाथस्याऽन्तिमसमयसीमा निम्नप्रकारेण निश्चीयते -

(i) मल्लिनाथसुतः कुमारस्वामी प्रतापरुद्रयशोभूषणस्य रत्नापणटीकायां विश्वनाथमुद्धृतवान्।[2] कुमारस्वामिनः समयः पञ्चदशशताब्दीखिष्टो गण्यते।

(ii) काव्यप्रकाशस्य प्रदीपटीकाकारो गोविन्दठक्करः साहित्यदर्पणविचारधारामुल्लिलेख। नामोल्लेखं विनाऽसौ विश्वनाथकृतं मम्मटकृतकाव्यलक्षणखण्डनमवर्णयत्। अथ चाऽसौ विश्वनाथकृतकाव्यलक्षणस्याऽप्यालोचनां कृतवान्।[3] गोविन्दठक्करोऽपि पञ्चदशशताब्दीवर्ती गण्यते।

प्रमाणान्येतान्याधारीकृत्य विश्वनाथस्य समयः पञ्चदशशताब्दीपूर्ववर्ती सिद्ध्यति। अतो विश्वनाथं १३००-१३८४ खिष्टाब्दमध्यवर्तिकालीनमवगमनमेव तर्कसङ्गतम्।

### ३. विश्वनाथस्य कृतयः

विश्वनाथेन महती साहित्यसृष्टिः सृष्टा। तस्य प्रसिद्धतमा कृतिर्वर्तते - साहित्यदर्पणम्। साहित्यशास्त्रविषयोऽयं ग्रन्थोऽतिलोकप्रियो बभूव। अथ चाऽसौ काव्यप्रकाशस्य टीकां काव्यदर्पणनाम्नीमप्यलिखत्।

---

१. साहित्यदर्पण ३.३ कारिकायाः वृत्तिः

२. सम्मोहानन्दसम्भेदो मदो मद्योपयोगजः।
अमुना चोत्तमः शेते मध्यो हसति गायति।।
अधमप्रकृतिश्चाऽपि परुषं वक्ति रोदिति।। प्रतापरुद्रयशोभूषण - रत्नापण टीका-रसप्रकरण

३. अर्वाचीनास्तु "यथोक्तस्य काव्यलक्षणत्वे काव्यपदं निर्विषयं प्रविरलविषयं वा स्यात्। दोषाणां दुर्वारत्वात्। तस्माद् वाक्यं रसात्मकं काव्यमिति लक्षणम्। तथा च दुष्टेऽपि रसान्वये काव्यत्वमस्त्येव। परं त्वपकर्षमात्रम्। तदुक्तम् - "कीटानुविद्धरत्नादि" इत्यादि। एवमलङ्कारादिसत्त्वे उत्कर्षमात्रम्। नीरसे चित्रादौ काव्यवहारो गौण इत्याहुः।
काव्यप्रकाश प्रदीपटीका काव्यलक्षणप्रकरण्

विश्वनाथो न केवलं काव्यशास्त्रकृदेवाऽऽसीत्, सहृदयः कविरप्यासीत्। तस्य महनीयानि काव्यानि प्रसिद्धानि। अनेकानि काव्यानि तेन रचितानि। परं वर्तमानसमये न तस्य किमपि काव्यं लभ्यते। चन्द्रकलानाटिकैव केवलं समुपलब्धा प्रकाशिता च। साहित्यदर्पणोद्धरणेभ्यो विश्वनाथस्य काव्यानां परिचयो लभ्यते। विश्वनाथरचितकाव्यानां तद्रचितकाव्यशास्त्रीयग्रन्थानाञ्च परिचयो निम्नप्रकारेण प्रस्तूयते -

**(i) राघवविलासमहाकाव्यम् -**

राघवविलासमहाकाव्यस्योल्लेखः साहित्यदर्पणे करुणरसस्य (३.२२२-२२५) उदाहरणप्रसङ्गे वर्तते।[१]

**(ii) कुवलयाश्वचरितम् -**

काव्यमिदं प्राकृतभाषानिबद्धमवर्तत। अस्योल्लेखो जडतेति व्यभिचारिभावस्य (३.१४८) उदाहरणप्रसङ्गे साहित्यदर्पणे वर्तते।[२]

**(iii) प्रभावतीपरिणयः -**

प्रभावतीपरिणयनाटिकायाः पद्यमेकं विश्वनाथेन साहित्यदर्पणे मुग्धानायिकाया (३.५८) उदाहरणत्वेन प्रस्तुतम्ः।[३]

**(iv) चन्द्रकला -**

चन्द्रकलानाटिकाया अपि पद्यमेकं कविराजेन साहित्यदर्पणे नायिकालङ्कारान् विवेचयता दीप्त्यलङ्कारस्य (३.९६) उदाहरणत्वेन प्रस्तुतम्।[४] नाटिकेयं प्रकाशिता समुपलभ्यते।

---

१. यथा मम राघवविलासे
विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः।
अनयोर्घटनाविधेः स्फुटं ननु खड्गेन शिरीषकर्तनम्।।

२. यथा मम कुवलयाश्वचरिते प्राकृतकाव्ये -
णवरिअ तं जुअजुअलं अण्णोण्णं णिहितसजलमन्थरदिट्ठं।
आलेक्ख ओपिअं विअ खणमेत्तं तत्थ संट्ठिअं मुअसण्णं।।

३. प्रथमावतीर्णमदनविकारा यथा प्रभावतीपरिणये -
दत्ते सालसमन्थरं भुवि पदं निर्याति नान्तःपुरात्
नोद्दामं हसति क्षणात् कलयते ह्रीयन्त्रणां कामपि।
किञ्चिद् भावगभीरवक्रिमलवस्पृष्टं मनाग् भाषते
सभ्रूभङ्गमुदीक्षते प्रियकथामुल्लापयन्तीं सखीम्।।

४. यथा - मम चन्द्रकलानाटिकायां चन्द्रकलावर्णनम् -
तारुण्यस्य विलासः समधिककलावण्यसम्पदो हासः
धरणितलस्याभरणं युवजनमनसो वशीकरणम्।।

(vi) **प्रशस्तिरत्नावली -**

काव्यमिदं षोडशभाषासु कविना निबद्धम्। सम्भवतोऽत्र कलिङ्गनरेशयोः नरसिंहप्रथमनरसिंहद्वितीययोः प्रशस्तयो निबद्धा अवर्तन्त। काव्यस्याऽस्योल्लेखः साहित्यदर्पणे करम्भकपरिभाषायां (६.३३६) वर्तते।[१]

(vi) **साहित्यदर्पणम् -**

कविराजस्य विश्वनाथस्य प्रसिद्धतमो महिमशाली च ग्रन्थो वर्तते साहित्यदर्पणम्। अस्य विस्तृतपरिचयोऽग्रे दर्शयिष्यते।

(vii) **काव्यप्रकाशदर्पणम् -**

विश्वनाथविरचिता काव्यप्रकाशदर्पणनाम्नी टीका विद्वज्जनमाननीया प्रसिद्धा वर्तते।

(viii) **नरसिंहविजयम् -**

विश्वनाथो नरसिंहविजयाभिधानं काव्यमलिखत्। सम्भवतोऽस्मिन् काव्ये कलिङ्गनरेशस्य नरसिंहद्वितीयस्य विजयगौरवगाथाः कविना वर्णिताः। काव्यमिदं कविना साहित्यदर्पणलेखनानन्तरमेव विरचितं, यतोऽस्य निर्देशोऽस्मिन् ग्रन्थे नोपलभ्यते। नरसिंहविजयकाव्यस्योल्लेखो विश्वनाथसुतेनाऽनन्तदासेन साहित्यदर्पणलोचनटीकायां कृतः।[२]

उपरिनिर्दिष्टग्रन्थव्यतिरिक्ता अन्याश्चाऽपि काश्चन कृतयो निश्चयेन विश्वनाथेन सृष्टा इति सम्भाव्यते। साहित्यदर्पणे कानिचिदुदाहरणानि तथाविधानि सन्ति, यत्र लेखकानां पुस्तकानां वा नामानि न निर्दिष्टानि, परं तानि विश्वनाथकृतानि समीक्षकैर्निर्दिश्यन्ते।[३]

## ४. साहित्यदर्पणम्

अतिविशालकाये काव्यशास्त्रीये साहित्यदर्पणे सर्वेषां काव्याङ्गानां काव्यतत्त्वानाञ्च विवेचनं विश्वनाथेन कृतम्। विषयव्यापकत्वाच्छैलीसारल्याच्च ग्रन्थोऽयमतिलोकप्रियो बहुप्रचारितश्चाऽभवत्।

---

१. करम्भकं तु भाषाभिर्विविधाभिर्विनिर्मितम्।
यथा मम षोडशभाषामयी प्रशस्तिरत्नावली।।

२. यथा मम तातपादानां विजयनरसिंहे।

३. यथा वा मम

लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन्।
मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि।।

साहित्यदर्पणे माधुर्यगुणव्यञ्जकवर्णोदाहरणम् (८.३-४)

प्राचीनाचार्याननुकुर्वता विश्वनाथेन ग्रन्थोऽयं साहित्यदर्पणं त्रिषु भागेषु विभक्तः - कारिकाः वृत्तय उदाहरणानि च। सामान्यतः कारिकाः स्वयं विश्वनाथरचिताः सन्ति। परं केषुचित् स्थानेषु तेन प्राचीनाचार्याणां शब्दा अपि स्वरचितकारिकासु संगुम्फिताः। वृत्तयस्तु साकल्येन विश्वनाथरचिताः वर्तन्ते। उदाहरणानि विविधानि सन्ति। प्रायशस्तानि प्राचीनकविकाव्येभ्यः सङ्कलितानि वर्तन्ते, परं कानिचिदुदाहरणानि विश्वनाथेन स्वपितृपितामहादिकृतिभ्यः सङ्गृहीतानि, कानिचिच्च स्वकृतिभ्य एव गृहीतानि।

दशसु परिच्छेदेषु विभक्तस्य साहित्यदर्पणस्य विषयवस्तु संक्षेपेण निम्नप्रकारेण प्रस्तूयते -

(i) **प्रथमः परिच्छेदः -**

प्रथमे परिच्छेदे मङ्गलाचरणानन्तरं ग्रन्थकृता काव्यप्रयोजनानि प्रोक्तानि। चत्वारि काव्यप्रयोजनानि वर्तन्ते - धर्मार्थकाममोक्षाः। तदनन्तरं मम्मटाचार्यकृतकाव्य-लक्षणखण्डनं विधाय विश्वनाथः स्वकीयं काव्यलक्षणं "वाक्यं रसात्मकं काव्य" मिति प्रतिपादयामास। परिच्छेदान्ते च कविराजो दोषगुणालङ्काररीतीनां काव्येन सह सम्बन्धं व्याचख्यौ।

(ii) **द्वितीयः परिच्छेदः -**

द्वितीये परिच्छेदे शब्दस्याऽर्थस्य शब्दशक्तीनाञ्च विवेचनं विद्यते। वाक्यस्य, पदस्य, त्रिविधार्थानां (वाच्यलक्ष्यव्यङ्ग्यानां), त्रिविधशब्दशक्तीनाञ्च (अभिधालक्षणाव्यञ्जनानां) स्वरूपाणां भेदानाञ्च व्याख्या कविनाऽत्र कृता। अस्मिन् प्रकरणे विश्वनाथो मम्मटकृतस्खलनान्यपि निर्दिदेश। परिच्छेदान्ते तात्पर्यावृत्तिं तात्पर्यार्थञ्चापि शास्त्रकारो व्याचख्यौ।

(iii) **तृतीयः परिच्छेदः -**

तृतीयस्य परिच्छेदस्य प्रमुखविषयो वर्तते - रसप्रतिपादनम्। रससम्बन्धे प्राचीनाचार्याणां मतानि निर्दिशंल्लेखको रसस्वरूपं निर्दिश्य रसनिष्पत्तिं व्याचख्यौ। नाट्यशास्त्रस्य रससूत्रं व्याख्याय विश्वनाथो रसं व्यङ्ग्यं प्रतिपादितवान्। तदनन्तरं विभावस्वरूपस्य व्याख्या वर्तते। अथ चाऽस्मिन् परिच्छेदे नायकाः नायकभेदाः नायकसहायकाश्च तत्तद्गुणविवेचनेन सह प्रोक्ताः। तदनन्तरं नायिकानां नायिकाभेदानां नायिकालङ्काराणां नायिकासहायिकानाञ्च विशदं विवेचनमस्ति। अस्मिन् प्रकरणे विश्वनाथेन प्रायशो दशरूपकमेवाऽऽश्रितम्। तदनन्तरमनुभावानां सात्त्विकभावानां व्यभिचारिभावानां स्थायिभावानाञ्च सोदाहरणं व्याख्यां लेखकः प्रास्तौत्। परिच्छेदान्ते रसाभासभावाभासभावशान्तिभावोदयभावसन्धिभावशबलतानां वर्णनमस्ति।

(iv) **चतुर्थः परिच्छेदः -**

परिच्छेदे चतुर्थे विश्वनाथेन काव्यभेदयोर्द्वयोर्मुख्ययोर्ध्वनिगुणीभूतव्यङ्ग्ययोः सस्वरूपं सभेदञ्च व्याख्या कृता। विश्वनाथेन प्रोक्तम् - काव्यस्य द्वावेव मुख्यौ भेदौ भवतः -

ध्वनिकाव्यं गुणीभूतव्यङ्ग्यकाव्यञ्च। परिच्छेदस्यान्ते मम्मटप्रोक्ते काव्यस्य तृतीये भेदे चित्रकाव्ये काव्यत्वं नास्तीत्यसौ प्रतिपादितवान्।

(v) **पञ्चमः परिच्छेदः -**

पञ्चमे परिच्छेदे विश्वनाथेन व्यञ्जनावृत्तिस्थापना विहिता। रसावबोधाय रसास्वादनाय च व्यञ्जनावृत्तिरनिवार्या। अभिधा वा लक्षणा वा व्यङ्ग्यार्थस्याऽवबोधे न क्षमा। व्यञ्जनाया अन्तर्भावोऽभिधायां लक्षणायामनुमित्यां वा न कर्तुं शक्यते, अतो व्यङ्ग्यार्थमवबोधयितुं व्यञ्जनावृत्तिरनिवार्यत्वेन स्वीकरणीया। विश्वनाथेनाऽत्रैका नवोद्भावनाऽपि प्रस्तुता। व्यङ्ग्यार्थावबोधिका व्यञ्जनावृत्तिर्यदा रसमभिव्यनक्ति, रसनावृत्तिरपि सा निगद्यते।

(vi) **षष्ठः परिच्छेदः -**

षष्ठे परिच्छेदे काव्यस्याऽन्यनिमित्तकाः भेदाः लेखकेन प्रदर्शिताः। प्रथमं तावद् दशरूपकभेदान् उपरूपकांश्चोक्त्वा कविराजो नाटकीयतत्त्वानि सविशदं व्याचख्यौ। तदनन्तरं रूपकोपरूपकाणां विभिन्नभेदानां स्वरूपाणि निर्दिदेश। अस्मिन्नपि प्रकरणे साहित्यदर्पणकारः प्रायशो दशरूपकमेवाऽनुससार। तदनन्तरं काव्यस्याऽन्यविविधभेदापद्यकाव्यमहाकाव्य-गद्यकाव्यकथाऽऽख्यायिकागद्यपद्यकाव्यचम्पूविरुदकरम्भकादीनां काव्यानां स्वरूपाण्यपि कविराजेन प्रोक्तानि।

(vii) **सप्तमः परिच्छेदः -**

सप्तमः परिच्छेदो वर्तते - दोषविवेचनात्मकः। अत्र दोषाणां विशदविवेचना वर्तते। दोषा मुख्यरूपेण पदगताः पदांशगताः वाक्यगता अर्थगताः रसगताश्च भवन्ति। तेषामनेकभेदप्रभेदानां व्याख्याऽस्मिन् परिच्छेदे विद्यते। परिच्छेदस्याऽन्तेऽलङ्कारदोषाणां विवेचनमस्ति। दोषस्वरूपवर्णने विश्वनाथः प्रायशो मम्मटमनुचकार।

(viii) **अष्टमः परिच्छेदः -**

अष्टमे परिच्छेदे गुणनिरूपणं वर्तते। अत्राऽपि काव्यप्रकाशस्य सुतरां प्रभावः संलक्ष्यते। तथाऽप्यत्र विश्वनाथस्य किञ्चिन्मौलिकत्वमपि वर्तते। काव्ये त्रयो गुणाः भवन्ति - माधुर्यौजःप्रसादाः। मम्मटमनुकुर्वता विश्वनाथेन प्राचीनाचार्याणां गुणास्त्रिष्वेव तेषु गुणेष्वन्तर्भाविताः। अर्थगुणाश्च न तेनाऽङ्गीकृताः।

(ix) **नवमः परिच्छेदः -**

परिच्छेदोऽयं वर्तते रीतिवर्णनात्मकः। अत्र रीतीनां स्वरूपस्य भेदानाञ्च विस्तरेण व्याख्या वर्तते। चतस्रो रीतयो भवन्ति - वैदर्भी गौडी लाटी पाञ्चाली च।

(x) **दशमः परिच्छेदः -**

दशमेऽस्मिन्नन्तिमे परिच्छेदेऽलङ्काराणां विवेचनमस्ति। प्रथमं तावदलङ्कारस्वरूपमुक्त्वा विश्वनाथोऽलङ्कारोपयोगितां काव्ये ह्युपदिदेश। अथ शब्दालङ्काराणां विवेचना विद्यते। विश्वनाथेन सप्त शब्दालङ्काराः प्रोक्ताः - पुनरुक्तवदाभासानुप्रासयमकवक्रोक्तिभाषा-

यमकश्लेषचित्रालङ्काराः। तदनन्तरमर्थालङ्कारानसौ प्रोवाच। कविराजः पञ्चसप्तत्यर्थालङ्काराणां स्वरूपाणि भेदांश्च सोदाहरणं प्रदर्श्य संसृष्टिसङ्करालङ्कारौ चाऽपि व्याचचक्षे। अलङ्कारनिरूपणे विश्वनाथो रुय्यकेनाऽतितरां प्रभावितः संलक्ष्यते।

### ५. साहित्यदर्पणस्य प्राचीनटीकाः

अतिसरलत्वात् सर्वाङ्गसम्पूर्णत्त्वाच्च साहित्यदर्पणग्रन्थो विद्वत्सु समीक्षकेषु च सुतरां लोकप्रियो बभूव। परन्तु टीकाः ग्रन्थस्याऽस्य नाऽधिकसंख्यायां विद्वद्भिर्मनीषिभिर्लिखिताः। ग्रन्थस्याऽस्य पञ्च प्राचीनटीकाः समुपलभ्यन्ते -

(i) लोचनटीका

साहित्यदर्पणस्य लोचनटीका ग्रन्थकर्तुर्विश्वनाथस्य सुतेनाऽनन्तदासेन लिखिता। टीकेयं संक्षिप्ता प्रसङ्गानुकूला वैदुष्यसम्भृता च वर्तते। इयं प्रकाशिता वर्तते।

(ii) **विवृतिटीका -**

टीकेयं रामचरणतर्कवागीशेन १७०१ खिष्टाब्दे विरचिता। इयं टीका विस्तृतव्याख्यासहिताऽत्युपयोगिनी काव्यशास्त्रतत्त्वानि व्याकरोति। परं नेयं काव्यप्रकाशस्य प्रदीपोद्योतादिटीकावत् तथा वैदुष्यपूर्णाऽस्ति। इयं प्रकाशिता वर्तते।

(iii) **टिप्पणीटीका -**

इयं टीका मथुरानाथशुक्लेन कृता। नाऽस्याः प्रकाशनं सञ्जातम्।

(iv) **प्रभाटीका -**

टीकाया अस्या लेखनं गोपीनाथेन कृतम्। इयमप्यप्रकाशिता वर्तते।

(v) **विज्ञप्रियाटीका -**

टीकाया अस्या लेखको वर्तते - माहेश्वरभट्टः। विस्तृतवैदुष्यपूर्णायाष्टीकाया अस्याः प्रकाशनं सञ्जातम्। माहेश्वरेण काव्यप्रकाशस्याऽपि टीका लिखिता।

वर्तमानसमये साहित्यदर्पणस्याऽध्ययनं संस्कृतविद्यालयेष्वन्येषु च विश्वविद्यालयेषु प्राचुर्येण पाठ्यक्रमेषु निर्दिष्टमस्ति। अतो वर्तमानकालीनैरप्यनेकैर्विद्वद्भिरस्य ग्रन्थस्य व्याख्या लिखिता। अस्मिन् सम्बन्धे पी०वी० काणेमहोदयः, कृष्णमोहनः शास्त्री, शालिग्रामशास्त्री, सत्यव्रतसिंहो निरूपणो विद्यालङ्कार इत्यादयो विद्वांसः प्रसिद्धाः सन्ति।

यद्यपि वर्तमानकालीनसमीक्षकैर्विश्वनाथः कविराजः काव्यशास्त्रकारेषु द्वितीयकोटिकः शास्त्रकारो गण्यते, तथापि काव्यशास्त्रजगति तस्य महत्त्वं नाऽल्पं विद्यते। तेन साहित्यदर्पणे काव्यशास्त्रविषया अतिसारल्येन व्यापकत्वेन च निरूपिताः। उत्तरवर्तिकाव्यशास्त्रसाहित्यमप्यनेन ग्रन्थेन सुतरां प्रभावितं संलक्ष्यते। सम्भवतः साहित्यदर्पणमधीत्य विमृश्य चैव पण्डितराजो जगन्नाथो रसगङ्गाधरग्रन्थनिर्माणे प्रेरितो बभूव।

सप्तत्रिंशोऽध्यायः

# केशवमिश्रः

## १. केशवमिश्रस्य महत्त्वम्

षोडशशताब्द्याः (ई०) काव्यशास्त्रकृत्सु केशवमिश्रस्य महत्त्वमसन्दिग्धमतितरां गण्यते। अलङ्कारशेखराभिधानं ग्रन्थं विरच्याऽसौ सहृदयहृदयेषु सादरं प्राविशत्। ग्रन्थस्याऽस्य प्रकाशनं काव्यमालासीरीज नं० ५० इत्यन्तर्गतं निर्णयसागरप्रेस मुम्बई संस्थया कृतम्। तदनन्तरमपि काशी संस्कृत सीरीज इति संस्थयाऽप्ययं ग्रन्थः प्रकाशितः। ग्रन्थेऽस्मिन् केशवमिश्रः सर्वाण्येव काव्याङ्गानि समैक्षत।

## २. केशवमिश्रस्य समयः

केशवमिश्रस्य समयो नाऽतिविवादास्पदः। अलङ्कारशेखरस्य प्रस्तावनायामसावसूचयत् - ग्रन्थमेनमसौ धर्मचन्द्रसुतस्य कल्याणचन्द्रस्य प्रेरणयाऽलिखत्।

धर्मचन्द्रजनकस्य रामचन्द्रस्य पूर्वपुरुषः सुशर्मा देहल्या अफगानशासकं युद्धे पराजयत्। प्रसिद्ध इतिहासकारः कनिंघममहोदयोऽलिखत् - माणिक्यचन्द्राभिधानो नरपतिः कांगड़ाप्रदेशस्याऽधिपतिर्बभूव। धर्मचन्द्रानन्तरमसौ १५६३ तमे ख्रिष्टाब्दे राजसिंहासनमारुरोह। दशवर्षावधिमसौ शासनाधिकारमभजत।[1] नरपतेरस्य वंशावलिर्न विस्तरेणोपलभ्यते, तथाप्यस्योल्लेखं केशवमिश्रोऽलङ्कारशेखरग्रन्थे चकार। अतः केशवमिश्रस्य समयः षोडशशताब्द्युत्तरार्धको (ई०) ह्यवगन्तव्यः।

## ३. केशवमिश्रस्य कृतयः

केशवमिश्रस्य कृतिरेकैव समुपलभ्यते - अलङ्कारशेखरः। ग्रन्थोऽसौ त्रिषु भागेषु विभक्तः - कारिकाः, वृत्तय उदाहरणानि च। कारिकाविषये केशवमिश्रेण सूचितम् - मूलरूपेण सूत्राण्येतानि शौद्धोदनिना विरचितानि[2]। तान्येवाऽऽश्रित्याऽसौ स्वग्रन्थमकरोत्।

कोऽयं शौद्धोदनिः कश्चाऽस्य परिचय इति न विज्ञायते। सूत्राण्येतानि भगवता बुद्धेन बौद्धमतप्रवर्तकेन शौद्धोदनिना[3] लिखितानीत्यवधारणा सुदुष्करा। असम्भाव्या ह्येषा। केचन समीक्षकाः सम्भावयन्ति यत् सूत्राण्येतानि (कारिका) केनचिद् बौद्धलेखकेन कृतानि,

---

१. आर्केओलोजिकल सर्वे आफ इण्डिया - पञ्चमो भागः पृष्ठ १६०

२. अलङ्कारविद्यासूत्रधारो भगवाञ्छौद्धोदनिः परमकारुणिकः स्वशास्त्रे प्रवर्तयिष्यन् प्रथमं काव्यस्वरूपमाह। अलङ्कारशेखर पृ० २

३. शुद्धोदनस्यापत्यं पुमान् शौद्धोदनिर्भगवान् बुद्धः।

बुद्धोपासकश्चाऽसावात्मानं शौद्धोदनिनामानं प्रसिद्धञ्चकार। परं काव्यशास्त्रस्येतिहासे शौद्धोदनिरपरिचित एव।

केशवमिश्रोऽलङ्कारशेखरे कञ्चिच्छ्रीपादाभिधानं लेखकमनेकशो ह्युल्लिलेख। परमस्य लेखकस्य नाम परिचयो वा नाऽन्यत्र कुत्राऽपि समुपलभ्यते, न च तस्य काऽपि कृतिरवलोक्यते। केचन समीक्षका अनुमान्ति, यदयं श्रीपाद एव शौद्धोदनिर्वर्तते।

केशवमिश्रेणाऽलङ्कारशेखरग्रन्थः शौद्धोदनिकृतसूत्राण्याश्रित्य लिखितोऽतः सूत्राण्येतानि केशवमिश्रकृताऽलङ्कारशेखररचनापूर्वमेव संस्थितान्यासन्नित्यनुमानं सुकरमेव। शौद्धोदनिना काव्यलक्षणं रसमाश्रित्य निर्दिष्टम्। अथ चाऽसौ व्यक्तिविवेकलेखकं महिमभट्टमप्युल्लिलेख। महिमभट्टस्य समयो वर्तते १०२०-१०५० खिष्टाब्दाः। अथ कारिका(सूत्र)रचनासु वाग्भटालङ्कारस्य प्रभावोऽपि संलक्ष्यते। अतः शौद्धोदनिकृतकारिकारचनासमयो द्वादशशताब्द्युत्तरार्धवर्ती (ई०) कल्पयितुं शक्यते।

केशवमिश्रेणाऽलङ्कारशेखरग्रन्थे सूचितमिदमपि यत्तेनैतद्ग्रन्थरचनापूर्वं कवीनामुपकाराय सप्त कृतयो लिखिताः। परन्तु वर्तमानसमये सर्वासां कृतीनामेतासां नामान्यपि नोपलभ्यन्ते। केवलं रचनास्वेतासु ह्यलङ्कारसर्वस्वं काव्यरत्नञ्चेति द्वयोर्ग्रन्थयोर्नामनी समुपलभ्येते।

## ४. अलङ्कारशेखरः

अलङ्कारशेखरे केशवमिश्रेण वर्ण्यविषयविभाजनमष्टरत्नेषु द्वाविंशतिमरीचिषु च कृतम्। मरीचिषु वर्णितानि विषयवस्तूनि क्रमशो निम्नप्रकारेण वर्तन्ते -

(i) काव्यपरिभाषा काव्यहेतवश्च।
(ii) वैदर्भीगौडीपाञ्चाल्यस्तिस्रो रीतयः। उक्तीनां मुद्राणाञ्च विभिन्नप्रकाराः।
(iii) शब्दवृत्तयः - शक्तिर्लक्षणा व्यञ्जना च।
(iv) पदानामष्टदोषाः।
(v) वाक्यानां द्वादश दोषाः।
(vi) अर्थानामष्टदोषाः
(vii) पञ्च शब्दगुणाः - संक्षिप्तत्वोदात्तत्वप्रसादोक्तिसमाधयः।
(viii) चत्वारोऽर्थगुणाः - भाविकत्वसुशब्दत्वपर्यायोक्तिसुधर्मिताः।
(ix) पूर्वोक्ताः पदवाक्यार्थदोषाः क्वचिद्गुणा अपि भवन्ति। तदा ते गुणा एव सञ्जायन्ते न दोषा अभिधीयन्ते।
(x) अष्ट शब्दालङ्काराः - चित्रवक्रोक्त्यनुप्रासगूढश्लेषप्रहेलिकाप्रश्नोत्तरयमकाः।
(xi) चतुर्दशाऽर्थालङ्काराः - उपमारूपकोत्प्रेक्षासमासोक्त्यपह्नुतिसमाहितस्वभावविरोधसारदीपकसहोक्त्यन्यदेशकविशेषोक्तिविभावनाः।
(xii) रूपकस्य भेदोपभेदाः।

(xiii) उत्प्रेक्षासमासोक्त्याद्यलङ्काराणां परिभाषाः, भेदा उदाहरणानि च। अस्मिन् वर्णने लेखकेन कामिनीनां विभिन्नाऽङ्गानां वर्णकेशमस्तकभ्रूनेत्रादीनामुपमानानि वर्णितानि।

(xiv) नायकानां शारीरिकविशेषतानां वर्णनविधिः।

(xv) सादृश्यवाचकशब्दानां कविसमयानाञ्च वर्णनम्।

(xvi) विविधवर्ण्यविषयाणां राजराज्ञीप्रदेशनगरनद्यादीनां वर्णनविधिस्तेषाञ्च गुणानां वर्णनम्।

(xvii) प्रकृत्यन्तर्गतविविधवस्तूनां स्वरूपाणि वर्णाश्च।

(xviii) एकस्मादारभ्य सहस्रसंख्यापर्यन्तमभिव्यक्तिकारकाणां वस्तूनां नामानि। विभिन्नविधचमत्काराणां रूपरेखाः। यथा - गतागत - संस्कृतप्राकृतशब्दानामेकरूपतादयः।

(xix) समस्यापूर्तयः।

(xx) रसवर्णनम्। रस एव काव्यस्यात्मा। नव प्रकाराणां रसानां स्वरूपदिवेचनम्। नायकनायिकाभेदोपभेदानां विभिन्नभावानाञ्च निरूपणम्।

(xxi) रसदोषाः

(xxii) रसानुकूलवर्णप्रयोगविवेचनम्।

उपर्युक्तवर्ण्यविषयविवरणैः स्पष्टमेव यदलङ्कारशेखरे काव्यशास्त्रविषया अनेके संक्षेपेण केशवमिश्रेण निरूपिताः। लेखकोऽस्मिन् ग्रन्थेऽनेकान् प्राचीनलेखकान् कृतीश्चाप्युल्लिलेख। कानिचिन्नामान्यधो निर्दिश्यन्ते -

काव्यादर्शो ध्वन्यालोकः काव्यप्रकाशः काव्यमीमांसा काव्यालङ्कारः कविकल्पलता गोवर्धनो भोजराजो भार्गवसर्वस्वमहिमा व्यक्तिविवेको राजशेखरः श्रीहर्षः श्रीपाद इत्यादयः। ग्रन्थेऽस्मिन् श्रीपाद इति नाम पुनः पुनः लेखकेनोदाहृतः। परन्त्विदं नाम न काव्यशास्त्रस्येतिहासेऽन्यत्रोपलभ्यते। सम्भवतः सूत्रकारः शौद्धोदनिरेव श्रीपादोऽवर्तत।

---

अष्टत्रिंशोऽध्याय:

# शारदातनय:

## १. शारदातनयस्य महत्त्वं परिचयश्च

नाट्यशास्त्रविषयकग्रन्थकृत्सु विद्वत्सु शारदातनयस्य महत्त्वं ध्रुवमस्ति। भावप्रकाशनाभिधानं ग्रन्थं विरच्याऽसौ महत्त्वशालिनं विषयञ्चेमं प्रतिपाद्य महतीं कीर्तिमानर्ज।

शारदातनयस्य जीवनवृत्तान्तस्य समयस्य च विशेषपरिचयो नाऽद्यापि विज्ञायते। तस्य यथार्थ नामाऽपि न विदन्ति समीक्षका: विद्वांस:। परन्तु भावप्रकाशनग्रन्थेऽसावात्मानं शारदाया: (सरस्वत्या:) तनयं (सुतम्) प्राह। अतोऽसौ शारदातनयाभिधानेन प्रसिद्धो बभूव।

शारदातनयेन स्वयमेव भावप्रकाशनग्रन्थे लिखितं, यदसौ ह्युत्तरभारतस्य मेरूत्तरजनपदस्य माठरपूजानाम्नो ग्रामस्य निवासी ह्यवर्तत। ब्राह्मणकुले तस्य जन्म बभूव। तस्य जनको भट्टगोपाल: प्रसिद्धो मनीषी विद्वान् विश्रुतोऽविद्यत। तेन काव्यप्रकाशस्य टीका लिखिता। शारदाया: (सरस्वत्या:) प्रसादेन ग्रन्थकारस्याऽस्य जनिर्बभूव, अतोऽसौ लोके शारदातनयनाम्ना प्रथिताङ्कत:। तस्य गुरुर्दिवाकरभट्टो नाट्यशालाया एकस्या अधिपतिरासीत्।[१]

## २. शारदातनयस्य समय:

शारदातनयस्य समयं निश्चेतुं नाऽधिकानि प्रमाणानि समुपलभ्यन्ते। बाह्यप्रमाणान्याश्रित्य तस्य समयो निश्चीयते। भावप्रकाशने ग्रन्थे काव्यप्रकाशशृङ्गारप्रकाशयोरुद्धरणानि वर्तन्ते। भोजराजस्य समयो ह्येकादशशताब्दिको गण्यते। अत: शारदातनयस्तदनन्तरं १२००-१३०० खिष्टाब्दमध्यवर्ती मन्तव्य:।

शिंगभूपालेन रसार्णवसुधाकरे भावप्रकाशनमतान्युद्धृतानि। शिंगभूपालस्य समय: १३२० तम: खिष्टाब्दो गण्यते। अत: शारदातनयश्चतुर्दशताब्दीपूर्ववर्ती १२००-१३०० (ई०) मध्यवर्ती वाऽऽसीदिति गणना सुनिश्चिता। समालोचकैरसौ ११७५-१२५० खिष्टाब्दकालीनोऽप्यभिमत:।

---

१. नाट्यशालाधिपति: कश्चिद् दिवाकर इति द्विज:।
तथैव नाट्यवेदस्य नियुक्तोऽध्यापने तथा।। भावप्रकाशनम्

### ३. शारदातनयस्य कृतयः

शारदातनयस्य कृतिरेकैव समुपलभ्यते - भावप्रकाशनम्। ग्रन्थेनैकेनैव तेन ह्यविनश्वरमक्षयञ्च यशोऽधिगतम्। नाट्यशास्त्रविषयकग्रन्थेषु भावप्रकाशनं सुतरां महत्त्वमादधाति। ग्रन्थस्याऽस्य निर्माणे शारदातनयो दशरूपकं बहुतरमनुचकार। असावात्मानमभिनवगुप्तानुयायिनमप्युद्घोषयति।[1]

### ४. भावप्रकाशनम्

भरतमुनेरारभ्य शारदातनयपर्यन्तं नाट्यशास्त्रविषयकाणि यावन्ति तत्त्वानि विकसितानि बभूवुस्तेषां सकला सामग्री शारदातनयेन भावप्रकाशनग्रन्थे सङ्कलिता। भरतव्यतिरिक्तानामन्येषामपि कोहलमातृगुप्तहर्षसुबन्धुनन्दिकेश्वरादीनां प्रसिद्धनाट्याचार्याणां तत्कृतीनामभिमन्तव्यानाञ्चोल्लेखो पर्यालोचनञ्व भावप्रकाशने समुपलभ्यते। प्राचीननाट्यशास्त्रकृतिष्वेतासु वर्तमानसमये नन्दिकेश्वरस्यैवैका लघुकृतिरुपलभ्यते - अभिनयदर्पणम्।

भावप्रकाशनग्रन्थस्य विषयविभाजनं दशस्वधिकारेषु (अध्यायेषु) वर्तते। प्रथमाधिकारस्य प्रारम्भ एव लेखकेन सकलग्रन्थप्रतिपाद्यविषयाः संक्षेपेण प्रोक्ताः। ते च निम्नप्रकारेण वर्तन्ते -

> **शारदातनयो देव्यास्तानधीत्य च सन्निधौ।**
> **आदाय सारमेतेभ्यो हिताय नाट्यवेदिनाम्।।**
> **भावप्रकाशनं नाम प्रबन्धमकरोत्तदा।**
> **एतस्मिन् प्रथमं भावस्तस्य भेदाः ततः परम्।।**
> **तदवान्तरभेदाश्च तत्तत्कार्येषु कौशलम्।**
> **तत्साध्योऽर्थस्तया तेषामुपकार्योपकार्यता।।**
> **रसोत्पादनता तेषां चरस्थिरविभागतः।**
> **तद्दर्शनानि तद्दृष्टिः दृष्टिधर्मास्तथाविधाः।।**
> **परस्परस्य सामर्थ्यं साहचर्यात् कवचित् क्वचित्।**
> **इति भागतया भावाः द्वादशैते ततो रसः।।**
> **तद्भेदाः भेदभेदाश्च तेषां जन्म च नाम च।**
> **जनकत्वञ्च जन्मत्वं तेषामन्योन्यतः पृथक्।।**
> **प्रसादनेतरभावश्च तेषामन्योन्यसङ्करः।**
> **तन्मेलनञ्च तत्सिद्धिर्विशेषः सङ्करोद्भवः।।**

---

१. भट्टाभिनवगुप्तार्थपादप्रोक्तेन वर्त्मना।
अयं प्रबन्धः कथितः शारदायाः प्रसादतः।। भावप्रकाशन

> **तद्व्यङ्ग्यता वाच्यता च तन्मैत्री तद्विरोधिता।**
> **तत्कालनियमस्तत्तद् वर्णास्तद्दैवतानि च।।**
> **स्थायिसञ्चारिभेदाश्च नैषां तद्दृष्टयोऽपि च।**
> **इति विंशतिरुद्दिष्टाः प्रकाराः रसगामिनः।।**
> **ततः शब्दार्थसम्बन्धस्तत्प्रकाराः पृथग्विधाः।**
> **तद्वृत्तयो रूपकाणि तद्भेदास्त्रिंशदात्मिकाः।।**
> **एतैरर्थैः प्रबन्धोऽयं यथावत् कथ्यतेऽधुना।।**

भावप्रकाशने प्रतिपादिता उपरिप्रोक्ताः विषयाश्चतुर्षु विभागेषु वर्गीकर्तुं शक्यन्ते - भावो रसः शब्दार्थसम्बन्धो रूपकञ्च। ग्रन्थस्य दशस्वधिकारेषु विषयविवेचनं निम्नक्रमेण वर्तते -

(i) भावनिर्णयः
(ii) रसस्वरूपाश्रयनिर्णयः
(iii) रसभेदतत्प्रकारनिर्णयः
(iv) शृङ्गारालम्बननायकनायिकादिस्वरूपनिर्णयः
(v) नायकनायिकाभेदतत्तदवस्थादिनिरूपणम्
(vi) शब्दार्थसम्बन्धतद्भेदप्रकारनिर्णयः
(vii) नाट्येतिवृत्तशरीरलक्षणाभिधानम्
(viii) दशरूपकलक्षणम्
(ix) नृत्यभेदस्वरूपलक्षणम्
(x) नाट्यप्रयोगभेदप्रकारविशेषनिर्णयः

भावप्रकाशने रसभावस्वरूपनिष्पत्तिभेदादीनां विस्तृतं विवेचनमस्ति। नाट्यसम्बन्धिनामुपकरणानामप्यत्र विशदपरिचयोऽस्ति। अस्य ग्रन्थस्य प्रथमं वैशिष्ट्यमिदमेव यदत्र नाट्यसिद्धान्तैः सह व्यवहारोपयोगिनो मार्गा अपि लेखकेन निर्दिष्टाः। ग्रन्थोऽयं नाट्यरसविशेषज्ञानाय कोशरूपोऽवधारणीयः।

---

# सिंहभूपालः (शिंगभूपालः)

## १. सिंहभूपालस्य महत्त्वम्

सिंहभूपालो (शिंगभूपालो) नाट्यसङ्गीतशास्त्राचार्यरूपेण लोके प्रसिद्धो वर्तते। भारतवर्षे सङ्गीतशास्त्रस्य विकासो वैदिकयुगादपि पूर्वं समजायतेति प्रमाणानि समुपलभ्यन्ते। परमतिप्राचीनकालीनाः सङ्गीतशास्त्रग्रन्थाः न वर्तमानसमये सुलभाः। यदि केचन ग्रन्थाः समुपलभ्यन्ते, तेषां स्थितिर्हस्तलिखितपाण्डुलिपिरूपा केषुचित् पुस्तकालयेष्वेव सुरक्षिताऽस्ति, न च ते प्रकाशनस्थितिं प्राप्ताः।

प्राचीनोपलब्धग्रन्थेषु नारदकृतः सङ्गीतमकरन्दः प्रसिद्धो ग्रन्थोऽस्ति। रत्नाकरकृत-सङ्गीतरत्नाकरोऽपि प्राप्यते। सिंहभूपालः सङ्गीतरत्नाकरस्य सङ्गीतसुधाकरनाम्नीं टीकामलिखत्। अथ चाऽसौ रसार्णवसङ्गीतसुधाकरं नाम नाट्यशास्त्रीयं ग्रन्थमप्यरचयत्।

## २. सिंहभूपालस्य समयः परिचयश्च

रसार्णवसुधाकरे सङ्गीतसुधाकरे च सिंहभूपालेन स्वकीयः स्वल्पः परिचयः प्रस्तुतः। सङ्गीतसुधाकरस्य (सङ्गीतरत्नाकरटीकायाः) द्वितीयाध्यायस्यान्तिमभागे तेन लिखितम् -

**"इति श्रीमदन्ध्रमण्डलाधीश्वरप्रतिगुणभैरवश्रीअन्नप्रोतनरेन्द्रनन्दनभुजबलभीम-श्रीशिंगभूपालविरचितायां सङ्गीतरत्नाकरटीकायां सुधाकराख्यायां रागविवेकाध्यायो द्वितीयः।"**

एवमेवाऽसौ रसार्णवसुधाकरस्य प्रथमेऽध्याये लिलेख -

**इति श्रीमदन्ध्रमण्डलाधीश्वरप्रतिगुणभैरवश्रीअन्नप्रोतनरेन्द्रनन्दनभुजबलभीमश्रीशिंग-भूपालविरचिते रसार्णवसुधाकरनाम्नि नाट्यालङ्कारे रञ्जकोल्लासो नाम प्रथमो विलासः।**

उद्धरणैरेतैरनुमीयते, यत् सिंहभूपाल आन्ध्रमण्डलनरपतिरासीत्। रसार्णवसुधाकरग्रन्थस्य प्रारम्भे सिंहभूपालः स्वपूर्वजानप्यवर्णयत्। रेचल्लवंशीयानां तेषां राजधान्यासीद् - राजाचलम्।

सिंहभूपालस्य षट् पुत्रा आसन्। तस्य राज्यविस्तृतिराविन्ध्याचलाच्छ्रीशैलपर्वतमवर्तत। शेषगिरिशास्त्रिणा 'बायोग्राफिक स्केचेज आफ दी राजाज् आफ वेंकटगिरी'तीतीर्ति तिहासग्रन्थे प्रतिपादितम् -

सङ्गीतसुधाकरकारः सिंहभूपालो वेंकटगिरिनरेशः (१३३० ई०) सिंहनायडूनाम्नाऽपि प्रसिद्धो बभूव। रसार्णवसुधाकरग्रन्थे सिंहभूपालः स्वात्मानं शुद्धकुलमाह, परं नायडूकुलोत्पन्नाः

जना: दक्षिणभारते शूद्रा: प्रोच्यन्ते। अत: सिंहभूपालस्य व्यक्तित्वं शेषगिरिशास्त्रिकृतवर्णनेन सह सङ्गच्छते। असौ सिंहभूपालस्य समयं खिष्टस्य चतुर्दशशताब्दीमध्यवर्तिनमकल्पयत्।

रामकृष्णभाण्डारकरमहोदयेन प्रतिपादितम् -

सिंहभूपाल: स्वात्मानमान्ध्रमण्डलनरपतिमलिखत्। तस्य समयनिर्धारणं न सुकरम्। तथाऽपि देवगिरिनरेश: सिंहण एव सिंहभूपाल इति वचने न काऽपि हानि:। १२१८-१२४९ खिष्टाब्दकालीनोऽसौ नरपति: संस्कृतानुरागी स्वयमपि च विद्वान् मनीषी शास्त्रकृदवर्तत। सङ्गीतरत्नाकरकृच्छार्ङ्गधरस्तस्यैव नरेशस्य राजसभापण्डितपदमलञ्चक्रे। इदमपि सम्भाव्यते, यत् सिंहण एवायमेव सङ्गीतरत्नाकरटीकामलिखत्। अपरा चेयमपि सम्भावना कल्प्यते यदन्येन केनचिदपि विदुषा विरचितेयं टीकाऽऽश्रयदातुनरिशस्य नाम्ना प्रथिताऽङ्कता। सिंहणस्याऽस्य (सिंहभूपालस्य) समयस्त्रयोदशशताब्दिको निश्चीयते।

परं रामकृष्णभाण्डारकरमहोदयस्य प्रवचनमिदं न किमपि प्रमाणप्रतिपन्नम्। देवगिरिनरेशसिंहणसिंहभूपालयोर्व्यक्तित्वभिन्नत्वस्य न किमपि प्रामाण्यम्। पी०आर० भाण्डारकर महोदय: सिंहभूपालं षोडशशताब्दिकममन्यत।[१] परं तत्कथनमप्ययथार्थमेव समीक्षकै: साधितम्।

मैथिलपण्डितेषु किम्वदन्तीयं प्रसिद्धा यत् सिंहभूपालो मिथिलाधिपतिरवर्तत। परन्तु किम्वदन्तीयं न किमपि याथार्थ्यमावहति। सिंहभूपाल: स्वयमेवाऽऽत्मानमान्ध्रमण्डलाधिपतिमसूचयत्। रसार्णवसुधाकरग्रन्थस्य हस्तलिखितपाण्डुलिपयो दक्षिणभारत एव समुपलब्धास्तत्रैव च प्रायश: प्रचारमधिगता:। अत: सिंहभूपालो दाक्षिणात्य एवाऽवगन्तव्य:। श्रीश्यामनारायणो निजरचितेतिहासग्रन्थे सिंहभूपालस्य चतुर्दशशताब्दिकत्वं मिथिलानरेशभावञ्च विवादास्पदमेव प्रतिपादयति।[२]

## ३. सिंहभूपालस्य कृतय:

सिंहभूपालस्य द्वे कृती समुपलभ्येते - सङ्गीतसुधाकरो रसार्णवसुधाकरश्च। तयो: संक्षिप्तपरिचय: प्रस्तूयते।

## ४. सङ्गीतसुधाकर:

शार्ङ्गधरकृतसङ्गीतरत्नाकरस्य टीका सङ्गीतसुधाकरनाम्नी प्रसिद्धा बभूव। देवगिरिनरेशसिंहाश्रित: (सिंहण: - १२१८ - १२४९ ई०) राजसभापण्डित: शार्ङ्गधर: सङ्गीतरत्नाकरग्रन्थमलिखत्। सिंहभूपालनृपतिनाऽस्य ग्रन्थस्य सङ्गीतसुधाकरनाम्नी टीका

---

१. डा० भाण्डारकर : संस्कृत पुस्तकों की खोज (१८८२ - १८८३ ई०) पृ० १६७

२. He (singa Bhupal) is identified with some mithila Ruler of 14th century A.D., but the question is disputed. Hisotry of Tirhuta p. 167

लिखिता। सङ्गीतरत्नाकरग्रन्थस्यैकाऽन्याऽपि टीका मल्लिनाथेन ख्रिष्टस्य पञ्चदशशताब्द्याः मध्यभागे लिखिता।

## ५. रसार्णवसुधाकरः

रसार्णवसुधाकरग्रन्थस्य प्रणयनं मुख्यतो नाट्यविषयकतत्त्वानि व्याख्यातुं सिंहभूपालेन कृतम्। रसादितत्त्वानामप्यत्र विशदविवेचना शास्त्रकृता विहिता। अतः काव्यशास्त्रस्येतिहासे ग्रन्थेनाऽनेन महती महनीयताऽधिगता।

ग्रन्थारम्भे सिंहभूपालेन स्ववंशपरिचयः प्रस्तुतः। रेचल्लवंशीयस्य तस्य जनकोऽन्नप्रोतः पितामहश्च सिंगप्रभुः प्रपितामहश्च दाचनायकोऽवर्तत। तस्य राज्यस्य विस्तार आविन्ध्य-गिरिमेखलातः श्रीशैलगिरिपर्यन्तमासीत्। राजधानी च राजाचलाभिधानं नगरमवर्तत।

रसार्णवसुधाकरग्रन्थे सिंहभूपालेन नाट्यशास्त्रविषयाः सुसूक्ष्मं सुविशदञ्च व्याख्याताः। त्रिषु विलासेषु विभक्तस्याऽस्य ग्रन्थस्य विषयवस्तु निम्नक्रमेण प्रस्तुतमस्ति -

(i) **प्रथमो विलासः -**

रञ्जकोल्लासशीर्षकेण प्रसिद्धे प्रथमे विलासे नायकनायिकाभेदानां स्वरूपाणि गुणांश्च विस्तरेण लेखकोऽवर्णयत्। तदनन्तरं चतसृणां वृत्तीनां लक्षणानि भेदाश्च वर्तन्ते।

(ii) **द्वितीयो विलासः -**

द्वितीयो विलासो रसिकोल्लासः प्रसिद्धो वर्तते। तत्र रसो रुचिरतया सुविस्तृतं वर्णितः। रतिवर्णनप्रसङ्गे सिंहभूपालो भोजराजस्य रसविषयकमन्तव्यानां खण्डनञ्चकार।

(iii) **तृतीयो विलासः -**

भावोल्लासनाम्नि तृतीये विलासे लेखकेन रूपकाङ्गानां नेतृरसवस्तूनां साङ्गोपाङ्गं विवेचनं विहितम्।

रसार्णवसुधाकरग्रन्थो दक्षिणभारतेऽतितरां प्रतिष्ठां प्रसिद्धिं लोकप्रियताञ्चाऽवाप। तत्र चाऽसौ सुतरां प्रचलितो बभूव। अत्र नाट्यशास्त्रविषयाणां विवेचनं दशरूपकापेक्षातः सुविशदं सुस्पष्टञ्चाऽनुभूयते।

---

# विश्वेश्वरः कविचन्द्रः

## १. विश्वेश्वरकविचन्द्रस्य महत्त्वम्

त्रयोदशशताब्द्यां (ई०) वर्तमानस्य केरलजनपदाधिपस्य शिङ्गभूपालस्य कवित्वं विद्वत्त्वं शास्त्रज्ञत्वं च लोके प्रथितम्। तथाभूतगुणसम्पन्नस्य तस्य नरपतेः राजसभामनेके कवयो विद्वांसः शास्त्रज्ञाश्च महामनीषिणोऽलञ्चक्रिरे। नरपतिशिरोमणिशिङ्गभूपालविरचितौ साहित्यसुधाकररसार्णवसुधाकराभिधानौ ग्रन्थौ तमविनश्वरयशोभाजनं चक्रतुः। अथ च तस्य राजसभारत्नेन विश्वेश्वरकविचन्द्रेणाऽप्यनेकैः काव्यैः सह काव्यशास्त्रीयग्रन्थान् विरच्य महती कीर्तिरधिगता। तस्य महनीयस्य विदुषः शास्त्रकारस्य काव्यशास्त्रविषयिका कृतिश्चमत्कारचन्द्रिका काव्यशास्त्रजगति प्रतिष्ठिता नूतनमिव समीक्षापद्धतिं व्यनक्ति। काव्यशास्त्रकृता तेन प्रतिपादितं यत् काव्ये चमत्कारतत्त्वमेव सहृदयहृदयान्यानन्दभरेण पूरयति। गुणरीत्यादीनि सप्त तत्त्वानि चमत्कारकारणानि भवन्ति।[1]

विश्वेश्वरकविचन्द्रकृतिश्चमत्कारचन्द्रिका प्रथमं तावच्छ्रीमत्या डाक्टरोपाधिविभूषितया पन्दिरिसरस्वतीमोहननाम्न्या विदुष्या सम्पादिता। सा च अमेरिकादेशे वेस्लियनविश्वविद्यालये मिडलटाउनकनेक्टिकटनगरे प्राध्यापकपदे प्रतिष्ठिताऽवर्तत। डा० राघवन् महोदयेनैषा कृतिः स्वलिखितप्रस्तावनया विभूषिता। तदनन्तरं दिल्लीस्थितया मेहरचन्दलक्ष्मणदासाभिधानया प्रकाशनसंस्थयेयं कृतिः १९७२ ई० वर्षे प्रकाशिता।

## २. विश्वेश्वरकविचन्द्रस्य परिचयः समयश्च

विश्वेश्वरकविचन्द्रः केरलजनपदाधीश्वरस्य रेचल्लवंशीयस्य श्रीशिङ्गभूपालस्य राजसभारत्नमासीदिति तस्य कृतिभिर्विज्ञायते। चमत्कारचन्द्रिकायाः विलासान्तेषु कविरयं पार्थिवेनाऽनेन स्वकीयं सम्बन्धं लिलेख।[2] अनेनैव केरलाधीशेन शिङ्गभूपालेन सङ्गीत-

१. चमत्कारस्तु विदुषामानन्दपरिवाहकृत्।
गुणं रीतिं रसं वृत्तिं पाकं शय्यामलङ्कृतिम्।।
सप्तैतानि चमत्कारकारणं ब्रुवते जनाः।।

चमत्कारचन्द्रिका प्रथम विलास पृ० २

२. इति सरससाहित्यचातुरीधुरीणश्रीविश्वेश्वरकविचन्द्रप्रणीतायां श्रीशिङ्गभूपालकीर्तिसुधासार-शीतलायां चमत्कारचन्द्रिकायां वर्णपदविवेको नाम प्रथमो विलासः।

चमत्कारचन्द्रिका पृ० ३१

सुधाकररसार्णवसुधाकरग्रन्थौ सङ्गीतनाट्यरसविवेचनविषयकौ विरचितौ। पूर्वस्मिन्नध्याये पार्थिवस्याऽस्य विस्तृतः परिचयोऽस्माभिः प्रकाशितः।

विश्वेश्वरकविचन्द्रसमयसम्बन्धे न कोऽपि विवादो विप्रतिपतिर्वा समीक्षकेष्ववलोक्यते। शिङ्गभूपालराजसभासदस्योऽसौ तत्कालीन एवाऽवगन्तव्यः। प्रथममेव प्रतिपादितमस्माभिर्यदयं भूपालस्त्रयोदशशताब्द्यां (ई०) जातः, यद्यपि केचन समीक्षकास्तं चतुर्दशशताब्दिकमामनन्ति। विश्वेश्वरकविचन्द्रस्याऽप्ययमेव समयो विज्ञेयः। भूपालस्याऽस्य सान्निध्यं विदुषाऽनेन परमं सौभाग्यं प्रकटितम्।[1]

विश्वेश्वरकविचन्द्रस्य जीवनवृत्तादिविषयिका नाऽधिका सामग्री समुपलभ्यते। तथापि कानिचित्तथाविधानि तथ्यानि समीक्षकैरुपलब्धान्येव, यानि तस्य जीवनवृत्तविषयकं सूचयन्ति। चमत्कारचन्द्रिकायां लिखितम् - कवेरस्य गुरुः काशीश्वरमिश्राभिधानोऽवर्तत।[2] भारद्वाजगोत्रीयो[3] विश्वेश्वरोऽसौ बह्वीभिः प्रशस्तिभिरुपाधिभिश्च विभूषितो बभूव। स्वकृतिष्वसावात्मानं सरससाहित्यचातुरीधुरीणं कविचन्द्रञ्च लिलेख। विश्वेश्वरस्यैकः शिष्यः पशुपतिनागनाथाभिधानः प्राचीनसाहित्ये प्रसिद्धः। भाणविधानिबद्धे मदनविलासनामनि रूपकेऽसौ नागनाथः स्वगुरवे श्रद्धाञ्जलिमार्पयत्।[4]

## ३. विश्वेश्वरकविचन्द्रस्य कृतयः

विश्वेश्वरस्य महनीया काव्यशास्त्रीया कृतिर्वर्तते - चमत्कारचन्द्रिका। अथ चाऽसौ काव्यान्यन्यान्यपि व्यरचयत्। श्री एम० दोरस्वामी महोदयेनैकस्मिन् निबन्धे कवेरस्य नवसंख्यापरिमिताः काव्यकृतयः सूचिताः -

(i) आनन्दकोशप्रहसनम्
(ii) करुणाकन्दलम्
(iii) अभिरामराघवम्
(iv) वीरनादः
(v) वीरभद्रविजृम्भणम्
(vi) महेश्वरानन्दम्

---

१. अहो साहित्यसौभाग्यं श्रीशिङ्गधरणीपतेः।
श्लाघायै यस्य सन्नद्धाः वाचो विश्वेश्वरस्य मे।। चमत्कारचन्द्रिका पृ० ११

२. तथा चोक्तमस्मदाचार्यैः काशीश्वरमिश्रैः। चमत्कारचन्द्रिका पृ० १३०।।

३. कविर्भारद्वाजो जगदवधि जाग्रन्निजयशाः। चमत्कारचन्द्रिका पृ० २०

४. असुलभकृतोन्मेषकविरससाहित्यविद्यासाम्राज्यसकलकलाकलापविज्ञानचतुर्मुखस्य भरद्वाजान्वयपारावारपूर्णरत्नाकरस्य गुरुविश्वेश्वरकविचन्द्रप्रियशिष्यो नागनाथकविः। तेन विरचितं मदनविलासं नाम भाणमभिनीय सामाजिकानां चित्तमाराधयामि।।

(viii) कन्दर्पसम्भवम्

(ix) रत्नपञ्चालिका

कृतिष्वेतास्वनेकाः कृतयः कविना नरपतये श्रीशिङ्गभूपालाय समर्पितास्तत्र च स्वाश्रयदातुः प्रशंसा कीर्तिता।

## ४. चमत्कारचन्द्रिका

चमत्कारचन्द्रिकायां विश्वेश्वरकविचन्द्रेण काव्यसमीक्षा सर्वथा नूतनपद्धत्या प्रतिपादिता। तेन प्रोक्तम् -

काव्येष्वभिव्यज्यमानश्चमत्कार एवं सहृदयहृदयेष्वानन्दं प्रवाहयति। काव्यस्य सप्ताङ्गानि चमत्कारस्याऽस्य कारणानि भवन्ति।[१] सप्ताङ्गविभूषितं काव्यं सप्ताङ्गसंयुतं राज्यं साम्राज्यमिव शोभते।[२]

विश्वेश्वरकविचन्द्रेण चमत्कारचिन्द्रका सप्तसु विलासेषु विभक्ता। प्रतिविलासं विषयवस्तु निम्नप्रकारेण प्रदर्श्यते -

**(i) प्रथमो विलासः -**

प्रथमे विलासे विश्वेश्वरेण मङ्गलाचरणानन्तरं काव्यप्रयोजनानि वर्णितानि। तदनन्तरं तेन प्रोक्तम् - काव्ये चमत्कार एव सहृदयानन्दहेतुर्भवति। अथ काव्यलक्षणं विद्यते - सचमत्कारौ वागर्थाविव काव्यम्।[३] वर्णपदवाक्यभेदेन वाक् त्रिविधा विद्यते।

विश्वेश्वरेण वर्णविभागो विस्तरेण प्रदर्शितस्तेषाञ्च शुभाशुभफलानि प्रोक्तानि। वर्णानां लघुगुरुभावोऽपि तेन प्रदर्शितः। अथाशुभफलनिवारणोपायाः प्रोक्ताः।

श्रुतिमाधुर्यमेव वर्णगुणो माधुर्याभावश्च वर्णानां दोषः।

काव्ये पदानि विभक्यन्तानि भवन्ति। अथ च तानि वाचकलक्षकव्यञ्जकभेदेन त्रिविधानि संभवन्ति।[४] पञ्चदशविधाः पददोषाः सञ्जायन्ते -

अप्रभ्रष्टाप्रयुक्तनिरर्थकविरुद्धार्थकापुष्टार्थाप्रतीतानिश्चितक्लिष्टदेश्यनेयार्थ प्रतिहस्तकप्रवाचकजुगुप्सिताकल्याणकव्रीडाकराः।

---

१. चमत्कारस्तु विदुषामानन्दपरिवाहकृत्।
गुणं रीतिं रसं वृत्तिं पाकं शय्यामलङ्कृतिम्।
सप्तैतानि चमत्कारकारणं ब्रुवते जनाः।। चमत्कारचन्द्रिका पृ० २

२. सप्ताङ्गसङ्गतं काव्यं साम्राज्यमिव शोभते। चमत्कारचन्द्रिका पृ० ३

३. वागर्थौ सचमत्कारौ काव्यं काव्यविदो विदुः। चमत्कारचन्द्रिका पृ० ३

४. विभक्त्यन्तं पदं तच्च वाचकं लक्षकं द्विधा।
व्यञ्जकं चापरं प्रोक्तं ध्वनिप्रस्थानवेदिभिः।। चमत्कारचन्द्रिका पृ० ९

(ii) **द्वितीयो विलासः -**

द्वितीये विलासे विश्वेश्वरेण वाक्यविवेचनं प्रतिपादितम्। समन्वययुतानि पदान्येव वाक्यमित्यभिधीयते। वाक्यञ्च लक्षकव्यञ्जकभेदेन द्विविधं भवति।[१] वाक्येऽत्र त्रयोदशप्रकाराः दोषाः सम्भवन्ति -

अप्रयुक्तदुस्सन्धिव्युत्क्रमपुनरुक्तमद्दुरन्वयवाक्याङ्गसङ्कीर्णवाक्यगर्भितभिन्नलिङ्ग-भिन्नवचनन्यूनोपमाधिकोपमविकलकेवलाः।

(iii) **तृतीयो विलासः -**

विलासे तृतीये विश्वेश्वरेण ह्यर्थविवेचनं प्रतिपादितम्। अर्थाश्च त्रिविधाः प्रोक्ताः - वाच्यार्थो लक्ष्यार्थो व्यङ्ग्यार्थश्च।[२] वाक्यार्थबोधोऽभिधया प्रतिपाद्यते। जात्यादिरूपोऽयं भवति।[३] लक्षणया वृत्त्या बोध्यमानोऽर्थो लक्ष्यार्थोऽभिधीयते।[४] व्यञ्जनया वृत्त्या व्यङ्ग्यार्थोऽभिव्यज्यते, स च त्रिविधो भवति - वस्तुरूपोऽलङ्काररूपो रसादिरूपश्च।[५] अर्थदोषाः काव्ये षोडश सम्भवन्ति -

अपार्थव्यर्थैकार्थससंशयापक्रमपरुषविरसभिन्नाऽतिमात्रानुज्ज्वलनीचोपमानाधि-कोपमानासदृशोपमानाप्रथितोपमानाश्लीलविरुद्धाः।

शब्दार्थरूपं काव्यं त्रिविधमुच्यते - चमत्कारि, चमत्कारितरं चमत्कारितमञ्च। शब्दचमत्कारयुक्तमेव काव्यं चमत्कारि भवति। अत्राऽनुप्रासाद्यलङ्कारा एव सम्भवन्ति। वाच्यार्थचमत्कारयुतं काव्यं चमत्कारितरं वर्तते।[६] व्यङ्ग्यार्थे गुणीभूते काव्यं गुणीभूतव्यङ्ग्यमित्यभिधीयते। गुणीभूतव्यङ्ग्यकाव्यस्य प्रकाराः अष्ट भवन्ति -

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटं सन्दिग्धव्यङ्ग्यं तुल्यप्राधान्यव्यङ्ग्यं काक्वाक्षिप्तमसुन्दरञ्च।

वाच्यार्थाद् व्यङ्ग्येऽर्थेऽतिशयिनि सति काव्यं चमत्कारितममुच्यते। तच्च ध्वनिकाव्यमप्युच्यते।

काव्यं पुनस्त्रिविधमुच्यते गद्यं, पद्यं मिश्रञ्च। पुनरपीदं द्विविधं भवति - प्रेक्ष्यं श्रव्यञ्च। प्रेक्ष्यमपि काव्यं द्विविधं गण्यते - रूपकमुपरूपकञ्च। नाटकादिभेदेन रूपकाणि दश वर्गेषु विभज्यन्ते। श्रीगदितादिभेदेनोपरूपकाणि पुनः बहुविधानि भवन्ति। श्रव्यकाव्यमपि द्विविधं भवति - चम्पूश्चोपचम्पूश्च।

---

१. समन्वितपदं वाक्यं लक्षकं व्यञ्जकञ्च तत्। चमत्कारचन्द्रिका पृ० ३२
२. अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्योऽपि च विविच्यते। चमत्कारचन्द्रिका पृ० ४९
३. अभिधावृत्तिगम्यार्थो जात्यादिर्वाच्य ईरितः। चमत्कारचन्द्रिका पृ० ४९
४. लक्षणावृत्तिगम्यार्थो लक्ष्य इत्यभिधीयते। चमत्कारचन्द्रिका पृ० ४९
५. शब्देनार्थेन वाऽर्थोऽन्यो व्यञ्जनासहचारिणा।
   व्यङ्ग्यार्थो वस्त्वलङ्काररसभावादिलक्षणः।। चमत्कारचन्द्रिका पृ० ५२
६. वाच्यचारुत्वतात्पर्ये चमत्कारितरं मतम्। चमत्कारचन्द्रिका पृ० ७३

(iv) चतुर्थो विलासः -

चतुर्थे विलासे गुणानां विवेचनं विश्वेश्वरेण विहितम्। रूपादिगुणाः शरीराङ्गनामिव श्लेषप्रसादादिकाव्यगुणाः काव्याङ्गनाभुत्कर्षकराः भवन्ति।[१] काव्यगुणानां संख्या त्रयोविंशतिर्वर्तते -

श्लेषप्रसादसमतामाधुर्यसुकुमारताऽर्थव्यक्त्यौदार्यौजःकान्त्युदात्ततप्रेयस्समाध्यौर्जित्य-सौक्ष्म्यगाम्भीर्यविस्तरसंक्षेपशब्दचमत्कारभाविकसम्मितत्वगत्युक्तिरीतयः।

पदानां संघटना रीतिरुच्यते। पदमिदं √रीङ् गतौ धातोर्निष्पद्यते।[२] काव्येषु रीतयश्चतुर्विधाः भवन्ति - असमासा, मध्यसमासा, अतिदीर्घसमासा मिश्रा च। विकारविक्षेपविक्षोभविस्तरमाध्यमेन चित्तेऽन्तर्हितानि तत्त्वानि वृत्तिपदेनाभिधीयन्ते। वृत्तीनां षड्भेदाः गण्यन्ते[३] - कैशिक्यारभटी भारती सात्त्वती मध्यमारभटी मध्यमकैशिकी च।

काव्यास्वादपुष्टिकरो वाचां परिपाकः पाक इत्यभिधीयते।[४] पाकश्च द्विविधः - मृदुपाकः खरपाकश्च।

पदानां परस्परमैत्री सविनिमया शय्येत्यभिधीयते। साहित्यस्येयं पराकाष्ठा। देशभेदेनेयं विविधा जायते लोके च प्रसिद्धिमाप्नोति।[५]

(v) पञ्चमो विलासः -

पञ्चमे विलासे कविचन्द्रेण रसानां विवेचनं विहितम्। काव्यसंविधानचातुर्यात् साक्षादिव परिस्फुरन् तत्त्वमलौकिकास्वादसम्पन्नं रस इत्यभिधीयते।[६] रसानां संख्या ह्यष्ट भवति, तेषु च शृङ्गाररसः प्रधानः।

उक्तयस्त्रिविधाः गण्यन्ते - वक्रोक्ती रसोक्तिः स्वभावोक्तिश्च। रसोक्तिर्दशविधा भवति -

सत्तास्फुरताऽनुबन्धनिष्पत्तिपुष्टिसङ्करह्रासाऽऽभासशमशेषाः।

अष्टौ रसाः वर्तन्ते - शृङ्गार(सम्भोगो विप्रलम्भश्च)हास्यवीराद्भुतरौद्रकरुण-बीभत्सभयानकाः।

---

१. रूपादय इवाङ्गस्य स्वरूपोत्कर्षहेतवः।
काव्यस्यैतान् हि जानन्ति गुणान् गुणविवेकिनः।। चमत्कारचन्द्रिका पृ० ८३

२. रीतिः पदानां घटना प्रोक्ता रीतिविशारदैः।
रीङ् गतावित्यतो धातोरागता रीतिरीर्यते।। चमत्कारचन्द्रिका पृ० ९५

३. या विकासे च विक्षेपे विक्षोभे विस्तरे तथा।
चेतसो वर्तयित्री स्यात् सा वृत्तिस्सापि षड्विधा।। चमत्कारचन्द्रिका पृ० ९९

४. पाकं वाचां परीपाकमाहुरास्वादहेतुकम्। चमत्कारचन्द्रिका पृ० १०५

५. शय्या पदानामन्योन्यमैत्री विनिमया सह।
साहित्यस्य पराकाष्ठा शय्या देशविभेदतः।। चमत्कारचन्द्रिका पृ० १०७

६. संविधानकचातुर्यात् साक्षादिव परिस्फुरन्।
अलौकिकसमास्वादो यस्स्यात् सोऽत्र रसो मतः।। चमत्कारचन्द्रिका पृ० १०७

**(vi) षष्ठो विलासः**

विलासे षष्ठे विश्वेश्वरेणाऽलङ्काराणां विवेचनं कृतम्। शरीरैकभागं यथा कनककुण्डलादयोऽलङ्काराः विभूषयन्ति, तथैव काव्यशब्दार्थविभूषणानि तत्त्वान्यप्यलङ्काराः प्रोच्यन्ते।[१] अलङ्काराश्चैते त्रिविधाः गण्यन्ते - शब्दालङ्कारा अर्थालङ्कारा उभयालङ्काराश्च। अलङ्कारचन्द्रिकायामेकादशशब्दालङ्काराणां निरूपणं लेखकेन विहितम् -

छायामुद्रायुक्तिश्लेषानुप्रासगुम्फनाचित्रयमकवाकोवाक्यगूढप्रश्नोत्तरालङ्काराः।

**(vii) सप्तमो विलासः -**

विलासे सप्तमेऽर्थालङ्काराणां निरूपणं विद्यते। एतेषां संख्या निम्नप्रकारेण विंशतिर्वर्तते -

जातिविभावनाहेत्वहेतुसूक्ष्मोत्तरविरोधसम्भवाऽन्योन्यपरिवृत्तिनिदर्शनाभेद-समाहितभ्रान्तिवितर्कमीलितस्मरणभावाऽर्थापत्त्यनुमानालङ्काराः।

**(viii) अष्टमो विलासः**

अष्टमे विलासे ह्युभयालङ्काराः निरूपिताः विश्वेश्वरकविचन्द्रेण। तेषां संख्या वर्तते चतुर्विंशतिः -

उपमारूपकसाम्यसंशयोक्त्यपह्नुतिसमाध्युक्तिसमासोक्त्युत्प्रेक्षाऽप्रस्तुतप्रशंसातुल्य-योगितालेशसहोक्तिसमुच्चयाऽऽक्षेपाऽर्थान्तरन्यासविशेषोक्तिपरिकरदीपकक्रमपर्यायाऽतिशयोक्ति-श्लेषभावनासंसृष्टयः।

### ५. चमत्कारचन्द्रिकायामन्यलेखकानां कृतीनाञ्चोल्लेखाः

विश्वेश्वरकविचन्द्रेण चमत्कारचन्द्रिकायामनेकेषां प्राचीनकवीनां कृतीनाञ्च सङ्केताः प्रदर्शिताः। काव्यशास्त्रविकासस्यैतिहासप्रसङ्गे तेऽतिमहत्त्वशालिनो वर्तन्ते। तेषां संक्षेपेण प्रदर्शनं समुचितम्।

चमत्कारचन्द्रिकायां काव्यादर्शस्य, ध्वन्यालोकस्य भावप्रकाशिकायाः शिङ्गभूपालकविरचितरसार्ण-वसुधाकरस्य काशीश्वरमिश्रकृतायाश्च रसमीमांसाया उद्धरणानि प्राप्यन्ते। अनेकसुप्रसिद्धकाव्यशास्त्रिणां भरतभामहभोजादीनां सन्दर्भास्तत्र सन्ति। विद्याधरादीनां लेखकानामपि सन्दर्भाः दृश्यन्ते।

चमत्कारचन्द्रिकायामनेकेषां काव्यानां रूपकाणां कवीनाञ्च विवरणानि सन्निविष्टानि वर्तन्ते। यथा कालिदासकिरातार्जुनीयशिशुपालवधमहिम्नास्तवबालरामायणभोजकृतरामायण-चम्पूनैषधीयचरितकन्दर्पसम्भवानां काव्यानां काव्यकाराणाञ्च सन्दर्भाः समवलोक्यन्ते। कामशास्त्रभर्तृहरिकृतवाक्यपदीयग्रन्थाभ्यामपि विश्वेश्वरेण कविचन्द्रेणोद्धरणान्यत्र प्रस्तुतानि। तीर्थक्रमोत्तंसमहाकाव्यस्यापि सङ्केतोऽत्र समुपलभ्यते।

उपरिवर्णितकविषु शास्त्रकारेषु रचनासु च काशीश्वरकृतरसमीमांसायास्तीर्थ-क्रमोत्तंसमहाकाव्यस्य च सङ्केताः नाऽन्यत्र प्राचीनसाहित्ये समुपलभ्यन्ते।

---

१. एकदेशं गतास्सर्वं शरीरं कटकादिवत्।
अलङ्कुर्वन्ति ये काव्यं तेऽलङ्कारतया मताः।। चमत्कारचन्द्रिका पृ० १३२

एकचत्वारिंशोऽध्यायः

# भानुदत्तो मिश्रः

## १. भानुदत्तस्य महत्त्वम्

काव्यशास्त्रस्येतिहासे भानुदत्तेन महती कीर्तिः प्रसिद्धिश्चाऽधिगता। अनेकासां कृतीनां लेखकेनाऽनेन साहित्यिकसमाजे प्रचुरं सम्मानमुपलब्धम्। भानुदत्तस्य रसमञ्जर्याः प्राचीनाष्टीका एकादश वर्तन्ते, ताश्च तस्याः महत्त्वं लोकप्रियत्वञ्च प्रतिपादयन्ति।

## २. भानुदत्तस्य परिचयः

स्वकृतग्रन्थेषु रसमञ्जर्यादिष्वात्मानं संक्षेपेण परिचाययताऽपि भानुदत्तेन स्वसमयसम्बन्धिनी काऽपि सूचना न प्रदत्ता। समयस्त्वस्याऽन्यैरेव प्रमाणैर्निश्चीयते।

रसमञ्जर्या अन्तिमश्लोकः सूचयति[1] -

भानुदत्तस्य जनको गणेश्वरो विदेहभू (मिथिला) वास्तव्योऽवर्तत, यत्र सुरसरित् (गङ्गा) प्रवहति।

कासुचित् पाण्डुलिपिषु विदेहभूरिति स्थाने विदर्भभूरिति पाठः समुपलभ्यते। परन्त्वयं पाठोऽशुद्ध एव मन्तव्यो, यतो विदर्भजनपदेन गङ्गायाः न कोऽपि भौगोलिकसम्बन्धो लक्ष्यते।

मिथिलाजनपदे सरिसवो नाम ग्रामो भानुदत्तस्य मूलस्थानमवर्तत। 'हिस्ट्री आफ तिरहुत' नामनि इतिहासग्रन्थे लिखितमस्ति -

इसहपुरग्रामे पुष्करिण्येका भानुमतीनाम्ना प्रसिद्धा वर्तते। सा भानुदत्तेन कारितेति लोकप्रसिद्धिः। अतः कैश्चित् समीक्षकैर्भानुदत्तस्य निवासस्थानमिसहपुरग्राम एवाऽनुमीयते। भानुदत्तस्य पूर्वपुरुषाणां जन्मस्थली सरिसवग्राम एवाऽऽसीत्। भानुदत्तस्य जामाता गङ्गादत्तः

---

१. तातो यस्य गणेश्वरः कविकुलालङ्कारचूडामणि-
देशो यस्य विदेहभूः सुरसरित्कल्लोलकिर्मीरिता।
पद्येन स्वकृतेन तेन कविना श्रीभानुना योजिता
वाग्देवी श्रुतिपारिजातकुसुमस्पर्धाकरी मञ्जरी।। रसमञ्जर्या अन्तिमः श्लोकः

कविः सरिसवग्राममेव श्वसुरस्य जन्मस्थलीं प्राह ।[१] इसहपुरग्रामः सरिसवग्रामसन्निकटवर्ती-ति तत्र भानुदत्तेन पुष्किरिणी कारितेति भणितिः ।

भानुदत्तस्य जनको गणेश्वरो वा गणपतिर्वाऽवर्तत । एकस्यां रचनायामसौ कुमारभार्गवीये स्ववंशावलिं निम्नप्रकारेणाऽवर्णयत् -

### ३. भानुदत्तस्य समयः

भानुदत्तो मिश्रः ख्रिष्टस्य षोडशशताब्दीकालीनो निश्चीयते । परं बलदेवोपाध्याय-स्तस्य समयं त्रयोदशशताब्द्युत्तरवर्तिनं चतुर्दशशताब्दीपूर्ववर्तिनञ्च निश्चिनोति । स्वमतं प्रतिपादयितुं तेन त्रीणि प्रमाणानि समुपन्यस्तानि[२] -

(i) भानुदत्तस्य जनको गणेश्वरो मैथिलब्राह्मणोऽवर्तत । अतोऽनुमीयते, यदसौ स एव प्रसिद्धो गणेश्वरो मन्त्रिवर्य आसीद्, यस्य पुत्रश्चण्डेश्वरो विवादरत्नाकराभिधानं ग्रन्थं प्रणिनाय । अथ चाऽसौ १३१५ ख्रिष्टाब्दे स्वतुलादानसमारोहमपि सम्पादयामास । अतो भानुदत्तोऽस्य समयस्य समीपवर्त्येव भवितव्यः ।

(ii) भानुदत्तेन शृङ्गारतिलकस्य (एकादशशताब्दी ई०) दशरूपकस्य (दशमशताब्दी ई०) चोल्लेखः स्वग्रन्थे कृतः ।

(iii) गोपालचार्यः १४२८ ख्रिष्टाब्दे रसमञ्जरीमटीकयत् ।

---

१. मीमांसायाः श्रवणसरसा शेमुषी तावकी चेत्
चित्ते चित्ते किमपि कविताकर्णने कौतुकं स्यात् ।
भ्राम्यन् भ्राम्यन् बुधजनचतुष्पीठिकासु प्रयत्नाद्
त्विद्याशालिप्रियसरिसवग्रामरत्नं परीयाः ।। भृङ्गदूत

२. उपाध्याय, बलदेव : भारतीय साहित्यशास्त्र (२००६ वि०) पृ० १३९

परं बलदेवोपाध्यायस्य मन्तव्यं नितान्तं भ्रान्तं प्रमाणानि च दोषयुतानि सन्ति। भानुदत्तश्चण्डेश्वरश्चैकस्यैव जनकस्य गणेश्वरस्य सुतावास्तामिति न कुत्राऽपि लिखितं प्राप्यते, न च किमन्यदपि प्रामाण्यमस्ति। भानुदत्तकृतिषु शृङ्गारतिलकदशरूपकयोरुल्लेखात् तस्यैकादशशताब्द्युत्तरवर्तित्वं तु सिद्ध्यति परं न त्रयोदशशताब्दीवर्तित्वम्। नेदं कथञ्चिदपि तर्कसङ्गतम्। रसमञ्जर्याः गोपालाचार्यकृतटीका १४२८ तमे खिष्टाब्दे लिखितेति धारणाऽपि मिथ्या। सम्भवतो धारणाया अस्याः हेतुर्विद्यते -

स्टेनमहोदयेन जम्मूपुस्तकालये सुरक्षितासु हस्तलिखितपाण्डुलिपिसूचीषु नृसिंहसुत-गोपालकृता रसमञ्जरीटीकाऽवलोकिता। सा च १४८४ विक्रमाब्दकालीना निर्धारिता। परमत्र स्टेनमहोदयस्याऽनवधानत्वमेव प्रतिभाति।

प्रथमं तावत्तत्र १४८४ पाठो न विद्यते परं पाठोऽस्ति १४९४। द्वितीयं तावत्तत्र विक्रमसंवत्प्रयोगो न विद्यते। अतो भानुदत्तस्य समयस्त्रयोदशचतुर्दशशताब्दीमध्यवर्ती न कल्पनीयः। असङ्गतमेव तत्कल्पनम्।

भानुदत्तस्य समयं षोडशशताब्दीखिष्टकल्पं प्रतिपादयितुं निम्नाङ्कितानि प्रमाणान्युपन्यस्यन्ते -

(i) भानुदत्तपितामहस्य महादेवस्याऽग्रजस्य शङ्करमिश्रस्य मिथिलायामवस्थितिः, नेपालीयराजकीयपुस्तकालयस्यैकेन लेखेन १४८८ तमे खिष्टाब्दे सिद्धयति। अतः, शङ्करानुजोऽपि तत्कालीन एव भवनीयः। अथ च महादेवपौत्रस्य भानुदत्तस्याऽवस्थितिः षोडशशताब्दीखिष्टकल्पा सम्भाव्यते।

(ii) भानुदत्तस्य जामातुर्विश्वेश्वरमिश्रस्य पौत्रो गङ्गानन्दः प्रसिद्धः कविरवर्तत। असौ बीकानेरनरेशमाशिश्रिये। स्वकीये कर्णभूषणग्रन्थेऽसौ स्वाश्रयदातारं प्रशशंस। श्री सी०एम०महोदयकृते 'क्रोनोलॉजी आफ इण्डिया' इतीतिहासग्रन्थे बीकानेरनरेशो महाराजः कर्णीसिंहः सप्तदशशताब्दिको वर्णितः। गङ्गादत्तस्य समयोऽपि स एव भवनीयः। अतो गङ्गादत्तपितामहस्य विश्वेश्वरस्य श्वसुरो भानुदत्तो यदि षोडशशताब्दीकल्पः कल्प्यते, तत्तु स्वाभाविकमेव। न तत्र काऽप्यापत्तिः करणीया।

(iii) भानुदत्तकृतरसमञ्जरीग्रन्थे ह्येकस्मिन् स्थाने निजामशाहशासकस्योल्लेखो विद्यते।[1] 'क्रोनोलॉजी आफ इण्डिया' इतिहासग्रन्थे लिखितम् -

दक्षिणभारते १४००-१५५० खिष्टाब्दमध्ये ह्यनेके निजामशासकाः बभूवुः। सम्भवतो भानुदत्तः कतिपयवर्षं निजामशाहराजसभामलञ्चकार। अनन्तभट्टकृतव्यङ्ग्यार्थकौमुदीग्रन्थेऽपि वर्णितं, यदयं निजामशाहो देवगिरिशासको बभूव।

---

१. भेदो वाचि दृशोर्जलं कुचतटे स्वेदः प्रकम्पोऽधरे
पाण्डुर्गण्डतटी वपुः पुलकितं लीनं मनस्तिष्ठति।
आलस्यं नयनश्रियश्चरणयोः स्तम्भः समुज्जृम्भते
तत्किं राजपथे निजामधरणीपालोऽयमालोकितः।।

(iv) हिस्ट्री आफ तिरहुत ग्रन्थस्य लेखकेनाऽपि भानुदत्तस्त्रयोदशशताब्द्यन्तिमभागजातो निगदितः। परमुपर्युक्तप्रमाणानि तस्य कथनमसङ्गतमेव साधयन्ति।

अतो भानुदत्तस्य समयः षोडशशताब्दीकल्प इति ध्रुवमवगन्तव्यः।

## ४. भानुदत्तस्य कृतयः

भानुदत्तेनाऽनेके ग्रन्थाः विरचिताः। रसमञ्जरीरसतरङ्गिणीरसपारिजातगीतगौरीपति-कुमारभार्गवीयाऽलङ्कारतिलकमुहूर्तसारशृङ्गारदीपिकादयस्तत्कृताः ग्रन्थाः वर्तन्ते। भानुदत्तकृताः केचन ग्रन्थाः समुपलभ्यन्ते केचन चाऽनुलब्धा एव वर्तन्ते। रसमञ्जरीरसतरङ्गिणी-शृङ्गारतिलकास्तस्य काव्यशास्त्रविषयकाः ग्रन्थाः सन्ति। भानुदत्तकृतानां केषाञ्चित् ग्रन्थानां परिचयो निम्नक्रमेण प्रस्तूयते -

**(i) गीतगौरीपतिः -**

गीतिकाव्यमिदं जयदेवस्य गीतगोविन्दमनुकरोति। दशसु सर्गेषु विभक्तेऽस्मिन् काव्ये भगवतो नीललोहितस्य गौरीपतेर्वन्दना कविना कृता। अत्र कविः शिवस्य गौरीं प्रति रतिभावं व्यानञ्ज। गीतिकाव्ये रागाणामपि निर्देशो विद्यते।

**(ii) कुमारभार्गवीयम् -**

गद्यपद्यमिश्रितेऽस्मिन् काव्ये द्वादश सर्गाः सन्ति। अत्रभवतः शिवसुतस्य कार्तिकेयस्य कथा कविना वर्णिता।

**(iii) रसपारिजातम् -**

सङ्ग्रहरूपे ग्रन्थेऽस्मिन् भानुदत्तकृतानां तत्पितृगणेश्वरकृतानाञ्च श्लोकानां सङ्ग्रहो विद्यते। अत्रैकसहस्रश्लोकाः सङ्गृहीताः सन्ति। अस्मिन् सङ्ग्रहे निजामशाहवीर-भानुकृष्ण[1]सङ्ग्रामशाहादीनां नरपतीनां कविकृता स्तुतिर्विद्यते। सम्भवतो भानुदत्तः सर्वेषामेतेषां नरपतीनां सभाजनमाश्रयञ्च सम्प्राप। ग्रन्थस्याऽस्य सम्पादनं बदरीदत्तझामहोदयेन विहितम्।

**(iv) अलङ्कारतिलकम् -**

अलङ्कारशास्त्रविषयकोऽयं ग्रन्थोऽग्रे वर्णितः।

**(v) रसमञ्जरी -**

ग्रन्थोऽयमप्यलङ्कारशास्त्रीयोऽग्रे वर्णितः।

**(vi) रसतरङ्गिणी -**

अलङ्कारशास्त्रसम्बन्धिनो ग्रन्थस्याऽस्याऽपि वर्णनमग्रे वर्तते।

---

१. कृष्णदेवरायः १५०९-१५३० ख्रिष्टाब्दाः

## ५. अलङ्कारतिलकम्

पञ्चसु परिच्छेदेषु विभक्तस्याऽस्य ग्रन्थस्य विषयवस्तु निम्नक्रमेण वर्तते -

(i) **प्रथमः परिच्छेद -**

परिच्छेदे प्रथमे काव्यविवेचनमस्ति। अत्र लेखकेन काव्यं शरीररूपेण प्रस्तुतम्। काव्यं शरीरं विद्यते रसश्च तस्याऽऽत्मा। रीतिगीतिवृत्तिगुणदोषहीनताः काव्यशरीरस्य पञ्चेन्द्रियाणि सन्ति। व्युत्पत्तयः काव्यशरीरस्य प्राणाः मनश्चाऽभ्यासो वर्तते। भाषामधिकृत्य काव्यं चतुर्विधं भवति - संस्कृतकाव्यं प्राकृतकाव्यमपभ्रंशकाव्यं मिश्रकाव्यञ्च।

(ii) **द्वितीयः परिच्छेदः -**

द्वितीये परिच्छेदे प्रथमं पदवाक्यवाक्यार्थविवेचनं कृत्वा लेखकः काव्यदोषान् प्रादर्शयत्।

(iii) **तृतीयः परिच्छेदः -**

तृतीयः परिच्छेदो गुणविवेचनात्मको वर्तते। गुणास्त्रिविधाः भवन्ति - बाह्या आन्तराः वैशेषिकाश्च। शब्दगुणाः बाह्याः भवन्ति, अर्थगुणाश्चाऽन्तराः। श्लेषादयश्चतुर्विंशतिगुणाः वैशेषिकाः वर्तन्ते।

(iv) **चतुर्थः परिच्छेदः -**

चतुर्थे परिच्छेदे शब्दालङ्काराणां विवेचनमस्ति। अत्र भानुदत्तः काव्यप्रकाशमनुचकार। वक्रोक्त्यनुप्रासयमकश्लेषचित्रपुनरुक्तवदाभासानां षण्णां शब्दालङ्काराणां निरूपणमस्मिन् परिच्छेदे विद्यते।

(v) **पञ्चमः परिच्छेदः -**

पञ्चमे परिच्छेदे भानुदत्तोऽष्टचत्वारिंशदर्थालङ्कारान् न्यरूपयत्।

अलङ्कारतिलकग्रन्थस्य सम्पादनं प्रो० जी०वी० देवस्थलीमहोदयेन कृतम्।

## ६. रसमञ्जरी

भानुदत्तकृतरसमञ्जरीग्रन्थेन परा प्रसिद्धिरधिगता। ग्रन्थस्याऽस्य मुख्यविषयो वर्तते - नायकनायिकाभेदनिरूपणम्। अत्र नायिकाभेदप्रकरणमतिविस्तृतं प्रायशो ग्रन्थस्य २/३ भागं व्याप्नोति। नायिकानां विभिन्नभेदानां साङ्गोपाङ्गविवेचनमत्र भानुदत्तेन कृतम्। नायिकासहायिका अपि प्रोक्ताः। तदनन्तरं नायकभेदानां सहायकानाञ्च वर्णनं वर्तते। अस्मिन् ग्रन्थेऽष्टविधाः सात्त्विकभावाः द्विविधौ शृङ्गारौ विप्रलम्भस्य दशदशा इत्यादिविषयाः व्याख्याताः वर्तन्ते।

**रसमञ्जर्याष्टीकाः**

भानुदत्तकृतेयं रसमञ्जरी लोके बहुप्रचलिता सम्मानिता सहृदयहृदयाकर्षकरी च बभूव। ग्रन्थस्याऽस्य बह्व्यष्टीकाः प्राचीनकाले विद्वद्भिर्मनीषिभिर्लिखिताः। तथ्यमिदमेवाऽस्य

लोकप्रियत्वं गाम्भीर्यं गौरवञ्च पुष्णाति। एकादशटीकानां प्रमाणानि समुपलभ्यन्ते। तासां परिचयो निम्नक्रमेण वर्तते -

(i) **अनन्तभट्टकृता व्यङ्ग्यार्थकौमुदीटीका -**

टीकेयमनन्तभट्टेन १६१५ तमे ख्रिष्टाब्दे लिखिता। त्र्यम्बकसुतस्याऽनन्तभट्टस्य मूलनिवासस्थानं गोदावरीतीरे पुण्यस्तम्भनगरमवर्तत।[1]

(ii) **नागेशभट्टकृता प्रकाशटीका -**

प्रसिद्धवैयाकरणेन रसगङ्गाधरटीकाकारेण नागेशभट्टेन टीकेयमष्टादशशताब्द्याः पूर्वार्द्धभागे लिखिता।

(iii) **शेषचिन्तामणिकृता परिमलटीका -**

भट्टोजिदीक्षितगुरुणा शेषचिन्तामणिना टीकेयं लिखिता। असौ शेषनृसिंहस्य सुतः शेषकृष्णस्य च भ्राताऽवर्तत।

(iv) **गोपालाचार्यकृता विकासटीका -**

नृसिंहसुतो गोपालाचार्यो बोपदेवनाम्नाऽपि प्रसिद्ध आसीत्। तेन १५७२ ख्रिष्टाब्दसमये टीकेयं विरचिता।

(v) **द्रविडगोपालभट्टकृता रसिकरञ्जनी टीका -**

हरिवंशभट्टसुतो गोपालभट्टो द्रविडब्राह्मणोऽवर्तत। तेन रसमञ्जर्याः रसिकरञ्जनीटीका लिखिता।

(vi) **विश्वेश्वरपाण्डेयपर्वतीयस्य समञ्जसा व्यङ्ग्यार्थकौमुदी वा टीका -**

विश्वेश्वरपाण्डेयमहोदयेनाऽनेकेषां ग्रन्थानां रचना कृता। लक्ष्मीधरपाण्डेयसुतोऽयं परमपण्डितोऽष्टादशशताब्दीप्रारम्भकाले सञ्जातः। तेन रसमञ्जर्याः समञ्जसानाम्नी टीका लिखिता। टीकेयं व्यङ्ग्यार्थकौमुदी चाऽपि निगद्यते।

(vii) **रङ्गशालिन आमोदटीका -**

रङ्गशालिना टीकेयमामोदनाम्नी सप्तदशशताब्दीपूर्वार्द्धसमये लिखिता।

(viii) **आनन्दशर्मणो व्यङ्ग्यार्थदीपिका टीका -**

टीकेयमानन्दशर्मणा त्र्यम्बकसुतेन विरचिता।

(ix) **व्रजराजदीक्षितस्य रसिकरञ्जनटीका -**

अष्टादशशताब्दीपूर्वार्द्धसमये व्रजराजदीक्षितेन टीकेयं लिखिता।

(xi) **भानुभावप्रकाशिनी टीका -**

टीकेयं महादेवनाम्ना विदुषा विरचिता।

---

१. नगरस्याऽस्य वर्तमानकालीनं नाम वर्तते - पुणताम्बी

(xi) **रसमञ्जरीस्थूलतात्पर्यटीका** –

टीकाया अस्याः लेखकस्य नामाऽविदितमस्ति।

टीकास्वेतास्वेकादशसु केवलं द्वे टीके गणेशभट्टानन्तभट्टकृते प्रकाशितेऽभूताम्।

## ७. रसतरङ्गिणी

रसतरङ्गिण्यां भानुदत्तो रसविषयकतत्त्वानि सुविशदं सुविस्तरञ्च व्याचख्यौ। अष्टसु तरङ्गेषु विभक्तस्य ग्रन्थस्य विशदविवेचनं निम्नप्रकारेण वर्तते –

(i) **प्रथमस्तरङ्गः** –

प्रथमस्तरङ्गः कृष्णवन्दनया प्रारभते। तदनन्तरं लेखकेन काश्चन परिभाषाः प्रोक्ताः। ततो भावानां स्थायिभावानाञ्च स्वरूपाणि प्रोक्तानि भेदांश्च व्याख्याताः।

(ii) **द्वितीयस्तरङ्गः** –

द्वितीये तरङ्गे विभावानां परिभाषाः भेदाश्च प्रोक्ताः।

(iii) **तृतीयस्तरङ्गः** –

तृतीये तरङ्गेऽनुभावानां विवेचनं विद्यते।

(iv) **चतुर्थस्तरङ्गः** –

तरङ्गे चतुर्थेऽष्टसात्त्विकानुभावाः निरूपिताः सन्ति।

(v) **पञ्चमस्तरङ्गः** –

पञ्चमे तरङ्गे व्यभिचारिभावानां विवेचनमस्ति।

(vi) **षष्ठस्तरङ्गः** –

षष्ठे तरङ्गे भानुदत्तेन प्रथमं तावद् रसस्य स्वरूपं व्याख्यातम्। तदनन्तरञ्च शृङ्गाररसस्य व्याख्या कृता।

(vii) **सप्तमस्तरङ्गः** –

सप्तमे तरङ्गे शृङ्गाररसव्यतिरिक्तानामन्येषां रसानां विवेचना वर्तते।

(viii) **अष्टमस्तरङ्गः** –

तरङ्गेऽष्टमेऽष्टविधस्थायिभावान् विंशतिविधव्यभिचारिभावानष्टविधरसांश्च विवेच्य भानुदत्तस्तदुत्पन्नदृष्टीः सोदाहरणं व्याचख्यौ। तदनन्तरमेकस्माद् रसाद् रसान्तरस्योत्पत्तिर्व्याख्याता। अथ च रसविरोधादिविषयाः निरूपिताः।

भानुदत्तस्येयं रसतरङ्गिणी सुतरां लोकप्रिया विद्वज्जनसम्मानिता च बभूव। ग्रन्थस्याऽस्य एकादश टीकाः प्रसिद्धाः सन्ति। तासु केवलं १७३२ तमे खिष्टाब्दे गङ्गारामजडीलिखिता नौकाटीका प्रकाशनं प्राप्ता।

रससिद्धान्तविवेचनव्याख्यादृष्टिभिर्भानुदत्तस्य रसमञ्जरीरसतङ्गिण्यौ द्वावेव ग्रन्थौ महत्त्वपूर्णौ वर्तेते।

# विश्वनाथदेवः

## १. विश्वनाथदेवस्य महत्त्वम्

संस्कृतकाव्यशास्त्रकृत्सु विश्वनाथदेवो गुणिगणाग्रगण्योऽपि न स्वानुगुणानुरूपां प्रतिष्ठां प्रसिद्धिं वा लेभे। तस्य कृतिः काव्यशास्त्रविषयको ग्रन्थः साहित्यसुधासिन्धुर्मम्मट-कृतकाव्यप्रकाशसदृशः सर्वाङ्गसम्पूर्णः सकलकाव्याङ्गसमीक्षासमवेतो वर्तते। वर्तमानसमयेऽपि नाऽतिप्रसिद्धिं गतोऽयं ग्रन्थः कतिपयेषु पुस्तकालयेषु पाण्डुलिपिरूपेण सुरक्षितोऽवर्तत। परं १९७८ तमे ख्रिष्टाब्दे जम्मूविश्वविद्यालयस्थस्य डा० रामप्रतापनाम्नो विदुषः प्रयासैः क्षीरसागरात् पीयूषमिव प्राचीनपुस्तकालयेभ्यः समुद्धृतः प्रकाशनमवाप। प्रसिद्धेषु काव्यशास्त्रेतिहासग्रन्थेषु सूचिबद्धतामप्राप्तोऽप्ययं साहित्यसुधासिन्धुर्निजगौरवेण प्रतिष्ठां प्राप्तस्त्विह प्रस्तूयते।

## २. विश्वनाथदेवस्य परिचयः समयश्च

विश्वनाथदेवस्य परिचयस्य समयस्य च सम्बन्धे केचन सङ्केताः समुपलभ्यन्ते। तद्यथा -

(i) विश्वनाथदेवस्य तिसृणां कृतीनां परिचयो लभ्यते - चित्रमीमांसा, मृगाङ्कलेखा साहित्यसुधासिन्धुश्च। अत्र चित्रमीमांसायामलङ्कारविवेचनं लेखकेन कृतं, मृगाङ्कलेखा नाटिका वर्तते साहित्यसुधासिन्धुश्च वर्तते काव्यशास्त्रविषयकः प्रौढो ग्रन्थः। मृगाङ्कलेखा-नाटिकाप्रस्तावनायां साहित्यसुधासिन्धोश्च समाप्तिप्रसङ्गे विश्वनाथदेवेन परिचय आत्मनः प्रस्तुतः।

(ii) मृगाङ्कलेखानाटिकाप्रस्तावनातः प्रतीयते यदयं विश्वनाथो दक्षिणभारतीयो गोदावरीसरितस्तटवर्तिधारासुरनगरे जन्म लेभे। तस्य जनकस्त्रिमलदेवः शिवपुरीं काशीनगरीं स्वनिवासमकल्पयत्।[1] मृगाङ्कलेखानाटिकालेखनसमयो वर्तते १६६४ तमो वैक्रमाब्दः।[2]

---

१. सूत्रधारः - (स्मृतिमभिनीय) नन्विमामेव गोदावरीतीरपवित्रधारासुरनगरनिवासिनः साम्प्रतं विरचितवाराणसीवसतेस्त्रिमलदेवतनूजस्य विश्वनाथदेवशर्मणः कृतिं मृगाङ्कलेखाभिधानां नाटिकामभिनेतुमुद्युक्त एवाऽस्मि। मृगाङ्कलेखा - प्रस्तावना

२. अस्य समयश्च विक्रमसंवत्सरस्य सप्तदशशतकम्। अस्माभिरुपलब्धे प्रायशो ग्रन्थकर्त्रैव स्वयं लिखिते प्राकृतनाटिकापुस्तके संवत् १६६४ इति समयो निर्दिष्टो वर्तते।
रामप्रतापसम्पादितसाहित्यसुधासिन्धोः विषयावतरणिकायाम् - पृ० XX

(iii) साहित्यसुधासिन्धुग्रन्थेऽपि विश्वनाथदेवेन स्वकीयः स्वल्पः परिचयः प्रस्तुतः। अष्टमे तरङ्गे ग्रन्थसमाप्तिप्रसङ्गे ह्याचार्येण लिखितम्[1] -

गोदावरीसरित्तटवर्तिनी वर्तते धारासुरनगरी। तत्रत्येनाऽनन्तदेवात्मजेन त्रिमलदेवेन वाराणस्यां (सवर्यां मुक्तिपुर्यां) स्वनिवासः कल्पितः। तस्यात्मजेन च विश्वनाथेनाऽयं ग्रन्थः (साहित्यसुधासिन्धुः) कृतः। असौ मतिमतां मनांस्यामोदेन बिभृयात्। एवञ्च त्रिमलदेवतनूजविश्वनाथकृतसाहित्यसुधासिन्धावर्थालङ्कारमार्जनाभिधानोऽष्टमस्तरङ्गः समाप्तः। कृतिश्चाऽयं विश्वनाथस्य। शुभं भवतु।

गुणविभूषिते महाराजविक्रमादित्ये दिवंगते तस्मिन्नेव समयक्रमे १६४९ तमे वैक्रमाब्दे ह्येकादश्यां गुरुवासरे विश्वनाथेन विदुषा शिवनगर्यां वाराणस्यां ग्रन्थोऽयं लिखितः।

(iv) विवरणैरेतैः प्रतीयते - विश्वनाथः साहित्यसुधासिन्धुमिमं ग्रन्थं १६४९ वैक्रमाब्दे (१५९२ खिष्टाब्दे) ऽलिखत्। मृगाङ्कलेखा विश्वनाथेन १६६४ वैक्रमाब्दे (१६०७ खिष्टाब्दे) लिखिता। विवरणेनाऽनेनाऽनुमीयते यदि विश्वनाथेन पञ्चाशद्वर्षवयसि साहित्यसुधासिन्धुर्विरचितः, तदनन्तरञ्च पञ्चषष्टिवर्षायुषि मृगाङ्कलेखा लिखिता, तदनन्तरञ्च तस्य विदुषो दशवर्षं यावज्जीवनावधिर्यदि कल्प्यते, विश्वनाथस्य जीवनकालः १५४२-१६१७ खिष्टाब्दमध्यवर्ती सम्भावनीयः।

(v) भारतीयेतिहासे मुगलशासकस्य हुमायूंनरपतेः शासनकालः १५३०-१५५६ खिष्टाब्दमध्यवर्ती, अकबरशाहस्य शासनकालः १५५६-१६०५ खिष्टाब्दमध्यवर्ती जहानगीरसम्राजश्च शासनकालः १६०५-१६२७ खिष्टाब्दमध्यवर्ती ध्रुवमितिहासविद्भिर्गण्यते। अतो विश्वनाथस्य स्थितिस्त्रयाणामेवैतेषां मुगलशासकानां शासनावधौ बभूव।

---

१. आस्ते धारासुराख्यं नगरमतिलसत्केशवोद्दामधाम
प्रभ्राजत् कीर्तिपूरं विलसति सविधे यस्य गोदावरी सा।
तत्रत्योऽनन्तदेवात्मज इह वसतिं मुक्तिपुर्यां सवर्यां
तस्याङ्गजस्योल्लसति कृतिरियं विश्वनाथाभिधस्य।।
प्रबलकर्कशतर्कविचारणोल्लसितकाव्यसुलक्षणलक्षिता।
त्रिमलदेवतनूजविनिर्मितिर्मतिमतां वितनोतु मनोमुदम्।।

इति श्रीत्रिमलदेवतनयविश्वनाथविरचिते साहित्यसुधासिन्धौ अर्थालङ्कारमार्जनं नामाष्टमस्तरङ्गः। समाप्तोऽयं ग्रन्थः।

कृतिरियं विश्वनाथस्य। शुभं भवतु।
कीर्तिशेषं गते तैस्तैर्गुणैर्विक्रमभूभुजि।
ग्रहाम्भोधिरसेन्दौ तस्मिन् संवत्सरक्रमे।।
एकादश्यां गुरौ स्वीयः सुधासिन्धुर्विलेखितः।
पत्तने चन्द्रचूडस्य विश्वनाथेन धीमता।।

(vi) साहित्यसुधासिन्धुग्रन्थकर्तुर्नामानि त्रिभिः प्रकारैः समुपलभ्यन्ते - विश्वनाथः, विश्वनाथशर्मा विश्वनाथदेवश्च। लेखकेन स्वकृतिषु त्रयाणामेव नाम्नामुल्लेखो विहितः। मृगाङ्कलेखानाटिकाप्रस्तावनायामसौ स्वात्मानं "विश्वनाथ शर्मा" इति लिलेख।[१] नाटिकायाश्चतुर्थाङ्कस्य समाप्तावसौ स्वात्मानं विश्वनाथदेवमलिखत्।[२] साहित्यसुधासिन्धो-रष्टमतरङ्गसमाप्तिप्रसङ्गे लेखकः स्वात्मानं विश्वनाथमलिखत्।[३]

विवरणैरेतैः प्रतीयते - यद्यपि लेखकः स्वात्मानं त्रिभिः प्रकारैर्लिलेख, तथापि तस्य नाम मूलतो विश्वनाथ एवाऽऽसीत्। कुलपरम्पराप्राप्तेषु नामसु देवपदप्रयोगादसौ (अनन्तदेव - त्रिमलदेव) स्वात्मानं विश्वनाथदेवं जगाद।

## ३. विश्वनाथदेवस्य कृतयः

यथा प्रागवर्णितम् - विश्वनाथदेवस्य तिसृणां कृतीनां परिचयो लभ्यते - चित्रमीमांसा, मृगाङ्कलेखा साहित्यसुधासिन्धुश्च। एतासां कृतीनां स्वल्पपरिचयोऽत्र प्रस्तोतुमुचितम् -

(i) तिसृष्वेतासु कृतिषु चित्रमीमांसा वर्तमानसमये नोपलभ्यते। रचनाया अस्याः सङ्केतो विश्वनाथदेवकृतसाहित्यसुधासिन्धोः सप्तमे तरङ्गे चित्रकाव्यविवेचनप्रसङ्गे समुपलभ्यते।[४]

(ii) मृणाङ्कलेखा चतुरङ्कविभक्ता ललिता नाटिका वर्तते। नाटिकायामस्यां कलिङ्गजनपदाधिपस्य पार्थिवस्य कर्पूरतिलकस्य कामरूपाधिपसुतामृगाङ्कलेखायाश्च प्रणयविवाहप्रसङ्गाः कविना वर्णिताः। नाटिकाया अस्याः प्रकाशनं सरस्वतीभवन टेक्स्ट नं० २६ ह्यन्तर्गतं वाराणस्यां १९३१ तमे खिष्टाब्देऽभवत्। सम्पादनञ्चाऽत्र साहित्याचार्येण नारायणशास्त्रिणा खिस्तेमहोदयेन विहितम्।

(iii) साहित्यसुधासिन्धुर्वर्तते विश्वनाथदेवस्य प्रौढा काव्यशास्त्रीयरचना। विस्तृतपरिचयोऽस्य प्रसङ्गप्राप्तः प्रस्तूयते।

## ४. साहित्यसुधासिन्धुः

विश्वनाथदेवकृतसाहित्यसुधासिन्धुग्रन्थस्य काव्यशास्त्रीयस्य प्रकाशनमर्वाचीनमेव वक्तव्यम्। ग्रन्थस्याऽस्य बह्वीषु पाण्डुलिपिषु विभिन्नपुस्तकालयेषु सुरक्षितासु सतीष्वपि नाऽयं ग्रन्थो बहुकालं यावत् प्रकाशनमवाप। डा० रामप्रतापेन वेदालङ्कारेण विभिन्न-पुस्तकालयेभ्यो विभिन्नसंस्करणानि संगृह्य पाठांश्च संयोज्य ग्रन्थोऽयं विस्तृतभूमिकया हिन्दीव्याख्यया च सहितः सम्पादितः। अथ च वाराणसीस्थभारतीयविद्याप्रकाशनसंस्थयेयं रचना १९७८ तमे खिष्टाब्दे प्रकाशिता।

---

१. त्रिमलदेवतनूजस्य विश्वनाथशर्मणः कृतिम्

२. समाप्तेयं मृगाङ्कलेखाभिधाना नाटिका कृतिरियं विश्वनाथदेवकवेः।

३. श्रीत्रिमलदेवतनयविश्वनाथविरचिते साहित्यसुधासिन्धौ।

४. चित्रान्तरोदाहरणान्यस्मत्कृतचित्रमीमांसायां द्रष्टव्यानि।
साहित्यसुधासिन्धोः (७.२७९) वृत्तिभागे

साहित्यसुधासिन्धुर्ध्वनिसम्प्रदायस्य सङ्ग्रहग्रन्थो गण्यते। मम्मटकृतकाव्यप्रकाशमाश्रित्य विश्वनाथदेवेनाऽस्य प्रणयनं कृतम्। अनेके समीक्षकास्तु साहित्यसुधासिन्धुं काव्यप्रकाशस्यैव परिष्कृतसंस्करणमामनन्ति। परन्तु नैषा स्थितिः सम्भावनीया। साहित्यसुधासिन्धुप्रणयने मम्मटमनुसरन्नपि विश्वनाथदेवः स्वमौलिकत्वं प्रदर्शयन् मतभेदानपि प्रकटयामास।

साहित्यसुधासिन्धौ सर्वेषामेव काव्याङ्गानां समीक्षणविधिर्विश्वनाथेनोपन्यस्तः। परं नाऽसौ रूपकाणां (नाट्यानां) विवेचनञ्चकार। सर्वेषामेव काव्याङ्गानामत्र सूक्ष्मविवेचना वर्तते। अष्टसु तरङ्गेषु विभक्तस्याऽस्य विषयवस्तु निम्नक्रमेण वर्तते -

(i) **प्रथममस्तरङ्गः -**

प्रथमे तरङ्गे काव्यशास्त्रकृता प्रथमं मङ्गलाचरणानन्तरं काव्यप्रयोजनान्युक्त्वा काव्यलक्षणं व्याख्यातम्। काव्यलक्षणप्रतिपादने विश्वनाथो भोजराजमनुचकार। तदनन्तरं काव्यभेदाः प्रोक्ताः। काव्यानि त्रिविधानि भवन्ति - उत्तममध्यमाधमानि (ध्वनिगुणीभूत-व्यङ्ग्यचित्राणि)। परन्त्वत्र विश्वनाथदेवस्य वचनमिदमपि वर्तते - ईदृशं भेदकरणमनुचितमेव, न न्यायसङ्गतम्।[१]

(ii) **द्वितीयस्तरङ्गः -**

द्वितीये तरङ्गे त्रिविधशब्दानां वाचकलाक्षणिकव्यञ्जकानां त्रिविधार्थानां वाच्यलक्ष्य-व्यञ्जकानां त्रिविधानाञ्च शब्दव्यापाराणामभिधालक्षणाव्यञ्जनानां व्याख्यानमस्ति।

(iii) **तृतीयस्तरङ्गः -**

तृतीयतरङ्गे ध्वनिकाव्ययोर्द्वयोर्मुख्यभेदयोः लक्षणामूलध्वनेरभिधामूलध्वनेश्च व्याख्यानमस्ति। अथ च तत्र लक्षणामूलध्वनेर्द्वौ भेदौ अर्थान्तरसंक्रमितवाच्यात्यन्त-तिरस्कृतवाच्यौ प्रोक्तौ। अभिधामूलध्वनेश्चापि संलक्ष्यक्रमासंलक्ष्यक्रमौ भेदौ प्रोक्तौ। रसनिष्पत्तिप्रक्रियायाश्च विस्तरेण व्याख्या लेखकेन कृता। विश्वनाथदेवेन द्वादशरसानां विवेचनं विहितम् - शृङ्गारवीरकरुणरौद्राद्भुतभयानकबीभत्सहास्यप्रेयोदान्तशान्तोद्धतानाम्। रसानां विभिन्नभेदानां विभावानुभावव्यभिचारिभावानां वर्णनं वर्तते। पुनश्च ध्वनेरेकपञ्चाशद्भेदानां सप्तभेदानामथ ध्वनेश्चैव सङ्करसंसृष्टिजन्यासंख्यभेदानां व्याख्याऽस्मिंस्तरङ्गे शास्त्रकृता कृता।

(iv) **चतुर्थस्तरङ्गः -**

चतुर्थे तरङ्गे गुणीभूतव्यङ्ग्यकाव्यस्याष्टभेदानां व्याख्या वर्तते। ते च भेदाः सन्ति - अगूढापराङ्गवाच्यसिद्ध्यङ्गास्फुटसन्दिग्धप्राधान्यतुल्यप्राधान्यकाक्वाक्षिप्तासुन्दरकाव्यानि। गुणीभूतव्यङ्ग्यकाव्यस्य ध्वनिसम्मिततां प्रदर्श्य विश्वनाथदेवेन चित्रकाव्यं - शब्दचित्रं वाच्यचित्रञ्च द्विविधं वर्णितम्।

(v) **पञ्चमस्तरङ्गः -**

पञ्चमे तरङ्गे काव्यदोषाणां वर्णनमस्ति। अत्र शास्त्रकृता प्रथमं तावत्काव्यदोषसामान्य-

१. वस्तुतः अनुचितोऽयं ध्वनित्वादिना विभागः

लक्षणं प्रोक्तम्। तदनन्तरं त्रयोदशपददोषाणां विंशतिवाक्यदोषाणां त्रयोविंशत्यर्थदोषाणाञ्च विवेचना विद्यते। अथ च त्रयोदश रसदोषाणामपि स्वरूपं तेन प्रोक्तम्।

(vi) **षष्ठस्तरङ्गः -**

षष्ठे तरङ्गे गुणसामान्यलक्षणं प्रदर्श्य विश्वनाथदेवस्त्रीन् गुणान् प्रोवाच - माधुर्यौजः-प्रसादान्। तदनन्तरमसौ गुणसम्बद्धान् रसान् गुणव्यञ्जकवर्णान् गुणानाश्रित्य च तिष्ठन्तीः वृत्तीः वैदर्भीगौडीपाञ्चालीर्व्याचख्यौ। अथ लेखको गुणालङ्कारविभागं प्रदर्श्य दण्डिसम्मतानां दश शब्दगुणानां दश चाऽर्थगुणानां लक्षणान्युदाहरणानि च निर्दिदेश। असौ वामनप्रोक्तानां काव्यपाकानामपि वर्णनमकरोत्। मम्मटेन यथा प्राचीनाचार्यप्रोक्तगुणास्त्रिषु गुणेष्वन्तर्भाविताः, विश्वनाथस्तत्राऽसहमतिं प्रकटयामास।

(vii) **सप्तमस्तरङ्गः -**

सप्तमे तरङ्गे शब्दालङ्काराणां विवेचना वर्तते। शब्दालङ्काराः षड् भवन्ति - वक्रोक्त्यनुप्रासयमकश्लेषसमुच्चयचित्रालङ्काराः। अलङ्काराणामेतेषां भेदानां लक्षणान्युदाहरणानि च शास्त्रकृता सविशदं व्याख्यातानि।

(viii) **अष्टमस्तरङ्गः -**

अष्टमे तरङ्गे प्रथमं तावत् प्राचीनाचार्यमम्मटादिप्रोक्तानामेकषष्ट्यलङ्काराणां गणना विश्वनाथदेवेन कृता। अथोपमाद्यलङ्काराणां भेदोपभेदसहिता विवेचना विहिता। शास्त्रकृदत्र प्रसङ्गे प्रादर्शयद् यत् केषाञ्चिदलङ्काराणामन्येष्वलङ्कारेष्वन्तर्भावो भवति। यथा अपह्नुतिश्लेष-समासोक्तिनिदर्शनाऽप्रस्तुतप्रशंसाऽलङ्कारा उपमायामन्तर्भवन्ति। तदनन्तरं लेखको ह्युपमादोषानुक्त्वा स्ववंशपरिचयं प्रास्तौत्।

## ५. साहित्यसुधासिन्धोः प्राचीनसंस्करणानि

साहित्यसुधासिन्धोर्न काऽपि प्राचीनटीका समुपलभ्यते। परमस्य ग्रन्थस्य तिस्रो हस्तलिखिताः प्राचीनपाण्डुलिपयः समुपलभ्यन्ते -

(i) **जम्मूसंस्करणम् -**

जम्मूस्थितरघुनाथमन्दिरपुस्तकालये विद्यमानेयं पाण्डुलिपिर्नाऽतिप्राचीना। १८७६ खिष्टाब्दे पण्डितो ह्याशानन्दो वाराणसीं गत्वाऽस्य लिपिकरणकार्यं समापादयत्। पाण्डुलिपिसमाप्तिप्रसङ्गे लिखितमस्ति -

" इदं पुस्तकं काशीस्थचिन्तामणिना लक्ष्मणब्रह्मज्ञानिने दत्तम्"

(ii) **अलवरसंस्करणम् -**

पाण्डुलिपिरियमलवरनगरस्थितप्राच्यविद्याप्रतिष्ठानशाखाकार्यालये विद्यमाना वर्तते। लिपिकालोऽस्याः वर्तते १८४७ ख्रिष्टाब्दः।

(iii) **तिरुपतिपाण्डुलिपिः -**

पाण्डुलिपिरियं तिरुपतिस्थितवेङ्कटेश्वरविश्वविद्यालयस्य औरियण्टल रिसर्च-इन्स्टीट्यूट संस्थायां सन्निहिताऽस्ति। लिपिकालोऽस्याः वर्तते १९९८ विक्रमाब्दः।

## ६. साहित्यसुधासिन्धोर्वैशिष्ट्यम्

साहित्यसुधासिन्धुः काव्यशास्त्रीयसमीक्षासिद्धान्तानां सङ्ग्रहग्रन्थो वर्तते। अत्र रुद्रटकृतकाव्यालङ्कारवन्मम्मटकृतकाव्यप्रकाशवद्विश्वनाथकृतसाहित्यदर्पणवत् सर्वेषामेव काव्याङ्गानां काव्यसमालोचनासिद्धान्ताः विश्वनाथदेवेन सङ्गृहीताः सम्पादिताश्च। शास्त्रकारेणाऽत्र पूर्ववर्तिनामाचार्याणां मतानि परिष्कृतरूपेण समावेशितानि। एवमत्र ग्रन्थे षोडशशताब्दीपर्यन्तं प्रचलितानां काव्यसम्प्रदायपरम्पराणां सङ्कलनं विश्वनाथेन विहितम्।

त्रयश्चत्वारिंशोऽध्यायः

# रूपगोस्वामी

## १. रूपगोस्वामिनो महत्त्वम्

संस्कृतकाव्यशास्त्रस्येतिहासे भक्तिरसविवेचनदृष्ट्या रूपगोस्वामिनोऽतिशयेन महत्त्वमस्ति। खिष्टस्य पञ्चमषोडशशताब्द्यां बङ्गप्रदेशे चैतन्यमहाप्रभुणा वैष्णवभक्तिधारा प्रवाहिता, या कृष्णभक्त्याः रहस्यवादस्य चाऽऽन्दोलनमुद्भावयामास। अनेनाऽऽन्दोलनेन प्रभाविता अनेके मनीषिणो विद्वांसो भक्ताः कृष्णभक्तिमाश्रित्य वैष्णवकल्पनाः रससिद्धान्ताशब्दावल्यावरणे सङ्ग्रथ्य भक्तिरससिद्धान्तमुद्भावयामासुः। तेषु मनीषिषु रूपगोस्वामी प्रसिद्धतमोऽन्यतमश्च वर्तते।

## २. रूपगोस्वामिनो जीवनवृत्तं समयश्च

चैतन्यमहाप्रभोः शिष्यो रूपगोस्वामी तत्समकालीनोऽवगन्तव्यः। अतोऽस्य समयः पञ्चदशशताब्द्यन्तिमो भागः षोडशशताब्दीप्रारम्भभागश्च वर्तते। रूपगोस्वामिना स्वकृतिषु तल्लेखनसमयः सङ्केतितः। तेन वर्णनेनाऽपि तस्य महाभागस्य स एव समयः सूच्यते। रूपगोस्वामिनः कृतयः सूचयन्ति -

"तासां रचनावधिः पञ्चपञ्चाशद्वर्षपर्यन्तं विस्तृत आसीत्"।

डा० डे महोदयेन लिखितम् -

सनातनरूपौ द्वावेव भ्रातरौ १५५४ खिष्टाब्दपर्यन्तं जीवितावास्ताम्। द्वयोश्चा-ऽवसानकालः स्वल्प एव व्यवधिकोऽवर्तत।

रूपगोस्वामी कार्णाटब्राह्मणोऽवर्तत। तस्य पूर्वजाः चतुर्दशशताब्द्यन्तिमभागे कर्णाटकप्रदेशात् प्रस्थानं विधाय पञ्चदशशताब्दीप्रारम्भकाले बङ्गप्रदेशमागत्य तत्रैव स्थायिनिवासमकल्पयन्। एतद्वंशस्य मूलपुरुषः सम्भवतो जगद्गुरुसर्वज्ञोऽवर्तत, यः कर्णाटप्रदेशस्य राजपुत्रोऽभिधीयते। भरद्वाजगोत्रोत्पन्नोऽसौ परमवैदिकविद्वानासीत्। सर्वज्ञस्य पुत्रोऽनिरुद्धो बभूव। अनिरुद्धस्य द्वौ पुत्राववर्तेताम् - रूपेश्वरो हरिहरश्च। हरिहरस्य षड्यन्त्रेण रूपेश्वरस्य यौवराज्यपदं विनष्टम्। रूपेश्वरस्य पुत्रः पद्मनाभो बभूव। पद्मनाभः कार्णाटान्निष्क्रम्य बङ्गप्रदेशे गङ्गातीरे नवहट्टग्रामं स्वनिवासमकल्पयत्।

पद्मनाभस्य पञ्च पुत्रा अवर्तन्त। तेषु मुकुन्दो नाम कनिष्ठः पारिवारिककलहपीडितो जनकगृहं परित्यज्य पूर्वबङ्गे जैसोरनगरनिकटवर्तिफतेहाबादग्रामं स्वनिवासञ्चकार।

मुकुन्दसुतस्य श्रीकुमारस्य त्रयः सुताः जाताः - सनातनो रूपोऽनुपमश्च। प्रसिद्धिरियमीदृशी यदेतेषां बाल्यकालनामान्यासन् - अमरसन्तोषवल्लभाः। परन्तु चैतन्यमहाप्रभोः दीक्षाप्राप्त्यनन्तरं ते क्रमशः सनातनरूपाऽनुपमनामभिः प्रथिता अभूवन्।

परमपण्डिताः विद्वांसो मनीषिणः प्रतिभाशालिनो नयज्ञास्ते त्रयोऽपि भ्रातरो गौडाधिपशाहहुसेननृपतेर्मन्त्रिपदशालिनो भूत्वा रामकेलिग्रामं गत्वा तत्र निवासमकल्पयन्। शाहहुसेनस्य राजसभायां (दरबारे) तैः सुतरां महती प्रतिष्ठाऽधिगता। राजसभायां विशिष्टपदप्रतिष्ठितौ सनातनरूपौ साकिरमलिकहुवीरखासनामभ्यां प्रसिद्धौ बभूवतुः। अतः केचन समीक्षका अनुमान्ति, यत् प्रथमं तावदेताभ्यां भ्रातृभ्यां मुसलिमधर्मोऽवलम्बितः। परमुत्तरवर्तिनि काले चैतन्यमहाप्रभुसत्सङ्गसम्पर्कमवाप्य पुनर्वैष्णवमतदीक्षितौ सञ्जातौ। परं धर्मान्तरणस्यैतस्य न किमपि स्पष्टं प्रमाणमुपलभ्यते। सम्भावनेयं कल्पनीया यच्छाहहुसैनराजसभायां पदाभिधानमभिलक्ष्य तावेतन्नामानौ प्रोक्तौ। अत एव कैश्चित्समीक्षकैस्तयोर्धर्मान्तरणं कल्पितम्। न च तत्र तथा शङ्कनीयम्।

सनातनरूपौ परमवैष्णवौ विष्णुकृष्णपरमभक्तौ चैतन्यमहाप्रभुपरिमिलनमवाप्य तस्य सारल्येन परमनिष्ठया भावनात्मकभक्त्या चाऽतितरां प्रभावितौ भक्तिसिद्धान्तानुयायिनावभूताम्। रामकेलिग्रामे चैतन्यमहाप्रभोः प्रथमदर्शनं सम्प्राप्य तयोर्वैष्णवभक्तिः परमप्रगाढा सञ्जाता। किञ्चित्समयानन्तरं राजसेवां परित्यज्य प्रयागञ्च गत्वा महाप्रभोश्चैतन्यस्य च दर्शनं कृत्वा कृतकृत्यावभवताम्। तदनन्तरं महाप्रभोरादेशं सम्प्राप्य वृन्दावनमात्मनो मुख्यनिवासमकल्पयताम्।

### ३. रूपगोस्वामिनः कृतयः

विविधविधासु रचनाकुशलो रूपगोस्वामी पुस्तकान्यनेकान्यलिखत्। तस्य भ्रातुष्पुत्रः शिष्यत्वेनाऽनुगतो जीवगोस्वामी सनातनगोस्वामिप्रणीतलघुभागवतामृतस्य लघुतोषिणीव्याख्यायां रूपगोस्वामिकृतपुस्तकानां सूचीमलिखत्। तत्र तस्य सप्तदशपुस्तकानां सूचना विद्यते। अथ चाऽत्र कतिपयैः पुस्तकैः सनातनगोस्वामिनो नामाऽपि संयुक्तं लभ्यते। रूपगोस्वामिकृतकृतिषु काश्चन बृहदाकाराः काश्चन च लघ्वाकाराः ग्रन्थाः वर्तन्ते। बृहदाकाराणि पुनः महत्त्वपूर्णान्यष्ट पुस्तकानि सन्ति। तद्यथा -

(i) खण्डकाव्यानि - (१) हंसदूतम् (२) उद्धवसन्देशः

(ii) नाट्यानि - (३) दानकेलिकौमुदी (४) ललितमाधवम् (५) विदग्धमाधवम्।

(iii) काव्यशास्त्रग्रन्थाः - (६) नाटकचन्द्रिका (७) भक्तिरसामृतसिन्धुः (८) उज्ज्वलनीलमणिः।

अथ च नव लघ्वाकाराणि पुस्तकानि वर्तन्ते -

(१) लघुभागवतामृतम् (२) पद्यावली (३) स्तवमाला (४) उत्कलिकामञ्जरी (५) आनन्दमहोदधिः (६) मथुरामहिमा (७) गोविन्दविरुदावली (८) मुकुन्दमुक्तावली (९) अष्टादशछन्दांसि।

कानिचिदन्यान्यपि पुस्तकानि रूपगोस्वामिकृतानि कथ्यन्ते -

(१) गौराङ्गस्तवकल्पतरुः

(२) कुसुमस्तबकः

(३) यमुनास्तोत्रम्

(४) चतुःपुष्पाञ्जलिस्तवः

उपरिवर्णितासु रूपगोस्वामिकृतरचनासु त्रयो ग्रन्थाः काव्यशास्त्रसम्बन्धिनो वर्तन्ते। तेषां संक्षिप्तपरिचयोऽत्र प्रस्तूयते।

## ४. नाटकचन्द्रिका

नाटकचन्द्रिकायां रूपगोस्वामिना नाट्यशास्त्रविषयाः निरूपिताः। ग्रन्थारम्भे ग्रन्थकारेण सूचितम् - कृतिरेषा भरतं रससुधाकरञ्च (सिंहभूपालरचितरसार्णवसुधाकरम्) ह्यनुसृत्य विरचिता वर्तते। अथ च भरतमतविरुद्धत्वात्तेन साहित्यदर्पणं परित्यक्तम्।[1]

अष्टसु विभागेषु विभक्तायां नाटकचन्द्रिकायां प्रथमं नाटकलक्षणं निरूप्य लेखको नाटकरसेतिवृत्तप्रस्तावनानान्दीसन्धिपताकाऽर्थोपक्षेपकभाषावृत्त्यादीनां विवेचनञ्चकार। अथ च तदनुकूलरसानामपि व्याख्यानं सम्पादितम्। विषयं स्पष्टीकर्तुमुदाहरणान्यपि प्रस्तुतानि। अत्राऽनेकान्युदाहरणानि रूपगोस्वामिना स्वयंरचितानि सन्त्यन्यानि चाऽन्येभ्यो वैष्णवग्रन्थेभ्यः सङ्कलितानि वर्तन्ते।

## ५. भक्तिरसामृतसिन्धुः

भक्तिरसामृतसिन्धुग्रन्थे रूपगोस्वामिना भक्तिरससिद्धान्तो विस्तरेण वर्णितः। चतुर्षु मुख्यविभागेषु विभक्तोऽयं ग्रन्थो बह्वीभिर्लहरीभिः सम्भृतो वर्तते। मुख्यविभागाः सन्ति - पूर्वपश्चिमदक्षिणोत्तरविभागाः। विषयक्रमश्चैतेषां निम्नप्रकारेण वर्तते -

(i) **पूर्वविभागः -**

पूर्वविभागे भक्त्याः सामान्यस्वरूपस्य लक्षणस्य च विवेचनं विद्यते।

---

१. वीक्ष्य भरतमुनिशास्त्रं रसपूर्वसुधाकरञ्च रमणीयम्।
लक्षणमतिसंक्षेपाद् विलिख्यते नाटकस्येदम्।।
नातीव सङ्गतत्वाद्, भरतमुनेर्मतविरोधाच्च।
साहित्यदर्पणीया न गृहीता प्रक्रिया प्रायः।। नाटकचन्द्रिका १.१-२

(ii) **दक्षिणविभागः -**

दक्षिणविभागे रसस्याङ्गभूताः विभावा अनुभावाः व्यभिचारिभावाश्च लेखकेन वर्णिताः।

(iii) **पश्चिमविभागः -**

पश्चिमे विभागे भक्तिरसस्य विवेचनमस्ति। तस्य पञ्च भेदाः विद्यन्ते - (१) शान्तभक्तिरसः, (२) प्रीतभक्तिरसः (३) प्रेमभक्तिरसः (४) वात्सल्यभक्तिरसः (५) मधुरभक्तिरसः।

(iv) **उत्तरविभागः -**

उत्तरविभागेऽन्येषां रसानां निरूपणमस्ति। हास्याऽद्भुतवीरकरुणरौद्रभयानकबीभत्स-रसानां व्याख्या वर्तते। अथ रसानां परस्परं विरोधमविरोधं वा विवेच्य लेखकेन रसविरोधपरिहारोपाया अपि प्रोक्ताः। ग्रन्थस्याऽस्य लेखनं १४६३ तमे शकसंवत्सरे (१५५१ ई०) बभूव।

## ६. उज्ज्वलनीलमणिः

रूपगोस्वामिनोऽयं ग्रन्थ उज्ज्वलनीलमणिर्भक्तिरसामृतसिन्धुग्रन्थस्य परिशिष्टो वा पूरको वाऽवगन्तव्यः। अस्य ग्रन्थस्य द्वितीये श्लोके ग्रन्थकारेणोक्तम् -

"तस्मिन् पूर्वोक्ते ग्रन्थे (भक्तिरसामृतसिन्धौ) भक्तिरसः संक्षेपेण प्रोक्तः। विषयस्य सुगूढत्वादयमत्र ग्रन्थे विस्तरेण वर्ण्यते।''

उज्ज्वलनीलमणिग्रन्थे लेखकेन प्रतिपादितम् -

" भक्तिरसस्य स्थायिभावो विद्यते - मधुरा रतिः। यदेयं मधुरा रतिर्विभावादिभिरास्वाद्य-मानतादशायामानीयते, तदाऽसौ मधुराख्यो भक्तिरसः प्रोच्यते।''

उज्ज्वलनीलमणौ नायक-नायिकाभेदो विस्तरेण शास्त्रकृता व्याख्यातः। प्रथमं तावन्नायकाश्चतुर्विधाः भवन्ति - धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ताः। पुनस्ते चत्वारोऽपि द्विविधा प्रोच्यन्ते - पत्युपपतयः। अथ तेषां त्रयोऽपि भेदाः भवन्ति - पूर्णपूर्णतरपूर्णतमाः। तदनन्तरं पुनरपि चत्वारो भेदाः कथ्यन्ते - धृष्टशठानुकूलदक्षिणाः। एवं सङ्कलनेन नायकानां षण्णवतिभेदाः भवन्ति (४x२x३x४=९६)। एषां भेदानां परिभाषाः गुणाः कार्यव्यापाराः सोदाहरणं लेखकेन व्याख्याताः। तदनन्तरं पञ्चविधानां नायकसहायकानां चेटविटविदूषकपीठमर्दप्रियनर्मसखानां परिचयोऽप्यस्ति।

उज्ज्वलनीलमणौ नायिकानामपि विशदं वर्णनमस्ति। नायिकाः प्रथमं द्विविधाः प्रोक्ताः - स्वीयाः परकीयाश्च। कृष्णस्य द्वारिकानिवासिन्यः १६१०८ पत्न्यः स्वीयाः नायिकाः सन्ति। ताश्चाऽष्टविधाः वर्तन्ते - रुक्मिणी, सत्यभामा, जाम्बवती, अर्कनन्दिनी, शैव्या, भद्रा, कौशल्या माद्री च।

परकीयाः नायिकाः पुनः द्विविधाः वर्तन्ते - परोढाः कन्याश्च। परोढाः नायिकाः ब्रजभूमौ निवसन्ति। ताश्च त्रिविधाः वर्तन्ते - साधनपराः देव्यो नित्यप्रियाश्च। साधनपराः पुनः द्विविधा भवन्ति - यौथिक्याः, अयौथिक्याश्च। अयौथिक्यानां नायिकानामपि द्वौ द्वौ भेदौ स्तः - प्राचीनाः नवाश्च।

स्वीयापरकीयानां नायिकानां पुनस्त्रयस्त्रयो भेदाः भवन्ति - मुग्धाः मध्याः प्रगल्भाश्च। एतेषां भेदानामपि पुनर्भेदा अष्ट कथ्यन्ते - अभिसारिका वासकसज्जा, उत्कण्ठिता, खण्डिता, विप्रलब्धा, कलहान्तरिता, प्रोषितभर्तृका, स्वाधीनपतिका च। एवञ्च नायिकानां षष्ट्युत्तरशतत्रयो (३६०) भेदाः प्रोच्यन्ते।

नायिकाभेदानां विशदं वर्णनं विधाय शास्त्रकृता रूपगोस्वामिना नायिका-सहायिकानां दूतीनां सखीनाञ्च गुणाः विस्तरेण प्रोक्ताः।

उज्ज्वलनीलमणिग्रन्थे शृङ्गाररस एव विस्तरेण विविक्तो भक्तिरसरूपेण परिकल्पितः। शृङ्गाररसस्य स्थायिभावो विद्यते - प्रेमरति। सा च रतिर्वर्तते षड्विधा - स्नेहमानप्रणयरागानुरागभावात्मिका। यथा षडिक्षुविकारा भवन्ति - रसगुडखण्डशर्करा-सितासितोपलाः, तथैव प्रेमविलासा अपि स्नेहादिभेदेन षट्प्रकाराः वर्तन्ते।[1]

एवञ्चोज्ज्वलनीमणिग्रन्थे भक्तिरसस्य विस्तरेण व्याख्यानं विद्यते। उदाहरणानि चाऽत्र सर्वाणि कृष्णभक्त्या कृष्णभक्तैश्च सम्बद्धानि वर्तन्ते।

### ७. उज्ज्वलनीलमणिग्रन्थस्य प्राचीनाष्टीकाः

भक्तिरसप्रतिपादनदृष्ट्या ह्युज्ज्वलनीलमणिग्रन्थः प्रतिष्ठां सुतरामवाप। अस्य टीकाद्वयं प्रकाशितं बभूव -

**(i) लोचनरोचनी टीका -**

टीकेयं रूपगोस्वामिनो भ्रातुः सुतेन (बल्लभपुत्रेण) जीवगोस्वामिना विरचिता। प्रकाण्डपण्डितोऽसौ मनीषी १५२३ तमे ख्रिष्टाब्दे भुवमवतीर्य १६१८ तमे ख्रिष्टाब्दे दिवङ्गतः।

**(ii) आनन्दचन्द्रिका टीका -**

विश्वनाथचक्रवर्तिकृता टीकेयमुज्ज्वलनीलमणिग्रन्थस्य लेखकस्य पाण्डित्यम-भिव्यनक्ति। इयमानन्दचन्द्रिका टीका उज्ज्वलनीलमणिकिरणनाम्नाऽपि विख्याता बभूव। विश्वनाथचक्रवर्ती वैष्णवसम्प्रदायमध्ये सम्मान्यो ग्रन्थकारो बभूव। अस्य समयः सप्तदशशताब्द्यन्तिमो भागोऽष्टादशशताब्दीपूर्वभागश्च गण्यते। टीकेयं लेखकेन वृन्दावने १६९६ तमे ख्रिष्टाब्दे पूर्णतां नीता।

---

१. बीजभिक्षुः स च रसः स गुडः खण्ड एव सः।
सा शर्करा सिता सा च यथा स्यात् सितोपला।।
अतः प्रेमविलासा स्युर्भावाः स्नेहादयस्तु षट्।।
उज्ज्वलनीलमणिः - स्थायिभावप्रकरणम् - श्लोक ५४-५५

चतुश्चत्वारिंशोऽध्यायः

# कर्णपूरः

## १. कर्णपूरस्य महत्त्वं परिचयः समयश्च

अलङ्कारकौस्तुभाभिधानस्य ग्रन्थस्य रचयिता कर्णपूरो बङ्गजनपदस्य सुप्रसिद्धो ग्रन्थकारोऽवर्तत। सौभाग्येन तस्य जीवनवृत्तस्य समयस्य च स्वल्पः परिचयः समुपलभ्यते।

कर्णपूरस्य जनकः शिवानन्दसेनाभिधानोऽवर्तत, गुरुश्च श्रीनाथः। शिवानन्दसेनश्चैतन्यस्य महाप्रभोः शिष्येष्वन्यतमोऽग्रगण्य आसीत्। कर्णपूरो बङ्गप्रदेशे नदियाजनपदे १५२४ तमे खिष्टाब्दे जन्म लेभे। अयं परमानन्दसेननाम्नाऽपि प्रथित आसीत्। चैतन्यमहाप्रभोः परमभक्तेन तेन कर्णपूरेग चैतन्यचरितप्रकाशनाय १५७२ तमे खिष्टाब्दे चैतन्यचरितोदयनाटकमपि विरचितम्।

## २. कर्णपूरस्य कृतयः

कर्णपूरस्य द्वे रचने प्रसिद्धे स्तः - चैतन्यचन्द्रोदयनाटकम् अलङ्कारकौस्तुभाभिधानोऽलङ्कारशास्त्रग्रन्थश्च। चैतन्यचन्द्रोदयनाटके कविना चैतन्यमहाप्रभोर्जीवनचरितं वर्णितम्। नाटकस्याऽस्य रचना १५८२ खिष्टाब्दे सञ्जाता। काव्यशास्त्रविषयकस्याऽलङ्कारकौस्तुभस्य प्रचारस्तु बङ्गप्रान्ते प्राचुर्येण समजायत। ग्रन्थस्याऽस्य परिचयोऽधो निर्दिश्यते।

## ३. अलङ्कारकौस्तुभम्

अलङ्कारकौस्तुभाभिधाने महनीये विद्वज्जनवन्दिते सहृदयहृदयप्रसादके काव्यशास्त्रीये ग्रन्थे सर्वेषां काव्यसमीक्षातत्त्वानां काव्याङ्गानां विवेचनमस्ति। दशसु किरणेषु (अध्यायेषु) विभक्तस्याऽस्य ग्रन्थस्य विषयवस्तुविवेचनं निम्नक्रमेण वर्तते -

(i) **प्रथमः किरणः -**

प्रथमकिरणे काव्यलक्षणव्याख्या वर्तते।

(ii) **द्वितीयः किरणः -**

द्वितीये किरणे शब्दार्थविवेचनमस्ति।

(iii) **तृतीयः किरणः -**

तृतीये किरणे ध्वनिकाव्यस्य निरूपणं लेखकेन कृतम्।

(iv) **चतुर्थः किरण -**

चतुर्थकिरणे गुणीभूतव्यङ्ग्यकाव्यविवेचनं वर्तते।

(v) **पञ्चमः किरणः -**

पञ्चमे किरणे रसभावादीनां स्वरूपं ग्रन्थकृता प्रोक्तम्।

(vi) **षष्ठः किरणः -**

षष्ठे किरणे गुणानां व्याख्या वर्तते।

(vii) **सप्तमः किरणः**

सप्तमे किरणे शब्दालङ्काराणां विवेचनं विद्यते।

(viii) **अष्टमः किरणः -**

अष्टमे किरणेऽर्थालङ्काराणां निरूपणं कर्णपूरेण विहितम्।

(ix) **नवमः किरणः -**

नवमः किरणो वर्तते रीतिस्वरूपनिर्णयात्मकः।

(x) **दशमः किरणः**

दोषविवेचनात्मके दशमे किरणे लेखकेन काव्यदोषाणां व्याख्या कृता।

काव्यशास्त्रविषयकेऽस्मिन्नलङ्कारकौस्तुभे ग्रन्थे प्रस्तुतान्युदाहरणानि प्रायशः कृष्ण-भक्तिरूपाणि वर्तन्ते।

### ४. अलङ्कारकौस्तुभस्य प्राचीनटीका

अलङ्कारकौस्तुभस्य प्रचारो बाहुल्येन बङ्गप्रदेशे समभवत्। अतस्तत्रैवाऽस्य ग्रन्थस्य टीकाश्चाऽपि विद्वद्भिर्लिखिताः। तिसृणां टीकानामत्र सङ्केताः समुपलभ्यन्ते -

(i) विश्वनाथचक्रवर्तिकृता सारबोधिनी टीका

(ii) वृन्दावनतर्कालङ्कारचक्रवर्तिकृता दीधितिप्रकाशिका टीका

(iii) लोकनाथचक्रवर्तिकृता टीका

टीकास्वेतासु तिसृषु केवलं विश्वनाथचक्रवर्तिकृता सारबोधिनीटीका ह्येव प्रकाशिता बभूव।

## कविचन्द्रः

कविचन्द्रस्य जनकः कर्णपूरोऽवर्तत जननी चाऽस्य कौशल्या। षोडशशताब्द्युत्तरार्धकः सप्तदशशताब्दीपूर्वार्द्धकश्च समयः प्रतिपाद्यतेऽस्य काव्यशास्त्रकारस्य समीक्षकैः। काव्यशास्त्रविषयमधिकृत्याऽसौ काव्यचन्द्रिकाभिधानं महनीयं ग्रन्थं लिलेख।

षोडशप्रकाशेषु विभक्तायां काव्यचन्द्रिकायां कविचन्द्रेण काव्यशास्त्रसम्बन्धिनां सर्वेषां विषयाणां निरूपणं कृतम्। ग्रन्थेऽस्मिन् ग्रन्थकारेण द्वयोरन्ययोः स्वकृतयोर्ग्रन्थयोरपि सङ्केतोऽभिव्यक्तः - धातुचन्द्रिका सारलहरी च। परन्त्वेतौ ग्रन्थौ सम्प्रति नोपलभ्येते।

षट्चत्वारिंशोऽध्यायः

# अप्पयदीक्षितः

## १. अप्पयदीक्षितस्य महत्त्वम्

काव्यशास्त्रस्येतिहासे काव्यशास्त्रिषूत्तरवर्तिषु महत्त्वमप्पयदीक्षितस्याऽतिशयेन संलक्ष्यते विद्वद्भिः समीक्षकैः। काव्यशास्त्रविषयमधिकृत्याऽसौ त्रीन् ग्रन्थानलिखत् - वृत्तिवार्तिकं चित्रमीमांसां कुवलयानन्दञ्च। ग्रन्थेष्वेतेष्वप्पयदीक्षितेन काव्याङ्गयोर्द्वयोर्वृत्त्यलङ्कारयोर्विशेषेण व्याख्या विहिता।

अप्पयदीक्षितो न केवलं काव्यशास्त्रकारोऽवर्तत परं विषयेष्वनेकेषु प्रावीण्यमवाप्तोऽसौ वेदान्तमीमांसाव्याकरणादिविषयानधिकृत्य स्वलेखनीमुत्थाप्य ग्रन्थाननेकान् प्रणिनाय। ग्रन्थैरेभिस्तस्य मौलिकविचाराणां प्रखरपाण्डित्यस्योज्ज्वलाप्रतिहतप्रतिभायाश्च परिचयो लभ्यते।

## २. अप्पयदीक्षितस्य जीवनवृत्तं समयश्च

अप्पयदीक्षितस्य जीवनवृत्तपरिचयः प्रायशस्तस्य काव्येभ्य एव समुपजायते। अथ च कानिचिद् बाह्यप्रमाणान्यपि तत्कथनं पुष्णन्ति। अत्र निम्नतत्त्वानि विचारणीयानि वर्तन्ते।

(i) अप्पयदीक्षितः कुवलयानन्दस्योपसंहारेऽलिखत् - ग्रन्थोऽयं तेन वेङ्कटपतेरादेशेन लिखितः।[1] अत्र आफ्रेक्टमहोदयस्य एमेलिनमहोदयस्य चाऽभिमतमस्ति - वेङ्कटपतिः प्रायशः १५३५ तमे ख्रिष्टाब्दे विजयनगरशासकोऽवर्तत। परं हुल्त्समहोदयस्य कथनमस्ति - अप्पयदीक्षितस्याऽऽश्रयदातुः पेन्नगोण्डाधिपस्य वेङ्कटप्रथमस्याऽभिलेखाः १५८५-१६१३ ख्रिष्टाब्दकालीनाः समुपलभ्यन्ते।

(ii) अप्पयदीक्षितस्यैका कृतिर्वर्तते - आत्मार्पणम्। ग्रन्थस्याऽस्य टीका शिवानन्दयतिना लिखिता। टीकायामस्यां टीकाकारेण ग्रन्थकृतो जन्मपत्रिका उट्टङ्किता। अत्राऽप्पयदीक्षितस्य जन्मकालः ४६५४ कलिवर्षो (१५५३ ई०) लिखितोऽस्ति।[2]

---

१. अमुं कुवलयानन्दमकरोदप्पयदीक्षितः।
   नियोगाद् वेङ्कटपतेर्निरुपाधिकृपानिधेः।।

२. वीणातत्त्वज्ञसंख्यालसितकलिसभाभाक्प्रमादी च वर्षे
   कन्यामासे तु कृष्णप्रथमतिथियुतेऽप्युत्तरप्रोष्ठपादे।
   कन्यालग्नेऽद्रिकन्यापतिमितदयासेवधिर्वैदिकेषु
   श्रीगौर्यैद्रग्ग्यथाहस्ममजनि विरिञ्जीशपुर्यां कलेशः।।
   लग्ने रवीन्दुसुतयोर्मकरे च मान्यौ मीने शशिन्यथ वृषे रविजे च राहौ।
   चापे गुरौ क्षितिसुते मिथुने तुलायां शुक्रे शिखिन्यलिगते शुभलग्न एवम्।।

(iii) अप्पयदीक्षितस्याऽनुजस्य सुतेन नीलकण्ठदीक्षितेन स्वकृतशिवलीलार्णवमहाकाव्ये सूचितं यदप्पयदीक्षितो द्विसप्ततिवर्षपर्यन्तं जीवनं धारयन् ग्रन्थशतमरचयत्।[१] अनेन लेखनेन तस्य जीवनकालः १५५३-१६२५ खिष्टावधिकः प्रमाणितो भवति।

(iv) हुल्त्समहोदयेन स्वग्रन्थेऽप्पयदीक्षितकृतशिवादित्यमणिदीपिकाया अवतरणमेक-मुद्धृतम्। एतदवतरणानुसारमप्पयदीक्षितस्य जनको रङ्गराजः पितामहश्चाचार्यदीक्षितो (वक्षःस्थलाचार्यो) ऽवर्तत। ग्रन्थस्याऽस्योपसंहारश्लोकेऽप्पयदीक्षितेन सूचितं यद् राज्ञा चिन्न-बोम्सेन प्रेरितोऽसौ ग्रन्थमेनं लिलेख। चिन्नबोम्सोऽयं चिन्नवीरस्य सुतो लिङ्गनायकस्य च जनक आसीत्। वेङ्कटप्रथमो लिङ्गनायकश्च समकालीनाववर्तेताम्। विवरणैरेतैः प्रतीयते यदप्पयदीक्षितः प्रथमं तावत् पार्थिवं चिन्नबोम्समाशिश्रिये तदनन्तरञ्च वेङ्कटप्रथमम्।

(v) सप्तदशशताब्दीप्रथमचरणे कमलाकरभट्टोऽप्पयदीक्षितमुल्लिलेख।

(vi) पण्डितराजो जगन्नाथोऽप्पयदीक्षितमतिकटुरूपेणाऽऽचिक्षिपे। प्रसिद्धेयं किंवदन्ती लोके यदेकयवनीप्रेमपाशबद्धो वासनाभिभूतो जगन्नाथस्तां स्वगृहनिवासिनीं व्यदधात्। अथ परमक्षुब्धेनाऽप्पयदीक्षितेनाऽसौ जातिबहिष्कृतो विहितः। घटनयाऽनयाऽनुमीयते द्वयोरेतयोः समकालीनत्वम्। समयेऽस्मिन् जगन्नाथो यौवनसमारूढोऽप्पयदीक्षितश्च आयुषा वृद्धोऽवर्तत। पण्डितराजजगन्नाथस्य साहित्यरचनाकालः १६२०-१६६६ खिष्टावधिको निश्चितः। अतोऽप्पयदीक्षितः १६२५-१६३५ खिष्टाब्देषु ध्रुवमेव जीवन्नासीत्। अप्पयदीक्षितकृतचित्र-मीमांसाग्रन्थे जगन्नाथोऽनेकान् दोषान् प्रादर्शयत्। अथ च दोषदर्शनायाऽसौ चित्रमीमांसाखण्डनपुस्तकमप्यलिखत्।[२] पण्डितराजजगन्नाथकथनयुक्तिखण्डनायाऽप्पयदीक्षितस्य भ्रातुष्पौत्रेण नीलकण्ठदीक्षितेन चित्रमीमांसादोषधिक्कारनाम्नी पुस्तिका लिखिता। तत्र च नीलकण्ठो जगन्नाथस्याऽऽक्षेपान् समाधात्।

उपर्युक्तविवेचनेन सुस्पष्टमेव यदप्पयदीक्षितस्य जीवनकालः षोडशशताब्द्युत्तरार्द्ध-कालीनः सप्तदशशताब्दीपूर्वार्द्धवर्ती चाऽवगन्तव्यः।

स्वयमपि प्रकाण्डपण्डितस्य परमविदुषो मनीषिणः प्रखरप्रतिभाशालिनोऽप्पयदीक्षितस्य वंशे जाताः परिवारजना अपि प्रतिभाशालिनो अभवन्। भरद्वाजवंशीयस्याऽस्य जनको रङ्गाचार्यः स्वजीवनकाले परमयाज्ञिकरूपेण प्रसिद्धोऽवर्तत।[३] पितामहश्चाऽस्य वक्षःस्थलाचार्यो

---

१. कालेन शम्भुः किल तावताऽपि कलाश्चतुःषष्टिमिताः प्रणिन्ये।
द्वासप्ततिं प्राप्य समाः प्रबन्धाञ्छतं व्यधादप्पयदीक्षितेन्द्रः।। शिवलीलार्णव -१.६

२. सूक्ष्मं विभाव्यमयकाव्यमुदीरितानामप्पय्यदीक्षितकृताविह दूषणानाम्।
निर्मत्सरो यदि समुद्धरणं विदध्यादस्याऽहमुज्ज्वलमतेश्चरणौ वहामि।। चित्रमीमांसाखण्डन

३. श्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीरङ्गराजाध्वरीन्द्रवरसूनोः श्रीमदप्पय-दीक्षितस्य कृतिः कुवलयानन्दः समाप्तः। कुवलयानन्दस्य समाप्तिस्थलम्।

ह्याचार्यदीक्षिताभिधानेन प्रसिद्धिं लेभे। असौ वरदराजोत्सवाभिधानं प्रबन्धकाव्यं बबन्ध।[१] अप्पयदीक्षितस्याऽनुजस्याऽच्चनस्य पौत्रो नीलकण्ठदीक्षितोऽपि परमप्रतिभाशाली मनीषी विद्वाननेकशास्त्रप्रणेता काव्यप्रणेता च बभूव।

अप्पयदीक्षितस्त्रिभिर्नामभिः प्रसिद्धोऽवर्तत – अप्पदीक्षितोऽप्पयदीक्षितोऽप्पय्यदीक्षितश्च। कुवलयानन्देऽप्पदीक्षित इत्यभिधानमुल्लिखितं वर्तते। तस्मिन्नेव ग्रन्थेऽन्यत्राऽप्पयदीक्षित इत्यप्पय्यदीक्षित इति च नामनी ह्यपि समुपलभ्येते। परन्त्वस्य विदुषः सामान्येनाऽप्पयदीक्षित एव नाम प्रसिद्धम्। सम्भवतः छन्दसोऽनुरोधेन नामभेदः सञ्जातः।

### ३. अप्पयदीक्षितस्य कृतयः

परमप्रतिभाशाली मनीषी पण्डितोऽप्पयदीक्षितोऽनेकेषु शास्त्रेषु निपुणो विविधविधासु विविधविषयग्रन्थान् प्रणिन्ये। तेन चतुरधिकशतग्रन्थानां (१०४) रचना विहितेति लोके प्रसिद्धिः। तस्याऽनेके ग्रन्थाः समुपलभ्यन्ते, परं केचन अनुपलब्धा अपि सन्ति। केषाञ्चित् प्रमुखग्रन्थानां सूची विषयक्रमेण अधो निर्दिश्यते –

(i) **अद्वैतवेदान्तविषयकग्रन्थाः**
- (१) श्रीपरिमलम्
- (२) श्रीसिद्धान्तलेखसङ्ग्रहः
- (३) वेदान्तनक्षत्रवादावली
- (४) मध्वतन्त्रमुखमर्दनम्
- (५) मध्वमतविध्वंसनम्
- (६) न्यायरक्षामणिः

(ii) **रामानुजमतविषयकग्रन्थाः**
- (७) नखमयूखमालिका
- (८) नखमयूखमालिकाव्याख्या
- (९) श्रीवेदान्तदेशिकरचितयादवाभ्युदयव्याख्या
- (१०) श्रीवेदान्तदेशिकरचितपादुकासहस्रव्याख्या
- (११) वरदराजस्तवः

(iii) **माध्वसिद्धान्तानुसारिणो ग्रन्थाः**
- (१२) न्यायरत्नावली
- (१३) न्यायरत्नावलीव्याख्या

---

१. सन्देहालङ्कारध्वनिर्यथा अस्मत्कुलकूटस्थवक्षःस्थलाचार्यकृते वरदराजवसन्तोत्सवे काञ्चित् काञ्चनगौराङ्गीं......... वक्षःस्थलं वैक्षत। चित्रमीमांसा पृ० ६३

(iv) **पूर्वमीमांसाविषयकग्रन्था:**

(१४) नक्षत्रवादावली

(१५) विधिरसायनम्

(v) **व्याकरणविषयकग्रन्था:**

(१६) नक्षत्रवादावली

(vi) **भक्तिविषयककृतय:**

(१७) शिखरिणीमाला

(१८) शिवतत्त्वविवेक:

(१९) ब्रह्मतर्कस्तव:

(२०) आदित्यस्तवरत्नम्

(२१) आदित्यस्तवरत्नव्याख्या

(२२) शिवाद्वैतनिर्णय:

(२३) शिवध्यानपद्धति:

(२४) पञ्चरत्नम्

(२५) पञ्चरत्नव्याख्या

(२६) आत्मार्पणम्

(२७) मानसोल्लास:

(२८) शिवकर्णामृतम्

(२९) आनन्दलहरी

(३०) चन्द्रिका

(३१) शिवमहिमकालिकास्तुति:

(३२) रत्नत्रयपरीक्षा

(३३) रत्नत्रयपरीक्षाव्याख्या

(३४) अरुणाचलेश्वरस्तुति:

(३५) अपीतकुचाम्बास्तव:

(३६) चन्द्रकलास्तव:

(३७) शिवार्कमणिदीपिका

(३८) शिवपूजाविधि:

(३९) नयमणिमाला

(४०) नयमणिमालाव्याख्या

(vii) **अलङ्कारशास्त्रविषयकग्रन्थाः**

(४१) वृत्तिवार्तिकम्

(४२) चित्रमीमांसा

(४३) कुवलयानन्दः

प्रकरणेऽस्मिन्नप्पयदीक्षितस्याऽलङ्कारशास्त्रविषयकग्रन्थानामेव परिचयः प्रस्तोतव्यः। ग्रन्थेष्वेतेषु प्रथमा कृतिर्वृत्तिवार्तिकं, द्वितीया कृतिश्चित्रमीमांसा तदनन्तरं तृतीया कृतिः कुवलयानन्द इति रचनाक्रमः प्रतिभाति।

## ४. वृत्तिवार्तिकम्

द्वयोः परिच्छेदयोर्विभक्ते लघुकाये ग्रन्थेऽस्मिन् शब्दशक्तीनां विवेचनमप्पयदीक्षितेन कृतम्।

(i) **प्रथमः परिच्छेदः -**

प्रथमे परिच्छेदेऽभिधायाः विवेको विद्यते। अभिधा त्रिधा प्रोक्ता - (१) रूढिः (२) योगः (३) योगरूढिश्च।

(ii) **द्वितीयः परिच्छेदः -**

द्वितीये परिच्छेदे लक्षणायाः विवेचनं विद्यते। लक्षणायाः प्रथमं तावद् द्वौ भेदौ भवतः- शुद्धा गौणी च। प्रत्येकस्य पुनः द्वौ भेदौ भवतः - निरूढा फलवती च। भेदानामेतेषामुपभेदाः पुनः अनेके भवन्ति।

अस्मिन् ग्रन्थेऽप्पयदीक्षितेन व्यञ्जनायाः विवेको न कृतः। अतोऽयं ग्रन्थोऽपूर्ण एव प्रतीयते।

## ५. चित्रमीमांसा

अप्पयदीक्षितस्याऽस्मिन् महनीये प्रौढग्रन्थे प्रथमं तावत् काव्यस्य त्रयो भेदाः प्रदर्शिताः - ध्वनिकाव्यं, गुणीभूतव्यङ्ग्यकाव्यं चित्रकाव्यञ्च। परमप्पयदीक्षितश्चित्रकाव्यं काव्यं न मनुते, रमणीयत्वाभावान्नीरसत्वाच्च। शब्दालङ्काराः नाऽलङ्कारत्वं वहन्त्यतश्चित्रमीमांसायां केवलमर्थालङ्काराणामेव निरूपणं तेन विहितम्।[1] तत्र च तेन प्रोक्तम् - उपमालङ्कार एव सर्वेषामलङ्काराणां मूलम्। उपमैषा नटी विविधालङ्कारभूमिकास्ववतीर्णा काव्यमञ्चे नृत्यन्ती सहृदयमनांस्यावर्जयति।[2]

तदनन्तरं ग्रन्थकारः प्राचीनाचार्यकृतान्युपमालक्षणान्यालोच्य तत्स्वरूपं सभेदं सोदाहरणं न्यरूपयत्। इयमुपमा साधर्म्यमूलकानां द्वाविंशत्यलङ्काराणां मूलं वर्तते।

---

१. शब्दचित्रस्य प्रायशो नीरसत्वान्न तथाद्रियन्ते कवयः। न वा तत्र विचारणीयमतीवोपलभ्यत इति शब्दचित्रादिकमपहायार्थचित्रमीमांसा प्रसन्नविस्तीर्णा प्रस्तूयते। चित्रमीमांसा पृ० २

२. उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदात्।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः। चित्रमीमांसा पृ० ६

परन्तु चित्रमीमांसाग्रन्थोऽपूर्ण एव संलक्ष्यते। दीक्षितमहोदयः सर्वानलङ्कारान् मीमांसयितुमभिलषमाणोऽपि प्रयतमानोऽपि द्वादशाऽलङ्काराणामुपमातोऽतिशयोक्तिपर्यन्तानां मीमांसामकरोत्। चित्रमीमांसायां निम्नलिखितानामलङ्काराणां प्रवचनं विद्यते - उपमोपमेयोपमाऽनन्वयस्मरणरूपकपरिणामससन्देहभ्रान्तिमदुल्लेखाऽपह्नुत्युत्प्रेक्षाऽतिशयोक्तयः।

अप्पयदीक्षितेनाऽयं ग्रन्थो सुविचार्यैवाऽपूर्ण उत्सृष्टः। अतिशयोक्त्यलङ्कारस्याऽपि विवेचनमपूर्णमेव वर्तते। चित्रमीमांसायां लेखकः स्वयमेव लिखति -

"अपूर्णाऽपि चित्रमीमांसा कं न नन्दयति।[1]

पण्डितराजो जगन्नाथश्चित्रमीमांसायामुपदिष्टमप्पयदीक्षितमतं चित्रमीमांसाखण्डनग्रन्थे सुकठोरं समैक्षत। तच्च खण्डयितुमेवाऽसौ चित्रमीमांसाखण्डनग्रन्थमलिखत्। अप्पयदीक्षितस्य भ्रातुष्पौत्रो नीलकण्ठदीक्षितः पण्डितराजस्याऽऽक्षेपान् समाधातुं चित्रमीमांसादोषधिक्काराभिधानं ग्रन्थं न्यबध्नात्।

चित्रमीमांसाग्रन्थोऽपि विद्वद्भिरनेकैर्व्याख्यातः। तत्र प्रसिद्धाष्टीकाः वर्तन्ते - (१) बालकृष्णपायगुण्डकृता गूढाप्रकाशिका, (२) अतिरात्रयज्वन्कृतो दोषधिक्कारः, (३) परानन्दकृता सुधाटीका (४) चित्रालोकटीका च,

### ६. कुवलयानन्दः

अलङ्कारानध्येतुमप्पयदीक्षितस्य कुवलयानन्दग्रन्थो महतीमुपयोगितां धत्ते। ग्रन्थममुमसौ वेङ्कटपतेरनुरोधेन लिलेख। ग्रन्थस्याऽस्य निबन्धने तेन जयदेवस्य चन्द्रालोक आश्रितः। चन्द्रालोकस्याऽर्थालङ्काराणां श्लोकानादाय समीक्ष्य च कुवलयानन्दग्रन्थमसौ निबबन्ध।[2] इत्थञ्चास्मिन् ग्रन्थेऽप्पयदीक्षितेन चन्द्रालोकस्य शतालङ्काराणां स्वयमुद्भावितानाञ्च रसवदादित्रयोविंशत्यलङ्काराणामेवं त्रयोविंशत्यधिकशतैकालङ्काराणां विवेचना विहिता।

अलङ्कारनिरूपणप्रसङ्गे कुवलयानन्दो न मौलिकग्रन्थरूपेण समाद्रियते समीक्षकैः। संग्रहग्रन्थ एवाऽसौ वक्तुमुचितः। तथापि रूपरेखामलङ्काराणामवबोधयितुमत्युपयोगी ग्रन्थोऽयमवगन्तव्यः।

### ७. कुवलयानन्दस्य टीकाः

अलङ्कारानध्येतुमवगन्तुञ्च कुवलयानन्देन महती प्रतिष्ठा लोकप्रियता चाऽर्जिता। अतोऽनेके विद्वांसो मनीषिणो ग्रन्थमेनमटीकयन्। निम्नलिखिताष्टीकाः प्रसिद्धाः सन्ति -

---

१. अप्यर्धचित्रमीमांसा न मुदे कस्य मांसला।
अनूरुरिव घर्मांशोरर्धेन्दुरिव धूर्जटेः।। चित्रमीमांसा

२. येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः।
प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यन्ते।। कुवलयानन्द - ५

(i) **अलङ्कारचन्द्रिकाटीका -**

टीकेयं रामचन्द्रसुतेन वैद्यनाथेन तत्सदा १६१३ तमे खिष्टाब्दे विरचिता।

(ii) **अलङ्कारसुधाटीका -**

टीकाया अस्या लेखनं नागेशभट्टेना ष्टादशशताब्द्याः प्रथमे चरणे कृतम्।

(iii) **कारिकादीपिकाटीका -**

रामजीभट्टसुतेनाऽऽशाधरभट्टेन टीकाया अस्याः लेखनं सप्तदशशताब्दीमध्यभागे कृतम्।

(iv) **रसिकरञ्जनीटीका -**

टीकामिमां गङ्गाधरः प्रायशः १७०० तमे खिष्टाब्देऽलिखत्। टीकेयं शुद्धतमा गण्यते समीक्षकैः। टीकाकारेण सूचितम् - टीकाकारस्य पितामहस्याऽग्रजस्य गुरुरप्पयदीक्षितोऽवर्तत। स चाऽस्य पाठस्य संशोधने महान्तं प्रयासमकरोत्। अयं गङ्गाधरस्तञ्जौरनरेशस्य शाहजीतिनाम्नो राजसभायाः सदस्योऽभवत्।

उपरिलिखितटीकाव्यतिरिक्ताः निम्नलिखिताष्टीका अपि कुवलयानन्दस्य प्रसिद्धाः सन्ति -

(i) नागेशभट्टकृतविषयपदव्याख्याषट्पदानन्द
(ii) न्यायवागीशभट्टाचार्यकृतकाव्यमञ्जरी
(iii) मथुरानाथकृतटीका
(iv) रामचरणतर्कवागीशकृतटीका
(v) गोपीनाथकृतप्रभाटीका
(vi) देवीदत्तकृतलघ्वलङ्कारचन्द्रिकाटीका

---

अप्पयदीक्षितस्य जन्मपत्रिका -

सप्तचत्वारिंशोऽध्यायः

# आशाधरभट्टः

## १. आशाधरभट्टस्य महत्त्वम्

आशाधराभिधानयोर्द्वयोर्विदुषोर्वर्णनं प्राचीनसाहित्ये समुपलभ्यते। प्रथम आशाधरस्त्रयोदशशताब्द्यां द्वितीयश्च सप्तदशशताब्द्युत्तरार्द्धभागे समभूत्। नामसादृश्याद् यद्यपि कैश्चन समालोचकैरेतयोर्द्वयोर्व्यक्तित्वैक्यं मतं, तथापि ग्रन्थरचनामवलोक्याऽन्यानि च प्रमाणान्याश्रित्य तयोर्भिन्नव्यक्तित्वं प्रमाणीभवति। त्रयोदशशताब्दिक आशाधरो जैनमतानुयायी समवर्तत। असौ राजस्थानस्याऽजमेरप्रदेशे जातः सल्लक्षणमहोदयस्य सुतोऽवर्तत। केनचिदपि हेतुना जनकसद्म परित्यज्य धारानगरीं गत्वा तामेव निवासमकल्पयत्। तत्राऽसौ ग्रन्थाननेकानलिखत्। तत्कृतत्रिषष्टिशलाकाग्रन्थेन सूचना प्राप्यते, यदेतस्य ग्रन्थस्य रचना १२३६ तमे ख्रिष्टाब्दे सञ्जाता। असावाशाधरो रुद्रटकृतकाव्यालङ्कारस्य टीकामलिखदथ चाऽनेकेषां जैनसम्प्रदायविषयकग्रन्थानां रचनां व्यदधात्।

द्वितीयश्चाऽऽशाधरो भट्टान्वयजातः काव्यशास्त्रकारोऽत्र समीक्ष्यो हि सप्तदशशताब्द्युत्तरार्द्धसमये सञ्जातः। भट्ट इत्युपनामसङ्केतेन तस्य ब्राह्मणत्वं सिद्धमेव।

## २. आशाधरभट्टस्य परिचयः

आशाधरभट्टस्य ग्रन्थेभ्यो न तु तस्य जीवनवृत्तपरिचयो लभ्यते न च समयस्य परिचयः। तथाऽपि बाह्यप्रमाणैरन्यलेखकग्रन्थलिखितविवरणैस्तस्य कोऽपि परिचयो विज्ञायते। असावप्पयदीक्षितकृतकुवलयानन्दग्रन्थस्यालङ्कारदीपिकाटीकामलिखत्। टीकयाऽनया विज्ञायते यदस्य गुरुर्धरणीधरो जनकश्च रामजीभट्टोऽवर्तत।[1] आशाधरः स्वपितरं व्याकरणन्यायमीमांसाविषयाणामुत्कृष्टप्रकाण्डपण्डितं व्याख्यत्। असौ गुर्जरप्रदेशवास्तव्योऽनुमीयते, यतस्तत्कृताः ग्रन्थाः विशेषरूपेण तत्रैवोपलभ्यन्ते।

---

१. शिवयोस्तनयं नत्वा गुरुञ्च धरणीधरम्।
आशाधरेण कविना रामजीभट्टसूनुना।। कारिकादीपिका पृ० १
धरणीधरपादाब्जप्रसादासादितस्मृतेः।
आशाधरस्य वागेषा तनोतु विदुषां मदम्।। कारिकादीपिका पृ० ९४

### ३. आशाधरभट्टस्य समयः

आशाधरभट्टरचनासु लेखनसमयसङ्केतस्याभावात्तस्य समयनिर्धारणं सुदुष्करमेव। तथापि निम्नप्रमाणान्याश्रित्य तस्य समयोऽनुमीयते -

(i) आशाधरभट्टोऽप्पयदीक्षितकृतकुवलयानन्दस्य कारिकादीपिकाभिधानां टीकामलिखत्। अतोऽयमप्पयदीक्षितोत्तरवर्ती (१५५३-१६२५ खिष्टाब्दाः) बभूव।

(ii) आशाधरः स्वकृतत्रिवेणिकाग्रन्थे भट्टोजिदीक्षितमुल्लिलेख। सिद्धान्तकौमुद्यादि-ग्रन्थकारो भट्टोजिदीक्षितः षोडशशताब्द्युत्तरार्द्धवर्ती सप्तदशशताब्दीपूर्वार्द्धकालीनश्चाऽवगम्यते। आशाधरो ध्रुवं तदुत्तरवर्त्यैव।

(iii) आशाधरस्यैकस्य ग्रन्थस्य कोविदानन्दस्य हस्तलिखिता पाण्डुलिपिः प्रतिलिपीकृता १८६१ तमखिष्टाब्दकालीना समुपलभ्यते। अथ च कारिकादीपिकाटीकायाः हस्तलिखिता पाण्डुलिपिः प्रतिलिपीकृता १८५३ खिष्टाब्दकालीना प्राप्यते। अत आशाधरभट्टस्तत्पूर्ववर्तीति मन्तव्यः।

(iv) आशाधरेण त्रिवेणिकाग्रन्थे वैयाकरणानामालोचना कृता, यतस्ते व्यञ्जनावृत्तिं न स्वीकुर्वन्ति।[1] परन्तु प्रसिद्धविदुषा नागोजिभट्टेन स्वकृतपरमलघुमञ्जूषाग्रन्थे प्रतिपादितं यद् वैयाकरणैरपि व्यञ्जनावृत्तिः स्वीकरणीया। यतो निपातानां द्योतकत्वं स्फोटस्य च व्यञ्जकत्वमङ्गीकृत्य पतञ्जलिना भर्तृहरिणा च व्यञ्जना स्वीकृता।[2] अतो निश्चयेनाऽत्राऽऽशाधरस्य नागोजिभट्टपूर्वकालत्वं समकालत्वं वाऽवगन्तव्यम्। नागोजिभट्टस्य समयः सप्तदशशताब्द्युत्तरार्धभागोऽष्टादशशताब्दीपूर्वभागश्च निश्चीयते। अत आशाधरेणाऽपि प्रायशोऽस्मिन्नेव काले भवितव्यम्।

उपरिलिखितप्रमाणान्याश्रित्य आशाधरभट्टस्य समयः सप्तदशशताब्द्युरार्धोऽष्टादशशताब्दीपूर्वार्द्धश्चाऽनुमीयते।

### ४. आशाधरभट्टस्य कृतय

आशाधरभट्टोऽनेकान् ग्रन्थान् लिलेख। परं तस्य द्वावेव ग्रन्थावुपलभ्येते - त्रिवेणिका कुवलयानन्दटीका कारिकादीपिका च। अथ चाऽऽशाधरभट्टस्य त्रयाणामन्येषामपि ग्रन्थानां सङ्केताः समुपलभ्यन्ते - कोविदानन्दमद्वैतवेदान्तं प्रभापटलञ्च। परं न तेषां वर्तमानकाले समुपलब्धिः। आशाधरभट्टकृतग्रन्थानां परिचयोऽधः प्रस्तूयते -

---

१. त्रिवेणिका पृ० २७-२८

२. अत एव निपातानां द्योतकत्वं स्फोटस्य च व्यङ्ग्यता हर्यादिभिरुक्ता। द्योतकत्वञ्च स्वसमभिव्याहृतपदनिष्ठव्यञ्ज़कत्वमिति। वैयाकरणानामप्येतत्स्वीकार आवश्यकः। परमलघुमञ्जूषा पृ० २०

### ५. कोविदानन्दः

आशाधरभट्टस्याऽयं ग्रन्थोऽनुपलब्ध एव। पर त्रिवेणिकायामयं ग्रन्थोऽनेकश उल्लिखितः। त्रिवेणिकायाः प्रथमश्लोकस्य पुनः पदेन प्रतीयते - कोविदानन्देऽपि वृत्तिविवेचनमविद्यत।[1] डा० भाण्डारकरमहोदयेन कोविदानन्दाभिधाना हस्तलिखिता पाण्डुलिपिरेका सङ्केतिता। तेनेदमपि प्रोक्तम् - ग्रन्थकारेण स्वयमेव कादम्बिनीनाम्नी तट्टीकाऽपि लिखिता।[2] टीकायाञ्च लिखितेन श्लोकैकेन स्पष्टमेव यदस्मिन् ग्रन्थे वृत्तीनां निरूपणमविद्यत।[3]

### ६. अद्वैतवेदान्तम्

ग्रन्थोऽयमप्याशाधरस्य नोपलभ्यते। ग्रन्थस्याऽस्य रचनासङ्केतस्त्रिवेणिकायामेव निहितो, यत्राऽस्य ग्रन्थस्य पद्यमेकमुद्धृतमस्ति। ग्रन्थनाम्नैव स्पष्टमिदं यदत्राऽद्वैतवेदान्तविषयस्य वर्णनमस्ति।

### ७. प्रभापटलम्

ग्रन्थस्याऽस्योपलब्धिरपि वर्तमानसमये न विद्यते। बटुकनाथशर्मणा स्वग्रन्थभूमिकायां प्रभापटलस्योल्लेखः कृतः। प्रभापटलस्य द्वौ श्लोकौ त्रिवेणिकायामन्तभागे लिखितौ वर्तेते।[4]

### ८. त्रिवेणिका

आशाधरस्य काव्यशास्त्रीयौ ग्रन्थौ विद्येते त्रिवेणिका कारिकादीपिका च।

काव्यशास्त्रीयस्य त्रिवेणिकाग्रन्थस्य प्रकाशनं सरस्वती टेक्स्ट ग्रन्थमाला काशीति प्रकाशनसंस्थातो बभूव। डा० आफ्रेक्टमहोदयेन ग्रन्थोऽयं भ्रमवशाद् व्याकरणग्रन्थसूच्यां समाविष्टः। अतः काव्यशास्त्रजगति प्रसिद्धैः विद्वद्भिः समीक्षकैः स्वरचनासु नाऽयं ग्रन्थ उल्लिखितः। अस्मिन् ग्रन्थे अभिधालक्षणाव्यञ्जनावृत्तीनां समुचितनिरूपणभावाद् ग्रन्थोऽयं त्रिवेणिकानाम्नाऽभिहितः।

---

१. प्रणम्य पार्वतीपुत्रं कोविदानन्दकारिणा।
आशाधरेण क्रियते पुनर्वृत्तिविवेचना।। त्रिवेणिका

२. संस्कृतपाण्डुलिपीनां सूची - भाग - १, १८५३ ख्रिष्टाब्दो मुम्बई पृ० ६८

३. प्राचां वाचां विचारेण शब्दव्यापारनिर्णयम्।
करोमि कोविदानन्दं लक्ष्यलक्षणसंयुतम्।।

४. यदिह लिखतामव्युत्पत्त्या पतेल्लघुदूषणं
निपुणधिषणैरुज्झित्वा तत् कृतिर्मम सेव्यताम्।
सरसि विमले वाताक्षिप्तं निवार्य तु शैवलं
सलिलममृतप्रायं प्रायः पिबन्ति पिपासवः।।१।।
यदि मम सरस्वत्यां कश्चित् कथञ्चन दूषणं
प्रलपति तदा प्रौढप्रज्ञैः स किं कविभिः समः।
रघुपतिकुटुम्बिन्या सत्यामवद्यमुदाहरन्
हतकरजकः साम्यं लेभे स किं सह राजभिः।।२।।

त्रिवेणिकायां त्रयः परिच्छेदाः विद्यन्ते। विषयविवेचनमत्र निम्नप्रकारेण विद्यते -

(i) **प्रथमः परिच्छेदः**

प्रथमे परिच्छेदेऽभिधायाः विशदं विवेचनमस्ति। प्रथमं तावल्लेखकेनाऽर्थज्ञानस्य त्रयो भेदाः प्रदर्शिताः- चारुश्चारुतरश्चारुतमश्च। अभिधाजन्योऽर्थश्चारुर्भवति, लक्षणाजन्योऽर्थश्चारुतरो व्यञ्जनाजन्यश्चार्थश्चारुतमः। अभिधा त्रिविधा भवति - योगरूढियोगरूढयः। तदनन्तरमेषाऽभिधा सविशदं सोदाहरणञ्च लेखकेन व्याख्याता।

(ii) **द्वितीयः परिच्छेदः**

द्वितीये परिच्छेदे लक्षणायाः विस्तृता व्याख्या वर्तते। लक्षणायाः स्वरूपमुक्त्वा लेखकेन तस्य भेदाः प्रकीर्तिताः। लक्षणायाः भेदाः सन्ति - जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा, निरूढा, फलवती, गूढा, अगूढा, व्यधिकरणविषया, समानाधिकरणविषया, गौणी, शुद्धा च। तेषां भेदानामप्युपभेदा अनेके सन्ति। सर्वेषामेतेषां भेदोपभेदानां व्याख्या लेखकेन सोदाहरणं विहिता।

(iii) **तृतीयः परिच्छेदः -**

व्यञ्जनाविषयके तृतीये परिच्छेदे लेखकेन व्यञ्जनायाः द्वौ भेदौ प्रदर्शितौ - शक्तिमूलका लक्षणामूलका च। व्यञ्जनामनुमानेऽन्तर्भावयितुं नैयायिकानां प्रयासस्य, शक्तावन्तर्भावयितुञ्च वैयाकरणानां प्रयासस्याऽऽशाधरेण खण्डनं कृतम्।

## ९. कारिकादीपिका

ग्रन्थोऽयमप्पयदीक्षितकृतकुवलयानन्दस्य टीकारूपेण वर्तते। मूलरूपेण ग्रन्थोऽयं जयदेवेन चन्द्रालोकरूपेण विरचितः। तस्याऽर्थालङ्कारप्रकरणमाश्रित्य कुवलयानन्दमरचयदप्पयदीक्षितः। तदनन्तरमाशाधरभट्टः कुवलयानन्दस्य टीकां विरच्य कारिकादीपिकामकरोत्। सूक्ष्मदृष्ट्या, नेयं कृतिष्टीकामात्रमेव। आशाधरभट्टेनाऽत्र कुवलयानन्दमाश्रित्य तथैव स्वातन्त्र्येण ग्रन्थो लिखितो यथाऽप्पयदीक्षितेन चन्द्रालोकस्याऽर्थालङ्कारप्रकरणमाश्रित्य कुवलयानन्दो लिखितः। ग्रन्थोऽयं कुवलयानन्दकारिका वा अलङ्कारदीपिका वा कारिकादीपिका वाऽभिधीयते।

कारिकादीपिका त्रिषु भागेषु (प्रकरणेषु) विभक्ता विद्यते। विषयविवेचनं निम्नप्रकारेण विद्यते -

(i) **प्रथमं प्रकरणम् -**

प्रथमे प्रकरणे कुवलयानन्दनिर्दिष्टकारिकाणां व्याख्या वर्तते। अत्र केवलं मूलकारिकाणामेव व्याख्याऽस्ति। सूक्ष्मविवेचनं तु बालकेभ्योऽनुपयुज्यमानत्वाल्लेखकेन परित्यक्तम्।

(ii) **द्वितीयं प्रकरणम् -**

द्वितीयं प्रकरणमुद्दिष्टालङ्कारप्रकरणमुच्यते।[१] अस्मिन् प्रकरणे कुवलयानन्दस्य सम्पूर्णत्वेनाऽन्तिमांशपर्यन्तं ये रसवदादयोऽलङ्काराः प्रोक्ताः, येषाञ्च लक्षणानि नाऽप्पयदीक्षितेन प्रस्तुतानि, आशाधरभट्टेन तेषां लक्षणानि व्याख्यातुं कारिकाः रचिताः। कारिकास्ताः स्वरचिता एवेत्याशाधरभट्टो व्याजहार।

(iii) **तृतीयं प्रकरणम् -**

तृतीयं प्रकरणं परिशेषप्रकरणमित्युच्यते। अत्र सङ्करसंसृष्ट्यलङ्कारयोः स्वरूपभेद-ज्ञानाय ह्याशाधरभट्टेन स्वयं कारिकाः रचिताः। प्रकरणमेतदप्याशाधरभट्टेन स्वरचितं प्रोक्तम्।[२]

आशाधरभट्टेनाऽस्मिन् ग्रन्थे द्वादशालङ्काराणां विस्तृतं विवेचनं कृतम्। अलङ्काराणां सुखावबोधाय ग्रन्थोऽयमत्युपयोगी वर्तते।

अलङ्कारशास्त्रीयग्रन्थान् विरच्याऽऽशाधरभट्टो विषयमेनं सर्वसाधारणपाठकेभ्यो-ऽतिसरलमकार्षीत्। स्वकीयोद्देश्येषु लेखकः पूर्णरूपेण सफलो वर्तते। अलङ्कारशास्त्रस्य सुखावबोधाय ह्याशाधरस्य ग्रन्थाः महतीमुपयोगितां दधति।

---

१. आशाधरभट्टकृतमुद्दिष्टनामकं द्वितीयं प्रकरणं समाप्तम्।

२. इति......................आशाधरभट्टविरचितं तृतीयं परिशेषप्रकरणं समाप्तम्।

अष्टचत्वारिंशोऽध्यायः

# पण्डितराजो जगन्नाथः

## १. जगन्नाथस्य महत्त्वम्

काव्यशास्त्रस्येतिहासे प्रौढतमाः प्रतिभाशालिनो मनीषिणः पण्डितप्रवराः मौलिकग्रन्थप्रणयनकुशलास्त्रयो विद्वांसः कीर्त्यन्ते -

(i) ध्वन्यालोककार आनन्दवर्धनाचार्यः

(ii) काव्यप्रकाशकृन्मम्मटाचार्यः

(iii) रसगङ्गाधरप्रणेता पण्डितराजो जगन्नाथः

पण्डितराजो जगन्नाथ एष्वाचार्येष्ववर्वाचीनतमः। तस्य कृतिर्विद्वज्जनवन्दिता काव्यसमीक्षासरणिदृशा प्रौढा पाण्डित्यपूर्णा रसगङ्गाधराभिधानेन लोके प्रथिता समाद्रियते। पण्डितराजोऽत्र स्वकृतग्रन्थे प्रत्येकं तथ्यं तत्त्वञ्च प्रास्तौत्। नव्यन्यायशैलीमवलम्ब्याऽसौ प्राचीनाचार्यमन्तव्यानि समीक्ष्य परीक्ष्य च स्वमन्तव्यानि प्रास्थापयत्।

पण्डितराजो विषयान् यथा सुस्पष्टमुज्ज्वलञ्व विशिश्लेष, तथाऽन्येष्वलङ्कारग्रन्थेषु विश्लेषणं सुदुर्लभमेव। अस्मिन् विश्लेषणेऽसौ प्राचीनाचार्याणामानन्दवर्धनमम्मटविश्वनाथादीनां सम्मान्यानामालोचनेऽपि न सञ्चुकोच। अनेकेषु स्थलेषु प्राचीनाचार्यविषयप्रतिपादनेऽपि यत्र स्पष्टीकरणं न लक्ष्यते, तेषामपि विषयाणां पण्डितराजेन समुचितव्याख्या सम्पादिता। रसनिष्पत्तिप्रकरणमत्रोदाहरणम्।

रसनिष्पत्तिं व्याख्यातुं भट्टलोल्लटादीनां प्राचीनाचार्याणां या युक्तयो मम्मटेन प्रस्तुतास्ताः न सुस्पष्टाः। भट्टनायकस्तु काव्यप्रकाशे नितरामस्पष्ट एव। पण्डितराजेन सर्वेषामेतेषां मतानां सुस्पष्टा व्याख्या सम्पादिता।

मम्मटेन भट्टलोल्लटादीनां चतुर्णामाचार्याणामेव रसनिष्पत्तिविषयकमन्तव्यानि प्रस्तुतानि, परं जगन्नाथेनाऽन्येषामनेकेषामाचार्याणामपि मन्तव्यानि प्रस्तूय समीक्षितानि।

मम्मटेन नवरसानां नवस्थायिभावाः प्रकीर्तिताः। परं स्थायिभावा एते केन हेतुना स्थायिन इत्युच्यन्ते, इति रहस्यं तेन नोद्घाटितम्। पण्डितराजेन रहस्यमेतत् प्रकटितम्।

शृङ्गाररसस्य द्वौ भेदौ भवतः - संयोगो विप्रलम्भश्च। संयोगस्य विप्रयोगस्य च कोऽभिप्रायो, विभाजनस्य चैतस्य क आधार इति केनाऽप्याचार्येण रहस्यस्यैतस्य न स्पष्टीकरणं विहितम्। परन्तु पण्डितराजेन प्रोक्तम् -

चित्तवृत्तीनामाश्रयेणैव संयोगशृङ्गारस्य विप्रलम्भशृङ्गारस्य चाऽवस्था भवति। चित्तवृत्तिवशादेवैकशयनस्थितयोरपि दम्पत्योर्मानवशाद् विप्रलम्भशृङ्गारो जायते।

सिद्धान्तपक्षमाश्रित्य पण्डितराजेनाऽनुपमं वैशिष्ट्यं प्रदर्शितम्। काव्यलक्षणमत्राऽवलोकनीयम्। प्राचीनाचार्याः शब्दार्थयुगलं काव्यमाहुः। परन्तु पण्डितराजेन प्रतिपादितम् - शब्दशरीरमेव काव्यम्। परं शब्दोऽसौ रमणीयार्थप्रतिपादको भवति।[१]

मम्मटेन काव्यस्य त्रयो हेतवः प्रकीर्तिताः[२]- शक्तिर्व्युत्पत्तिरभ्यासश्च। पण्डितराजेन प्रतिभैव केवलं काव्यहेतुरूपेण प्रोक्ता।[३] मम्मटादिभिराचार्यैः काव्यानि त्रिविधानि प्रोक्तानि - उत्तममध्यमाधमानि। परन्तु पण्डितराजेन चत्वारः काव्यभेदा प्रोक्ताः - उत्तमोत्तमोत्तम-मध्यमाधमाः।[४] तत्र ध्वनिकाव्यमुत्तमोत्तमं गुणीभूतव्यङ्ग्यकाव्यमुत्तममर्थचित्रकाव्यं मध्यमं शब्दचित्रकाव्यञ्चाऽधमं भवति। वाच्यचित्रशब्दचित्रकाव्ये नैकवर्गीये मन्तव्ये।

पण्डितराजजगन्नाथस्याऽन्यान्यपि वैशिष्ट्यानि वर्तन्ते। मम्मटादिप्राचीनाचार्या आलोचनातर्कप्रतिभाशालिनस्तु वर्तन्ते परं न कवित्वप्रतिभायुताः। स्वल्पसंख्यैरेव काव्यशास्त्राचार्यैः स्वसिद्धान्तपक्षपरिपोषणाय स्वरचितोदाहरणनि प्रस्तुतानि। उदाहरणानि प्रस्तोतुं ते परमुखापेक्षिणो वर्तन्ते। प्राचीनकाव्येभ्यः प्रकरणानुकूलोदाहरणान्यन्वेष्य तानि स्वग्रन्थेषु सन्निवेशितानि। परन्तु पण्डितराजो जगन्नाथ एकतस्तु प्रखरसमालोचको वर्तिऽपरतश्च कवितारचनाकुशलः प्रतिभाशाली कविरप्यस्ति। उदाहरणानि प्रस्तोतुं न कोऽपि तेन प्राचीनकविराश्रितः। स्वयमेव सिद्धान्तपक्षानुरूपं काव्यरचना तेन कृता, अथ चोदाहरणरूपेण प्रस्तुता। काव्यरचनाप्रतिभेयं न केवलं तस्य काव्येष्वेव संलक्ष्यते, अपितु रसगङ्गाधरग्रन्थस्योदाहरणेष्वपि परितः प्रतिभाति, रसगङ्गाधरग्रन्थे तेन महामनीषिणा स्वयमेव प्रोक्तम् -

अस्मिन् ग्रन्थे न मयाऽन्यकविकाव्यान्युदाहरणरूपेण निधीयन्ते, परं स्वरचितकाव्या-न्येवोदाहरणरूपेण प्रस्तूयन्ते। कस्तूरिकामृगः स्वमृगमदसुगन्धमेव सेवते न सुमनोगन्धः।[५]

---

१. रमणीयार्थप्रतिपादकः शब्दः काव्यम्। रसगङ्गाधर - प्रथममाननम्

२. शक्तिर्निपुणतालोकशास्त्रकाव्याद्यवेक्षणात्।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे।। काव्यप्रकाश १.३

३. तस्य कारणं कविगता केवलं प्रतिभा। रसगङ्गाधर - प्रथममाननम्

४. तच्चोत्तमोत्तममध्यमाधमभेदाच्चतुर्धा। रसगङ्गाधर - प्रथममाननम्

५. निर्माय नूतनमुदाहरणानुरूपं काव्यं मयाऽत्र निहितं न परस्य किञ्चित्।
किं सेव्यते सुमनसां मनसाऽपि गन्धः कस्तूरिकाजननशक्तिभृता मृगेण।।
रसगङ्गाधर प्रस्तावनाश्लोकः

## २. पण्डितराजस्य समयः

पण्डितराजो जगन्नाथो नाऽतिप्राचीनकालीनः शास्त्रकारः। मुगलसम्राजः शाहजहानस्याऽसौ कृपापात्रमासीदिति तस्य समयविषये न कश्चिद् विवादो वर्तते। तस्य समयस्तु निश्चयेन ज्ञायते। शाहजहानेन जगन्नाथः पण्डितराज इत्युपाधिना सम्मानितः। शाहजहानः १६२८ तमे खिष्टाब्दे राजसिंहासनमध्यतिष्ठत्। १६५८ तमे खिष्टाब्देऽसौ स्वपुत्रेणाऽवरङ्गजीवेन कारागारे निबद्धो विहितः। १६६६ तमे खिष्टाब्दे शाहजहानः पञ्चत्वङ्गतः। पण्डितराजस्य स एव समयोऽवगन्तव्यः। सम्भवतः शाहजहाने दिवङ्गतेऽपि पण्डितराजोऽत्र भुवि कञ्चित् समयं यावज्जीवन्नासीत्।

## ३. पण्डितराजस्य जीवनवृत्तम्

पण्डितराजेन जगन्नाथेन स्वजीवनवृत्तपरिवारादिसम्बन्धे निजकृतिषु किञ्चित् संक्षेपेण सूचितं, येन तस्य जीवनपरिचयो यथाकथञ्चिज्ज्ञायते। तैलङ्गब्राह्मणोऽसावर्तत।[1] तस्य जनकः पेरुभट्टो (पेरमभट्टो वा) जननी च लक्ष्मीः ह्यवर्तत।[2] परमविदुषः पेरमभट्टस्य सूनुना जगन्नाथेनाऽनेकेभ्यः शिक्षकेभ्यो जनकादपि च विविधशास्त्राण्यधीतानि। ज्ञानेन्द्रभिक्षोर्वेदान्तशास्त्रं, महेन्द्रान्न्यायशास्त्रं वैशेषिकशास्त्रञ्च, खण्डदेवोपाध्यायात् पूर्वमीमांसां शेषवीरेश्वराच्च व्याकरणमहाभाष्यं सोऽध्यगीष्ट।[3]

जगन्नाथोऽधिकांशतः सर्वविद्याविशारदात् स्वजनकादेव विद्याध्ययनञ्चकार। पितुरुपाध्यायः शेषवीरेश्वरोऽपि तस्य गुरुरवर्तत। सूचनेयं पण्डितराजकृतमनोरमाकुचमर्दनग्रन्थात् प्राप्यते।[4] जगन्नाथस्य प्रखरपाण्डित्यं समीक्ष्य दिल्लीश्वरः सम्राट् शाहजहानस्तं पण्डितराजोपाधिना समभूषयदथ च राजसभासदस्यञ्चकार। जगन्नाथस्य यौवनं वयस्तत्रैव व्यतीतम्।[5] शाहजहानसूनोर्दाराशिकोहस्याऽप्यसौ प्रियपात्रमासीत्। दाराशिकोहेन पण्डितराजात् संस्कृतभाषाया अध्ययनं विहितम्। जगदाभरणकाव्ये जगन्नाथेन दाराशिकोहः कीर्तितः।

---

१. तैलङ्गकुलावतंसेन पण्डितजगन्नाथेन। आसफविलासस्य प्रस्तावना

२. पाषाणादपि पीयूषं स्यन्दते यस्य लीलया।
तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम्।। रसगङ्गाधरस्य प्रस्तावना

३. श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः
काणादीराक्षपादीरपि गहनगिरो यः महेन्द्रादवेदीत्।
देवादेवाऽध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं
शेषाङ्कप्राप्तशेषामलभणितिरभूत् सर्वविद्याधरो यः।। रसगङ्गाधरस्य प्रस्तावना

४. अस्मद्गुरुशेषवीरेश्वराणाम्................। मनोरमाकुचमर्दनम्

५. दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः। भामिनीविलास

## ४. पण्डितराजविषये काश्चन किम्वदन्त्यः

पण्डितराजजगन्नाथविषये बह्व्यः किम्वदन्त्यः जीवनवृत्ताभिव्यञ्जिकाः प्रसिद्धाः सन्ति। काश्चनाऽत्र प्रस्तूयन्ते।

(i) पण्डितराजो मुगलसम्राजः शाहजहानस्य कृपापात्रमवर्तत। कथमसौ तस्य राजसभासदस्यो बभूवेत्येका किम्वदन्ती लोके प्रसिद्धा। पण्डितराजेन जयपुरनगरे संस्कृतपाठशाला ह्येका संस्थापिता। तत्राऽसौ दिल्लीनगरात् समागतं मुसलिमन्यायाधिकारिणं (काजीति प्रसिद्धम्) शास्त्रार्थे पराजयत्। असौ मुसलिमपदाधिकारी दिल्लीनगरं निवर्त्य जगन्नाथस्य वैदुष्यं बहुतरं प्रशशंस। शाहजहानेन जगन्नाथो दिल्लीनगरमागमनाय सादरं निमन्त्रितः।

(ii) लोके वार्तेयमपि प्रसिद्धा - जगन्नाथस्य पण्डित्येन प्रभावितो जयपुरनरेशस्तं दिल्लीनगरमानिनाय। तत्रत्याः मौलविनः क्षत्रियानेवमाचिक्षिपुः -

परशुरामेणैकविंशतिवारं क्षत्रियाणां विनाशः कृतः। अतो भुवि सर्वे क्षत्रियाः विनष्टाः। इयं पृथिवी क्षत्रियरहिता सञ्जाता। अतो यूयं क्षत्रियाः न। अथ च अरबीभाषा संस्कृतभाषातः प्राचीनतरा।

मौलवीनामाक्षेपानां समाधानाय जयपुराधीशो जगन्नाथं दिल्लीनगरमानिनाय। जगन्नाथेन मौलवीनामाक्षेपा एवं समासाधिताः -

(क) भगवता परशुरामेण यदा प्रथमं क्षत्रियाः विनाशिताः पृथिवी च क्षत्रियरहिता कृता, तदा केचन क्षत्रियाः ध्रुवं हतावशेषा आसन्। अयमेव हेतुरासीद् यत् पुनरसौ पृथिवीं क्षत्रियरहितां विधातुमुद्यतो बभूव। पुनः पुनः क्षत्रियाणां विनाशेऽपि पृथिव्यां केचन क्षत्रियाः हतावशेषाः बभूवुः। एकविंशतिवारं विनाशितेष्वपि क्षत्रियेषु केचन क्षत्रियाः ध्रुवं हतावशिष्टा आसन्। वर्तमानक्षत्रियास्तेषामेव सन्तत्यः सन्ति।

(ख) अरबीभाषायाः प्राचीनतासम्बन्धे जगन्नाथेन प्रोक्तम् - मुसलिमधर्मग्रन्थे हदीसे लिखितमस्ति यन्मोहम्मदीयाः हिन्दूविपरीतमेवाऽऽचरेयुः। अयमेव तेषां धर्मः। अनेन लेखेन सिद्ध्यति यन्मोहम्मदीयधर्मपूर्वं हिन्दूधर्मग्रन्थानां संस्कृतभाषानिबद्धानां स्थितिरस्तित्व-ञ्चाऽवर्तत। अतः संस्कृतभाषा अरबीभाषातः प्राचीनतरा वर्तते।

जगन्नाथस्य प्रतिभया प्रत्युत्पन्नमतित्वेन पाण्डित्येन चाऽतितरां प्रभावितः प्रसन्नश्च मुगलसम्राट् शाहजहानस्तं स्वराजसभासदस्यञ्चकार। अथ चाऽसौ तं पण्डिराजोपाधिना समभूषयत्।

(iii) कयाचिद् यवनकामिन्या सह पण्डितराजस्य प्रणयगाथा लोकेऽतितरां प्रसिद्धा। प्रसिद्धिरियमत्रेदृशी यत् कन्यैका लवङ्गीनाम्नी सेविका सम्राजः शाहजहानस्याऽन्तःपुरे

सकलतरुणीसौन्दर्यातिशायिनी पण्डितराजस्य दृष्टिपथमागता। कस्मिंचित् काले सम्राजमतिशयप्रसन्नमुद्राभाजमवलोक्य पण्डितराजस्तां ययाचे। सम्राजाऽप्यतिशयप्रसादभाजा सा तस्मै समर्पिता। कन्यां तां लवङ्गीं यवनीं सम्प्राप्य स्वजीवनं सार्थकं धन्यतमञ्चाऽवगच्छन्नसौ पण्डितराजः स्वयौवनं तत्रैव चरितार्थं कर्तुमारेभे। यवनीसौन्दर्यं प्रशंसितुं तद्रचिताः श्लोका अनेके लोके प्रसिद्धाः सन्ति।[1]

प्रसिद्धमिदमपीह यत् पण्डितराजजगन्नाथस्य यवन्या सह तत्सङ्गमं पण्डितगणो न सेहे जघन्यतमं घृणास्पदञ्च मेने। शाहजहानशासनकाले स्वयौवनं व्यतीत्य पण्डितराजो यवन्या सह वाराणसीं समायातः। तत्र ह्यप्पयदीक्षितादिभिः पण्डितैर्यवनीसंसर्गदूषितोऽसाविति धिक्कृतोऽतिशयेन। नितरां तिरस्कृतोऽसौ जगन्नाथो जातितो बहिष्कृतः। एकस्मिन् समये गङ्गातटेऽसौ यवन्या सह प्रावरणावृतः शेते स्म। तस्मिन्नेव समये ह्यप्पयदीक्षितः पण्डितस्तत्राऽऽयातः। वृद्धस्यैकस्य तथाभूतमाचरणमवलोक्य सहसा तस्य कण्ठाद् वाणी प्रास्फुटत् -

"किं निःशङ्कं शेषे शेषे वयसि त्वमागते मृत्यौ।"

पद्यमेतच्छ्रुत्वाऽनावृतप्रावरणमुखं पण्डितराजमवलोक्याऽप्पयदीक्षितः पुनरवोचत् -

"अथवा सुखं शयीथाः निकटे जागर्ति जाह्नवी भवतः।।

काशीस्थपण्डितगणकृतापमानेन पण्डितराजस्तिरस्कृतमात्मानमतितरां मन्यमानो मृत्युमेवैच्छत्। यवन्या सह गङ्गातटोपविष्टोऽसौ गङ्गास्तुतिगानमारेभे। यवनीमुपलक्ष्याऽप्यसौ श्लोकमेकं जगौ।[2] काश्यां गाथेयं प्रसिद्धा यत् पण्डितराजस्य श्लोकगानेन प्रसादिता प्रभाविता च भागीरथी प्रतिश्लोकं प्रतिसोपानमुन्नमन्ती पण्डितराजं यवनीसहितं स्वाङ्के समाश्लेषमाणा निजजलप्रवाहे प्रवाहितञ्चकार। स्तोत्रमिदं गङ्गालहरी (पीयूषलहरी) नाम्ना प्रसिद्धं द्विपञ्चाशच्छ्लोकात्मकमस्ति। प्रसिद्धिरियमपि वर्तते यत्काशीस्थपण्डितगणकृता-वमानेन मनसि क्लिश्यमानः पण्डितराजो जगन्नाथो गङ्गालहरीस्तोत्रं पठन् यवनीसहितो गङ्गासलिलसमाधौ विलीनोऽभवत्।

---

१. यवनी नवनीतकोमलाङ्गी शयनीये यदि नीयते कदाचित्।
अवनीतलमेव साधु मन्ये नवनी माघवती विनोदहेतुः।।
न याचे गजालिं न वा वाजिराजिं न वित्तेषु चित्तं मदीयं कदापि।
इयं सुस्तनी मस्तकन्यस्तहस्ता लवङ्गी कुरङ्गी दृगङ्गीकरोतु।।
यवनी रमणी विपदः शमनी कमनीयतमा नवनीतसमा।
जहि जहि वचोऽमृतपूर्णमुखी स सुखी जगतीह मदङ्कगता।।

२. सुरधुनिमुनिकन्ये तारयेः पुण्यवन्तं
स तरति हि निजपुण्यैस्तत्र किं ते महत्त्वम्।
यदि हि यवनकन्यां पापिनीं मां पुनीहि
तदिह तव महत्त्वं तन्महत्त्वं महत्त्वम्।।

(iv) किम्वदन्ती लोके हीयमपि प्रसिद्धा - पण्डितराजजगन्नाथाप्पयदीक्षितयोः परस्परं शाश्वतिकः वैरभावः केनचित् कारणेन समुत्पन्नः। शेषवीरेश्वरः शेषकृष्णस्य सूनुः पण्डितराजजगन्नाथजनकस्य गुरुरवर्तत। काश्यां प्रसिद्धिरीदृशी यद् भट्टोजिदीक्षितः शेषकृष्णस्य छात्र आसीत्। भट्टोजिदीक्षिताप्पयदीक्षिताभ्यां म्लेच्छपदेन सम्बोधितो जगन्नाथस्तौ प्रति वैरभावप्रभावितोऽभवत्। स्वकृतिष्वसौ तयोर्द्वयोस्तीक्ष्णकटुव्यक्तिगतालोचनाञ्चकार। अप्पयदीक्षितेन चित्रमीमांसाभिधानोऽलङ्कारग्रन्थः प्रणीतः। तस्य विरोधाय खण्डनाय च जगन्नाथश्चित्रमीमांसाखण्डनं पुस्तकं प्रणिनाय।

अनेन विधिना ग्रन्थरचनामाध्यमेन पण्डितराजो जगन्नाथो भट्टोजिदीक्षितमपि तिरस्कर्तुं प्रयेते। भट्टोजिदीक्षितेन व्याकरणविषयकं पुस्तकमेकं लिखितम् - मनोरमा। तं पुस्तकं खण्डयितुं जगन्नाथेन पुस्तकमेकं प्रणीतम् - मनोरमाकुचमर्दनम्। मनोरमा-भिधाने पुस्तके भट्टोजिदीक्षितेन पण्डितराजस्य गुरोरवमानना कृताऽऽसीत्। अनेन संरुष्टो जगन्नाथो मनोरमाकुचमर्दनं ग्रन्थं प्रणीय गुरोरवमानप्रतीकारं कृत्वा प्रशान्तमनस-मात्मानञ्चकार।[१]

अत्र विशदवार्तेयं वर्तते -

जगन्नाथजनकस्य पेरुभट्टस्य गुरोः शेषवीरेश्वरस्य जनकस्य शेषकृष्णस्य शिष्योऽवर्तत भट्टोजिदीक्षितः। अथ चाऽप्पयदीक्षितस्तस्य समकालीनोऽवर्तत। अतो भट्टोजिदीक्षिता-ऽप्पयदीक्षितयोर्द्वयोरपि पण्डितराजजगन्नाथेन सह समकालीनत्वं कथं सम्भवति ? अतः पारस्परिकविरोधेन व्यक्तिगतवैरभावस्याऽपि कथं सम्भावना ? भट्टोजिदीक्षितस्य साहित्यलेखनसमयो वर्तते - १५८०-१६३० ख्रिष्टाब्दाः। अप्पयदीक्षितस्य साहित्यसाधनासमयो विद्यते १५८०-१६२६ ख्रिष्टाब्दाः। पण्डितराजजगन्नाथस्य साहित्यलेखनसमयो गण्यते १६२०-१६७० ख्रिष्टाब्दाः। अतः पण्डितराजस्य यौवनकाले द्वयोरेतयोराचार्ययोर्वार्धक्यकालः समवर्तत। किञ्चित्कालं यावच्च तेषां समकालत्वस्य सम्भावना कल्प्यत एव।

## ५. पण्डितराजस्य कृतयः

प्रखरपाण्डित्यशालिना प्रौढविदुषा कविकर्मकुशलेन पण्डितराजेनैकतस्तु रसगङ्गा-धरसदृशः प्रौढपाण्डित्यपूर्णो ग्रन्थः प्रणीतोऽपरतश्च सरससहृदयहृदयाह्लादकानि काव्यान्यपि विरचितानि। तस्य केषाञ्चित् प्रमुखकृतीनां परिचयः प्रस्तूयते -

---

१. दृप्यद्द्राविडदुर्ग्रहग्रहवशान्म्लिष्टं गुरुद्रोहिणा
यन्म्लेच्छेन वचोऽवचिन्त्य सदसि प्रौढेऽपि भट्टोजिना।
तत्सत्यापितमेव धैर्यनिधिना यत्स व्यमृद्नात् कुचं
निर्बध्याऽस्य मनोरमामवशयन्नप्पय्ययाद्यान् स्थितान्।।

(i) अमृतलहरी -

रचनायाममृतलहर्यां पण्डितराजेन यमुनायाः स्तुतिर्विहिता। शार्दूलविक्रीडितछन्दसि निबद्धेषु दशसु श्लोकेषु स्तोत्रेऽस्मिन् यमुनाजलं कविना पीयूषतुल्यं कीर्तितम्।

(ii) लक्ष्मीलहरी -

लक्ष्मीलहरीस्तोत्रे श्लोका एकपञ्चाशद् वर्तन्ते। अत्र स्तोत्रे पण्डितराजेन जगन्नाथेन भगवती लक्ष्मीः स्तुता।

(iii) करुणालहरी -

करुणालहरीस्तोत्रे शिखरिणीछन्दसि निबद्धेषु द्विपञ्चाशच्छ्लोकेषु कविना भगवतो विष्णोः स्तुतिर्विहिता।

(iv) पीयूषलहरी -

पीयूषलहरीस्तोत्रमपि शिखरिणीछन्दसि निबद्धमस्ति। अत्राऽपि द्विपञ्चाशच्छ्लोकेषु भगवत्याः गङ्गायाः स्तुतिर्विद्यते। स्तोत्रमिदं गङ्गालहरीति नाम्नाऽपि प्रसिद्धं पठन्नेव जगन्नाथः स्वात्मानं प्रेयस्या यवनकामिन्या साकं भागीरथीपयसि विलापयामास।

(v) जगदाभरणम् -

काव्येऽस्मिन् पण्डितराजो जगन्नाथः शाहजहानसुतं दाराशिकोहं प्रशशंस।

(vi) आसफविलासः -

काव्येऽस्मिन् पण्डितराजेन जगन्नाथेन शाहजहानस्य सम्राजः सेनापतिरासफखानः प्रशंसितः।

(vii) भामिनीविलासः -

ग्रन्थोऽयं पण्डितराजजगन्नाथस्य मुक्तककाव्यसङ्ग्रहश्चतुर्षु विलासेषु विभक्तो वर्तते - अन्योक्तिविलासः, शृङ्गारविलासः, करुणविलासः, शान्तिविलासश्च।

(viii) प्राणाभरणम् -

प्राणनारायणप्रशंसायां काव्यमिदं कविना निबद्धम्। प्राणनारायणो मुगलशासकानां सामन्तः १६६६ ख्रिष्टाब्दे दिवङ्गतः। कस्य प्रदेशस्याऽयं शासकोऽवर्ततेति विषये न मतैक्यम्। केचन विद्वांस इतिहासविदस्तं कामरूपस्याऽपरे कमताप्रदेशस्याऽन्ये च नेपालदेशस्य शासकं वदन्ति।

(ix) यमुनावर्णनचम्पूः -

यमुनावर्णनात्मकं चम्पूकाव्यमिदं वर्तमानसमये नोपलभ्यते। रसगङ्गाधरग्रन्थे काव्यस्याऽस्योल्लेखो विद्यते। कतिपये चांऽशास्तत्र समुल्लिखिताः सन्ति।

(x) **चित्रमीमांसाखण्डनम् -**

ग्रन्थेऽस्मिन् पण्डितराजजगन्नाथश्चित्रमीमांसायाः खण्डनञ्चकार।

(xi) **मनोरमाकुचमर्दनम् -**

व्याकरणविषयोऽयं ग्रन्थः। भट्टोजिदीक्षितेन सिद्धान्तकौमुद्याः मनोरमाभिधाना टीका अपि लिखिता। तां खण्डयितुं पण्डितराजो मनोरमाकुचमर्दनं (मर्दिनी वा) नाम ग्रन्थमलिखत्।

(xii) **रसगङ्गाधरः -**

पण्डितराजजगन्नाथस्य पाण्डित्यपूर्णः श्रेष्ठः कीर्तिशाली ग्रन्थो विद्यते - रस-गङ्गाधरः। अपूर्णेनाऽपि ग्रन्थेनाऽनेन पण्डितराजजगन्नाथाय महती कीर्तिरक्षया प्रदत्ता। रसगङ्गाधरस्य विषयवस्तु संक्षेपेणेह प्रस्तूयते।

## ६. रसगङ्गाधरः

पण्डितराजजगन्नाथकृतकाव्यशास्त्रविषयकग्रन्थे रसगङ्गाधरेऽपूर्णेऽपि सति काव्यशास्त्रकृदयं काव्यशास्त्राचार्येषु पाण्डित्यनिकषोपलोऽभिधीयते। ग्रन्थेऽस्मिन् पण्डितराजकृतं विषयप्रतिपादनं सुस्पष्टं सशक्तं युक्तिसमन्वितं समीक्षकदृष्टिभिस्तर्कप्रमाणनिकषोपलसिद्धञ्च वर्तते। पण्डितराजेन रसगङ्गाधरे प्राचीनसुप्रतिष्ठितसम्माननीयानामाचार्याणां प्रखरसुकठोर-समालोचना कृता। आनन्दवर्धनमम्मटविश्वनाथसदृशा आचार्या अपि तस्य प्रखरनिशितसुसूक्ष्म-समालोचनस्य पात्राणि बभूवुः। काव्यशास्त्रस्याऽनेके विषयास्तेन नवस्वतन्त्रदृष्टिकोणमवलम्ब्य प्रस्तुताः। सा च प्रस्तुतिः प्राचीनाचार्येभ्यः केषुचिदंशेषु भिद्यत एव। काव्यलक्षणप्रयोजनहेतुभेद-गुणालङ्कारादिविषयेषु पण्डितराजस्य स्वतन्त्रमभिमतं स्थाने स्थाने संलक्ष्यते। विषयप्रतिपादनदृष्ट्या रसगङ्गाधरो द्वयोर्भागयोः (आननयोः) विभक्तोऽस्ति। तयोश्च परिचयो विवेचनञ्च निम्नरूपेण प्रस्तूयते -

(i) **प्रथममाननम् -**

प्रथमं तावत् प्रस्तावनायां कानिचित् परिचयात्मकानि पद्यानि निबध्य पण्डितराजो जगन्नाथः काव्यलक्षणकारणभेदांश्च व्याख्याय रसस्वरूपं न्यरूपयत्। अथ रसस्य भेदान् संख्याञ्च विविच्याऽसौ गुणस्वरूपं भेदांश्च व्याचख्यौ। प्राचीनाचार्यैर्वामनादिभिर्गुणाः द्विविधाः प्रोक्ताः - शब्दगुणा अर्थगुणाश्च। तदनन्तरं तयोरप्यनेके भेदाः प्रदर्शिताः। परं मम्मटमनुसरता पण्डितराजेन प्राचीनाचार्यकृतगुणभेदानामन्तर्भावस्त्रिष्वेव गुणेषु माधुर्यौजःप्रसादेषु विहितः। ते त्रयोऽपि गुणाः शब्दगुणा एव सन्ति नाऽर्थगुणाः। गुणान्निरूप्याऽस्मिन्नानने पण्डितराजो भावानुभावव्यभिचारिभावादीन् प्रदर्श्य रसाभासभावाभासभावशान्तिभावोदयभाव-सन्धिभावशबलतानां निरूपणं कृतवान्। अस्मिन् प्रकरणे पण्डितराजस्य कथनमस्ति - अलक्ष्यक्रमोऽपि कदाचिल्लक्ष्यक्रमो भवति। अथ च वर्णरचनादयो न रसादीनामभिव्यञ्जकाः भवन्ति।

(ii) **द्वितीयमाननम् -**

आनने द्वितीये प्रथमं तावत् संलक्ष्यक्रमध्वनिविवेचनं वर्तते। तदनन्तरं शक्तिनियामकतत्त्वानां संयोगविप्रयोगादीनां वर्णनमस्ति। ततः शब्दशक्तिमूलकानामर्थशक्तिमूलकानाञ्च ध्वनिभेदानां विस्तृतं निरूपणं विद्यते। अथ लक्षणामूलध्वनिं निरूपयता जगन्नाथेन अभिधालक्षणाशब्दशक्त्योर्विवेचना कृता। ततोऽलङ्काराणां विवेचनं प्रारभते। अत्र रसगङ्गाधरे ह्युपमालङ्कारादारभ्योत्तरालङ्कारपर्यन्तं सप्तत्यलङ्काराणां कथनं पण्डितराजस्य विद्यते।

वर्तमानसमये ह्युपलभ्यमाने रसगङ्गाधरे न पूर्णता संलक्ष्यते। अत्र सर्वेषामलङ्काराणां विवेचनं न विद्यते। उपमात आरभ्योत्तरालङ्कारपर्यन्तं सप्तत्यर्थालङ्कारा एव वर्णिताः सन्ति। अत्राऽनेकेषां समीक्षकानां कथनमस्ति - पण्डितराजेन न ग्रन्थोऽयं पूर्णतां नीतः। उत्तरालङ्कारपर्यन्तं ग्रन्थं विरच्य लेखको दिवङ्गतः। जगन्नाथस्याऽवसानानन्तरं पञ्चाशद्वर्षमनु नागेशभट्टो रसगङ्गाधरस्य टीकामलिखत्। टीकेयमप्युत्तरालङ्कारपर्यन्तमेव वर्तते।

परन्त्वन्येषां समीक्षकानां कथनमस्ति - जगन्नाथेन ग्रन्थोऽयं पूर्णतां नीतः। तथ्यमिदं तस्य वचनैरेव प्रमाणितं भवति। रसगङ्गाधरं विरच्य पण्डितराजो जगन्नाथश्चित्रमीमांसाखण्डनमलिखत्। सूचनेयं ग्रन्थस्य प्रस्तावनातः प्राप्यते।[1] अथ च चित्रमीमांसाखण्डने ह्युदाहरणालङ्कारमालोचयता तेन लिखितम् - विशेषेणाऽयं रसगङ्गाधरे ह्युदाहरणालङ्कारप्रकरणे द्रष्टव्यः।[2]

विवेचनेनाऽनेन द्वयोस्तथ्ययोरनुमानं भवति -

(i) पण्डितराजो रसगङ्गाधरग्रन्थं न केवलमुत्तरालङ्कारपर्यन्तमेव निबबन्ध, परन्तु तदनन्तरमपि तेनाऽन्ये सर्वेऽलङ्काराः निरूपिताः ग्रन्थश्च पूर्णतां नीतः। परन्तु कैश्चिदप्यविज्ञातैर्हेतुभिस्तदंशाः विलुप्ताः न च वर्तमानसमये समुपलभ्यन्ते।

(ii) पण्डितराजो ह्युत्तरालङ्कारपर्यन्तं रसगङ्गाधरग्रन्थं विरच्य तदनन्तरं चित्रमीमांसाखण्डनग्रन्थलेखने मनो बबन्ध। उत्तरवर्तिनि काले कैश्चिदपि हेतुभिरसौ रसगङ्गाधरग्रन्थं पूर्णतां नेतुं न समर्थो बभूव।

### ७. रसगङ्गाधरस्य प्राचीनटीकाः

प्राचीनकाव्यशास्त्रीयग्रन्थान् टीकयितुं यद्यप्यनेके विद्वांसः प्रावर्तन्त, तथापि रसगङ्गाधरसदृशस्य प्रौढजटिलपण्डित्यपूर्णग्रन्थस्य टीकां लिखितुं न सामान्यविद्वांसः

---

१. रसगङ्गाधरे चित्रमीमांसायां मयोदिताः।
ये दोषास्तेऽत्र संक्षिप्य कथ्यन्ते विदुषां मुदे।।

२. विशेषतस्तु उदाहरणालङ्कारप्रकरणे रसगङ्गाधरादवसेयः। चित्रमीमांसाखण्डन पृ० १२

साहसञ्चक्रिरे। अतोऽङ्गुलिगणनीयैरेव विद्वद्भिरस्य ग्रन्थस्य टीकाः लिखिताः। सम्भवतो ग्रन्थकाठिन्यमेवाऽत्र हेतुरवर्तत। तथाऽपि ग्रन्थस्याऽस्य द्वे टीके प्राप्येते - (i) विषयपदीटीका (ii) गुरुमर्मप्रकाशनीटीका च।

(i) **विषमपदीटीका -**

टीकेयं प्रकाशनं न सम्प्राप्ता। लेखकस्याऽस्याष्टीकायाः न नामाऽपि विज्ञायते।

(ii) **गुरुमर्मप्रकाशनीटीका -**

टीका गुरुमर्मप्रकाशनी इतिहासप्रसिद्धेन वैयाकरणेन टीकाकारेण नागेशभट्टेन लिखिताऽवर्तत। पण्डितराजावसानानन्तरं पञ्चाशद्वर्षमनु नागेशभट्टष्टीकामेनामलिखत्। अस्याः परिचयो नागेशभट्टप्रकरणे द्रष्टव्यः।

वर्तमानयुगेऽपि रसगङ्गाधरस्य काश्चन टीकाः विद्वद्भिर्लिखिताः। अत्र मथुरादत्त-महोदयस्य टीका संक्षिप्ताऽपि विषयविशदकारिणी वर्तते। कविशेखरबदरीदत्तझाकृतसंस्कृतटीका पण्डितमदनमोहनझाकृतहिन्दीटीका चाऽपि विषयस्य स्पष्टीकरणे सुतरामुपयोगिनी वर्तते। प्रकाशनं चाऽस्याः काशीस्थचौखम्बासंस्कृतसीरीजप्रकाशनसंस्थया कृतम्।

एकोनपञ्चाशोऽध्यायः

# नागेशभट्टः

## १. नागेशभट्टस्य महत्त्वम्

संस्कृतकाव्यशास्त्रीयप्राचीनग्रन्थटीकाकारेषु नागेशभट्टोऽतितरां प्रसिद्धः कीर्तिशाली महत्त्वपूर्णश्च वर्तते। व्याकरणशास्त्रस्योद्भटो विद्वान् काव्यशास्त्रेऽप्यसौ तथैव प्रकाण्डवैदुष्यशाली गण्यते। रसगङ्गाधरस्य टीकां विरच्य तेन काव्यशास्त्राचार्येषु महनीयं सम्माननीयञ्च यशोऽर्जितम्।

## २. नागेशभट्टस्य परिचयः

'काले' इत्युपनामधारी महाराष्ट्रियब्राह्मणो नागेशभट्टो नागोजिदीक्षितनाम्नाऽपि प्रसिद्धो बभूव। तस्य जनकः शिवभट्टाभिधानोऽवर्तत, जननी च सतीदेवीनाम्नी। शेषकृष्णसुतः शेषवीरेश्वरो जगन्नाथस्य गुरुरवर्तत। भट्टोजिदीक्षितः शेषकृष्णस्य शिष्योऽवर्तत। शेषवीरेश्वरसुतस्य वीरेश्वरस्य सुतो हरिदीक्षितो नागेशभट्टस्य गुरुरविद्यत। एवञ्च नागेशभट्टस्य समयस्थितिः जगन्नाथानन्तरं द्विपीठिकापश्चात् सिद्ध्यति। गुरुशिष्यपरम्परेयं निम्नक्रमेण निष्पद्यते।[1]

१. काणे, पी०वी० संस्कृत काव्यशास्त्र का इतिहास पृ० ४०१

## ३. नागेशभट्टस्य समयः

नागेशभट्टेन भानुदत्तस्य रसमञ्जर्याष्टीका लिखिता। अस्याष्टीकायाः हस्तलिखिता पाण्डुलिपिः १७१२ तमे खिष्टाब्दे प्रतिलिपीकृतोपलब्धा। अतो नागेशभट्टोऽष्टादश-शताब्दीप्रारम्भकालीनोऽवगन्तव्यः।

## ४. नागेशभट्टस्य कृतयः

परमवैयाकरणेन नागेशभट्टेन व्याकरणविषयमधिकृत्य महनीयग्रन्थानां रचना कृता। अस्मिन् प्रसङ्गे न ते ग्रन्थाः विचारविषयाः सन्ति। असौ मनीषी काव्यशास्त्रज्ञोऽप्यवर्तत। तत्राऽपि चाऽस्याऽनेके टीकारूपाः ग्रन्थाः प्रसिद्धाः। तेऽत्र वर्ण्यन्ते -

(i) **रसगङ्गाधरस्य गुरुमर्मप्रकाशिका टीका -**

नागेशभट्टकृतेयं रसगङ्गाधरस्य प्राचीनतमा टीका गुरुमर्मप्रकाशिका समुपलभ्यते वस्तुतः नेयं टीका केवलमपितु टिप्पणी। इयं कृतिर्नागेशभट्टस्य काव्यशास्त्रीयं स्वतन्त्रं चिन्तनमवगन्तव्यम्। अतिसंक्षिप्तायामस्यां टीकायां नागेशभट्टेनाऽनेकेषु प्रसङ्गेषु मूलग्रन्थस्य स्पर्शोऽपि न विहितः। अनेकेषु प्रसङ्गेषु मूलग्रन्थं टीकयताऽपि टीकाकारेण रसगङ्गाधरकारस्य मतस्य खण्डनं कृतम्। उदाहरणार्थम् -

नागेशभट्टो जगन्नाथकृतकाव्यलक्षणस्य खण्डनं कृत्वा शब्दार्थौ सहितौ काव्यशरीरमिति प्रतिपादितवान्।

रसगङ्गाधरविवरणेषु नागेशभट्टेन जगन्नाथस्य दोषा अप्युद्घाटिताः। अनेकशस्तु टीकाकारो मूलग्रन्थकारस्य दोषानुद्घाटयन्नेव प्रतीयते। एष एव तस्योद्देश्य इति। मथुरादत्तेन स्वकृतरसगङ्गाधरटीकायां नागेशभट्टकृतटीकायाः दोषा अनेके प्रदर्शिताः।

(ii) **बृहदुद्योतटीका लघूद्योतटीका च -**

गोविन्दठक्करकृतकाव्यप्रकाशटीकायाः काव्यप्रदीपाभिधानायाः टीकाऽपि नागेशभट्टेन सम्पादिता। सा च द्विविधा वर्तते - बृहदुद्योतटीका लघूद्योतटीका च।

(iii) **उदाहरणदीपिका -**

अस्यां टीकायां नागेशभट्टेन काव्यप्रकाशान्तर्गतोदाहरणानि स्पष्टीकृतानि।

(iv-v) **अलङ्कारसुधाविषयपदव्याख्यानषट्पदानन्दञ्च -**

अनयोर्ग्रन्थयोर्नागेशभट्टेनाऽप्पयदीक्षितकृतकुवलयानन्दस्य व्याख्यानं विहितम्।

(vi) **रसतरङ्गिणीटीका -**

भानुदत्तकृतरसतरङ्गिणीग्रन्थस्य टीका नागेशभट्टेन लिखिता।

(vii) **रसमञ्जरीटीका -**

भानुदत्तकृतरसमञ्जरीग्रन्थस्याऽपि टीका नागेशभट्टेन लिखिता।

---

# विश्वेश्वरपाण्डेयः

## १. विश्वेश्वरपाण्डेयस्य महत्त्वम्

पण्डितराजजगन्नाथानन्तरं काव्यशास्त्रविषयमधिकृत्य ग्रन्थलेखनपरम्परा संस्कृत-विदुषां विलुप्ताऽभवदिति न। अष्टादशशताब्द्यामपि कैश्चित् संस्कृतविद्वद्भिः स्वप्रतिभया व्युत्पत्त्या च संस्कृतानुरागिणो लोका अनुरञ्जिताश्चमत्कृताश्च।

अष्टादशशताब्दीप्रारम्भकाले विदुषामग्रगण्यो विश्वेश्वरपाण्डेयः स्वमौलिकप्रतिभया परिश्रमेण च ग्रन्थान् प्रणीय विद्वज्जनान् ध्रुवमेव चमत्कृतवान्। प्रकाण्डपण्डितोऽसौ सहृदयकविरपि ध्रुवमासीत्। व्याकरणदर्शनकाव्यशास्त्रविषयकग्रन्थान् प्रणीय सरसकाव्यान्यपि गद्यविधायां पद्यविधायाञ्चाऽसौ प्रणिनाय। विश्वेश्वरपाण्डेयस्य ग्रन्थेषु गम्भीरप्रौढपाण्डित्येन सह सरसकाव्यरचनाप्रतिभाया अपि दर्शनमनुभूयते।

## २. विश्वेश्वरपाण्डेयस्य समयो जीवनवृत्तञ्च

विश्वेश्वरपाण्डेयस्य पूर्वजाः कूर्माञ्चलप्रदेशस्याऽलमोड़ाजनपदान्तर्गतपाटियाग्रामस्य निवासिनोऽवर्तन्त। भरद्वाजगोत्रीयाणां पूर्वजेषु कश्चिच्छ्रीबल्लभपाण्डेयोपाध्यायः कान्यकुब्जब्राह्मणः कन्नौजजनपदान्तर्गतखोरग्रामवासी चन्द्रवंशनृपतिभिर्निमन्त्रितोऽलमोड़ाजनपदमाजगाम। चन्द्रवंशपार्थिवैः राजगुरुपदाऽभिषिक्तोऽसौ पाटिया(पौड़िया)ग्रामभूमिदानेन सत्कृतः।[1]

विश्वेश्वरपाण्डेयस्य जनको लक्ष्मीधरपाण्डेयो वार्धक्ये पाटियाग्रामं परित्यज्य काशीमाजगाम। तत्राऽसौ मणिकर्णिकाघाटे गङ्गातीरे निवसन् भगवतो विश्वेश्वरस्याऽऽ-राधने समर्पितचित्तवृत्तिः जीवनमतिवाहयति स्म। विश्वेश्वरप्रसादेनाऽसौ पुत्ररत्नमुपलभ्य तं विश्वेश्वराभिधानेन समलञ्चकार। बालकस्य जन्मतिथिर्याथार्थ्येन निर्धारयितुं न शक्या। सम्भवतोऽसौ ह्यष्टादशशताब्दीप्रारम्भसमये जन्म लेभे। नागेशभट्टस्य गुरुर्हरिदीक्षितोऽस्य समकालीन आसीदित्यप्यनुमीयते। विश्वेश्वरपाण्डेयकृतवैयाकरणसिद्धान्तसुधानिधि-ग्रन्थस्याऽवलोकनेन ज्ञायते, यदसौ भट्टोजिदीक्षितमनु दीर्घसमयान्तरालेन समभवत्।

विश्वेश्वरो मुख्यतः स्वजनकाल्लक्ष्मीधरपाण्डेयादेवाऽधीयाय विद्याम्। स एवाऽस्य विद्यागुरुरवर्तत। विश्वेश्वरः स्वग्रन्थेषु पितरं गुरुरूपेण ववन्दे।[2] मन्दारमञ्जर्यां

---

१. बदरीदत्त पाण्डे : कुमायूं का इतिहास पृ० ५६३-५६४

२. जयति यथाजातानां वाग्जातसुजातपारिजातश्रीः।
श्रीलक्ष्मीधरविबुधावतंसचरणाब्जरेणुनिकरः।। मन्दारमञ्जरी - प्रस्तावना श्लोक - १२

रसचन्द्रिकायामलङ्कारमुक्तावल्यामलङ्कारप्रदीपे चेत्यादिषु ग्रन्थेषु तथैवाऽसौ स्वपितुः स्मरणमकरोत्। विश्वेश्वरस्यैकेन जयकृष्णनाम्ना सूनुना स्वपितृरचितरसमञ्जर्याष्टीका लिखिता। टीकान्तभागेऽसावसूचयत् -

प्रस्तुतपाण्डुलिपिलिपिको वर्तते ग्रन्थकारस्यैव पुत्रो जयकृष्णः। स च १६३४ शालिवाहनशकसंवत्सरे श्रावणमासस्य शुक्लपक्षस्य दशम्यामेनां प्रतिलिपिं लिलेख।[1]

काश्यामियं जनश्रुतिः प्रसिद्धा - विश्वेश्वरः स्वल्पायुषि ग्रन्थाननेकान् प्रणीय ह्यायुषो द्विचत्वारिंशे वर्षे दिवङ्गतः।

## ३. विश्वेश्वरपाण्डेयस्य कृतयः

विश्वेश्वरपाण्डेयो व्याकरणदर्शनकाव्यशास्त्राद्यनेकविधशास्त्राणां प्रकाण्डपण्डितो विद्वान् मनीषी समभवत्। आयुषा पञ्चवर्षकल्प एवाऽसौ विद्याध्ययनं प्रारभत। स्वल्पेनैव कालेन प्रतिभाशाली तीक्ष्णबुद्धिरसौ छात्रावस्थायामेव लेखनकर्मणि मनो बबन्ध। यदेव शास्त्रमसावध्यैष्ट तदेवाऽधिकृत्य ग्रन्थरचनामप्यकरोत्। शास्त्राणामध्ययनेन सह शास्त्ररचनायामसौ कुशलो बभूव। अथ च प्रतिभाशाली काव्यरचनाशक्तिसमन्वितोऽसावनेकानि काव्यान्यपि व्यरचयत्। विश्वेश्वरपाण्डेयस्याऽनेके ग्रन्थाः प्रकाशिताः सन्ति, परन्तु केचनाऽद्यापि प्रकाशनं प्रतीक्षन्ते। मन्दारमञ्जर्याष्टीकाकारेण तारादत्तपन्तेन विश्वेश्वररचितग्रन्थानां सूची निम्नरूपेण प्रस्तुता -

(१) अलङ्कारकौस्तुभम्
(२) अलङ्कारमुक्तावली
(३) आर्यासप्तशती
(४) कवीन्द्रकण्ठाभरणम्
(५) काव्यतिलकम्
(६) काव्यरत्नम्
(७) तर्ककुतूहलम्
(८) दीधितिप्रवेशः
(९) नवमालिका
(१०) नैषधीयकाव्यटीका
(११) मन्दारमञ्जरी
(१२) रसचन्द्रिका

---

१. दिग्गुणर्तुशशलाञ्छनयुक्ते शालिवाहनशके जयकृष्णः।
श्रावणीयसितपक्षदशम्यां निर्मितिं पितुरिमां विलिलेख।।

(१३) रसनञ्जरी
(१४) रोमावलीशतकम्
(१५) लक्ष्मीविलासः
(१६) वक्षौजःशतकम्
(१७) शृङ्गारमञ्जरीसट्टकम्
(१८) षड्ऋतुवर्णनम्
(१९) सिद्धान्तसुधानिधिः (वैयाकरणसिद्धान्तसुधानिधिः)
(२०) होलिकाशतकम्
(२१) केचन तान्त्रिकग्रन्थाः

## ४. केषाञ्चित् प्रमुखग्रन्थानां परिचयः

(i) **मन्दारमञ्जरी -**

गद्यकाव्यस्याऽस्य रचनायां विश्वेश्वरेण बाणस्य सरणिरनुसृता। पाण्डित्यप्रदर्शनेऽव-बोधकाठिन्ये चेयं कथाकृतिः कादम्बरीकथामप्यतिशेते। टीकां विनाऽस्या अवबोधो नाऽतिसुकरः। तारादत्तपण्डितेन मन्दारमञ्जर्याष्टीका १८९५ तमे वैक्रमाब्दे लिखिता। कथेयं द्वयोर्भागयोर्विभक्ता - पूर्वार्द्ध उत्तरार्द्धश्च। पूर्वार्द्धस्तु विश्वेश्वरपाण्डेयविरचितो गण्यते, परन्तूत्तरार्द्धस्तस्य केनचिच्छिष्येण पूर्णतां नीत इति प्रसिद्धिः। शिष्यस्य नामाऽपि न विज्ञायते। उत्तरार्द्धपाण्डुलिप्यन्तिमपत्राणि विलुप्तानीति तानि नोपलभ्यन्ते। अतस्तन्नामाऽविदितं बभूव।

(ii) **वैयाकरणसिद्धान्तसुधानिधिः -**

वैयाकरणसिद्धान्तसुधानिधिग्रन्थे पाणिनीयाष्टाध्याय्याः सूत्रक्रमेण भाष्यं वर्तते। भाष्यस्याऽस्य लेखने विश्वेश्वरपाण्डेयः पातञ्जलमहाभाष्यमनुचकार। भाष्यस्याऽस्य साहाय्येन पाणिनीयसूत्राणि सुखावबोधक्षमाणि भवन्ति। ग्रन्थस्याऽस्य त्रयोऽध्याया एव प्राप्याः। प्रकाशनमेतेषां चौखम्बा ग्रन्थमाला वाराणसीति संस्थया विहितम्। विशालकायेऽस्मिन् त्रयाणामध्यायानामेव विस्तारः १५१९ पृष्ठपरिमितो वर्तते। अत्र ग्रन्थे लेखकेन वेदव्याकरण-न्यायवेदान्तमीमांसासाहित्यविषयकग्रन्थाः सन्दर्भरूपेणोपन्यस्ताः।

(iii) **आर्यासप्तशती -**

चारुरुचिरसौन्दर्यरमणीयेयं सप्तशती आर्याछन्दसि ७६४ छन्दःपरिमिता वर्तते। अत्र कविर्देवगुरुकवीनभिवन्द्य नृपं प्रशशंस। तदनन्तरमकारादिवर्णक्रमेणाऽऽर्याछन्दसि पद्यानां रचना वर्तते।

## ५. प्रमुखकाव्यशास्त्रीयग्रन्थानां परिचयः

### (i) अलङ्कारकौस्तुभम् -

विश्वेश्वरपाण्डेयविरचितमलङ्कारकौस्तुभमनुपमं गौरवसम्भृतमतिमहनीयं पुस्तकं विद्यते। ग्रन्थोऽयं काव्यशास्त्रस्याऽन्तिमः प्रामाणिकोऽवगन्तव्यः। ग्रन्थेऽस्मिन् शास्त्रकारेण रसगुणदोषरीत्यलङ्कारादीनां काव्याङ्गानां सम्यग्गहनं विवेचनमतिविस्तरेण विहितम्। विषयप्रस्तुतिरियं मम्मटविश्वनाथजगन्नाथादीनाचार्यानप्यतिशेते। विश्वेश्वरस्येदं विश्लेषणं नव्यन्यायसिद्धान्तानामाश्रयेण सञ्जातम्।

अलङ्कारकौस्तुभस्य परमं वैशिष्ट्यं वर्तते तस्य ह्यलङ्कारनिरूपणम्। अत्र लेखकेन स्थाने स्थानेऽप्पयदीक्षितस्य पण्डितराजस्य च जगन्नाथस्य मतयोः खण्डनं कृतम्। ग्रन्थस्याऽस्य विस्तारोऽनेनैव तथ्येनाऽनुमीयते, यदत्रोपमायाः स्वरूपस्य भेदानाञ्चैव व्याख्या पञ्चाशदुत्तरशतैकपृष्ठेषु लेखकेन विहिता। ग्रन्थोऽयं विशिष्टप्रौढविद्वज्जन- प्रसादनाय लेखकेन लिखितो न तु सामान्याध्येतृभ्यः। बालकानां सुखावबोधाय विश्वेश्वरोऽ- लङ्कारमञ्जरीं लिलेख। तेनाऽलङ्कारकौस्तुभं नानापक्षविभावनकुतुकं प्रोक्तम्।[१] अभिप्रायोऽयं विद्यते, यदस्मिन् ग्रन्थेऽलङ्कारनिरूपणे विश्वेश्वरेण विभिन्नमतानि समीक्ष्य स्वमतं संस्थापितम्। ग्रन्थस्याऽस्य स्वोपज्ञनाम्नी टीका विश्वेश्वरेण स्वयं लिखिता।

### (ii) अलङ्कारमुक्तावली -

यथा प्रागुक्तमलङ्कारकौस्तुभाभिधानं विशालकायं काव्यशास्त्रीयं दुरवबोधं ग्रन्थं विरच्य विश्वेश्वरपाण्डेयेन बालकानां सुखावबोधायाऽलङ्कारमुक्तावली रचिता।[१] अलङ्काराणां लक्षणान्युदाहरणानि चैवाऽत्र प्राचुर्येण वर्तन्ते, तेषां समीक्षा वा विवेचनं वा स्वल्पमेवाऽस्ति। लेखकेनाऽलङ्कारकौस्तुभे प्रोक्ता एव कारिकाः ग्रन्थेऽस्मिन् सन्निवेशिताः। अत्रैकोनपञ्चाशत् कारिकाः विद्यन्ते। कारिकासु लेखको लक्षणानि प्रस्तूय तदनन्तरमुदाहरणेषु तेषां विवृतिमाह।

### (iii) अलङ्कारप्रदीपः -

ग्रन्थेऽस्मिन्नलङ्कारप्रदीपे विश्वेश्वरेण ह्यर्थालङ्काराणां निरूपणमतिसुबोधरूपेण कृतम्। ग्रन्थोऽयमपि बालकानां सुखावबोधाय वर्तते, येन तेऽर्थालङ्कारान् सुखेनाऽवगच्छेयुः। अस्मिन् ग्रन्थे प्रथमं तावत् सूत्ररूपेणाऽलङ्काराणां लक्षणानि वर्तन्ते, तदनन्तरं सूत्राणां स्वल्पीयसी व्याख्याऽस्ति। तदनन्तरञ्चोदाहरणानि प्रस्तूय शास्त्रकृता सूत्राणां विवृतिर्निरूपिता। उदाहरणश्लोकाश्चाऽत्र प्रायशो ग्रन्थकाररचिता एव सन्ति।

---

१. नानापक्षविभावनकुतुकमलङ्कारकौस्तुभं कृत्वा।
सुखबोधाय शिशूनां क्रियते मुक्तावली तेषाम्।। अलङ्कारमुक्तावली-कारिका -२

(iv) रसचन्द्रिका -

रसचन्द्रिकायां लेखको नायकनायिकाभेदान् तत्स्वरूपाणि च प्रस्तूय परिष्कृत-लक्षणैरुदाहरणैश्च तेषां निरूपणं समीक्षणञ्च व्यदघात्। अथ चाऽत्र रसादीनां विस्तृतं विवेचनं विद्यते।

(v) कवीन्द्रकण्ठाभरणम् -

कवीन्द्रकण्ठाभरणं विश्वनाथपाण्डेयो विदग्धमुखमण्डनग्रन्थमनुसृत्य लिलेख। अत्र शब्दालङ्काराणां निरूपणप्रसङ्गे चित्रकाव्यानां सुचारु, मनोहरं चित्ताकर्षकरं प्रामाणिकञ्च विवेचनमस्ति। प्रहेलिकानां चित्रालङ्काराणाञ्चाऽवबोधनार्थं ग्रन्थोऽयं महतीमुपयोगितां धत्ते। ग्रन्थस्याऽस्य रचनाप्रसङ्गे लेखकेन प्रोक्तम् - प्राचीनाचार्याः सुविचार्य यान् गौरवास्पदान् ग्रन्थान् प्रणिन्युस्तानेवाऽहमनुसरामि। विद्वज्जनाः न मामुपहसेयुः।[1]

उपर्युक्तेन विवरणेन ग्रन्थानाञ्च संक्षिप्तेन परं सम्यग् विवेचनेन विश्वेश्वरस्य पाण्डित्यप्रतिभापरिश्रमाणां महत्त्वं सपद्येव विशदीभवति। असौ विश्वेश्वरो महान् विचारको दार्शनिकः कवित्वप्रतिभासमन्वितश्चाऽस्त्येव नायं संशयविषयः। अथ चाऽलङ्कारशास्त्र-(काव्यशास्त्र) विकासेऽपि तस्य दायभागो न स्वल्पः। विश्वेश्वरपाण्डेयकृतीनामध्ययनं विना काव्यशास्त्रेतिहासस्याऽध्ययनमपूर्णमेव मन्तव्यम्।

---

१. यदभिहितं बहुमहितं प्राचीनाचार्यैर्विचार्यैव।
अनुकुर्वन् किञ्चिद् बहुविद्भिर्नाहमुपहास्यः।।

# एकपञ्चाशोऽध्यायः

## नरसिंहकविः

### १. नरसिंहकवेर्महत्त्वम्

अष्टादशशताब्द्यां जातेन नरसिंहकविना नञ्जराजयशोभूषणग्रन्थस्य प्रणयनं कृत्वा महन्महत्त्वमधिगतम्। ग्रन्थोऽयं शास्त्रमपि वर्तते काव्यमपि च। अतो नरसिंहकविः शास्त्रकारस्य काव्यकारस्य च द्वयोर्महनीयं महत्त्वमपेक्षते। नरसिंहकविराश्रयदातारं नञ्जराजं प्रशंसितुं प्रसादयितुञ्च नञ्जराजयशोभूषणं प्रणिनाय। अस्य ग्रन्थस्य वैशिष्ट्यं वर्तते -

काव्यशास्त्रतत्त्वानि सम्यग् विवेच्य नरसिंहकविः नञ्जराजप्रशंसायां स्वरचितश्लोकानुदाहरणरूपेण प्रास्तौत्। राज्यप्रशासनेन नरसिंहोऽयं कविरभिनवकालिदास इत्युपाधिनाऽपि समलङ्कृतः। अस्मिन् ग्रन्थे नरसिंहकविरात्मानं नवकालिदासं नञ्जराजञ्च नवभोजराजमघोषयत्।[1]

### २. नरसिंहकवेर्जीवनवृत्तं समयश्च

राज्याश्रयमापन्नो नरसिंहकविर्नञ्जराजस्य राजसभासदस्योऽवर्तत। नञ्जराजस्य जनको वीरराजो महीशूर (मैसूर) जनपदाधिपस्य सर्वाधिकारिपदं सुशोभितञ्चक्रे। तस्य द्वौ भ्रातरौ देवराजवोढ्ढराजावपि महीशूरनरेशस्य राज्ये महदुच्चपदाधिकारिणावास्ताम्।

महीशूरजनपदे कृष्णराजद्वितीयस्य (चिक्काकृष्णराजस्य) शासनं १७३४-१७६६ ख्रिष्टाब्दपर्यन्तमवर्तत। १७३९ तमे ख्रिष्टाब्देऽसौ नञ्जराजं सर्वाधिकारिपदे नियुयोज। ततो नञ्जराजेन सर्वे राज्याधिकाराः स्वहस्तगताः कृताः। समयोऽयं महासंघर्षमयोऽभवत्। फ्रांसदेशीया आंग्लदेशीयाश्च सैन्याधिकारिणः षड्यन्त्रकारिणो भारतीयराजनीतिसंघर्षेषु चञ्चुपातं कुर्वन्तो युद्धेषु संलग्नाः सम्मिलिताश्च बभूवुः। महाराष्ट्रशासकाः मुसलिमशासकाश्च महीशूरजनपदमाक्रान्तुं निरन्तरं तत्पराः कटिबद्धाश्चाऽवर्तन्त। हैदरअलीसेनापतेः साहाय्यमवाप्य नञ्जराजो ह्युपद्रवान् शान्ततामनयत्। परन्तु हैदरअली ह्ययं १७५९ तमे ख्रिष्टाब्दे नञ्जराजस्य राज्याधिकारानपहृत्य तं स्वाधिकारभूमावेव कोलूरग्रामे सीमितञ्चकार।

एवञ्च नञ्जराजः १७३९-१७५९ ख्रिष्टाब्दपर्यन्तं विंशतिवर्षं यावन्महीशूरजनपदस्य शक्तिमत्तमो राज्याधिकारी समवर्तत। कतिपयसमयानन्तरमेव १७६६ तमे ख्रिष्टाब्दे हैदरअली कृष्णराजद्वितीयमपि राज्यधिकारेभ्यः परिच्याव्य सर्वान् राज्याधिकारान् निजहस्तगतानकरोत्।

---

१. श्रीनञ्जराजो नवभोजराजो नृसिंहसूरिर्नवकालिदासः।
परस्परान्तस्थितभावरीतिर्विज्ञायते येन परस्पराभ्याम्॥

नञ्जराजयशोभूषण - षष्ठो विलासः - पृ० ८६

अस्मिन् समये निजामशाहो महाराष्ट्रराज्याधिकारिणश्च महीशूरजनपदं पुनः ह्याचक्रमुः। अस्मिन् समये हैदरअली व्यचिन्तयत् - आक्रमणेष्वेतेषु नञ्जराजो ध्रुवं षड्यन्त्रकारी वर्तते। १७७१ तमे ख्रिष्टाब्दे केनचिद् व्याजेन श्रीरङ्गपट्टने निमन्त्रितो नञ्जराजस्तेन कारागारे निबद्धः। अस्मिन्नेव कारागारेऽसौ १७७३ तमे ख्रिष्टाब्दे दिवङ्गतो बभूव।

नञ्जराजो न केवलं वीरो राजनीतिज्ञो निपुणशासकश्चाऽभवत् साहित्यिकरुचिरसौ निपुणकविरप्यासीत्। तस्याऽष्टादश कृतयः प्रसिद्धाः वर्तन्ते -

(१) सङ्गीतगङ्गाधरम्
(२) हालास्यमाहात्म्यम्
(३) शिवभक्तिविलासः
(४) काशीमहिमार्थदर्पणम्
(५) ककुद्गिरिमाहात्म्यम्
(६) काशीकाण्डम्
(७) शिवगीता
(८) गरलपुरीमाहात्म्यम्
(९) शिवधर्मोत्तरम्
(१०) विघ्नेश्वरव्रतकल्पः
(११) मार्कण्डेयपुराणम्
(१२) शिवभक्तिमाहात्म्यम्
(१३) भद्रगिरिमाहात्म्यम्
(१४) भारतम्
(१५) हरदत्ताचार्यमाहात्म्यम्
(१६) हेतुमहिमादर्शः
(१७) शैवधर्मः
(१८) हरिवंशः

ग्रन्थेष्वेतेषु सङ्गीतगङ्गाधरपुस्तकं संस्कृतभाषानिबद्धं वर्तते। शेषाणि च पुस्तकानि कन्नडभाषानिबद्धानि वर्तन्ते।

नरसिंहकविरस्यैव राज्याधिकारिणो नञ्जराजस्याऽऽश्रयं लेभे। कविना शास्त्रकारेणैतेन यद्यपि स्ववंशपरिचयादिकं न सूचितं तथापि नञ्जराजयशोभूषणस्य केचिदंशास्तस्य परिचयं यथाकथञ्चित् प्रस्तुवन्ति।

नरसिंहः सनगरकुलोत्पन्नो ब्राह्मणोऽविद्यत। सनगरवंशीया ब्राह्मणाः वर्तमानसमयेऽपि बैंगलूरनगरे निवसन्ति। शिवरामसुधीः नरसिंहस्य कवेरस्य जनकोऽवर्तत।[1] प्राचीनविवरणैः प्रतीयते यन्नरसिंहेन स्वजनकादेव शास्त्राण्यधीतानि। नञ्जराजयशोभूषणस्य प्रतिविलासान्तं कविना स्वजनकः सादरं स्मृतः शिवावताररूपेण चाऽसौ वन्दितः।[2] नरसिंहस्याऽन्योऽध्यापको योगानन्दो बभूव। प्रथमविलासारम्भे नरसिंहेन सोऽपि स्तुतः।[3] नरसिंहकवेर्मित्रमासीत् तिरुमलकविः। नञ्जराजयशोभूषणे तस्याऽप्युल्लेखो विद्यते। मालूरवास्तव्योऽसौ तेनाऽभिनवभवभूतिः प्रोक्तः।[4]

नञ्जराजयशोभूषणग्रन्थस्य रचना नरसिंहकविना नञ्जराजस्य जीवनकाल एव कृता। अतो द्वयोः समसामयिकत्वं सिद्धम्। अनेन हेतुना नरसिंहकवेः सभयोऽष्टादशशताब्दीमध्यकालीनोऽवगन्तव्यः।

## ३. नरसिंहकवेः कृतयः

नरसिंहकवेरेकैव कृतिरुपलभ्यते - नञ्जराजयशोभूषणम्। ग्रन्थेऽस्मिन् पर्यालोचनविषयानसौ लेखको विवृतिमुदाहरणैः स्वकृतैः प्रतिपादयामास। स्वरचितोदाहरणश्लोकेषु नरसिंहेन स्वाश्रयदातुः नञ्जराजस्य स्तुतिः निबद्धा।

## ४. नञ्जराजयशोभूषणम्

सप्तसु विलासेषु विभक्ते नञ्जराजयशोभूषणे नरसिंहेन विषयविभाजनं सम्यग्रूपेण विहितम्। प्रतिविलासं विषयवस्तु निम्नानुक्रमेण प्रस्तूयते -

(i) **प्रथमो विलासः -**

प्रथमे विलासे लेखकेन नायकानां नायिकानाञ्च भेदाः गुणाश्च वर्णिताः।

(ii) **द्वितीयो विलासः -**

दीर्घकाये द्वितीये विलासे प्रथमं तावद् वाचकलाक्षणिकव्यञ्जकानां त्रिविधशब्दानां वाच्यलक्ष्यव्यङ्ग्यानां त्रिविधार्थानामभिधालक्षणाव्यञ्जनानां त्रिविधशब्दवृत्तीनां निरूपणं लेखकेन कृतम्। ततः कैशिक्यादीनां वृत्तीनां वैदर्भीगौडीपाञ्चालीनां रीतीनां विवेचनमस्ति। तदनन्तरं ध्वनिं प्रमाणीकृत्य काव्यभेदा उत्तममध्यमाधमाः प्रोक्ताः।

---

१. शिवरामसुधीसूनोर्नरसिंहकवेः कृतिः। नञ्जराजयशोभूषणस्य प्रथमविलासस्य प्रारम्भे

२. श्रीपरमशिवावतारशिवरामदेशिकचरणारविन्दानुसन्धानमहिमसमासादितनिःसंशयदैनन्दिनप्रबन्धनिर्वाणसाहसिकनिखिलविद्वज्जनलालनीयसरससाहित्यसम्प्रदायप्रवर्तकनरसिंहकविविरचिते नञ्जराजयशोभूषणे प्रतिविलासान्ते

३. योगानन्दयतीन्द्राय सान्द्राय गुरवे नमः। नञ्जराजयशोभूषणस्य प्रथमविलासस्य प्रारम्भे

४. मालूरतिरुमलकवेरभिनवभवभूतिनामविरुदस्य।
सुहृदा नृसिंहकविना कृतिरकृत नवीनकालिदासेन।। नञ्जराजयशोभूषणे - षष्ठविलासान्ते

**(iii) तृतीयो विलासः -**

तृतीये विलासे प्रथमं तावद् ध्वनेः भेदाः वर्णिताः सन्ति तदनन्तरञ्च गुणीभूतव्यङ्ग्यस्य। ततः महाकाव्यस्योपकाव्यस्य क्षुद्रकाव्यस्य च लक्षणानि भेदांश्च शास्त्रकारो व्याचख्यौ।

**(iv) चतुर्थो विलासः -**

चतुर्थो विलासो वर्तते रसविवेचनात्मकः। अत्र रसभावस्थायिभावविभावानुभाव-सात्त्विकानुभावव्यभिचारिभावानां शृङ्गारचेष्टानां शृङ्गाराद्यवस्थानां स्वरूपाणि भेदांश्च लेखको विस्तरेण न्यरूपयत्।

**(v) पञ्चमो विलासः -**

पञ्चमे विलासे प्रथमं तावत् पदवाक्यार्थदोषाः व्याख्याताः सन्ति। तदनन्तरं गुणानां निरूपणं लेखकेन कृतम्।

**(vi) षष्ठो विलासः -**

षष्ठे विलासे नाट्यसम्बन्धिनां तत्त्वानां विवेचना विद्यते। स्वाश्रयदातृनञ्जराजप्रशंसायां विलासोऽयं ग्रन्थकारेण नाटकरूपेणैव प्रस्तुतः। नाटकतत्त्वानां व्याख्यां कृत्वा तत्त्वविवृत्यै लेखकः स्वरचितोदाहरणानि प्रास्तौत्। तेषूदाहरणेषु नञ्जराजं नायकं परिकल्प्याऽसौ तं प्रशशंस।

**(vii) सप्तमो विलासः -**

सप्तमे विलासे शब्दालङ्काराणामर्थालङ्काराणाञ्च सुविशदं विस्तृतं विवेचनमस्ति।

नरसिंहकवेः कृतिरियं नञ्जराजयशोभूषणं पूर्णरूपेण विद्यानाथकृतप्रतापरुद्रयशोभूषणेन प्रभाविता वर्तते। ग्रन्थयोजनानिबन्धनमुदाहरणानाञ्च परिकल्पनं प्रायशो विद्यानाथमनुसरति। प्रतापरुद्रयशोभूषणस्याऽनेकानि लक्षणान्युदाहरणानि च नरसिंहः निजग्रन्थे याथार्थ्येन न्यवेशयत्।

नञ्जराजयशोभूषणग्रन्थरचनायां नरसिंहस्य स्वकीयानि वैशिष्ट्यानि संलक्ष्यन्ते। ध्वनिकाव्यभेदनिरूपणेऽसौ निजमौलिकत्वं प्रादर्शयत्। अलङ्काराणां निरूपणे तस्य मौलिकत्वमुत्प्रेक्षालङ्कारविवेचने विशदीभवति। स्वातन्त्र्येणालङ्कारमेनं निरूपयन् नरसिंहोऽस्य षण्णवतिभेदान् प्रादर्शयत्। तथाभूता सूक्ष्मविवेचनेयमन्यत्र नाऽवलोक्यते।

प्रथमोऽध्यायः

## काव्यात्मतत्त्वम्

काव्यस्यात्मा ध्वनिरिति प्रतिपादयन्नाचार्य आनन्दवर्धनो ध्वनिमेव काव्ये ह्यात्मतत्त्वमनुसन्दधौ। विचारणीयमस्माभिरत्र यत् किमिदमात्मतत्त्वं काव्येषु सहृदय-हृदयग्राह्यमिति।

### १. काव्यस्यात्मतत्त्वानुसन्धानम्

काव्यशास्त्राध्येतॄणामनुसन्धानविषयोऽयं किमिदं काव्येष्वात्मतत्त्वं यद्विना काव्यं काव्यं न भवति। आत्मतत्त्वमेव यथा शरीरे मुख्यतमं, ह्यात्मानं विना शरीरं गतिविधिरहितं निश्चेतनमस्तित्वशून्यञ्च विद्यते, अथ च वपुषः सकलमाकर्षणमात्मतत्त्वेनैव सम्भवति, तथैव काव्येऽपि किञ्चित्तथाविधं तत्त्वं नियतमात्मस्थानीयं विद्यते। तेनाऽऽत्मतत्त्वेनैव तत् काव्यमित्युच्यते।

यथा दर्शनशास्त्रे ह्यात्मतत्त्वान्वेषणं तदनुभवश्च परमो ध्येयोऽध्येतॄणां, तेनैव च मोक्षाधिगमसम्भवस्तथैव काव्यशास्त्रेऽप्यात्मतत्त्वान्वेषणं तदनुभवश्च परमो ध्येयः सहृदयानाम्। तेनैव साहित्यिकानन्दानुभूतिर्जायते। काव्यशास्त्ररचनारम्भयुगादेवाऽऽचार्यास्तस्य काव्यतत्त्वस्या-ऽनुसन्धाने प्रयासरता अवर्तन्त।

आचार्यैर्विविधमतावलम्बिभिः काव्याङ्गेष्वन्यतमं किमपि तत्त्वं काव्यात्मरूपेण निर्धारितम्। अनेनैव हेतुना काव्यशास्त्रस्येतिहासे विभिन्नसम्प्रदायानामाविर्भावो बभूव।

यथा दर्शनशास्त्रे शरीरस्य विभिन्नतत्त्वान्यात्मरूपेणाऽऽचार्याः प्रतिपादितवन्तः, केचन स्थूलशरीरमपरे हीन्द्रियाणि, अन्ये मनः, परे प्राणान्, कतिपये बुद्धिमितरे च परमं सूक्ष्मचैतन्यमात्मानं प्राहुस्तथैव काव्यशास्त्रेऽपि परमात्मतत्त्वस्य विवेचना काव्यशास्त्रकृद्भिराचार्यै-र्विहिता। केचनाऽऽचार्याः रसमपरेऽलङ्कारमन्ये रीतिं परे वक्रोक्तिमितरे ह्यौचित्यमन्ये च ध्वनिमेव काव्यात्मानं प्राहुः। एवञ्च काव्यगतविभिन्नतत्त्वानां काव्यात्मरूपेण प्रतिपादनादेव हेतोः काव्यशास्त्रस्येतिहासेऽनेकेषां सम्प्रदायानां प्रादुर्भावो बभूव।

सहस्रद्वयवर्षकल्पपूर्वं भरतो मुनिर्नाट्यशास्त्रग्रन्थं विरच्य काव्यशास्त्ररचनामाविर्भाव-यामास। मुनिरसौ तदनन्तरञ्चाऽनेके काव्यशास्त्रकर्तारः काव्याङ्गविश्लेषणं विधाय काव्यशास्त्रीय-सिद्धान्तानां निर्धारणञ्चक्रुः। भरतमनु काव्यशास्त्रस्येतिहासेऽनेकैराचार्यैरनुसन्धानं विहितं यत् काव्येषु किञ्चिदीदृशं तत्त्वं मूलभूतं विद्यते, यत्प्रति सहृदयजना आकर्षणमनुभवन्ति

काव्यानन्दञ्चाऽऽस्वादयन्ति। येनाऽऽचार्येण यत्काव्याङ्गं प्रति तथाभूतमाकर्षणमनुभूतं तेन तदेव काव्याङ्गं काव्यस्याऽऽत्मरूपेण प्रतिष्ठापितम्।

केचन आचार्याः काव्येषु प्रमुखं तत्त्वं रसमन्वभवन्। काव्यरचनायाः मुख्यतम उद्देश्यो रसनिष्पादनमेव वर्तते। रसमास्वाद्यैव सहृदयजना आह्लादमनुभवन्ति। अतो रस एव काव्यस्यात्मा। अन्य आचार्याः मुख्यतमं सहृदयहृदयाकर्षकरमाह्लादजननं तत्त्वमलङ्कारमाचचक्षिरे। शब्दार्थशरीरं तावत्काव्यम्। शब्दार्थालङ्करणसमर्था अलङ्कारा एव काव्यस्यात्मेति तेषां निर्णयः। अपरे मनीषिणः प्राहुः - पदसंघटनैव काव्यसौन्दर्यहेतुः। पदसंघटना रीतिः। अतः रीतिरेव काव्यस्याऽऽत्मा। परे जगदुः - काव्येषु वैचित्र्यमेव सहृदयहृदयानामाह्लादकत्वस्याऽऽकर्षणस्य च हेतुः। वैचित्र्यसंयुतोक्तिरेव वक्रोक्तिः। अथ च वैदग्ध्यभङ्गीभणितिर्वक्रोक्तिः। सा वक्रोक्तिरेव काव्यस्याऽऽत्मा। केचन आचार्या औचित्यमेव काव्यस्याऽऽत्मानं जगदुः। काव्येष्वौचित्यमेव परमं रहस्यं सहृदयहृदयाह्लादकरं तत्त्वम् काव्यस्याऽऽत्मा। अथ चाऽन्ये मनीषिणः प्रतिपादयामासुः - काव्येषु सौन्दर्यं व्यङ्ग्यार्थेनैव सम्भवति। व्यङ्ग्यार्थप्रधानं काव्यं ध्वनिरित्यभिधीयते। स ध्वनिरेव काव्यस्याऽऽत्मा।

एवंविधासु विमतिषु विद्यमानासु विचारणीयोऽयं विषयो मतिमतां, किं तत्त्वं काव्यस्याऽऽत्मा येन सहृदयजनाः काव्येष्वानन्दमनुभवन्ति।

## २. काव्यशास्त्रस्य सम्प्रदायाः

उपर्युक्तविवेचनेन सुस्पष्टमेव यद् भरतो मुनिस्तदनन्तरञ्चाऽनेके मनीषिण, काव्यशास्त्राचार्या अनेकशताब्दिपर्यन्तं काव्येषु परमरहस्यस्य सहृदयाह्लादकरतत्त्वस्यानुसन्धानञ्चक्रिरे। विभिन्नैराचार्यैः काव्यानां विभिन्नानि तत्त्वानि काव्यात्मरूपेण प्रतिपादितानि। अतः काव्यशास्त्रस्येतिहासेऽनेकेषां सम्प्रदायानां प्रादुर्भावो बभूव। सम्प्रदायास्ते षट्संख्यकाः वर्तन्ते -

१. रससम्प्रदायः
२. अलङ्कारसम्प्रदायः
३. रीतिसम्प्रदायः
४. वक्रोक्तिसम्प्रदायः
५. औचित्यसम्प्रदायः
६. ध्वनिसम्प्रदायः

आभरतात् पण्डितराजजगन्नाथविश्वेश्वरपाण्डेयपर्यन्तं सर्व एव काव्यशास्त्रकृतः षट्स्वेतेषु सम्प्रदायेषु कञ्चिदेकं पक्षं परिपोष्य, प्रमाणगर्भितयुक्तिभिस्तं समर्थयामासुः। इत्थञ्च आचार्यविशेषः कस्यचिदेकस्य सम्प्रदायस्य समर्थकस्तदन्तर्गतो लोके प्रथितो बभूव।

वस्तुतः काव्यात्मप्रतिपादनविषये सम्प्रदायपदप्रयोगो नातिसमुचितः। पक्षपदप्रयोग एव समुचिततरः। अलङ्कारसर्वस्वग्रन्थटीकाकारेण समुद्रबन्धेन पक्षपदप्रयोग एव विहितः। परं प्राचीनसंस्कृतसाहित्ये सम्प्रदायपदप्रयोगबाहुल्याद् वर्तमानयुगे च समीक्षकैस्तत्प्रयोग-स्वीकरणादत्राऽपि सम्प्रदायपदप्रयोगः स्वीकृतः। रसालङ्काररीतिवक्रोक्त्यौचित्यध्वनीनां व्याख्यानाय सम्प्रदायपदप्रयोगोऽत्र विधीयते।

काव्यात्मतत्त्वानुसन्धानाय काव्यसमीक्षास्वनेकासु विभिन्नकालेषु कृतासु नवनव-सम्प्रदायानामाविर्भावः कथं बभूव, कश्चाधारस्तत्र गृहीत इति तथ्यस्य विश्लेषणमलङ्कार-सर्वस्वटीकाकारेण समुद्रबन्धेन विस्तरेण कृतम्। तेन लिखितम् -

**"इह विशिष्टौ शब्दार्थौ काव्यम्। तयोश्च वैशिष्ट्यधर्ममुखेन व्यापारमुखेन व्यङ्ग्यमुखेन चेति त्रयः पक्षाः। आद्येऽप्यलङ्कारतो गुणतो वेति द्वैविध्यम्। द्वितीयेऽपि भणितिवैचित्र्येण भोगकृत्त्वेन चेति द्वैविध्यम्। इति पञ्चसु पक्षेषु प्रथम उद्भटादिभिरङ्गीकृतोः, द्वितीयो वामनेन, तृतीयो वक्रोक्तिजीवितकारेण चतुर्थो भट्टनायकेन पञ्चमश्चाऽऽनन्दवर्धनेन।**[1]

अभिप्रायश्चाऽत्राऽयमेव यद् विशिष्टौ शब्दाथविव काव्यम्। शब्दस्याऽर्थस्य च वैशिष्ट्यं त्रिविधं सम्भवति -

१. धर्मेण
२. व्यापारेण
३. व्यङ्ग्येन

धर्मस्य च वैशिष्ट्यमपि द्विविधं भवति -

१. अलङ्कारेण
२. गुणेन

व्यापारस्य च वैशिष्ट्यमपि द्विविधं भवति -

१. वक्रोक्त्या
२. भोजकत्वव्यापारेण

इत्थञ्च पञ्च पक्षाः विद्यन्ते -

१. अलङ्कारपक्षः
२. गुणपक्षः
३. वक्रोक्तिपक्षः
४. भोजकत्वपक्षः
५. व्यङ्ग्यपक्षः

---

१. अलङ्कारसर्वस्व - समुद्रबन्धकृतटीका - पृ० ३

अत्र प्रथमपक्षस्य प्रवक्तार उद्भटादयः, द्वितीयपक्षस्य प्रवक्ता वामनः, तृतीयपक्षस्य प्रवक्ता कुन्तकः, चतुर्थपक्षस्य प्रवक्ता भट्टनायकः पञ्चमपक्षस्य च प्रवक्ता आनन्दवर्धन इति ते प्रसिद्धिं प्राप्ताः।

काव्यात्मविश्लेषणविषये समुद्रबन्धप्रोक्तेषु पक्षेषु अलङ्कारपक्षेण अलङ्कारसम्प्रदायस्य, गुणपक्षेण वामनप्रोक्तरीतिसम्प्रदायस्य, वक्रोक्त्या कुन्तकप्रोक्तवक्रोक्तिसम्प्रदायस्य भोजकत्वव्यापारेण रससम्प्रदायस्य व्यङ्ग्येन च आनन्दवर्धनप्रोक्तध्वनिसम्प्रदायस्य सङ्केतो गृह्यते।

अत्रौचित्यसम्प्रदायस्य सङ्केतो न प्राप्यते। सम्भवतः समुद्रबन्धेन क्षेमेन्द्रस्यौचित्यसम्प्रदायस्य सिद्धान्ते न किञ्चिद् वैशिष्ट्यमनुभूतम्। परन्तु क्षेमेन्द्रस्य विचारसरणिर्न कथमप्युपेक्षणीया। क्षेमेन्द्रेण काव्यस्यात्मा ह्यौचित्यमेव प्रतिपादितः। सोऽपि सिद्धान्तो विचारणीयो वर्तते। न चाऽत्र काऽप्युपेक्षा समुचिता।

काव्यशास्त्रसम्बन्धिनां विभिन्नानां सम्प्रदायानामुत्पत्तिं स्थितिञ्च विश्लेष्य तदनन्तरं तेषां पृथक् पृथग् विवेचनाऽत्र प्रस्तोतुं समुचिता।

---

द्वितीयोऽध्यायः

## रससम्प्रदायः

### १. रससिद्धान्तस्य प्रवर्तनम्

काव्यशास्त्रस्येतिहासे रससिद्धान्तस्य प्रधानं प्रवर्तनं नाट्यशास्त्रे भरतमुनिकृतमुपलभ्यते। यद्यपि राजशेखरेण काव्यमीमांसाग्रन्थे लिखितम् -

**"रूपकनिरूपणीयं भरतः, रसाधिकारिकं नन्दिकेश्वरः" ।[१]**

तथापि नन्दिकेश्वरस्य न कोऽपि रसविषयको ग्रन्थो लभ्यते। वर्तमानसमये समुपलभ्यमाने भरतमुनिकृतनाट्यशास्त्रे रूपकनिरूपणीयं रसनिरूपणीयञ्च सर्वं लभ्यते। तत्र द्वयोरपि विषययोर्भरतमुनिना विवेचनं कृतम्। अतो रससिद्धान्तस्य प्रथमः प्रवर्तको भरतमुनिरेव मान्यः।

रसनिष्पत्तिविषये भरतो मुनिर्यान् सिद्धान्तान् स्थिरीचकार, तेषामेव व्याख्या विस्तरेणोत्तरवर्तिभिराचार्यैर्विहिता। भरतेन प्रतिपादितम् -

**" न हि रसादृते कश्चिदर्थः प्रवर्तते।"[२]**

अभिगुप्तेनाऽत्र व्याख्यातम् -

**" काव्येषु रस एव सूत्रस्थानीयत्वेन प्रतिभाति।[३]**

अथ चाऽसौ व्याचष्टे -

**"नाट्यमेव रसः। रससमुदाय एव नाट्यम्।[४]**

नाट्यशास्त्रे भरतेन रसनिरूपणं यद्यपि रूपकहेतुनैव विहितमथ च "अष्टौ नाट्यरसा" इत्युक्त्वा अष्टौ नाट्यरसाः प्रतिपादितास्तथापि भरतसमयं यावत् काव्यनाट्ययोस्तथाविधं शास्त्रीयं विभाजनं न प्रतिष्ठितमासीत्। द्वे अपि पदे समानार्थके गण्येते स्म। नाट्येभ्यः काव्यपदव्यवहारं भरतो बहुशश्चकार, अभिनवगुप्तश्च तं समर्थयामास। अयमेव हेतुरासीद्

---

१. काव्यमीमांसा पृ० ४-५

२. भरतनाट्यशास्त्र अध्याय - ६

३. एक एव परमार्थतो रसः सूत्रस्थानीयत्वेन प्रतिभाति। उपर्युक्ते अभिनवभारती टीका

४. नाट्यात् समुदायरूपाद् रसाः। यदि वा नाट्यमेव रसाः। रससमुदायो हि नाट्यम्। न नाट्य एव च रसाः काव्येऽपि।। नाट्यशास्त्र षष्ठाध्यायस्य "अष्टौ नाट्ये रसाः स्मृताः" सूत्रेऽभिनवभारतीटीका।

यदुत्तरवर्तिन आचार्याः भरतप्रोक्तं रससिद्धान्तं विकसितं पल्लवितञ्च व्यदधुः। रसश्च काव्येष्वनिवार्यतत्त्वरूपेण परिगणितः।

परन्तु भरतोत्तरवर्तिभिः प्राचीनैः भामहदण्ड्युद्भटप्रभृतिभिराचार्यैः काव्यनाट्ययोर्भेदः प्रतिपादितः। अतः रससिद्धान्तानामभिज्ञातारोऽपि ते नाट्येष्वेव रसतत्त्वस्याऽनिवार्यत्वं प्रकल्प्य काव्येष्वलङ्काराणामनिवार्यत्वं प्रकल्पयासुः। काव्येषु रसांश्च ते रसवदाद्यलङ्काररूपेण प्रकल्प्य तान् अलङ्कारानेव प्रतिपादितवन्तः।

## २. रसपदस्यानेकार्थत्वं प्राचीनसाहित्ये च रसपदप्रयोगः

प्राचीनसंस्कृतसाहित्ये रसपदप्रयोगो विभिन्नेष्वर्थेषु दरीदृश्यते। वेदवेदाङ्गब्राह्मणोपनिषदायुर्वेदरामायणमहाभारतादिसाहित्ये रसपदप्रयोगो विभिन्नेष्वर्थेषु मनीषिभिः कृतः। कोषग्रन्थेषु रसपदस्यार्थाः सन्ति –

आस्वादो जलं वीर्यं शृङ्गारादिकाव्यरसाः विषं द्रवः पारदो रागाः गृहं धातुः तिक्तादयः षड्भोजनरसाः परमात्मा चेति।[१]

काव्येषु रसपदेन शृङ्गारादयो रसा अवबुध्यन्ते। आयुर्वेदसाहित्ये रसपदं मधुरादिभोजनरसान् विषं पारदादिधातून् रसरूपशरीरधातुं द्रवत्वञ्चाभिव्यनक्ति। साररूपश्च पदार्थोऽपि रसपदेनाऽभिधीयते। वैदिकसाहित्ये, विशेषतस्तूपनिषत्सु परमात्माऽपि रसपदेनाऽभिव्यज्यते।

तैत्तिरीयोपनिषदि परमब्रह्म रसपदेन व्यवहृतं यतस्तल्लब्ध्वा जीव आनन्दमनुभवति।[२] शङ्कराचार्येण व्याख्यातम् – यथा मध्वादिभिर्लौकिकरसैर्मनुष्या आनन्दमनुभवन्ति, तथैव परमात्मरूपं रसमुपलभ्य योगिनोऽप्यानन्दं लभन्ते।

वैदिकसाहित्ये शृङ्गारादयः काव्यरसा अपि रसपदव्यवहाराः समुपलभ्यन्ते। शृङ्गारहास्यादिरसपदवाच्यानां प्रयोगो वैदिकसाहित्ये विद्यते तानि च पदानि साहित्यिकमनोभावान् निर्दिशन्ति। भरतस्तु स्वयं ब्रूते –

"नाट्यरचनायां सकला सामग्री ब्रह्मणा वेदेभ्यो गृहीता। विशेषेण रसानथर्ववेदादसौ जग्राह।[३]"

रसपदस्य निर्वचनमधोलिखितरूपेण विधीयते –

(१) रस्यत आस्वाद्यत इति रसः। ये पदार्था आस्वाद्यन्ते ते रसाः। एवञ्चाऽऽस्वाद्यमानाः पदार्थाः – परमात्ममधुरवस्तुसोमगन्धमध्वादिपदार्थाः रसपदव्यवहार्याः वर्तन्ते।

---

१. रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे।
बोले रागे गृहे धातौ तिक्तादौ पारदेऽपि च।। हेमकोष

२. रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति।। तैतिरीयोपनिषद् २.७

३. जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि।। भरतनाट्यशास्त्र १.१७

(२) रस्यतेऽनेनेति रसः। यैः पदार्थैरास्वादनं विधीयते ते रसाः कथ्यन्ते। अतः शब्दरागवीर्यशरीरादयो रसाः कथ्यन्ते।

(३) रसति रसयति वेति रसः। व्याप्यते व्याप्नोति यत्तत्वं तद् रसपदवाच्यं भवति, अतः पारदो जलं शरीरगतरसधातुः द्रवपदार्थाश्च रसपदेन व्यवह्रियन्ते।

(४) रसनं रस आस्वादः। आस्वादरूपः पदार्थो रसपदवाच्यो भवति। अतः शृङ्गारादीनि तत्त्वान्यास्वादरूपत्वाद् रसपदवाच्यानि भवन्ति।

उपर्युक्तनिर्वचनेषु प्रथमं चतुर्थं वा निर्वचनं साहित्यिकरसानभिव्यनक्ति। साहित्यरसा आस्वाद्यमाना आस्वादरूपा वा भवन्ति।

रससिद्धान्तं काव्यानाञ्च रसात्मकत्वं प्रतिपादयितुं वाल्मीकिरामायणं प्रायशः प्रमाणत्वेनोदाह्रियते। तमसातीरं स्नातुं सम्प्राप्तेन वाल्मीकिनाऽवलोकितम् - व्याधः कश्चित् काममोहितं पक्षिणं क्रौञ्चं शरविद्धञ्चकार। शोणितपरीताङ्गोऽसौ पक्षी भूमौ पपात। तस्य प्रिया क्रौञ्ची विलपन्ती वियति बभ्राम। घटनामिमामवलोक्य शोकद्रवीभूतस्य महर्षेः शोक एव काव्यरूपेण परिणतः।[1] आनन्दवर्धनेन स एव भावः काव्यात्मरूपेण प्रतिपादितः।[2] स्वयमपि तेन महर्षिणा वाल्मीकिना स्वकाव्ये प्रतिपादितम् -

"शोकार्तस्य तस्य कवेरसौ श्लोक एव काव्यरूपेण परिणतो नान्यथा भवितुमर्हति।[3]

रसेनैतेन काव्यसृष्टिसम्भावना सञ्जाता। अथ च वाल्मीकेरिदं रामायणं काव्यं संस्कृतभाषायाः प्रथममादिकाव्यमभिधीयते। करुणरसप्रधानेऽप्यस्मिन् काव्ये शृङ्गारहास्यवीररौद्र-बीभत्साद्भुतभयानकशान्ताः सर्वेऽपि रसा अङ्गरूपेणाऽवतिष्ठन्ते। काव्यरसानामिदं स्वरूपमेव काव्यशास्त्राचार्यैरखण्डस्वप्रकाशानन्दमयचिन्मयवेद्यान्तरस्पर्शशून्यब्रह्मास्वादसहोदरलोकोत्तर-चमत्कारप्राणरूपं व्याख्यातम्।

### ३. रसस्य काव्यशास्त्रीयं विवेचनं भरतोक्तं रससूत्रञ्च

रसस्वरूपं रसानुभूतिञ्च प्रथमं नाट्यशास्त्रप्रणेता भरतो मुनिर्व्यवैक्षीत्। नाट्यशास्त्रस्य षष्ठेऽध्याये रससूत्ररूपेणेदं विवेचनं प्रादुर्बभूव। उत्तरवर्तिनि युगे रससम्बन्धिनोऽन्येऽपि विचाराः विवेचना आलोचना वा प्रस्तुतीभूताः भरतस्य रससूत्रमेव प्रमाणीकृत्य ते व्याख्याताः। भरतस्य रससूत्रं वर्तते -

---

१. मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।। रामायण १.२.१५

२. काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।। ध्वन्यालोक १.५

३. शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा।। रामायण १.२.४०

**"विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्ति:"**

विभावानुभावव्यभिचारिभावानां संयोगाद् रसस्य निष्पत्तिजायते। भरतोत्तरवर्तिन आचार्या: रसनिष्पादने रससूत्रमिदमेवाऽऽधारीकृत्य स्वसिद्धान्तान् प्रतिपादयामासु:। अत्र विश्वनाथस्य[1] मम्मटाचार्यस्य चाऽभिमन्तव्ये प्रस्तूयेते। मम्मटस्त्वाह -

**कारणान्यथ कार्याणि सहकारीणि यानि च।**
**रत्यादे: स्थायिनो लोके तानि चेन्नाट्यकाव्ययो:।**
**विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिण:।।**
**व्यक्त: स तैर्विभावाद्यै: स्थायी भावो रस: स्मृत:।।**[2]

लोके रत्यादिस्थायिभावानां यानि कारणानि कार्याणि सहकारीणि च वर्तन्ते, यथा नायकनायिकादय आलम्बनकारणानि सन्ति, चन्द्रोदयचन्द्रास्तवसन्तोद्यानादीन्युद्दीपनकारणानि वर्तन्ते, भुजाक्षेपरोमाञ्चकटाक्षादीनि कार्याणि विद्यन्ते चिन्ताहर्षोद्विगादयो भावा: सहकारीणि भवन्ति। तान्येव काव्येषु नाट्येषु वा निबध्यमानानि विभावा अनुभावा व्यभिचारिभावाश्च कथ्यन्ते। तैर्विभावानुभावव्यभिचारिभावैरभिव्यक्त: स्थायिभाव एव रसपदवाच्यो भवति।

विश्वनाथस्यापि साहित्यदर्पणे रसनिष्पादनमेवंविधमेव वतंते -

**विभावेनाऽनुभावेन व्यक्त: सञ्चारिणा तथा।**
**रसतामेति रत्यादि: स्थायिभाव: सचेतसाम्।।**[3]

विभावेनाऽनुभावेन सञ्चारिभावेन चाऽभिव्यज्यमानो रत्यादिभाव: स्थायिभाव: सहृदयहृदयेषु रसभावमाप्नोति।

## ४. भरतरससूत्रस्य व्याख्या

भरतकृतनाट्यशास्त्रस्य रससूत्रमतिसरलं सुस्पष्टमपि व्याख्याकाराणां विविधविध-व्याख्याभिरतिक्लिष्टतां प्राप्तम्। रससूत्रस्य विभावानुभावव्यभिचारिपदानां व्याख्याने न काऽपि विमति:, परं संयोगनिष्पत्तिपदयोर्व्याख्याने काव्यशास्त्रविद्भिर्मतान्तराणि प्रस्थापितानि। व्याख्यानेष्वत्राऽभिनवगुप्तस्याऽभिमतं बहुविद्वज्जनसम्मितं प्रामाणिकञ्च प्रतिभाति। संयोगनिष्पत्तिपदयोस्तेन व्याख्या कृता -

**संयोगाद् = व्यङ्ग्यव्यञ्जकभावात्।**

---

१. सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मय:।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदर:।।
लोकोत्तरचमत्कारप्राण: कैश्चिदुदाहृत:।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रस:।। साहित्यदर्पण ३.२

२. काव्यप्रकाश ४.७-८

३. साहित्यदर्पण ३.१

**निष्पत्तिः = अभिव्यक्तिः।**

अभिनवगुप्तो नाट्यशास्त्रस्याऽभिनवभारतीटीकायां ध्वन्यालोकस्य च लोचनटीकायां स्वमन्तव्यानि प्रस्तुवन् भरतरससूत्रस्य प्राचीनटीकाकाराणां व्याख्यानां समीक्षणञ्चकार। अत्र भट्टलोल्लटशङ्कुकभट्टनायकानां त्रयाणां विदुषां व्याख्याकाराणां समीक्षा महत्त्वसंयुता विद्वज्जनविचारणीया च वर्तते। मम्मटादिभिराचार्यैः शास्त्रकृद्भिः स्वकृतिषु सर्वेषामेषामाचार्याणां व्याख्यानानि समीक्षितान्यथ चाऽभिनवगुप्तस्य मतं युक्तिसङ्गततमरूपेण प्रतिपादितम्। रसगङ्गाधरकृता पण्डितराजेन जगन्नाथेनाऽष्टौ व्याख्याः समुपस्थापिताः। रसस्वरूप-निष्पत्तिनिर्धारणे भट्टलोल्लटशङ्कुकभट्टनायकाभिनवगुप्तकृतानां रससूत्रव्याख्यानां महत्त्वमतितरामनुभूयते सहृदयजनैः। अतोऽत्र संक्षेपेण तासां व्याख्यानां प्रस्तुतीकरणमुपयोगितां धत्ते। भट्टलोल्लटशङ्कुकभट्टनायककृतग्रन्थेष्वनुपलभ्यमानेषु सत्स्वपि विरोधिमतावलम्बि-समीक्षकाभिनवगुप्तमम्मटादिकृतसमीक्षासु तेषां मतान्यवलोकयितुं पार्यन्ते। तेषां मतानां समीक्षा निम्नप्रकारेण प्रस्तूयते -

**(i) श्री भट्टलोल्लटः (उत्पत्तिवादः) -**

भट्टलोल्लटस्य मतमुत्पत्तिवादाभिधानेन प्रसिद्धमस्ति। तत्र संयोगनिष्पत्तिपदयोर्व्याख्या वर्तते -

**संयोगाद् = उत्पाद्योत्पादकसम्बन्धात्।**

**निष्पत्तिः = उत्पत्तिः**

व्याख्यायाः सारांशः संक्षेपेण प्रस्तूयते -

ललनादयो विभावा आलम्बनविभावा उद्यानादयश्चोद्दीपनविभावा वर्तन्ते। एतैर्विभावैः रामादिपात्रेषु रत्यादिभावानामुत्पत्तिरुद्बोधनं वा जायते। तदनन्तरं कटाक्षभुजक्षेपप्रभृतिभिः कार्यरूपैरनुभावैः रामादिपात्रगता रत्यादिस्थायिभावाः प्रतीतियोग्यतां दधति। ते च स्थायिभावाः लज्जाचिन्ताहर्षादिसञ्चारिभावैः परिपोष्यन्ते। इत्थं रत्यादिस्थायिभावाः नाट्येषु काव्येषु वा पात्रेषु वसन्ति। कस्मिंश्चिदप्यभिनेतरि रामादिरूपधारिणि रङ्गमञ्चेऽभिनयव्यापारपरायणे सति सामाजिकास्तस्मिन्नेव रामत्वमारोपयन्ति। तमेव राममित्यामनन्ति। इत्थञ्च रामादिपात्रगता रतिः नटेऽभिनेतरि प्रतीयमानाऽपि सामाजिकानां हृदयेषु परमं विशेषं चमत्कारमादधाना रसपदवीं धारयति।

व्याख्येयमेवं सरलीक्रियते -

यथा शुक्तावविद्यमानेऽपि रजते तद्रूपवशाद् दर्शकेषु रजतस्य भ्रान्तिर्भवति, तान्वाऽवलोक्य ते प्रसीदन्ते, तथैव, रामादिपात्रगतो रत्यादिभावोऽभिनेतृष्वविद्यमानोऽपि सामाजिकैस्तत्राऽनुभूयते। तस्मिन्नेव भ्रान्तिमयेऽनुभवे ते काव्यानन्दमनुभवन्ति।

भट्टलोल्लटकृतरससूत्रव्याख्याने काव्यशास्त्राचार्या उत्तरवर्तिनः कतिपयदोषान् समीक्षाञ्चक्रिरे। भट्टलोल्लटो रसस्थितिमनुकार्यगतां रामादिपात्रगतां वा प्रत्यापादयत्। अनुकार्येऽभिनेतर्यपि सा रसस्थितिर्न याथार्थ्यरूपा ह्यपित्वनुकरणमात्रमेव। अतः सामाजिकहृदयेषु तथा चमत्कारोत्पादनं कथं सम्भवति ? सामाजिकाः रसमास्वादयितुं न क्षमाः वर्तन्ते। यदि च कथमपि तत्र रसस्थितिः सम्भाव्यत एव, सा भ्रान्तिमात्रमेव भविष्यति। अतः काव्यस्य भ्रमोत्पादकत्वान्न सा रसानुभूती रसोत्पत्तिर्वा मान्या। एवं भट्टलोल्लटस्य रससूत्रव्याख्याने दोषाननुभूयाऽन्ये रससूत्रव्याख्यातारोऽन्येनैव प्रकारेण व्याख्यां प्रास्तुवन्।

(ii) **श्रीशङ्कुकः (अनुमितिवादः)**

शङ्कुकस्य रससूत्रव्याख्या ह्यनुमितिवादाभिधानेन प्रसिद्धा। असौ रसानुभूतिमनुमान-विषयिणीं प्रत्यापादयत्। शङ्कुकेन संयोगनिष्पत्तिपदयोर्व्याख्या कृता -

**संयोगाद् = अनुमाप्यानुमापकसम्बन्धात्**

**निष्पत्ति := अनुमितिः।**

मतस्याऽस्य व्याख्या निम्नरूपेण क्रियते -

रङ्गमञ्चेऽभिनयं सम्पादयन् कुशलोऽभिनेता सामाजिकैः रामोऽयमिति कल्प्यते। अतोऽत्र नटे रामस्य प्रतीतिर्विलक्षणं ज्ञानं वर्तते।

ज्ञानं चतुर्विधं भवति -

सम्यग्ज्ञानं मिथ्याज्ञानं संशयज्ञानं सादृश्यज्ञानञ्च। नटे रामस्य प्रतीतिश्चतुर्भ्योऽपि ज्ञानेभ्यो विलक्षणा। सामाजिकस्य तज्जानं न तु सम्यक्प्रतीतिर्न च मिथ्याप्रतीतिर्न संशयप्रतीतिर्न वा सादृश्यप्रतीतिः। इयं प्रतीतिर्वस्तुतश्चित्रतुरगन्यायेन चित्रतुरगप्रतीतिर्विद्यते। चित्रे तुरगमवलोक्य यथा तुरगेऽसत्यपि तुरगोऽयमिति ज्ञानं विधीयते, तथैवाऽभिनयकालेऽविद्यमानेऽपि रामेऽभिनेतुरभिनयसामर्थ्यात्तस्मिन् सामाजिकस्य रामप्रतीतिर्भवति।

एवं सामाजिकेन यदाऽभिनेतैव रामरूपेण कल्प्यते, तदा शिक्षाभ्यासकौशलसामर्थ्येना-ऽभिनेतुर्विभावानुभावव्यभिचारिभावाः कृत्रिमा अपि सामाजिकेन तेन न कृत्रिमाः कल्प्यन्ते। तद्द्वारेणैव तेनाऽभिनेतरि रत्यादिस्थायिभावा अनुमीयन्ते। रत्यादिभावानामियमनुमितिः शास्त्रोक्तानुमितिभ्यो विलक्षणा भवति। सामान्यशास्त्रोक्ताऽनुमितिः प्रत्यक्षज्ञानाश्रिता भवति, परमियमनुमितिः परोक्षज्ञानात्मिका वर्तते। इत्थञ्च रत्यादिस्थायिभावेषु तस्मिन्नेवाऽभिनेत-र्यविद्यमानेषु सत्स्वपि सामाजिकाः स्वहृदयनिहितवासनया तान् भावांस्तस्मिन्ननुमाययन्तो रसमास्वादयन्ति।

भावश्चाऽयमत्र -

कस्मिंश्चित् स्थानेऽसत्यपि धूमे यथा धूम्रिकादिकं धूम्रं मत्वा तद्धेतुना वह्निरनुमीयते, तथैवाऽभिनेतृष्वविद्यमानेष्वपि रत्यादिभावेषु तेषामभिनयकौशलेन कृत्रिमैरपि विभावैः रत्यादि-

स्थायिभावाः सामाजिकैरनुभूयन्ते। स्वसौन्दर्यबलादियमनुमितिः सामाजिकैरास्वाद्यमाना चमत्कारमुत्पादयन्ती रसदशां प्राप्नोति।

श्रीशङ्कुकस्याऽस्यां व्याख्यायामपि काव्यशास्त्रिणोऽन्येऽप्युत्तरवर्तिनो दोषाननेकानपश्यन्। ते प्रोचुः -

(क) शङ्कुकेन ये विभावादयो हेतुरूपेण प्रोक्तास्ते कृत्रिमाः कल्पनाप्रसूताश्च वर्तन्ते। अतोऽभिनेतृषु ह्यनुमितोऽपि रसो न चमत्कारजनको भवितुमर्हति।

(ख) प्रत्यक्षजाऽनुमितिरेव सहृदयजनहृदयेषु चमत्कारकारिणी भवति, नाऽन्या।

(ग) कृत्रिमत्वेन विज्ञातैर्विभावैः रत्यादिभावानामनुमितेरभावान्न रसानुभूतिः सम्भवा।

एवं शङ्कुकव्याख्यायां दोषाननुभूय भट्टनायकेन भरतरससूत्रव्याख्याऽन्येन विधिना प्रोक्ता।

(iii) भट्टनायकः (भुक्तिवादः) -

भरतरससूत्रव्याख्याप्रसङ्गे रसनिष्पत्तिं निरीक्षमाणो भट्टनायकः प्रथमं तावत् पूर्ववर्तिनामाचार्याणां मतान्यखण्डयत्। तदनन्तरमसौ स्वमतपोषणञ्चकार। रसनिष्पत्तिसम्बन्धे ह्युत्पत्त्यनुमित्यभिव्यक्तिसिद्धान्तान् निराकृत्य तेन निष्पत्तिपदस्याऽर्थो विहितः - भुक्तिरिति। तत्र संयोगनिष्पत्तिपदयोर्व्याख्या विद्यते -

**संयोगाद् = भोज्यभोजकसम्बन्धात्**

**निष्पत्तिः = भुक्तिः**

भट्टनायकस्य मतं भुक्तिवादाभिधानेन प्रसिद्धं बभूव। भट्टनायककृतमन्याचार्यविचारसरणि-खण्डनं मम्मटेन निम्नपदैः प्रकाशितम् -

**"न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यते।**

भट्टनायकेन प्रोक्तम् - रसस्थितिर्न तु तटस्थगता (पात्रगताऽभिनेतृगता वा) वर्तते न चाऽऽत्मगता (सामाजिकहृदयगता) वा भवति। यदि रसस्थितिः पात्रगताऽभिनेतृगता वा कल्प्यते, सा सामाजिकहृदयसम्बद्धा न संभवति। सामाजिकस्य तटस्थत्वान्निष्प्रयोजना सा। यदि च रसस्थितिरात्मगता (सामाजिकहृदयगता) कल्प्यते, व्यवस्थैषा न सुसङ्गता। यतो रसनिष्पत्तिः सीतादिविभावैर्जायते। सीतादिपात्राणि रामं प्रति विभावरूपाणि सम्भवन्ति, न तु सामाजिकान् प्रति। अथ च सीतादिपात्राणि प्रति सामाजिकानां पूजनीयबुद्धित्वान्न सामाजिकैः कथमपि शृङ्गारादिरसविभावरूपाणि स्वीक्रियन्ते। एवञ्च रसस्थितिर्न तु तटस्थगता (पात्रगताऽभिनेतृगता) न चाऽऽत्मगता (सामाजिकगता) वा सम्भवति।

भट्टनायकस्य कथनमिदमप्यवधेयं यद् रसो न प्रतीयते नोत्पद्यते नाभिव्यज्यते। त्रिभिरेतैः पदैर्भट्टनायकेन शङ्कुकस्यानुमितिवादस्य, भट्टलोल्लटस्योत्पत्तिवादस्याऽभिनवगुप्तस्य चाऽभिव्यक्तिवादस्य निराकरणं साधितम्।

अनुमितिविषयवस्तु तदेव भवति, यत्प्रत्यक्षादिप्रमाणैः पूर्वानुभूतं भवति। काव्येषु नाटकेषु वा पूर्वानुभवस्थितेरभावाद् रसो नाऽनुमितिविषयः।

रसनिष्पत्तिसम्बन्धे ह्युत्पत्तिवादोऽपि न प्रमाणतुलामधिरोहति। सिद्धान्तेऽस्मिन् स्वीक्रियमाणे करुणादिरसान् प्रति न सामाजिकानां प्रवृत्तिर्भविष्यति, तेषां दुःखोत्पादकत्वात्।

अथ च रसो नाऽभिव्यक्तिविषयः। पूर्वसिद्धस्यैव वस्तुनोऽभिव्यक्तिर्भवति। रसस्त्वनुभूति-विषयः। न त्वसौ कदाचिदप्यनुभवपूर्वं पश्चाद्वाऽवतिष्ठते। सहृदयहृदयेषु वासनारूपेण वा तस्याऽवस्थितिरपि न भट्टनायकेन स्वीकृता। सिद्धान्तस्याऽस्य स्वीकरणे रससामग्र्या उत्कृष्टतायाः निकृष्टतायाः वाऽप्यवबोधो भविता।

अतो रसो नाऽनुमितिविषयो नोत्पत्तिविषयो न चाऽप्यभिव्यक्तिविषयः।

रसनिष्पत्तिव्याख्याने भट्टनायको भुक्तिवादस्य प्रतिष्ठाञ्चकार। भरतरससूत्रस्य संयोगादिति पदस्य व्याख्या तेन कृता - भोज्यभोजकसम्बन्धात्। निष्पत्तिरिति पदस्य च व्याख्या विहिता - भुक्तिरिति। तस्य व्याख्यानमेवं वर्ण्यते -

काव्यगतशब्दा अन्यशब्दविलक्षणाः भवन्ति। तत्राऽपि च शब्दव्यापाराः। एकस्त्वत्राऽ-भिधाव्यापारः। तद्भिन्नौ च द्वौ भावकत्वभोजकत्वव्यापारौ। अत्राऽभिधाव्यापारो वाच्यार्थविषयको भावकत्वव्यापारो रसादिविषयको भोजकत्वव्यापारश्च सहृदयविषयको भवति। काव्येषु केवल-मभिधाव्यापारे स्वीक्रियमाणे रसनिष्ठकाव्यस्य श्लेषाद्यलङ्कृतकाव्यान्मन्वादिप्रणीतशास्त्राच्च न कोऽपि भेदो लक्षणीयो भविष्यति। अतोऽभिधाव्यापारव्यतिरिक्तौ भावकत्वभोजकत्वव्यापारौ चाऽप्यनिवार्यत्वेन स्वीकरणीयौ।

प्रथमं तावदभिधाव्यापारः काव्यशब्दानां वाच्यार्थमवबोधयति। तदनन्तरमेतद्विलक्षणेन भावकत्वव्यापारेण विभावादीनां साधारणीकरणञ्जायते। साधारणीकरणस्याऽयमेवाऽभिप्रायः -

रामसीतादिपात्राणि स्वकीयं विशिष्टांशं परित्यज्य सामान्यनायकनायिकादिरूपेणा-ऽवतिष्ठन्ते। रामसीतादिपात्रेषु द्वावंशौ भवतः -

(१) विशिष्टांशः - रामत्वं सीतात्वञ्च।

(२) साधारणांशः - नायकत्वं नायिकात्वञ्च।

भावकत्वव्यापारेण रामसीतादिपात्राणि विशिष्टांशं रामत्वं सीतात्वं वा परित्यज्य सामान्यनायकनायिकादिरूपेणाऽनुभूयन्ते सहृदयैः। इत्थञ्च साधारणीकरणशक्त्या भाविते रसादिके तृतीयस्य भोजकत्वव्यापारस्य कार्यं सम्पद्यते। अनेन व्यापारेण स्थायिभावस्य भोगो निष्पद्यते।

भोगोऽयं चित्तद्रुतिविस्तरविकासरूपो रजस्तमोवैचित्र्यरहितसत्त्वमयो निजचेतनस्वरूपः परमानन्दमयः परमब्रह्मास्वादसदृशश्च विद्यते। अयमेव प्रधानभूतोंऽशः सिद्धरूपश्च। भट्टनायकस्यैतद् रसानुभूति(भोग)स्वरूपमभिनवगुप्तो ध्वन्यालोकस्य लोचनटीकायामेवं व्यवर्णयत् -

**भाविते च रसे तस्य भोगो योऽनुभवस्मरणप्रतिपत्तिभ्यो विलक्षण एव द्रुतिविस्तरविकासात्मा रजस्तमोवैचित्र्यानुविद्धसत्त्वमयनिजचित्स्वभावनिर्वृतिविश्रान्तिलक्षणः परमब्रह्मास्वादसविधः। स एव च प्रधानभूतोंऽशः सिद्धरूप इति।**

**(iv) अभिनवगुप्तः (अभिव्यक्तिवादः) -**

भट्टनायककृतां भरतरससूत्रगतां रसनिष्पत्तिव्याख्यां भुक्तिवादरूपिणीं समीक्षां न सर्वे काव्यशास्त्राचार्याः स्वीचक्रुः। अभिगुप्तेनेयं निराकृता। भट्टनायकस्य साधारणीकरण-व्यापारमङ्गीकृत्याऽप्यसौ भावकत्वभोजकत्वव्यापारावनावश्यकावप्रामाणिकौ च प्रत्यापादयत्। तेनोद्‌घोषितम् - भावकत्वभोजकत्वव्यापारौ न वर्तेते प्रमाणसिद्धौ। एकेनैव व्यञ्जनाव्यापारेण साधारणीकरणमपि सम्पद्यते, रसास्वादनप्रक्रियाऽपि च निष्पन्ना भवति। अभिनवगुप्तेन भरतरससूत्रगतसंयोगनिष्पत्तिपदयोः व्याख्या कृता -

**संयोगाद् = अभिव्यङ्ग्याभिव्यञ्जकसम्बन्धात्।**

**निष्पत्तिः = अभिव्यक्तिः।**

अभिनवगुप्तकृतं रससूत्रव्याख्यानमधोनिर्दिष्टविधिना स्पष्टीक्रियते -

(क) सामाजिकानां हृदयेषु रत्यादिस्थायिभावाः सूक्ष्मवासनारूपेण विद्यमाना अवतिष्ठन्ते। लौकिकजीवने यैर्लौकिकैर्ललनोद्यानकटाक्षादिभिः साधनैः रत्यादिस्थाय्यनुमाने सामाजिकैर्यत्प्रमाणं कौशलमधिगतं तेष्वियं वासना तत्प्रमाणं विकसिता भवति।

(ख) लोके रत्यादिभावानां कारणानि कार्याणि सहकारीणि च काव्येष्वलौकिक-विभावानुभावव्यभिचारिभावपदवाच्यानि भवन्ति।

(ग) काव्यानामलौकिकाभिव्यञ्जनशक्तित्वाद् विभावादीनां साधारणीकरणं जायते। तेषां स्वकीयत्वपरकीयत्वोपेक्षणीयत्वभावास्तिरोहिताः भवन्ति। एवञ्च रामसीतयोः रामत्वसीतात्वविशिष्टांशास्तिरोभूय केवलं युवकत्वयुवतीत्वांशा अवशिष्यन्ते।

(घ) सम्पन्ने साधारणीकरणव्यापारे प्रमातुः (सामाजिकस्य) चित्तसीमानो बन्धनरहिता भूत्वा चित्तवृत्तयोऽपरिमिताः भवन्ति। अतो रत्यादिभावानामपि साधारणीकरणं भवति। साधारणीकरणप्रक्रियेयं सहृदयैरनुभूयते।

(ङ) सामाजिकाः सहृदयाः रसानुभूतिमिमां स्वाभिन्नां निर्विशेषामनुभवन्ति। सहृदयः स्वस्मिन्नेव रसमास्वादयन्ननुभवति। एवञ्चाऽभिव्यज्यमानः स्थायिभाव एव रसपदवाच्यो भवति।

(च) रसस्वरूपं त्वास्वाद्यमानत्वमेव। यावत्कालं विभावादयो विद्यमानास्तावत्कालमेव रसानुभूतिः। विभावादीनामियं प्रतीतिर्न पृथक्पृथग्रूपा, अपित्वखण्डात्मिका। यथा एलामरिचकेसरादिमिश्रणपदार्थविरचिते पानके सकलवस्तुस्वादविलक्षणास्वादो भोक्त्राऽनुभूयते, तथैव विभावादिलक्षणमलौकिकरसास्वादनं सहृदयैरनुभूयते।

(छ) रसास्वादनमलौकिकं सद् हृदयं प्रविशन्निव प्रतिभाति। स्वातिरिक्तमन्यत्सर्वं ज्ञानं तिरोदधदिदं ब्रह्मज्ञानानन्दसदृशं भवति।

(ज) रसस्तु नियतरूपेण ध्वन्यात्मको (व्यङ्ग्यः) भवति। रसस्य कथनं रसभावादिपदैः कर्तुं शक्यते, विभावादिप्रयोगैर्वा। रसभावादिपदेषु प्रयुज्यमानेषु सत्स्वपि विभावादिप्रयोगाभावे न रसप्रतीतिः सम्पद्यते। परं रसभावादिपदेष्वसत्स्वपि विभावादिप्रयोगे रसप्रतीतिर्भवत्येव। इत्थमन्वयव्यतिरेकाभ्यां सिद्धमिदं यद् रसप्रतीतिर्विभावादेप्रयोगसम्भवा वर्तते। अतो रस-प्रतीतिर्ध्रुवं ध्वन्यात्मिका सिद्ध्यति।

(झ) रसस्त्वलौकिकः। स तु न कार्यो नाऽपि च ज्ञाप्यः। रसो न कार्यः। कार्ये सति विभावादिकारणविनाशेऽपि तस्योपस्थितिप्रसङ्गो भवेत्, यथा गतेऽपि कुम्भकारादिकारणसमूहे कार्यरूपो घटोऽवतिष्ठते। नाऽपि च रसो ज्ञाप्यः। ज्ञाप्यं हि वस्तु पूर्वसिद्धं भवति। रसस्तु न पूर्वसिद्धः। अथ च रसः कार्योऽपि विद्यते ज्ञाप्यश्चाऽपि। चर्वणानिष्पत्त्या रसस्य निष्पत्तिर्जायते, अतोऽयं कार्योऽपि विद्यते। लोकोत्तरस्वसंवेदनविषयत्वेन रसस्य ज्ञाप्यत्वमपि सिद्धम्। इत्थं रसः कार्यो न विद्यते ज्ञाप्योऽपि च न वर्तते। अथ चाऽयं कार्योऽपि विद्यते ज्ञाप्यश्चाऽपि विद्यते। रसस्याऽलौकिकत्वेन विरुद्धत्वमत्र नाऽवधारणीयम्।

(ञ) यदि रसो ज्ञाप्यः, कस्य ज्ञानस्याऽयं विषयः ? सविकल्पकस्य निर्विकल्पकस्य वा ? द्विविधं हि ज्ञानम् - सविकल्पकं निर्विकल्पकञ्च। विभावादीनामुपस्थितिप्रसङ्गाद् रसोऽयं न निर्विकल्पकज्ञानविषयः। रसस्याऽलौकिकानन्दमयत्वाद् स्वसंवेदनसिद्धत्वाच्च नाऽयं सविकल्पकज्ञानविषयः। परमयं सविकल्पकज्ञानविषयोऽपि वर्तते निर्विकल्पकज्ञानविषयश्चाऽपि भवति। विभावादीनामुपस्थितिवशात् सविकल्पकज्ञानविषयो रसः। अथ चाऽलौकिकानन्द-मयत्वान्निर्विकल्पकज्ञानविषयोऽप्ययं वर्तते। रसस्य चाऽलौकिकत्वान्नाऽत्र विरोधोऽवगन्तव्यः।

रसनिष्पत्तिसम्बन्धेऽभिनवगुप्तस्य व्याख्या प्रायः सर्वैरेवोत्तरवर्तिभिराचार्यैः स्वीकृता। मम्मटविश्वनाथजगन्नाथादयो रसनिष्पत्तिमभिव्यक्तिमेवाऽङ्गीचक्रिरे। परं केचनाऽऽचार्याः विरोधमप्युपस्थापितवन्तः। यथा दशरूपककारो धनञ्जयस्तस्य च टीकाकारो धनिको वर्तते।

धनिकेन धनञ्जयेन च न व्यञ्जनावृत्तिः स्वीकृता। अभिधालक्षणातात्पर्यावृत्तयस्ताभ्यां प्रतिपादिताः। भाट्टमीमांसकैः प्रभावितौ तौ व्यञ्जनावृत्तिप्रतिपाद्यमर्थं तात्पर्यार्थभिन्न-मेवाऽमन्वाताम्। रसो व्यङ्ग्य एवेत्यानन्दवर्धनस्य सिद्धान्तस्ताभ्यां निराकृतः। दशरूपककारस्य मतमासीत् -

विभावादिभिः प्रतीयमानः स्थायिभावोः (रसः) वाक्यार्थ एव वर्तते। वाक्येऽभिहिता प्रकरणादिभ्यो वा बुद्धौ स्थिता कारकैर्युक्ता क्रिया यथा वाक्यार्थ एव, तथैव विभावादिभ्योऽभिहितः प्रकरणादिभ्यश्च बुद्धौ स्थितः स्थायिभावस्तात्पर्यार्थ (वाक्यार्थः) एव भवति।[१] तयोर्मतमस्ति - रसस्थितिः सामाजिके (सहृदये) ह्येव भवति।[२]

परमधिकसंवादस्याऽत्र नाऽवसरो न चाऽवकाशः। रसनिष्पत्तिसम्बन्धे धनञ्जय-धनिकयोर्विचारसरणिर्नोत्तरवर्तिभिराचार्यैः स्वीकृतः परिपोषितो वा। प्रायशः सर्व एवोत्तरवर्तिनः काव्यशास्त्रकृतो विद्वज्जनाः ध्वन्यालोककृदानन्दवर्धनमतानुसारिणोऽभिनवगुप्तस्य रसनिष्पत्तिव्याख्यां प्रमाणीकृत्य रसं व्यङ्ग्यमेवाऽमन्वन्त। भरतरससूत्रे संयोगादिति पदस्याऽर्थोऽभिव्यङ्ग्याभिव्यञ्जकभावादिति, निष्पत्तिपदस्याऽर्थोऽभिव्यक्तिरित्येव निर्धारणीयः।

## ५. विभावानुभावव्यभिचरिस्थायिभावाः

विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरिति भरतसिद्धान्तं प्रमाणीकृत्य रसनिष्पत्ति-प्रक्रिया पूर्वप्रकरणे व्याख्याता। अतोऽत्र विभावादीनां स्वरूपमपि, विचारणीयम्।

(i) **विभावाः -**

कायिकवाचिकसात्त्विकाभिनयविभावनानि ज्ञानसम्पादयितॄणि साधनानि विभावपद-वाच्यानि भवन्तीति नाट्यशास्त्रे भरतेन प्रतिपादितम्।[३] विश्वनाथेन प्रोक्तम् -

लोके रत्याद्युद्बोधकाः पदार्थाः काव्ये नाट्ये वा विभावा इत्युच्यन्ते। ते च द्विविधाः - आलम्बनविभावा उद्दीपनविभावाश्च।[४]

(क) **आलम्बनविभावाः -**

नायकनायिकादीनि पात्रणि ह्यालम्बनविभावा उच्यन्ते, यतस्तेषामालम्बनेनैव रसोद्गमो भवति।[५]

---

१. वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया।
वाक्यार्थः कारकैर्युक्ता स्थायी भावस्तथेतरैः।। दशरूपक ४.३७।।

२. रसः स एव स्वाद्यत्वाद् रसिकस्यैव वर्तनात्।
नानुकार्यस्य वृत्तत्वात् काव्यस्यातत्परत्वतः।। दशरूपक ४.३८
काव्यार्थोपप्लावितो रसिकवर्ती रत्यादिः स्थायिभावः स प्रतिनिर्दिश्यते। स च स्वाद्यतां निर्भरानन्दसंविदात्मतामापद्यमानो रसो रसिकवर्तीति वर्तमानत्वान्नानुकार्यरामादिवर्ती वृत्तत्वात्तस्य। उपर्युक्तकारिकायां धनिकटीकां

३. विभाव्यतेऽनेन वागङ्गसत्त्वाभिनया इति विभावः। यथा विभावितं विज्ञातार्थमित्यर्थानन्तरम्।
नाट्यशास्त्र अध्याय ६ पृ० ३४६

४. रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः।
आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ।। साहित्यदर्पण ३.२९

५. आलम्बनो नायकादिस्तमालम्ब्य रसोद्गमात्।। साहित्यदर्पण ३.२९

(ख) उद्दीपन विभावाः -

स्थायिभावस्योद्दीपका विभावा उद्दीपनविभावाः प्रोच्यन्ते। उद्दीपनविभावा अपि द्विविधाः भवन्तिः[१] -

(अ) नायकनायिकादिपात्राणां चेष्टारूपवचनवेशादीनि तत्त्वानि प्रथमकोटिका उद्दीपनविभावाः सन्ति।

(ब) द्वितीयकोटिका उद्दीपनविभावाः देशकालोद्यानचन्द्रोदयसूर्योदयगिरिसरिदरण्य-वसन्तर्त्वादितत्त्वसम्बद्धाः भवन्ति।

आलम्बनविभावैरुद्बुद्धः स्थायिभाव उद्दीपनविभावैरुद्दीप्तो भवति।

(ii) अनुभावाः -

कारणानन्तरं यथा कार्याणि समुत्पद्यन्ते, तथैव विभावानन्तरमनुभावाः सञ्जायन्ते। अनु पश्चाद् भवन्तीत्यनुभाताः। विभावैः स्थायिभावानामुद्बोधनोद्दीपनानन्तरं सहृदयानां मनोभावनाः विभिन्नव्यापाररूपाः प्रकटिताः भवन्ति।[२] एवञ्च कारणरूपैर्विभावैरुद्बुद्धानां रत्यादिभावानां प्रकाशकानि कार्याणि काव्येषु नाटकेषु चाऽनुभावाः प्रोच्यन्ते। अनुभूयमानत्वादप्येतानि कार्याण्यनुभावपदवाच्यानि भवन्ति।[३]

अनुभावा अपि द्विविधाः भवन्ति -

(क) नायकनायिकादिपात्रगतशरीरचेष्टारूपाः कटाक्षभुजाक्षेपस्मितादयः।

(ख) नायकनायिकादिपात्रगतमनोविकारजाताः स्वेदादयः।

स्वेदादयोऽनुभावाः ह्येते सात्त्विकभावाः सात्त्विकानुभावाः वा प्रोच्यन्ते। अष्टसंख्यकाः भवन्त्येते सात्त्विकानुभावाः - स्तम्भस्वेदरोमाञ्चस्वरभङ्गकम्पनविवर्णत्वाश्रुमूर्छाः।[४] भानुदत्तस्तु जृम्भामपि सात्त्विकानुभावं मत्वा नवसात्त्विकानुभावान् गणययामास।[५]

(iii) व्यभिचारिभावाः -

व्यभिचारिभावास्त्वस्थिरचित्तवृत्तयः। विभावानुभावापेक्षया ह्येते विभिन्नरसानु-कूलव्यवहारेण सञ्चरन्ति। अतः सञ्चारिभावपदवाच्या अपि भवन्ति। एकस्मिन्नेव रसेऽनेकेषां

---

१. उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये।
आलम्बनस्य चेष्टाद्या देशकालादयस्तथा।। साहित्यदर्पणम् ३.१३१

२. अनुभावो विकारस्तु भावसंसूचनात्मकः। दशरूपकम् ४.३

३. उद्बुद्धैः कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन्।
लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः।। साहित्यदर्पणम् ३.१३२

४. स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः।। साहित्यदर्पणम् ३.१३५

५. जृम्भा च नवमो सात्त्विकभाव इति प्रतिभाति। रसतरङ्गिणी पृ० ६६

व्यभिचारिभावानामेकस्य च व्यभिचारिभावस्याऽनेकेषु रसेषु व्यवस्थितिः परिलक्ष्यते। रसान् प्रति विविधरूपेण सञ्चरित्वादेवैते विकाराः व्यभिचारिभावाः कथ्यन्ते।[1] रसान् प्रत्युन्मुखीभूय विशेषेण विविधं विचरन्त्येते। अथ च स्थायिभावेषु समुद्रे कल्लोला इवोन्मग्ननिर्मग्नाः भवन्ति।[2]

काव्यशास्त्रकृद्भिर्व्यभिचारिभावानां संख्या त्रयस्त्रिंशत्परिमिता प्रोक्ता। ते सन्ति -

निर्वेदः, ग्लानिः, शङ्का, असूया, मदः, श्रमः, आलस्यं, दैन्यं, चिन्ता, मोहः, स्मृतिः, धृतिः, लज्जा, चपलता, हर्षः, आवेगः, जडता, गर्वः, विषादः, उत्सुकता, निद्रा, अपस्मारः, स्वप्नः, जागरणम्, अमर्षः, अवहित्था, उग्रता, मतिः, व्याधिः, उन्मादः, मरणं, त्रासः वितर्कश्च।[3]

के व्यभिचारिणः केन रसेन सम्बद्धा इत्यपि विचार आचार्यैर्विहितः। विस्तरभयान्नाऽयं विषयोऽत्र विवेचितः। त्रयस्त्रिंशद्भिर्व्यभिचारिभावैः सह कासुचिदवस्थासु स्थायिभावा अपि व्यभिचारिभावत्वेन प्रयुज्यमाना अवलोक्यन्ते। यथा शृङ्गारबीभत्सयोर्हासः, हास्यकरुणवीरेषूत्साह इति। कदाचिद् व्यभिचारिभावा अपि प्रधानतयाऽभिव्यज्यमानाः स्थायिरूपेण कार्यरताः भवन्ति। ते तदा भावपदवाच्या भवन्ति।[4]

यद्यपि भरतादिभिः शास्त्रकृद्भिर्व्यभिचारिणो भावास्त्रयस्त्रिंशदभिहितास्तथाऽप्यन्यैराचार्यैः केचनाऽन्येऽपि व्यवभिचारिभावाः प्रोक्ताः। भोजेन ईर्ष्याशमस्नेहानां, हेमचन्द्रेण दम्भोद्वेगक्षुत्तृष्णानां रामचन्द्रेण क्षुत्तृष्णामैत्रीमुदिताश्रद्धादयोपेक्षाऽरतिसन्तोषक्षमामार्दवाऽऽर्दवदाक्षिण्यादीनां भानुदत्तेन च छलस्य गणना व्यभिचारिभावेषु विहिता। पण्डितराजजगन्नाथेन चतुस्त्रिंशद् व्यभिचारिभावाः प्रोक्ताः। रतिरपि कदाचिद् व्यभिचारिभावत्वेन गण्यते।[5] परन्तु समन्वयवादिभिराचार्यै-स्त्रयस्त्रिंशदतिरिक्तव्यभिचारिभावानां समावेशः समन्वयश्चैतेष्वेव पूर्वप्रोक्तव्यभिचारिभावेषु समुपस्थापितः।

---

१. विविधमाभिमुख्येन रसेषु चरन्तीति व्यभिचारिणः। भरतनाट्यशास्त्रम् - सप्तमोऽध्यायः

२. विशेषादाभिमुख्येन चरन्तो व्याभिचारिणः।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला। इव वारिधौ।। दशरूपक ४.८

३. निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः।
आलस्यं चैव दैन्यञ्च चिन्ता मोहः स्मृतिर्धृतिः।।
व्रीडा चपलता हर्ष आवेगो जडता तथा।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च।।
सुप्तं प्रबोधोऽमर्षश्चाऽप्यवहित्थमथोग्रता।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च।
त्रासश्चैव वितर्कश्च विज्ञेयाः व्यभिचारिणः।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नायतः।। काव्यप्रकाशः ४.३१-३४

४. व्यभिचारी तथाञ्जितः भावः प्रोक्तः।। काव्यप्रकाश : ४.३५

५. गुरुदेवनृपपुत्रादिविषया रतिश्चेति चतुस्त्रिंशत्। रसगङ्गाधर पृ० २९७

भोजराजस्तु स्थायिभावानां सात्त्विकानुभावानां व्यभिचारिभावानाञ्च गुणसंख्यादि-परिमितीकरणे विरोधमुपस्थापितवान्। तेन प्रोक्तम् - कोऽपि भावः कदाचित् स्थायित्वं कदाचित् सात्त्विकत्वं कदाचिच्च व्यभिचारित्वं भजते।[1]

(iv) **स्थायिभावाः -**

लोके मानवो दैनिकजीवने यत्किञ्चिद् ददाति वा शृणोति वा, अनुभवति वा, तत्संस्कारास्तस्य मनसि स्थिरतां प्रपद्यन्ते। संस्कारा इमे च वासना इत्यप्यभिधीयन्ते। वासनारूपाश्चैते संस्काराः स्थायिभावाः प्रोच्यन्ते। काव्यशास्त्रे स्थायिभावानां निरूपणे वैज्ञानिक आधारो वर्तते। ते च स्थायिभावाः वर्तमानमनोविज्ञानप्रोक्ताः मनःसंवेगतुल्याः वर्तन्ते।

सकलेष्वेव प्राणिषु प्रेमादिप्रवृत्तयः स्वाभाविकरूपेण विद्यमानाः वर्तन्ते। कस्मिंचित् प्राणिनि काचिद् विशिष्टा प्रकृतिरुत्कटत्वेन वर्तते कस्मिंश्चिच्च काचिदन्या प्रवृत्तिः विशिष्टा उर्तते। पुरातनैः काव्यशास्त्रविद्भिरेतासां प्रवृत्तीनां वर्गीकरणप्रयासः कृतस्तासाञ्च संख्या निर्धारिता। प्रथमं तावद् भरतमुनिना प्रवृत्तयोऽष्टौ निर्धारिताः। अथ च तेनाऽष्टस्थायिभावानां संख्या सुनिश्चितीकृत्याऽष्टौ रसाः प्रोक्ताः। एको विशिष्टः स्थायिभाव एकस्मिन् विशिष्टे रसे परिणमति। उत्तरवर्तिनि काले केषाञ्चिदन्येषां स्थायिभावानामाविष्करणं बभूव। अथ च रसानामपि संख्या तदनुरूपं सुनिश्चिता सञ्जाता।

(v) **सहजप्रवृत्तयो मनःसंवेगाश्च**

पाश्चात्यवैज्ञानिकैः मनोविज्ञानाध्ययने मानवानां सहजप्रवृतीनां तत्सम्बद्धानां मनः-संवेगानाञ्चाऽध्ययनं विहितम्। मैक्डोनलमहोदयेन सहजप्रवृत्तीनां संख्या अष्टादश प्रोक्ता। अथ च ताश्चतुर्दशसु संक्षिप्तीकृताः। चतुर्दश सहजप्रवृत्तयस्तत्सम्बद्धाश्च मनःसंवेगा अधोलिखितरूपेण प्रस्तूयन्ते -

| सहजप्रवृत्तयः | मनःसंवेगाः |
|---|---|
| १. भयात्पलायनम् (आत्मरक्षार्थम्) | भयम् |
| २. युद्धेच्छा | क्रोधः |
| ३. निवृत्तिः वैराग्यं वा | घृणा |
| ४. मातृभावना | वात्सल्यम् |
| ५. आत्माभिमानम् | गर्वः |
| ६. आत्महीनता (उदासीनता) | दैन्यम् |
| ७. कामप्रवृत्तिः | रतिः |
| ८. आमोद-प्रमोदः | हासः |

---

१. शृङ्गारप्रकाश पृ० ११

| | |
|---|---|
| ९. कुतूहलम् जिज्ञासा वा | औत्सुक्यम् |
| १०. शरणागतिः करुणभावो वा | शोकः |
| ११. भोजनान्वेषणप्रवृत्तिः | बुभुक्षा |
| १२. सङ्ग्रहप्रवृत्तिः | अधिकार-भावना |
| १३. सामाजिकता | एकाकित्वम् |
| १४. विधायकत्वम् (रचनात्मकप्रवृत्तिः) | सृजनोत्साहः |

उपर्युक्तासु चतुर्दशप्रवृत्तिषु एकादशादारभ्य चतुर्दशपर्यन्तं (११-१४) प्रवृत्तयो न साहित्यिकरससम्बद्धाः। केवलं प्रथमपरिगणिताः दश (१-१०) प्रवृत्तय एव साहित्यिकरससम्बद्धाः वर्तन्ते। अतस्तासां संवेगा एव रसदशां प्राप्नुवन्ति। भारतीयकाव्यशास्त्रपरिभाषायां ते स्थायिभावा इत्युच्यन्ते। एतासां सहजप्रवृत्तीनामेतेषाञ्च मनःसंवेगानां भारतीयकाव्यशास्त्रप्रोक्तस्थायिभावैः सह सहजो विस्मयावहश्च सम्बन्धः संलक्ष्यते। तद्यथा -

| सहजप्रवृत्तयः | मनःसंवेगाः | स्थायिभावाः | रसाः |
|---|---|---|---|
| १. भयात्पलायनम् | भयम् | भयम् | भयानकः |
| २. युद्धेच्छा | क्रोधः | क्रोधः | रौद्रः |
| ३. निवृत्तिर्वैराग्यं वा | घृणा | जुगुप्सा | बीभत्सः |
| ४. मातृभावना | वात्सल्यम् | वत्सलता | वत्सलः |
| ५. आत्माभिमानम् | गर्वः | उत्साहः | वीरः |
| ६. आत्महीनता | दैन्यम् | निर्वेदः | शान्तः |
| ७. कामप्रवृत्तिः | रतिः | रतिः | शृङ्गारः |
| ८. आमोद-प्रमोदः | हास्यम् | हासः | हास्यः |
| ९. कुतूहलं जिज्ञासा वा | औत्सुक्यम् | विस्मयः | अद्भुतः |
| १०. शरणागतिः | शोकः | शोकः | करुणः |

स्थायिभावानां मनोवृत्तिरूपेणाऽध्ययनं भारतीयकाव्यशास्त्रकर्तारोऽप्यकुर्वन्। शारदातनयो भावप्रकाशनग्रन्थे लिलेख - मनोवृत्तीनामष्टविधत्वादष्टावेव रसा अनुभूयन्ते।[1]

मनुष्याणां हृदयेषु चितवृत्तिरूपेण दीर्घकालं स्थिरत्वात् स्थायिभावाः स्थायिपदवाच्याः भवन्ति। विरुद्धैरविरुद्धैर्वा भावैस्तिरोधातुमशक्यत्वात् स्थायिभावाः कथ्यन्ते। अयमेव रसास्वादनाङ्कुरः।[2] अत्र दशरूपककारेण प्रोक्तम् -

---

१. यतोऽष्टधा मनोवृत्तिः सभ्यानां नाट्यकर्मणि।
अष्टावेवाऽनुभूयन्ते तासूक्तास्तैः रसाः स्मृताः।। भावप्रकाशन अ० २ पृ० ४६

२. विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः।
आस्वादाङ्कुरसंज्ञोऽसौ भावः स्थायीति सम्मतः।। साहित्यदर्पण ३.१७४

विरुद्धैरविरुद्धैर्वा भावैर्यो न विच्छिद्यते, अथ चान्यानपि भावानात्मसात् करोति, स एव स्थायिभावः ।[1]

नाट्यशास्त्रेऽष्टौ स्थायिभावाः प्रकीर्तिताः। मम्मटस्तु नाट्यशास्त्रमुद्धृत्याऽष्टौ स्थायिभावान् न्यरूपयत् - रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयान्ः ।[2]

उत्तरवर्तिनि काले यथा यथा काव्यशास्त्रकृद्भिः संख्या रसानां वर्धिता तथा तथा स्थायिभावानामपि संख्या वृद्धिमवाप। मम्मटस्तु निर्वेदं स्थायिभावं मत्वा नवमं रसं शान्तं प्रत्यापादयत्।[3] दशरूपककारस्तु शान्तरसस्य स्थायिभावं शमं प्रोवाच।[4] अथ विश्वनाथो वात्सल्यं स्थायिभावं प्रतिपाद्य दशमं रसं वत्सलञ्जगाद।[5] मम्मटेन वत्सलता भावः प्रोक्तः।

भक्तिरसामृतसिन्धूज्ज्वलनीलमण्यादिग्रन्थेषु भगवद्भक्तिविषयकानुरागः स्थायिभावत्वेन प्रोक्तः। अथ च भक्तिरपि रस उच्यते। परं मम्मटो भक्तिं भावं ब्रवीति।[6]

## ६. रसानां संख्या

विभावानुभावव्यभिचारिभावानां संयोगादभिव्यज्यमानः स्थायिभाव एव रस इत्युच्यते। अतो यादृशी स्थायिभावानां संख्या, तादृश्येव रसानां संख्या गणनीया। भरतमुनिना ह्यष्टौ रसाः प्रोक्ताः - शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुताः ।[7]

भरतो रसानामिमां संख्यां नाट्यमभिलक्ष्य निर्धारयामास। परन्तु काव्येष्वन्येऽपि रसाः सम्भवन्ति। आचार्यो मम्मटो निर्वेदमपि स्थायिभावं परिकल्प्य शान्तं नवमं रसं ब्रवीति। धनञ्जयधनिकाभ्यां शान्तरसस्य स्थायिभावः शमः प्रोक्तः। कविराजो विश्वनाथो वत्सलमपि रसं प्रत्यापादयत्। रूपगोस्वामी भक्तिरसामृतसिन्धूज्ज्वनीलमणिग्रन्थयोर्भक्तिमपि रसपदप्रतिष्ठितञ्चकार।[8]

---

१. विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः।
आत्मभावं नयत्याशु स स्थायी लवणाकरः। दशरूपक ४.३४

२. रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः।। काव्यप्रकाश ४.३०

३. निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः। काव्यप्रकाश ४.३५

४. शममपि केचित् प्राहुः पुष्टिर्नाट्येषु नैतस्य। दशरूपक ४.३५

५. स्फुटं चमत्कारितया वत्सलञ्च रसं विदुः।
स्थायी पुत्रलतास्नेहः पुत्राद्यालम्बनं मतम्।। साहित्यदर्पण ३.२५

६. रतिर्देवादिविषया ................. भावः प्रोक्तः। काव्यप्रकाश ४.३५

७. शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः।। भरतनाट्यशास्त्र ६.१५

८. आलम्बनविभावो भगवान्, उद्दीपनविभावस्तुलसीचन्दनादिः, अनुभावो नेत्रविक्रियादिः, व्यभिचारिणो निर्वेदादयः, भगवदाकाररूपो रत्याख्यः स्थायिभावः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवति। भक्तिरसामृतसिन्धुः पृ० १३

एवं रसानामेकादश संख्या प्राचीनकाव्यशास्त्रग्रन्थेषु समुपलभ्यते। परन्तु प्रायशस्तत्र नव रसा एव प्रसिद्धाः वर्तन्ते। वत्सलभक्तिरसौ, भावपदरूपेण ध्वनिवादिभिराचार्यैः प्रोक्तौ। मम्मटेन देवतादिविषयिका रतिर्भावः प्रोक्तः[१]। आचार्यो हेमचन्द्रः काव्यानुशासनग्रन्थे स्नेहभक्तिवात्सल्यान् रतिभेदानेव प्रोक्तवान्।[२]

रससंख्याविषये भोजराजस्य विलक्षणमेव मतं वर्तते। सरस्वतीकण्ठाभरणग्रन्थेऽसावष्टौ रसानष्टौ च तेषां स्थायिभावान् ब्रूते।[३] परन्तु तदनन्तरमेवाऽसौ चतुर्णां रसानामन्येषां कल्पनां विधाय द्वादशरसानुद्घोषयति - शृङ्गारवीरकरुणरौद्राद्भुतभयानकबीभत्सहास्यप्रेयःशान्तोदात्तोद्धतान्।[४]

शान्तो रसो वर्तते न वेत्याचार्याणां मतभेदाः दरीदृश्यन्ते प्राचीनकालादेव। अतोऽस्मिन् विषये संवादः समुचितः। केषाञ्चिदाचार्याणां मतमिदम् - शान्तो रसो भवत्येव, परन्तु न नाट्ये तस्य सम्भवः। दशरूपककारो ब्रूते -

**शममपि केचित्प्राहुः पुष्टिर्नाट्येषु नैतस्य।**
**निर्वेदादिरताद्रूप्यादस्थायी स्वदते कथम्।**
**वैरस्यायैव तत्पोषस्तेनाऽष्टौ स्थायिनो मताः।।**[५]

कारिकाया अस्याः व्याख्यां कुर्वन् धनिको लिखति -

**इति शान्तरसं प्रति वादिनामनेकधा विप्रतिपत्तयः। केचिदाहुः - नास्त्येव शान्तो रसः। तस्याऽऽचार्येण विभावाद्यप्रतिपादनाल्लक्षणाकरणात्। अन्ये तु वस्तुतस्तस्याऽभावं वर्णयन्ति अनादिकालप्रवाहागतरागद्वेषयोरुच्छेत्तुमशक्यत्वात्। अन्ये तु वीरबीभत्सादावन्तर्भावं वर्णयन्ति। एवं वदन्तः शममपि नेच्छन्ति। यथा तथा अस्तु। सर्वथा नाटकादावभिनयात्मनि स्थायित्वमस्माभिः शमस्य निषिध्यते। तस्य समस्तव्यापारप्रविलयरूपस्याभिनयायोगात्। यत्तु कैश्चिन्नागानन्दादौ शमस्य स्थायित्वमुपवर्णितं तत्तु मलयवत्यनुरागेण आप्रबन्धवृत्तेन विद्याधरचक्रवर्तित्वप्राप्त्याऽविरुद्धम्। न ह्यनेकानुकार्यविभावालम्बनौ विषयानुरागावुपलब्धौ। अतो दयावीरोत्साहस्यैव तत्र स्थायित्वम्।......... विरुद्धाविरुद्धविच्छेदित्वस्य निर्वेदादीनामभावादस्थायित्वम्। अत एव ते चिन्तादिस्वस्वव्यभिचार्यन्तरिता अपि परिपोषं नीयमाना वैरस्यमावहन्ति।**

धनञ्जयधनिकयोरुपर्युक्तवचनैर्नाट्येषु शान्तरसनिषेधस्य निम्नकारणानि संलक्ष्यन्ते -

---

१. रतिर्देवादिविषया .............. भावः प्रोक्तः। काव्यप्रकाश ४.३५
२. स्नेहो भक्तिर्वात्सल्यमिति रतेरेव विशेषाः। हेमचन्द्रकृतकाव्यानुशासनम्
३. सरस्वतीकण्ठाभरणम् - ४.१
४. शृङ्गारवीरकरुणरौद्राद्भुतभयानकाः।
बीभत्सहास्यप्रेयांसः शान्तोदात्तोद्धताः रसाः।। सरस्वतीकण्ठाभरण ५.१६४
५. दशरूपक ४.३५-३६

(१) भरतमुनिना शान्तरसस्य विभावादीनां प्रतिपादनं न विहितम्।

(२) रागद्वेषयोः सर्वथा विनाशे सत्येव शमस्य स्थायिभावरूपेणावस्थितिः सम्भवति। अनादिकालादेव प्रवाहागतरागद्वेषयोः सर्वथोच्छेदोऽशक्यः। अतः शमस्य स्थायित्वेनासम्भवात् शान्तरसस्य स्थितिरपि न सम्भवति।

(३) केचनाऽऽचार्याः शान्तरसस्याऽन्तर्भावं वीरबीभत्सादिरसेषु कुर्वन्ति।

(४) अभिनयात्मकेषु नाट्येषु शमस्य सर्वथा निषेधो विहितः। शमस्तु सर्वव्यापार-विलयः। अतः शमस्याऽभिनयोऽपि न सम्भवः।

(५) नागानन्दनाटके प्रधानः स्थायिभावो न शमः। तत्र दयावीररसस्य स्थायिभाव उत्साह एव प्रधानत्वेनाऽवस्थितः।

(६) स्थायिभावस्तु विरुद्धैरविरुद्धैर्वा भावैर्न विच्छिद्यते। निर्वेदादिषु नैषा स्थितिः। अतस्ते न स्थायिभावा अपितु व्यभिचारिण एव।

(७) अभिनयात्मकेषु काव्येषु शमस्य परिपोषो नीरसत्वं जनयति। अतो रूपकेषु शान्तरसस्थितिः कथमपि न भवति।

### ७. रसानां प्राधान्यम्

उपर्युक्तविवेचनेन स्पष्टमेव, यदाचार्यैः रसानां संख्या अष्टादारभ्यैकादशपर्यन्तं (८-११) परिगणिता। अथ च काव्यशास्त्रकृद्भिः केचन रसाः प्रधानरूपेणाऽन्ये च गौणरूपेण परिकल्पिताः। केषाञ्चिद् रसानां मूलरूपत्वं तैरुद्घोषितम्। केषाञ्चिदाचार्याणां मन्तव्यमिदं यन्मूलरस एक एव विद्यते। भोजराजेन शृङ्गार एवैको मूलरसः परिकल्पितः। भवभूतिस्तु उत्तररामचरिते करुणरसमेव सर्वेषां रसानां मूलं प्रतिपादगति। अभिनवगुप्तेन शान्तो रसो मूलत्वेन प्रोक्तः। विश्वनाथः साहित्यदर्पणे लिखति - तस्य पितामहो नारायणोऽद्भुतरसमेव मूलरसमङ्गीचकार।[1]

रसानां प्राधान्याप्राधान्यविवेचनं प्रथमं भरतेन कृतम्। तेन प्रोक्तम् - शृङ्गाराद्धास्यरसः, रौद्रात् करुणः, वीरादद्भुतः बीभत्साच्च भयानको रसः समुत्पद्यते।[2] तात्पर्यमिदमस्ति - शृङ्गाररौद्रवीरबीभत्साः प्रधानाः वर्तन्ते। हास्यकरुणाद्भुतभयानकरसाश्चाप्रधानतां भजन्ते।

रसानां प्राधान्याप्राधान्यविवेचनस्याऽऽधारश्चित्तवृत्तयो वर्तन्ते। अन्तःकरणे ह्यनादिकालादेव सञ्चितानां वासनानां संस्काराणां वा वर्गीकरणं विधाय काव्यशास्त्रकृतः स्थायिभावानां नामानि प्रोचुः। अतो रसास्वादनकाले चित्तवृत्तीनां विविधा अवस्थाः संलक्ष्य रसानां प्राधान्याऽप्राधान्यविनिश्चयः क्रियते। दशरूपककारः कथयति -

चित्तवृत्तयश्चतुर्विधा भवन्ति - विकासविस्तारक्षोभविक्षेपाः। शृङ्गाररसानुभवकाले विकासस्य, वीररसानुभवावसरे विस्तारस्य, बीभत्सानुभूतिप्रसङ्गे क्षोभस्य रौद्रास्वादनसमये च विक्षेपस्याऽवस्था भवति। अन्ये चत्वारो रसाः रसेभ्य एव एतेभ्यः समुत्पद्यन्ते।

---

१. साहित्यदर्पण ३.२-३ वृत्तिः।

२. शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो रसः।
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः।। भरतनाट्यशास्त्र ६.३९

शृङ्गाराद्धास्यमुत्पद्यते, वीरादद्भुतस्योत्पत्तिर्भवति बीभत्साद् भयानको रसो जायते रौद्राच्च करुणरसस्योत्पत्तिर्भवति।[१]

केचनाचार्याः रसमेकमेव मूलरूपेण प्रतिपाद्य तस्मादेव रसादन्येषां रसानामुत्पत्तिं प्रतिपादयन्ति। अत्र चतुर्णामाचार्याणां भवभूत्यभिनवगुप्तभोजराजनारायणनामधेयानां मतानि महत्त्वपूर्णानि सन्ति। तद्यथा -

(१) भवभूतिः करुणरसमेवैकं प्रतिपादयामास। करुणरसाश्रयेणैवाऽन्येषां सर्वेषां रसानामुत्पत्तिर्भवति।[२]

(२) अभिनवगुप्तः शान्तरसमेव मूलरसमकल्पयत्। भरतोक्तनाट्यशास्त्रस्य टीकायामभिनवगुप्तकृताभिनवभारत्यां लिखितमस्ति -

**स्वं स्वं निमित्तमासाद्य शान्ताद् भावः प्रवर्तते।**
**पुनर्निमित्तापाये च शान्त एवोपनीयते।।**

अभिनवगुप्तस्य विवेचनं वर्तते - शान्तरसस्य सम्बन्धो मानवजीवनस्याऽन्तिमलक्ष्येण परमपुरुषार्थेन मोक्षेण सह विद्यते। सर्वेषामेव काव्यरसानामास्वादनस्याऽलौकिकत्वाद् ब्रह्मास्वादसहोदरत्वाच्च शान्तरस एव प्रमुखरूपेणाऽवगन्तव्यः।

(३) भोजराजेन शृङ्गाररसस्यैव सर्वेषु रसेषु प्राधान्यं संसाधितम्। स एव सर्वेषां रसानां मूलम्। शृङ्गाररसेनैव काव्यं सरसं भवति। रस एकः शृङ्गार एव वर्तते। अयञ्चाऽभिमानरूपोऽहङ्काररूपो वा भवति।[३] शृङ्गारप्रकाशे शृङ्गारमेवैकं रसं प्रतिपादयितुं भोजराजो हेतुमुपस्थापयति - रसत्वमास्वादनं वा शृङ्गार एव।[४]

---

१. स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः।
विकासविस्तरक्षोभविक्षेपैः स चतुर्विधः।।
शृङ्गारवीरबीभत्सरौद्रेषु मनसः क्रमात्।
हास्याद्भुतभयोत्कर्षकरुणानां त एव हि।।
अतस्तज्जन्यता तेषामत एवऽवधारणम्।। दशरूपक ४.४३-४५

२. एको रसः करुण एव निमित्तभेदाद्
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान् विकारान्
अम्भो यथा सलिलमेव हि तत्समग्रम्।। उत्तररामचरित ३.४७

३. रसोऽभिमानोऽहङ्कारः शृङ्गार इति गीयते।
योऽर्थस्तस्यान्वयात् काव्यं कमनीयत्वमश्नुते।। सरस्वतीकाण्ठाभरण ५.१

४. शृङ्गारवीरकरुणाद्भुतरौद्रहास्य-
बीभत्सवत्सलभयानकशान्तनाम्नः।
आम्नासिषुर्दश रसान् सुधियो वयं तु
शृङ्गारमेव रसनाद्रसमामनामः।। शृङ्गारप्रकाश १.६

(४) विश्वनाथेन साहित्यदर्पणे स्वपितामहस्य नारायणस्य मतमुपन्यस्तम् - चित्ते चमत्कारोत्पत्तिरेव विस्मयस्य पर्यायः । अतोऽद्भुतरस एव प्राधान्येन चमत्कारकारी ।[१]

## ८. रसानां स्वरूपम्

मम्मटादिभिराचार्यैः शृङ्गारादिरसानां स्वरूपाणि न प्रस्तुतानि । तत्र केवलं तेषामुदाहरणान्येवाऽवलोक्यन्ते । परन्तु नाट्यशास्त्रसाहित्यदर्पणादिषु ग्रन्थेषु रसानां स्वरूपाणि लक्षणोदाहरणैः सह प्रस्तुतानि । अस्मिन् रसप्रकरणे पृथक् पृथक् तेषां स्वरूपपरिचयः प्रस्तूयते: -

(i) शृङ्गाररसः -

शृङ्गाररसस्योत्पत्तिः कामस्योद्रेदाद् भवति । तत्र नायकनायिकादय आलम्बनविभावाः । चन्द्रोदयवनमालावसन्तर्त्वादय उद्दीपनविभावाः भ्रूविक्षेपकटाक्षादयोऽनुभावाः स्वेदरोमाञ्चादयः सात्त्विकानुभावाः लज्जौत्सुक्यादयश्च व्यभिचारिभावाः भवन्ति। एतैरभिव्यक्तो रतिरूपः स्थायिभाव एव शृङ्गारो रसः ।[२] रतेर्विकासस्य षडवस्थाः भवन्ति -

'प्रेममानप्रणयस्नेहरागानुरागाः ।

शृङ्गाररस्य द्वौ भेदौ मुख्यौ स्तः - संयोगो विप्रलम्भश्च। संयोगशृङ्गाररस्य दर्शनस्पर्शचुम्बनपरिरम्भणादिभेदेनाऽनन्तभेदाः सम्भवन्ति। अतः संयोगशृङ्गारस्त्वेक एव गण्यते। विप्रलम्भशृङ्गाररस्य पञ्च भेदाः सन्ति - अभिलाषविरहेर्ष्याप्रवासमानहेतुकाः। विप्रलम्भशृङ्गाररस्य दश कामावस्था अपि भवन्ति - अभिलाषचिन्तनस्मृतिगुणकथनोद्वेगप्रलापोन्मादसंज्वरजडतामरणावस्थाः ।

(ii) हास्यरसः -

हास्यरसस्योस्पत्तौ विकृताकारवचनवेषादिधारको नट आलम्बनविभावः, तस्य विकृतचेष्टादय उद्दीपनविभावाः, हासस्मितादय अनुभावाः, निद्रालस्यावहित्थादयो व्यभिचारिभावाः सन्ति ।[३] एभिरभिव्यज्यमानो हासरूपः स्थायिभावो हास्यरसदशां प्राप्नोति ।[४]

हास्यरसस्य आत्मस्थपरस्थद्वयधिष्ठानभेदात् त्रयो भेदाः भवन्ति। पुनः उत्तममध्यमाधमप्रकृतिभेदसम्मिश्रणेनाऽयं हास्यरसः षड्विधो भवति । उत्तमप्रकृतिकानां स्मितहसिते,

१. रसे सारश्चमत्कारः सर्वत्राऽप्यनुभूयते।
तच्चमत्कारसारत्वे सर्वथाऽत्यद्भुतो रसः।
तस्माद‌द्भुतमेवाह कृती नारायणो रसम्।। साहित्यदर्पण ३.३ (वृत्तिः)

२. ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति।। भरतनाट्यशास्त्र ६.४७

३. निद्रालस्यश्रमग्लानिमूर्छाश्च सहचारिणः। दशरूपक ४.७८

४. विपरीतालङ्कारैर्विकृताचाराभिधानवेषैश्च।
विकृतैरर्थविशेषैर्हसतीति रसः स्मृतो हास्यः।। भरतनाट्यशास्त्र ६.४९

मध्यमप्रकृतिकानां विहसितावहसिते नीचप्रकृतिकानाञ्च अपहसितातिहसिते ध्रुवमिति हासस्यैते षड्भेदाः।[१]

(iii) **करुणरसः -**

इष्टविनाशानिष्टप्राप्त्यादयः करुणरसस्यालम्बनविभावा.। प्रियगुणकथनमुद्दीपन-विभावः। निःश्वासोच्छ्वासरुदनस्तम्भप्रलापविवर्णत्वादयोऽनुभावाः। स्वप्नापस्मारदैन्यादयश्च व्यभिचारिभावाः सन्ति।[२] एतैर्निष्पन्नः शोकरूपस्थायिभावः करुणरसदशामाप्नोति।

(iv) **रौद्ररसः -**

रिप्वादयो रौद्ररसस्यालम्बनविभावाः। शत्रुभिः कृता अपकारा उद्दीपनविभावाः। अधरदशनकम्पभ्रुकुटिशस्त्रोत्तोलनविकत्थनधरणीप्रहारप्रतिज्ञाधारणादयोऽनुभावाः। अमर्षमद-स्मृतिचपलतासूयोग्रतादयश्च व्यभिचारिभावाः रौद्ररसस्य वर्तन्ते। एतैर्निष्पन्नः क्रोधरूपः स्थायिभावो रौद्ररसदशां प्रपद्यते।[३]

(v) **वीररसः -**

वीररसस्यालम्बनविभावाः विजेतव्याः शत्रवो वर्तन्ते। तेषां चेष्टा उद्दीपनविभावाः। रोमाञ्चयुद्धसामग्रीसहायान्वेषणादयोऽनुभावाः। धृतिमतिगर्वस्मृतितर्कादयश्च व्यभिचारिणो भावा विद्यन्ते। एतैर्निष्पन्नतां प्राप्त उत्साहरूपः स्थायिभावो वीररसदशामापद्यते। वीररसश्चाऽयं चतुर्विधो भवति - दानधर्मयुद्धदयावीररूपः।[४]

---

१. ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते।
नीचानामपहसितं तथातिहसितं तदेष षड्भेदः।। साहित्यदर्पण ३.२१७

२. इष्टनाशादनिष्टाप्तौ शोकात्मा करुणोऽनु तम्।
निःश्वासोच्छ्वासरुदितस्तम्भप्रलपितादयः।।
स्वापापस्मारदैन्याधिमरणालस्यसम्भ्रमाः।
विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः।। दशरूपक ४.८१-८२

३. क्रोधो मत्सरवैरिवैकृतमयैः पोषोऽस्य रौद्रोऽनुजः।
क्षोभः स्वाधरदंशकम्पभ्रुकुटिस्वेदास्यरागैर्युतः।
शस्त्रोल्लासविकत्थनांसधरणीपातप्रतिज्ञाग्रहै-
रत्रामर्षमदौ स्मृतिश्चपलतासूयौग्र्यवेगादयः।। दशरूपक ४.७४

४. उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः।
आलम्बनविभावास्तु विजेतव्यादयो मताः।।
विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः।
अनुभावास्तु तत्र स्युः सहायान्वेषणादयः।।
सञ्चारिणस्तु धृतिमतिगर्वस्मृतितर्करोमाञ्चाः।
स च दानधर्मयुद्धैर्दयया च समन्वितश्चतुर्धा स्यात्।। साहित्यदर्पण ३.२२२-२२४

(vi) **भयानकरसः -**

यस्माद् भयमुत्पद्यतेऽसावालम्बनविभावो भयानकरसस्य। तस्य विकृतवचनचेष्टाद्या उद्दीपनविभावाः। सर्वाङ्गवेपथुस्वेदरोमाञ्चदिग्भ्रमादयोऽनुभावाः। चिन्तादैन्यसम्भ्रमसम्मोहत्रासादयश्च व्यभिचारिणो भावाः सन्ति। एतैर्निष्पन्नो भयनामको भावः स्थायी भयानकरसदशां प्रपद्यते।[१]

(vii) **बीभत्सरसः -**

पूतिगन्धवसामांसरुधिरवमनादयो बीभत्सरसस्यालम्बनविभावाः। तत्र कृमिदुर्गन्धादय उद्दीपनविभावाः। वैराग्याज्जघनस्तनादिषु जुगुप्सा नासिकामुखसङ्कोचष्ठीवनादयोऽनुभावाः। आवेगार्तिशङ्कादयश्च व्यभिचारिभावाः सन्ति। एतैर्निष्पन्नो जुगुप्सानामकः स्थायिभावो बीभत्सरसदशां प्रपद्यते।[२]

(viii) **अद्भुतरसः -**

अलौकिकपदार्थदेवतादय आलम्बनविभावा अद्भुतरसस्य। तत्र तेषां दर्शनगुणकीर्तनादय उद्दीपनविभावा विद्यन्ते। साधुवादकथनाश्रुवेपथुस्वेदनेत्रविकासवागगदत्वादयोऽनुभावाः। वितर्कविगहर्षधृत्यादयो व्यभिचारिभावाः सन्ति।[३] एतैर्निष्पन्नो विस्मयरूपः स्थायिभावोऽद्भुतरसदशां प्रपद्यते।

(ix) **शान्तरसः -**

मम्मटेन शान्तरसस्य स्थायिभावो निर्वेदः प्रोक्तः। परन्तु विश्वनाथादयः काव्यशास्त्रकृतः शममेवाऽस्य शान्तस्य स्थायिभावमामनन्ति। भवानित्यत्वनिस्सारत्वबोधः परमात्मस्वरूपज्ञानं वा शान्तरस्स्यालम्बनविभावः। पुण्याश्रमभगवल्लीलाक्षेत्रतीर्थरमणीयवनादय उद्दीपनविभावा

---

१. विकृतस्वरसत्त्वादेर्भयभावो भयानकः।।
सर्वाङ्गवेपथुस्वेदशोषवैचित्त्यलक्षणः
दैन्यसम्भ्रमसम्मोहत्रासादिस्तत्सहोदरः।। दशरूपक ४.८०

२. बीभत्सः कृमिपूतिगन्धवमथुप्रायैर्जुगुप्सैकभू-
रुद्वेगी रुधिरान्त्रकीकसवसामांसादिभिः क्षोभणः।
वैराग्याज्जघनस्तनादिषु घृणा शुद्धोऽनुभावैर्वृतो
नासावक्त्रविकूणनादिभिरिहावेगार्तिशङ्कादयः।। दशरूपक ४.७३

३. अतिलोकैः पदार्थैः स्याद् विस्मयात्मा रसोऽद्भुतः।
कर्मास्य साधुवादाश्रुवेपथुस्वेदगद्गदाः।।
हर्षावेगधृतिप्रायाः भवन्ति व्यभिचारिणः।। दशरुपक ४.७८-७९

सन्ति। रोमाञ्चादयोऽनुभावा विद्यन्ते। निर्वेदहर्षस्मरणमतिजीवदयादयो व्यभिचारिभावाः। एतैर्निष्पन्नः शमरूपस्थायिभावः शान्तरसदशां प्रपद्यते।[1]

विश्वनाथः शान्तरसमेवं निरूपितवान् -

न यत्र दुःखं न सुखं न चिन्ता
न द्वेषरागौ न च काचिदिच्छा।
रसः स शान्तः कथितो मुनीन्द्रैः
सर्वेषु भावेषु समप्रमाणः।।[2]

**(x) वत्सलरसः -**

विश्वनाथो वत्सलरसं प्रतिपाद्य तं युक्तिसङ्गतं प्रमाणितवान्। परन्तु भरतनाट्यशास्त्रे न वत्सलरसस्योल्लेखः। मम्मटस्य भणितिर्यत् पुत्रादिविषयिका रतिः भावकोटिका भवति।

विश्वनाथकृतसाहित्यदर्पणे पुत्रादयो वत्सलरसस्यालम्बनविभावाः प्रोक्तास्तेषां चेष्टागुणादयश्चोद्दीपनविभावाः। आलिङ्गनाङ्गसंस्पर्शचुम्बनदर्शनरोमाञ्चानन्दाश्रुपातादयो-ऽनुभावाः। अनिष्टाशङ्काहर्षगर्वादयश्च व्यभिचारिणो भावाः सन्ति। भावैरेतैर्निष्पन्नो वात्सल्यरूपः स्थायिभावो वत्सलरसदशां प्राप्नोति।[3]

**(xi) भक्तिरसः -**

भक्तिवादिभिराचार्यैर्भक्तिरपि रसेषु परिगणिता। मम्मटादयः प्राचीनाचार्याः भक्तिं देवविषयिकां रतिं प्राहुः। सा च भाव इत्युच्यते। रूपगोस्वामिना भक्तिरसस्वरूपमेवं वर्णितम् -

---

१. शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः।
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः।।
अनित्यत्वादिनाऽशेषवस्तुनिस्सारता तु या।
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते।।
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः।
महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः।।
रोमाञ्चाद्यनुभावास्तथा स्युर्व्यभिचारिणः।
निर्वेदहर्षस्मरणमतिभूतदयादयः।। साहित्यदर्पण ३.२४५-२४८

२. साहित्यदर्पण ३.२४९ (वृत्तिः)

२. स्फुटं चमत्कारितया वत्सलञ्च रसं विदुः।
स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतम्।।
उद्दीपनानि तच्चेष्टा विद्याशौर्यदयादयः।
आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणम्।।
पुलकानन्दवाष्पाद्या अनुभावाः प्रकीर्तिताः।
सञ्चारिणोऽनिष्टशङ्काहर्षगर्वादयो मताः।। साहित्यदर्पण ३.२५१-२५३

भक्तिरसस्यालम्बनविभावो भगवान्। तुलसीचन्दनादय उद्दीपनविभावाः। नेत्रविकार-नृत्यगीताश्रुपातरोमाञ्चादयोऽनुभावाः। निर्वेदादयो व्यभिचारिभावाः सन्ति। एतैर्निष्पन्नो रतिरूपस्थायिभावो भक्तिरसदशामापद्यते। इयं भक्तिः परमानन्दसाक्षात्काररूपा भवति।[1]

## ९. रसानां वर्णाः देवताश्च

प्राचीनसाहित्ये रसानां वर्णानां देवतानाञ्चाऽपि वर्णनमुपलभ्यते। विभिन्नरसानां पृथक्पृथग्वर्णाः देवताश्च वर्णिताः। संस्कृतसाहित्ये विभिन्नवस्तूनां गुणानां वर्णानाञ्च कल्पना मनीषिभिः कृता। देवतागुणानुसारेण तत्सम्बन्धितरसानामपि देवताधिष्ठातृत्वं काव्यशास्त्रकृद्भिः कल्पितम्। रसानां वर्णानां देवतानाञ्च कल्पना प्रथमं भरतेन कृता। भरतस्त्वष्टरसानामेव विवेचनमकरोदतस्तत्र नाट्यशास्त्रे अष्टरसानामेव वर्णानां देवतानाञ्च कल्पना विद्यते।[2] विश्वनाथो वत्सलरसस्य[3] शान्तस्य[4] च वर्णदेवानां कथनञ्चकार। तेषां संक्षिप्तविवरणमधो-लिखितरूपेण प्रस्तूयते –

| संख्या | रसाः | वर्णाः | देवताः |
|---|---|---|---|
| १. | शृङ्गारः | श्यामः | विष्णुः |
| २. | हास्यः | श्वेतः | प्रमथः |
| ३. | करुणः | कपोतः | यमः |
| ४. | रौद्रः | रक्तः | रुद्रः |
| ५. | वीरः | गौरः | इन्द्रः |
| ६. | भयानकः | कृष्णः | कालः |

---

१. आलम्बनविभावो भगवान् उद्दीपनविभावस्तुलसीचन्दनादिः। अनुभावो नेत्रविक्रियादिः। व्यभिचारिणो निर्वेदादयः।। व्यक्तीभवद् भगवदाकाररूपो रत्याख्यः स्थायिभावः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवति। भक्तिरसामृतसिन्धु पृ० १३

२. श्यामो भवेत्तु शृङ्गारः सितो हास्यः प्रकीर्तितः।
कपोतः करुणश्चैव रक्तो रौद्रः प्रकीर्तितः।।
गौरो वीरस्तु विज्ञेयः कृष्णश्चापि भयानकः।
नीलवर्णस्तु बीभत्सः पीतश्चैवाऽद्भुतः स्मृतः।।
शृङ्गारो विष्णुदैवत्यो हास्यः प्रमथदैवतः।
रौद्रो रुद्राधिदेवश्च करुणो यमदैवतः।।
बीभत्सस्य महाकालः कालदेवो भयानकः।
वीरो महेन्द्रदेवः स्यादद्भुतो ब्रह्मदैवतः।। भरतनाट्यशास्त्र ६.४२-४५

३. पद्मगर्भच्छविर्वर्णो दैवतं लोकमातरः। साहित्यदर्पण ३.२५४

४. कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः।। साहित्यदर्पण ३.२४६

| | | | |
|---|---|---|---|
| ७. | बीभत्सः | नीलः | महाकालः |
| ८. | अद्भुतः | पीतः | ब्रह्मा |
| ९. | शान्तः | कुन्देन्दुशुभ्रः | श्रीनारायणः |
| १०. | वत्सलः | पद्मगर्भसदृशः | लोकमातरः |

## १०. रसानां परस्परविरोधस्तत्परिहारश्च

काव्येषु रसनिष्पादनेन सह तेषां परस्परविरोधसम्भावनाऽपि मनीषिभिः कल्पिता। केचन रसाः परस्परविरोधिनो भवन्ति केचन च न। यथा शृङ्गारकरुणयोः बीभत्सादिरसैः, वीरस्य च भयानकरसेन विरोधः कल्पितः।

रसानां विरोधिताऽविरोधिता च त्रिभिः प्रकारैः सम्भवति -

(i) आलम्बनैक्येन

(ii) आश्रयैक्येन

(iii) नैरन्तर्येण

वीरशृङ्गारयोरालम्बनैक्येन परस्परं विरोधः। आलम्बनैक्येनैव सम्भोगशृङ्गारस्य विरोधो हास्यरौद्रबीभत्सैर्भवति। अथ च विप्रलम्भशृङ्गारस्य विरोधो वीरकरुणरौद्रबीभत्सैः सह वर्तते। आश्रयैक्येन वीरभयानकौ परस्परं विरोधिनौ भवतः। शान्तशृङ्गारयोः परस्परं विरोधो नैरन्तर्येणाऽस्ति।[१]

काव्येषु रसनिबन्धनविषये काव्यशास्त्रविद आमनन्ति, काव्ये एको रसोऽङ्गीकर्तव्योऽन्ये च रसास्तदङ्गरूपेण नियोजनीयाः। रसानां परस्परविरोधितामुपलक्ष्य काव्येषु तेषां निबन्धने विरोधपरिहाराय केचन नियमाः काव्यशास्त्रकृद्भिरुपदिष्टाः। संक्षेपेण तेऽत्र प्रस्तूयन्ते -

(i) आलम्बनैक्येन विरोधिरसानां निबन्धनं नैव करणीयम्।

(ii) आश्रयैक्येन रसानां परस्परविरोधे सञ्जाते ते रसाः भिन्नाश्रयत्वेन नियोजनीयाः।[२]

---

१. इह खलु रसानां विरोधिताया अविरोधितायाश्च त्रिधा व्यवस्था। कयोश्चिदालम्बनैक्येन क्योश्चिदाश्रयैक्येन कयोश्चिन्नैरन्तर्येणेति। तत्र वीरशृङ्गारयोरालम्बनैक्येन विरोधः। तथा हास्यरौद्रबीभत्सैः सम्भोगस्य। वीरकरुणरौद्रादिभिर्विप्रलम्भस्य। आश्रयैक्येन च वीरभयानकयोः। नैरन्तर्यविभावैक्याभ्यां शान्तशृङ्गारयोः। त्रिधाऽप्ययं विरोधो वीरस्याद्भुतरौद्राभ्याम्। शृङ्गारस्याद्भुतेन भयानकस्य बीभत्सेनेति। तेनाऽत्र वीरशृङ्गारयोर्भिन्नालम्बनत्वान्न विरोधः।

साहित्यदर्पण ७.३१ वृत्तिः।

२. विरुद्धैकाश्रयो यस्तु विरोधी स्थायिनो भवेत्।
स विभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदुष्टता।। ध्वन्यालोक ३.१५

(iii) नैरन्तर्येण रसानां परस्परविरोधे सति विरोधिरसमध्ये कश्चिदविरोधी रसो नियोजनीयः।[1]

(iv) अधोलिखितास्ववस्थासु परस्परविरोधिनो रसा अपि न विरोधभावं भजन्ते -[2]

(क) द्वयोः परस्परविरुद्धयोः रसयोः स्मरणात्मकवर्णने विरोधो निवर्तते।

(ख) द्वयोः परस्परविरुद्धयोः रसयोः समभावत्वेन विवक्षायामत्र गुणप्रधानभावो न विद्यते।

(ग) द्वयोर्विरोधिरसयोर्यदैकोऽङ्गीभवति द्वितीयश्चाऽङ्गतां प्राप्नोति।

रसेषु परस्परविरोधस्य तद्विरोधपरिहारस्य च काव्यशास्त्रग्रन्थेषु विस्तरेण विवेचनं विद्यते। अत्राऽयं प्रसङ्गः समासेनैव प्रदर्शितः। विस्तरेणाऽध्ययनाय तत्तद्ग्रन्थानामवलोकनं कर्तव्यम्।

## ११. भावादयः

काव्यानां रसात्मकत्वाद् रसात्मकं वाक्यं काव्यपदवाच्यं भवति। रसश्च काव्यस्याऽऽत्मा कथितः। भावादयोऽपि रसात्मकत्वाद् (आस्वाद्यमानत्वात्) रसकोटिका एव भवन्ति। उपचारेण तेऽपि रसा एव प्रोच्यन्ते। भेदस्त्वयमेव यदेते विभावादिसामग्रीभिर्न तथा पुष्टिं प्राप्नुवन्ति, यथा रसाः। भावादीनां निम्नप्रभेदाः परिगण्यन्ते -

(i) भावः (ii) रसाभासः (iii) भावाभासः (iv) भावशान्तिः (v) भावोदयः (vi) भावसन्धिः (vii) भावशवलता च।[3] रसप्रसङ्गे भावादीनामेतेषामपि स्वरूपं ज्ञातव्यम्।

**(i) भावः -**

देवादिविषया रतिः, प्रधानरूपेणाऽभिव्यञ्जितो व्यभिचारिभाव उद्‌बुद्धमात्रस्थायिभावश्च विभावादिभिः पूर्णरूपेण न परिपुष्टो भाव इत्युच्यते।[4] मम्मटेन पुत्रविषया रतिरपि भावः प्रोक्तः। परन्तु विश्वनाथः पुत्रविषयां रतिं वत्सलरसं जगाद।

**(ii) रसाभासः -**

अनौचित्यप्रवर्तितो रसो वा भावो वा क्रमशः रसाभासो भावाभासश्च काव्यशास्त्रकृद्भिः प्रतिपादितः।[5]

---

१. एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्।
रसान्तरव्यवधिना रसो व्यङ्ग्यो सुमेधसा।। ध्वन्यालोक ३.२६

२. स्मर्यमाणो विरुद्धोऽपि साम्येनाऽथ विवक्षितः।
अङ्गिन्यङ्गत्वमापन्नौ तौ न दुष्टौ परस्परम्।। काव्यप्रकाश ७.६५

३. रसभावौ तदाभासौ भावस्य प्रशमोदयौ।
सन्धिः शबलता चेति सर्वेऽपि रसनाद् रसाः।। साहित्यदर्पण ३.२६०

४. सञ्चारिणः प्रधानानि देवादिविषया रतिः।
उद्‌बुद्धमात्रस्थायी च भाव इत्यभिधीयते।। साहित्यदर्पण ३.२६१

५. तदाभासा अनौचित्यप्रवर्तिताः। काव्यप्रकाश ४.३६

विश्वनाथेन रसानौचित्यस्य निम्नहेतवः प्रोक्ताः[१] -

(क) **शृङ्गारस्याऽनौचित्यम्** -

उपनायकविषयो रतिभावः, मुनिगुर्वादिपत्नीगतरतिभावः, अनेकनायकविषयगत-रतिभावः, अनुभयनिष्ठो रतिभावः, प्रतिनायकगतो रतिभावः, अधमपात्रगतो रतिभावः, पशुपक्षिनिष्ठो रतिभावश्चेत्येवमादयः।

(ख) **रौद्ररसस्याऽनौचित्यम्** -

गुर्वादिपूज्यजनं प्रति क्रोधप्रदर्शनम्।

(ग) **शान्तरसस्याऽनौचित्यम्** -

अधमपात्रगतशमस्याऽभिव्यञ्जनम्।

(घ) **हास्यरसस्याऽनौचित्यम्** -

गुर्वादीनां पूज्यजनानां हास्यावलम्बनम्।

(ङ) **वीररसस्याऽनौचित्यम्** -

ब्राह्मणादिवधायोत्साहप्रदर्शनम्, अधमपात्रगतोत्साहवर्णनञ्च।

(च) **भयानकरसस्याऽनौचित्यम्** -

उत्तमपात्रगतभयानकरसस्याऽवलम्बनम् (उत्तमपात्रगतभयवर्णनम्)।

**(iii) भावाभासः** -

अनौचित्येन प्रवर्तितो भावो भावाभास इत्युच्यते। वेश्यादिनायिकाभिर्लज्जाप्रदर्शनम्, अनुचितस्थानेषु वा भावप्रदर्शनं भावाभास इत्युच्यते।

**(iv) भावशान्तिः** -

भावस्य शान्तौ भावशान्तिर्भवति। पूर्वमुदितस्य भावस्य सहसा चमत्कारपूर्विका शान्तिः भावशान्तिरित्युच्यते।[२]

---

१. उपनायकसंस्थायां मुनिगुरुपत्नीगतायाञ्च।
बहुनायकविषयायां रतौ तथानुभयनिष्ठायाम्।।
प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्यगादिगते।
शृङ्गारेऽनौचित्यं रौद्रे गुर्वादिगतकोपे।।
शान्ते च हीननिष्ठे गुर्वाद्यालम्बने हास्ये।
ब्रह्मवधाद्युत्साहेऽधमपात्रगते तथा वीरे।।
उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र।। साहित्यदर्पण ३.२६३-२६६

२. भावस्य शान्तावुदये सन्धिमिश्रितयोः क्रमात्।
भावस्य शान्तिरुदयः सन्धिः शबलता तथा।। साहित्यदर्पण ३.२६७

(v) **भावोदयः -**

एकस्य भावस्य प्रशान्ते सत्यन्यस्य भावस्य चमत्कृतिपूर्वकमुदयो भावोदयस्याऽवस्था भवति।

(vi) **भावसन्धिः -**

एकस्मिन् भावे उदयङ्गतेऽन्यस्याऽपि भावस्य यद्युदयो जायते, तदेयमवस्था भावसन्धिरित्युच्यते, यद्यत्र द्वावेव भावौ तुल्यबलौ स्याताम्।

(vii) **भावशबलता -**

एकमनु द्वितीयो भावो, द्वितीयमनु तृतीयो भावस्तृतीयमनु च चतुर्थो भाव, इत्येवं क्रमेण भावानामुदये सति, अवस्थेयं भावशबलतोच्यते।

## १२. रसानां सुखदुःखात्मकत्वम्

अतिप्राचीनकालादेव काव्यसमीक्षागतविषयोऽयं विवादास्पदतां भजते, यद् रसानुभूतिः रसास्वादनं वा कीदृग्विधम् ? सुखरूपं दुःखरूपमुभयविधं वा। लौकिकरसकाव्यरसानुभूत्योः परस्परं भिन्नत्वं वा रूपैकत्वं वा ? प्रायश आचार्याः रसानुभूतिमानन्दमयीं सुखरूपां प्रतिपादयन्ति।

(१) **रसानां सुखरूपमात्रत्वम् -**

सहृदयजनाः सत्त्वगुणोद्रेकेण अखण्डप्रकाशानन्दमयचिन्मयवेद्यान्तरस्पर्शशून्यब्रह्मास्वादसहोदरलोकोत्तरचमत्कारप्राणं रसं स्वाकारभिन्नत्वेनाऽऽस्वादयन्ति।[1] इत्थञ्चाचार्याः रसं सर्वथा सुखमयममन्यन्त। तेषामिदमप्यभिमतमासीद् यत् काव्येषु करुणादयो रसा अपि सुखात्मका एव भवन्ति। अत्र सहृदयहृदयान्येव प्रमाणत्वेनाऽवतिष्ठन्ते। विश्वनाथादयः शास्त्रकृतस्तर्कयामासुः -

यदि करुणादिरसानामनुभूतिर्दुःखमयी अभविष्यत्तर्हि कोऽपि सहृदयजनः करुणरसप्रधानानि काव्यानि प्रत्युन्मुखो नाऽभविष्यत्। तास्ववस्थासु रामायणादीनि करुणरसप्रधानानि काव्यान्यपि दुःखकारणान्यभविष्यन्।[2]

---

१. सत्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः।।
लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः।
स्वाकारवदभिन्नत्वेनाऽयमास्वाद्यते रसः।। साहित्यदर्पण ३.२-३

२. करुणादावपि रसे जायते यत्परं सुखम्।
सचेतसामनुभवः प्रमाणं तत्र केवलम्।।
किञ्च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः।
तत्र रामायणादीनां भविता दुःखहेतुता।। साहित्यदर्पण ३.४-५

करुणादिषु रसेष्वप्यानन्दमय्यनुभूतिर्भवतीति हेतुरत्राऽपरोऽपि वर्तते। लौकिकाः हेतवः कारणान्यथ कार्याणि सहकारीणि च दुःखात्मकत्वाद् दुःखहेतवो भवन्तु, परन्तु काव्येषु प्रस्तुताः ह्येते लोकोत्तररूपेण परिणमन्ति। अलौकिकाः ह्येते हेतवः करुणभयानकादिरसरूपेण परिणताः (अभिव्यज्यमानाः) दुःखात्मकत्वरहिताः सञ्जायन्ते। अत एषा रसानुभूतिः सुखमय्येव भवति। वनवाससीताहरणादिचक्रं रामायैव दुःखकारणम्। परन्तु काव्येष्वेते हेतवोऽलौकिकपदप्रतिष्ठिता विभावादिरूपपरिणताः सहृदयहृदयेषु सत्त्वगुणोद्रेकमापादयन्ति। एवञ्च लौकिकहर्षशोकादिकारणैः लौकिकहर्षशोकादयः समुत्पद्यन्ते। अयमेव लौकिको नियमः। परं काव्येषु विभावादीनामलौकिकत्वाद् एतैः सुखमेव सञ्जायते।

रसानां सुखदुःखात्मकत्वप्रसङ्गो धनिकेनाऽपि सूक्ष्मत्वेन विवेचितः। विवादविषयोऽयमवर्तत -

रसेषु सुखात्मकशृङ्गारवीरहास्यादिष्वभिव्यज्यमानेषु सुखानुभूतिर्भवतु, परं दुःखात्मककरुणादयो रसाः कथं प्रीतिमुत्पादयिष्यन्ति ? करुणरसयुक्तकाव्यानां दर्शनेन श्रवणेन पठनेन वा दुःखस्यैवाऽऽविर्भावो भवति, अश्रुपातादयः सञ्जायन्ते। यदि च करुणादयो रसा अपि आनन्दरूपाः स्युस्तर्हि कथमेतेऽनुभावाः प्रकटेयुः। धनिकस्तु विवादस्याऽस्य समाधानमेवञ्चकार -

सत्यमिदं यत् करुणरसप्रधानकाव्यश्रवणेन रसिकजनाः दुःखमाप्नुवन्ति। परन्तु लौकिककरुणादिभ्यः काव्यगतकरुणरसो दुःखरूपोऽप्यानन्दात्मको भवति। स तु सुखदुःखमिश्रितमानन्दमर्पयति। प्रक्रिया त्वस्यैवंविधा वर्तते -

सुरतसमये कामिन्यो यथा दन्तनखक्षतप्रहारादिभिरप्यानन्दमनुभवन्ति तथैव करुणरसादयो दुःखात्मका अपि सहृदयहृदयेष्वानन्दं जनयन्ति। काव्यगतकरुणरसस्य लौकिककरुणभिन्नत्वात् तं प्रति सामाजिकानां प्रवृत्तिर्भवत्येव। यदि काव्यगतकरुणरसोऽपि लौकिककरुणवद्दुःखात्मक एव स्यात्, कथं तं प्रति कस्याऽपि सहृदयस्य प्रवृत्तिर्भवेत् ? आस्ववस्थासु करुणरसप्रधानानां रामायणादिमहाकाव्यानामुच्छेद एव स्यात्। ईदृशेषु काव्येषु करुणसम्भृतवर्णनानि पठित्वा दृष्ट्वा श्रुत्वा वा सामाजिकानामश्रुपातादयो नानन्दानुभूतेर्विरोधिनः।[१]

पण्डितराजेन जगन्नाथेनाऽपि रसानुभूतिरानन्दमय्येव प्रतिपादिता। स्वस्वरूपाकारेयमनुभूतिः सविकल्पके समाधौ योगिनां चित्तवृत्तिरिव भवति। परमयमानन्दो लौकिकसुखविलक्षणोऽन्तःकरणवृत्त्ययुक्तः स्वतः चैतन्यरूपत्वात्।[२]

---

१. दशरूपक ४.४४-४५ वार्तिक धनिकटीका

२. तत्तत्स्थाय्युपहितस्वस्वरूपानन्दाकारा समाधाविव योगिनश्चित्तवृत्तिरुपजायते तन्मयीभवनमिति यावत्। आनन्दो ह्ययं लौकिकसुखान्तरसाधारणः अन्तःकरणवृत्तिरूपत्वात्।
रसगङ्गाधर - प्रथम आनन - पृ० ८६-८७

पण्डितराजो जगन्नाथः करुणादिरसानामाह्लादकत्वं सतर्कं सप्रमाणञ्च प्रतिपादयामास। करुणरसस्य नियोजनमेव काव्ये तस्य रसवत्त्वमाह्लादहेतुत्वञ्च प्रतिपादयति। सहृदयहृदयमेवाऽत्र-प्रमाणम् -

यथा शृङ्गाररसप्रधानानि काव्यान्याह्लादकारणानि भवन्ति, तथैव करुणरसप्रधानानि काव्यान्यपि सहृदयहृदयेष्वाह्लादं जनयन्ति। यदि करुणादिरसाः दुःखहेतव एवाऽभविष्यन् तत्कथं तान् प्रति सहृदयानां प्रवृत्तिरेवाऽवर्तिष्यत। वस्तुतो लोकोत्तरकाव्यव्यापार एवाऽऽह्लादहेतुः। करुणादिरसानुभूतिषु येऽश्रुपातादयो जायन्ते, न ते दुःखहेतवः, परं परमानन्दानुभावका एव। यथा भगवद्भक्ताः भगवतो वर्णनमाकर्ण्याऽश्रूणि निपातयन्ति, तत्र न केषाञ्चिद् दुःखानुभवस्तथैवाऽत्राऽपि काव्येषु करुणादिरसेष्वपि सुखानुभूतिरेव। लोकोत्तरकाव्यव्यापारस्याऽयं महिमा, यत् काव्येषु प्रयुज्यमाना अरमणीया अपि शोकादिपदार्था अलौकिकीं रमणीयतां जनयन्ति। काव्यव्यापारैः समुत्पन्नेयं रमणीयताऽऽह्लादो वा विलक्षणरूपेण कमनीयतां दधाति। करुणं रसत्वेनाऽमन्यमानो जनस्तमाह्लादकं वा विलक्षणं वा चमत्कारिणं वाऽनवगच्छन् न काव्यकलाक्षेत्रप्रवेशाधिकारं भजते।

काव्यगतकरुणादिरसानामाह्लादकत्वे साधारणीकरणव्यापार एव मुख्यं कारणम्। साधारणीकरण-व्यापारेण विभावादीनां विशिष्टांशस्य परित्यागो भवति। तदनन्तरं लौकिकव्यक्तिगतसम्बन्धास्तिरो-भवन्ति। परन्तु व्यक्तिगतसम्बन्धस्य तिरोधानेनोदात्ततायाश्च समावेशेनाऽऽनन्दमात्रमव-शिष्यते। मधुसूदनदत्तेन प्रतिपादितम् - रत्यादिभावाः बोध्यनिष्ठाः (दुष्यन्तादिपात्रगताः) भवन्तः सुखदुःखगताः भवन्ति, परं बोद्धृनिष्ठाः (सामाजिकगताः) सन्तः सुखमेवोपजनयन्ति। अतः करुणादिरसानामानन्दमयत्वं न बाध्यते।[1]

एवं प्रायशो भारतीयैः सर्वैरेव प्राचीनाऽऽचार्यैः रसानामानन्दरूपत्वं प्रतिपादितम्। पाश्चात्यकाव्यशास्त्रकृतोऽपि रसानानन्दरूपान् प्रतिपादयन्ति। अत्र अरस्तूमहोदयस्य विरेचनसिद्धान्तोऽतितरां (Catharsis) प्रसिद्धः। अरस्तूमहोदयेन प्रतिपादितम् -

त्रासद्यामतिशयेनोत्तेजनत्वान्मनःसंवेगानां शमनं (विरेचनं) भवति। विरेचनेनाऽनेन करुणत्रासभावानां कटुत्वं विनिवर्तते मनश्च विशदीभवति। सहृदयोऽत्र शान्तिमधिगच्छति। सहृदयजनाश्चाऽत्र प्रसीदन्ति।

बुशरमहोदयस्याऽप्यत्राऽभिमतं वर्तते, यच्छोकादिभावानां काव्येषु कटुत्वं तावदेव प्रतीयते यावत्ते वैयक्तिकभौतिकसीमाबद्धाः वर्तन्ते। स्वत्वसीमाविनाशे (साधारणीकरणे) तेषां कटुत्वं विनश्यति सुखदाश्च ते भवन्ति।

प्रसिद्धो दार्शनिकः कांटमहोदयः कलावादी समीक्षको रोजरफ्राइममहोदयः क्लाइववेलश्च त्रयोऽपि पाश्चात्यमनीषिणः कलागतानुभूतिं लोकोत्तरमयीं मन्यन्ते। लौकिकभावाः काव्यगतभावाश्च सर्वथा भिन्नत्वं दधति। लौकिकभावा एव काव्यगताः भूत्वा विभावादिरूपत्वेन परिणमन्ति। काव्यगताऽनुभूतिर्लौकिकानुभूत्या न कथमपि सम्बद्धा। सा हि सर्वदा आनन्दरूपा भवति।

---

१. भक्तिरसामृतसिन्धुः ३.५-६

प्रसिद्धः काव्यशास्त्री दार्शनिकोऽभिनवगुप्तः सामान्येन रसानान्दमयानेव मनुते, परमुभयात्मकमपि कदाचित् गणयति। नाट्यशास्त्रस्याऽभिनवभारतीटीकायां तेन प्रस्तुतम् -

सर्वेष्वेव रसेषूभयात्मिकाऽनुभूतिर्भवति - सुखात्मिका दुःखात्मिका च। तत्र सुखदुःखयोर्द्वयोरेव समावेशोऽनुभूयते। परन्तु कस्मिंश्चिद्रसे सुखस्य कस्मिंश्चिदपि च रसे दुःखस्य प्राधान्यं निवसति। शृङ्गारहास्यवीराद्भुतरसेषु सुखस्य प्राधान्येन सह दुःखस्याऽनुबन्धनमपि निश्चयेन विद्यते। अथ च रौद्रभयानककरुणबीभत्सरसेषु दुःखस्य प्राधान्येन सह सुखस्याऽप्यनुबन्धोंऽशरूपेण भवत्येव। अभिनवगुप्तः शान्तरसमेव केवलं सर्वात्मना सुखात्मकमाह।[१]

आधुनिकभारतीयसमीक्षकेषु डा० नगेन्द्रमहोदयेन रसानां सुखदुःखात्मकत्वं विशेषरूपेण विस्तरेण च समीक्षितम्। तेन प्रतिपादितम् - रसेषु सर्वेषु सुखरूपाऽनुभूतिरेवाऽवगन्तव्या। नगेन्द्रमहोदयस्य विवेचनं निम्नप्रकारेण संक्षेपेण प्रस्तूयते -

आनन्दाऽनुभूतिर्द्विविधा - भौतिकी आध्यात्मिकी च। भौतिकी चाऽनुभूतिरपि त्रिविधा - ऐन्द्रियिकी, रागात्मिका बौद्धिकी च। काव्यात्मिकाऽनुभूतिस्तिसृणामेवैतासामनुभूतीनां सम्मिश्रणम्। सा च तिसृणामपि मध्यवर्तिनी। काव्यात्मिकानुभूतिषु ह्येकतस्तु ऐन्द्रियिकानामनुभूतीनां स्थूलता कटुता च न लक्ष्यतेऽपरतस्तु बौद्धिकानुभूतीनामरूपत्वमपि निवर्तते। अतस्ताः परिष्कृततराः सरसतरा आनन्दात्मिकाश्च भवन्ति।

आनन्दवादिनामाचार्याणां मतानां विश्लेषणेन काव्यगतरसानुभूतीनां वैशिष्ट्यानि निम्नवत् परिलक्ष्यन्ते -

(i) काव्यानां रसरूपानुभूतिरानन्दमय्येव वर्तते। अलौकिकीयमनुभूतिः सततमानन्दप्रदा। सहृदयाः शृङ्गारादिरसैः सह करुणबीभत्सादिरसप्रसङ्गेष्वप्यानन्दमनुभवन्ति।

(ii) करुणादिरसेष्वप्यानन्दानुभवस्य हेतुर्मुख्यरूपेण वर्तते लौकिकानि कारणकार्यसहकारीण्युपादानानि काव्येष्वलौकिकविभावानुभावव्यभिचारिभावरूपेण परिणमन्ति। तेषां व्यक्तिगतविशिष्टांशास्तिरोभवन्ति। सङ्कुचिताश्च सीमानो विनश्यन्ति। अतस्तेषां कटुत्वं विनश्यति, दुःखप्रदत्वञ्च दूरीभवति।

(iii) काव्यगतरसानुभूतिः सत्त्वगुणप्रधाना वर्तते। अतोऽन्यत् सर्वं तिरोभवति। इयमनुभूतिर्ब्रह्मानन्दसहोदरा अन्यत्सर्वानुभूतिविलक्षणा भवति।

**(२) केषाञ्चित् रसानां सुखरूपत्वमन्येषाश्च दुःखरूपत्वम् -**

प्रायश आचार्याः रसान् सुखानुभूतिजनकानेवाऽऽम्नासिषुः। परं केचन आचार्याः सर्वेषां रसानां न सुखमयत्वं स्वीचक्रुः। अस्मिन् प्रसङ्गे नाट्यदर्पणकर्तारौ रामचन्द्रगुणचन्द्रौ प्राधान्येन गण्येते। तौ रसान् सुखदुःखमयान् प्रत्यापादयताम्।[२] तयोः प्रतिपादनं वर्तते -

---

१. काव्यप्रकाश - विश्वेश्वरकृतटीका पृ० १२१,

२. सुखदुःखात्मको रसः। नाट्यदर्पण १.६

केचन रसा: सुखात्मका अन्ये च दु:खात्मका: वर्तन्ते। रसेषु शृङ्गारहास्यवीराद्भुत-शान्तरसा: सुखात्मका: करुणरौद्रबीभत्सभयानकरसा: दु:खात्मका अवगन्तव्या:।[1]

सर्वेषां रसानां सुखात्मकभावं निराकुर्वता नाट्यदर्पणकारेण प्रोक्तम् -

सर्वेषां रसानां सुखात्मकत्वप्रतिपादनं प्रतीतिविरुद्धमस्ति। यथार्थलौकिकजगत: सिंहव्याघ्रादिविभावा: दु:खात्मभावं वहन्त्येव। काव्येष्वभिनयप्राप्तै: कृत्रिमैरपि विभावैर्निष्पन्नानां भयानकबीभत्सकरुणरौद्ररसानामास्वादयितृषु सहृदयेषु तेऽवर्णनीयां क्लेशदशामुत्पादयन्ति। अत: सामाजिका: भयानकादिरसैरुद्विग्ना: भवन्ति। परन्तु सुखस्याऽऽस्वादनेन नोद्विग्नतोत्पद्यते। अत: सर्वे रसा: न सुखात्मका:, केचन दु:खात्मका अपि वर्तन्ते।

रसानां सुखदु:खात्मकरूपसङ्केतो नाट्यदर्पणादपि पूर्ववर्तिषु काव्यशास्त्रग्रन्थेषु समुपलभ्यते। अभिनवगुप्तो नाट्यशास्त्रस्याऽभिनवभारतीटीकायां कस्यचित् प्राचीनाचार्यस्याऽपि मतमुल्लिलेख यद् रससामग्र्या: सुखदु:खात्मकत्वाद् रसा अपि सुखदु:खात्मका एव।[2] रुद्रभट्टेन रसकलिकायामपि रसानां सुखदु:खात्मकत्वादुभयात्मकत्वं प्रतिपादितम्।[3] भोजराजोऽपि शृङ्गार-प्रकाशे रसान् सुखदु:खात्मकानमन्यत।[4]

वामनस्य वचनं वर्तते - करुणरसप्रधानेषु नाटकेषु सहृदयजना: सुखदु:खमिश्रिता-मनुभूतिमनुभवन्ति।[5] प्रसिद्धोऽद्वैतवादी मधुसूदनाचार्य: सरस्वती सर्वानिव रसानानन्दात्मकान्न मनुते। क्रोधप्रधाने रौद्ररसे शोकमूलके च करुणरसे रजस्तमसोर्मिश्रणाद् विशुद्धस्याऽऽनन्दस्य नाऽस्तित्वम्। अत: सर्वेषु रसेषु न समानरूपेण सुखानुभूति:।[6]

---

१. तत्रेष्टविभावादिप्रथितस्वरूपसम्पत्तय: शृङ्गारहास्यवीराद्भुतशान्ता: सुखात्मान:। अपरे पुनरनिष्टविभावाद्युपनीतात्मान: करुणरौद्रबीभत्सभयानकाश्चत्वारो दु:खात्मान:।
नाट्यदर्पण ३.७ वृत्ति:।

२. येन त्वभ्यधायि सुखदु:खजननशक्तियुक्ता विषयसामग्री बाह्यैव सुखदु:खस्वभावो रस:।
अभिनवभारती भाग - १ पृ० २७८ कस्यचिदज्ञातस्याऽऽचार्यस्य वचनम्।

३. करुणभयानकानामप्युपादेयत्वं सामाजिकानाम्। रसस्य सुखदु:खात्मकतया तदुभयलक्षणेन उपपद्यते। अत एव तदुभयजनकत्वम्। वी० राघवन् कृत 'नम्बर आफ रसाज' पुस्तके १५५ पृष्ठे रसकलिका। मद्रास पाण्डुलिपिग्रन्थस्य ५१-५२ पृष्ठादुद्धृतम्।

४. रसा हि सुखदु:खरूपा:। शृङ्गारप्रकाशस्य द्वितीयो भाग: पृ० ३९६ (मद्रास पाण्डुलिपि:) नम्बर आफ रसाज़ १५५ पृष्ठादुद्धृतम्।

५. करुणप्रेक्षणीयेषु सम्प्लव: सुखदु:खयो:।
यथाऽनुभवत: सिद्धस्तथैवौज:प्रसादयो:।। काव्यालङ्कारसूत्रवृत्ति ३.१.९

६. द्रवीभावस्य च सत्त्वधर्मत्वात् तं विना च स्थायिभावासम्भवात् सत्त्वगुणस्य सुखरूपत्वात् सर्वेषां भावानां सुखमयत्वेऽपि रजस्तमोंऽशमिश्रणात् तारतम्यमवगन्तव्यम्। अतो न सर्वेषु रसेषु तुल्यसुखाऽनुभव:। भक्तिरसायन पृ० २२

परन्तु प्रश्नस्त्वयमत्र समुदेति, यत् सामाजिकाः केषुचिद् रसेषु यदि दुःखमनुभवन्ति, तत् कथं तत्र तेषां प्रवृत्तिः। यथास्थितवस्तुप्रदर्शनकर्तुः कवेरभिनेतुर्वा सामर्थ्यकौशलमेवाऽत्रोत्तरम्। शौर्याभिमानिनो जनाः प्रहारकुशलाच्छिरःकर्तनपराद् रिपोरपि विस्मिताः भवन्ति। कवेरभिनेतुर्वा कौशलेन समुत्पन्नेन सर्वाङ्गाह्लादनकरेण चमत्कारेण सम्मोहिताः बुद्धिमन्तोऽपि करुणादि-दुःखात्मकरसेष्वपि परमानन्दस्वरूपमवगच्छन्ति। काव्यरसास्वादलुब्धाः दर्शका अपि तत्र प्रवर्तन्ते।

कवयस्तु सुखदुःखात्मकजगदनुरूपं रामादीनां चरितनिबन्धनं कुर्वन्तः सुखदुःखात्मक-रससम्भृतानि काव्यानि रचयन्त्येव। यथा पानकरसमाधुर्यं दुःखात्मकतीक्ष्णरसास्वादेन रुचिरतरं प्रतिभाति, तथैव स्थितिः काव्येष्वपि कल्पनीया। अन्यथा सीताहरणं, द्रौपदीकेशाकर्षणं, हरिश्चन्द्रस्य चाण्डालदासत्वं, रोहिताश्वमरणं, लक्ष्मणस्य शक्तिप्रहारजनिताचेतनत्वं, मालतीवधोपक्रमणं, सीतायाः वनवासप्रेषणमिति बहुविधानां घटनानामभिनीयमानानामवलोकनेन सहृदयजनाः कं सुखमास्वादयेयुः।[1]

परन्तु नाट्यदर्पणकारोऽन्ये चाऽऽचार्या उपरिवर्णिताः रसानां सुखदुःखात्मकभावस्य यं सिद्धान्तं प्रतिपादयामासुः, भारतीयसमालोचनाजगति नाऽसौ सर्वमान्यो बभूव। बहुसंख्यकाः काव्यशास्त्रकर्तारः काव्यरसान् सुखात्मकानेव स्वीचक्रुः।

आधुनिकभारतीयसमालोचकेष्वपि केचन आचार्याः, कांश्चिद् रसान् दुःखप्रधानान् प्रतिपादयन्ति। अत्र रामचन्द्रशुक्लमहोदयः प्रसिद्ध आचार्यः। तस्य प्रतिपादनं वर्तते -

करुणरसप्रसङ्गान् संयोजयतः कवेर्लक्ष्यं भवति, यत् सहृदयसामाजिका अपि करुणभावाननुभवेयुः। यदि काव्यानां दुःखात्मकप्रसङ्गेष्वपि सहृदयसामाजिकाः सुखमेवाऽनुभवन्ति, तस्य कवेः काव्यरचनाया उद्देश्य एव विफलायते। कविस्तु काव्ये लौकिकसत्यमेव प्रस्तौति, उद्घाटयति। परं समाजिकः काव्यमधीत्य मुक्तदशां प्राप्नोति। काव्यमधीत्य पाठकः स्वल्वसङ्कु-चितावस्थाया उपर्युत्थाय काव्यगतवस्तुना सह तदाकारतामनुभवति। इयमेव मुक्तदशा वर्तते रसानुभूतिश्च। अत्र दुःखात्मकप्रसङ्गेष्वपि पाठको निश्चयेन तदनुकूलमेवाऽनुभवति।

पाश्चात्यसमीक्षकेषु आई०ए० रिचर्ड्समहोदयस्याऽभिमतं वर्तते, यत् काव्यगतानुभूतिः सुखात्मिकाऽपि भवति, दुःखात्मिकाऽपि च। कवेः कौशलमिदमेव यदसौ लोकगतानुभूतीनां समावेशं काव्येषु विदध्यात् पाठकांश्च तांस्तथैवाऽनुभावयेत्।

**(३) निष्कर्षः -**

सर्वे रसाः सुखात्मका इति सिद्धान्तप्रतिपादनपक्षे प्रस्तुताभिः प्रबलयुक्तिभिः सह तेषां रसानां सुखदुःखात्मकसिद्धान्तप्रतिपादनपक्षेऽपि प्रस्तुता युक्तयो नाल्पसामर्थ्यशालिन्यः। वस्तुतस्त्वत्र सहृदयहृदयान्येव प्रमाणरूपाणि। इयं कल्पना वास्तविकी, यदि करुणादिरसाः

१. नाट्यदर्पण ३ ७ वृत्तिः।

सर्वथा दुःखात्मकाः कल्प्यन्ते, करुणरससम्भृतानि काव्यानि प्रति सहृदयजनानां न प्रवृत्तिर्भविष्यति। तत्र सहृदयहृदयाकर्षणगुणाः सन्त्येव, यैस्ते तादृशेषु काव्येषु प्रवर्तन्ते। अस्मिन् प्रकरणे निम्नतथ्यानि प्रस्तूयन्ते -

(i) करुणादिरसानां स्थायिभावानां लौकिकावस्थासु दुःखजननसम्भावना। परन्तु काव्यगतरसानां स्थायिभावाः लोकोत्तरावस्थासु न दुःखात्मकाः।

(ii) करुणभयानकादिरसानां स्थायिभावास्तावदेव सहृदयेषु दुःखात्मिकामनुभूतिमनुभावयन्ति, यावत्तेषां तैः सह स्वत्वसङ्कुचितसम्बन्धो विद्यते। काव्येषु विभावादीनां साधारणीकरणव्यापारेण स्वत्वसङ्कुचितसम्बन्धस्तिरोभूय उदात्तभाव उत्पद्यते। अतस्तेषां दुःखरूपभावो विनश्यति।

(iii) करुणादिरसानां सुखदुःखात्मकानुभवः सहृदयानां मनोऽवस्थामप्याश्रयते। बहवो जनाः करुणरसप्रधानकाव्यानां नाट्यानां वा पठने श्रवणे प्रेक्षणे वा दुःखमनुभवन्तस्तेभ्यः सुदूरं तिष्ठन्ति। कुतूहलवशतः सकृदवेक्ष्याऽपि पुनस्तत्र न प्रवर्तन्ते। परन्तु मानसिकरूपेण बौद्धिकरूपेण वा प्रबुद्धाः सहृदयजनाः करुणरसप्रधानकाव्येष्वानन्दमनुभवन्ति। अभिनवगुप्तकृता सहृदयपरिभाषा वर्तते -

**'येषां काव्यानुशीलनवशाद् विशदीकृते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते सहृदयसंवादभाजः सहृदयाः।[१]**

(iv) अभिनेतुरभिनयकौशलमपि करुणादिरसप्रधानकाव्येषु रसानुभूतिं प्रभावयति। काव्यगतचमत्कृत्यनुभूतिप्रभावितः सहृदयसामाजिकस्तत्काव्यं प्रत्याकर्षणमनुभवति। कविप्रतिभासामर्थ्येन लौकिकदुःखोत्पादकविभावादयः काव्येषु प्रस्तूयमानाः लोकोत्तरतां प्राप्ताः चमत्कृतिमुत्पादयन्ति। सहृदयाश्च तया चमत्कृत्याऽऽनन्दनममन्दमनुभवन्ति।

(v) रससम्बन्धिदार्शनिकपृष्ठभूमिविवेचने प्रतिपादितोऽयं सिद्धान्तः - "विभावादिभिर्निष्पन्नतां गते स्थायिभावे सहृदयेन चाऽनुभूयमाने रसे रजस्तमसोः गुणीभावे सत्त्वगुणस्योद्रेकः सञ्जायते। रजस्तमोगुणावेव दुःखहेतू, सत्त्वगुणश्च सुखात्मकः। सत्त्वगुणोद्रेकेण रसास्वादनमपि सुखात्मकं भवति।

(vi) लोके यानि कारणानि दुःखात्मकानि गण्यन्ते, तानि सर्वेभ्य एव जनेभ्यो दुःखदायीनि नेति सार्वकालिकः सार्वभौमो नियमः। सुकठोरद्वन्द्वेष्वपि तपश्चरन् कश्चित् तपस्वी योगी ह्यानन्दमनुभवति। परन्तु सामान्यः सांसारिकप्रपञ्चगतो जनस्तान्येव द्वन्द्वानि दुःखरूपाण्यवगच्छंस्तेभ्यो निवर्तते। तत्र न प्रवर्तते। अनेनैव विधिना सामान्यजनापेक्षया प्रबुद्धतरः सहृदयो जनः करुणादिरसप्रधानकाव्येष्वानन्दमनुभवति। केचन समालोचका अनुभूतिमेनामात्मतोषाभिधानेन परिचाययन्ति। परन्तु सहृदयजनहृत्स्वानन्दानुभव एवैषः।

एवं काव्यगताः सर्वे रसाः सुखात्मका एवाऽवगन्तव्याः।

---

१. ध्वन्यालोक लोचनटीका पृ० १३

## १३. रसानां काव्यात्मत्वसमीक्षा

काव्यशास्त्रकृद्भिर्यो रसः काव्यस्याऽऽत्मेति व्यवस्थापितस्तस्य स्वरूपस्याऽनुभूति-प्रक्रियायाश्च संक्षेपेणाऽत्र निदर्शनं विहितम्। रसस्य काव्यात्मत्वप्रतिष्ठापनाय रसस्वरूप-विवेचनमनिवार्यमस्ति। रससिद्धान्तस्यैतिहासिकविवेचनं तस्य काव्यात्मभावं प्रतिपादयति।

भारतीयास्तिकदर्शनसिद्धान्तेषु पञ्चभूतनिर्मिते शरीरे आत्मैव प्रधानरूपेण प्रतिष्ठितः। आत्माऽसौ विशुद्धाजरामरनित्यानन्दमयचिन्मयविज्ञानमयब्रह्मरूप एव वर्तते। आत्माऽयमुपनिषत्सु रसरूपोऽपि वर्णितो, यमधिगम्य प्राणी आनन्दमयो भवति[1] काव्येषु रसस्याऽपि स्वरूपमेवंविधं प्रतिपादितं काव्यशास्त्रकृद्भिः। शब्दार्थशरीरे काव्ये रस एव प्रधानभूतः। अन्ये गुणालङ्कारा-दयस्तमलङ्कुर्वन्ति।

भरतो मुनिः प्रथमं काव्यरसविवेचनञ्चकार। यद्यप्यसौ नाट्यान्यपेक्ष्य रसानां विवेचनामकरोत्, तथापि काव्यनाट्ययोः बाह्यरूपं विहाय न कोऽपि भेदः। नाट्यान्यपि काव्यान्येव। अतः काव्येष्वपि तेषां रसानामवस्थितिः नित्यं सन्निहिता। उत्तरवर्तिभिराचार्यैः काव्यगतरसस्वरूपसमीक्षायै भरतस्य रससिद्धान्तोऽङ्गीकृतः। सिद्धान्तोऽसौ वर्तते -

**"न हि रसादृते कश्चिदर्थः प्रवर्तते।"[2]**

भरतमनु प्रायशः सर्व एवाऽऽचार्याः काव्ये प्रधानतत्त्वं रसमेवाऽऽचचक्षिरे। काव्येषु भावानां निबन्धनं विधीयते। अग्निपुराणस्य वचनमिदम् -

**न भावहीनोऽस्ति रसो न भावो रसवर्जितः।**
**भावयन्ति रसानेभिर्भाव्यन्ते च रसा इति।।[3]**

अथ च

**वाग्वैदग्ध्यप्रधानेऽपि रस एवाऽत्र जीवितम्।।[4]**

ध्वनिकारेणाऽऽनन्दवर्धनेन ध्वनिरेव काव्यस्याऽऽत्मा प्रतिपादितः।[5] तथाऽप्यसौ रसध्वनिमेव प्रधानममनुत। ध्वनिस्त्रिविधो भवति - वस्तुध्वनिः अलङ्कारध्वनिः रसध्वनिश्चेति। तत्र रसध्वनिः (रसभावरसाभासभावाभासभावशान्तिभावोदयभावसन्धिभावशबलताः) ध्वनेरप्यात्मा तेन प्रतिपादितः।[6] आनन्दवर्धनो रसमभिव्यङ्ग्यं प्रतिपाद्य तस्य ध्वनिरूपत्वं साधयामास।

---

१. रसो वै सः रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति। तैत्तिरीयोपनिषत् ३.७
२. भरतनाट्यशास्त्र ६.३३,
३. अग्निपुराण ३३९.१२
४. अग्निपुराण ३१९.१३
५. काव्यस्याऽऽत्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः। ध्वन्यालोक १.१
६. रसभावतदाभासभावशान्त्यादिरक्रमः।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः।। ध्वन्यालोक २.३

अन्येऽपि ध्वनिवादिन आचार्याः ध्वनिं काव्यस्याऽऽत्मानं प्रतिपाद्याऽपि रसध्वनिमेव प्रधानध्वनिमाहुः। अभिनवगुप्तस्य गुरुवर्यो भट्टतौतः काव्यकौतुकग्रन्थे रसस्य विवेचनञ्चकार। तस्य कतिपयानंशान् अभिनवगुप्त उदधरत्। भट्टतौतेन प्रतिपादितम् -

रसस्याऽऽनन्दमयत्वादात्मरूप एवाऽसौ। रसानां समुदाय एव नाट्यम्। काव्येष्वपि रसस्य नाट्यायमाने प्रयोगे सत्येवाऽसावास्वाद्यमानो भवति। अर्थात् श्रव्येऽपि काव्ये वर्णितविषये प्रत्यक्षवदवभासमाने सहृदयाः पाठकाः रसमास्वादयन्ति।[१]

प्रतिहारेन्दुराजः काव्यालङ्कारसङ्ग्रहग्रन्थमुद्भटविरचितं लघुवृत्तिटीकया व्याख्यातवान्। अलङ्कारवादिनाऽपि तेनाऽऽचार्येण काव्यात्मरूपेण रसः प्रतिपादितः। रससम्भृतमेव काव्यं जीवद्रूपं दधाति। अतो रस एव काव्यस्याऽऽत्मा।[२]

नाट्यशास्त्रस्याऽभिनवभारतीटीकायां ध्वन्यालोकस्य च लोचनटीकायामभिनवगुप्तो रसस्य विशदविवेचनञ्चकार। प्राचीनाचार्याणामपि मतानि तेनोद्धृतानि। अभिनवगुप्तेन प्रतिपादितम् -

काव्येषु रसो व्यङ्ग्य एव। असौ काव्यस्य ध्वनिरूपव्यापारेणैवाऽनुभूयते। अत एवाऽसौ रसध्वनिरित्युच्यते। अयं रसध्वनिरेव मुख्यरूपेण काव्यस्याऽऽत्मा।[३] वस्त्वलङ्काररसरूपेषु त्रिविधेष्वपि ध्वनिषु वस्त्वलङ्कारध्वन्योरपि पर्यवसानं रसध्वनावेव जायते। वस्त्वलङ्कार-ध्वन्योर्वाक्यार्थादुत्कृष्टत्वात् सामान्यतो ध्वनिः काव्यस्याऽऽत्मा प्रोक्तः। वस्तुतः काव्यस्याऽऽत्मा रसध्वनिरेव वर्तते।[४]

अभिनवगुप्तानन्तरमपि काव्यशास्त्राचार्याः प्रायशो रसमेव काव्येषु प्रधानत्वेन प्रतिपादयामासुः। सरस्वतीकण्ठाभरणग्रन्थे शृङ्गारप्रकाशे च भोजराजो विशेषेण रसस्य विवेचनाञ्चकार। शृङ्गाररसमेवाऽभिमानत्वेन प्रतिपाद्याऽसौ तद्द्वारा काव्यस्य कमनीयतां

---

१. प्रीत्यात्मा च रसस्तदेव नाटयम्।..... ........................ न च नाट्य एव च रसाः। काव्येऽपि नाट्यायमान एव रसः। काव्यार्थविषये हि प्रत्यक्षकल्पसंवेदनोदये रसादय इत्युपाध्यायाः। तदाहुः काव्यकौतुके प्रयोगत्वमनापन्ने काव्येनाऽऽस्वादसम्भवः।
भरतनाट्यशास्त्र - अभिनवभारतीटीका - प्रथम भाग पृ० २९१

२. रसाद्यधिष्ठितं काव्यं जीवद्रूपतया यतः।
कथ्यते तद् रसादीनां काव्यात्मत्वं व्यवस्थितम्।। काव्यालङ्कारसङ्ग्रहलघुवृत्ति पृ० ८३

३. स च काव्यव्यापारैकगोचरो रसध्वनिरिति। स च रसध्वनेरेवेति स एव मुख्यतया आत्मा।
ध्वन्यालोकलोचनटीका पृ० १८

४. तेन रस एव वस्तुत आत्मा। वस्त्वलङ्कारध्वनी तु सर्वथा रसं प्रति पर्यवस्येते इति वाच्यादुत्कृष्टौ तावित्यभिप्रायेण ध्वनिः काव्यस्याऽऽत्मेति सामान्येनोक्तम्।
ध्वन्यालोकलोचनटीका पृ० ३१

प्रतिपादयामास।[१] यदि कविः शृङ्गारी वर्तते, काव्ये जगद् रसमयं जायते। यदि च नाऽसौ शृङ्गारी, काव्यं नीरसत्वमश्नुते।[२]

व्यङ्ग्यार्थं त्रिविधं वस्त्वलङ्काररसरूपं प्रतिपाद्याऽपि मम्मटाचार्यो रसस्य प्राधान्यं सुस्पष्टं स्वीचकार। रसरूप एवाऽर्थः काव्येऽङ्गिरूपेणाऽवतिष्ठते गुणाश्च तस्य नियतधर्माः।[३] रुय्यकोऽपि रसादितत्त्वान्येव काव्यस्य प्राणान् जगाद। न च तेऽलङ्काररूपाः। अलङ्कारास्तूपकारकाः, परन्तु रसादीनां प्रधानत्वात्ते रसा उपकार्याः। अतो रसादयः प्रतीयमानाः सन्तो वाक्यार्थाः। एवं रस एव काव्यस्य जीवितम्। वाक्यार्थवित्तारः सहृदयाः रसस्यैवंविधमेव रूपमङ्गीकुर्वन्ति।[४]

व्यक्तिविवेककृन्महिमभट्टोऽपि रसमेव काव्यस्याऽऽत्मानं मनुते।[५] ध्वनिवादिभिः सह तस्य मतभेदोऽयमेव, यदसौ रसमनुमितिविषयं प्रतिपादयामास। रसविवेचनमुपेक्षमाणोऽपि राजशेखरो रसमेव काव्यस्याऽऽत्मानं जगाद।[६]

रसस्य विस्तरेण विवेचनं कुर्वन् विश्वनाथस्तं प्रधानत्वेन काव्ये प्रस्थापितवान्। विश्वनाथस्य काव्यलक्षणम् - "वाक्यं रसात्मकं काव्यम्"[७] अप्येतत् प्रतिपादयति। अनेन रसस्य काव्यात्मत्वं स्वयमेव सिद्ध्यति। अलङ्कारकौस्तुभग्रन्थे कर्णपूरः शब्दार्थशरीरे काव्ये ध्वनिं प्राणान् रसञ्चाऽऽत्मानं कथयामास।[८] भूदेवस्तु वस्त्वलङ्काररसरूपान् त्रिविधानप्यर्थान् काव्यात्मानं प्रतिपादयन्नपि रसमेव याथार्थ्येन काव्यस्याऽऽत्मानं साधयामास। हेतुरयमेवाऽत्राऽवगन्तव्यः -

काव्यप्रवृत्तिः रसार्थमेव भवति। रसध्वनेः परमरमणीयत्वात् स एव काव्यस्याऽऽत्मा।[९]

---

१. रसोऽभिमानोऽहङ्कारः शृङ्गार इति गीयते।
योऽर्थस्तस्याऽन्वयात् काव्यं कमनीयत्वमश्नुते।। सरस्वतीकण्ठाभरण ५.१

२. शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत्।
स एव चेदशृङ्गारी नीरसं सर्वमेव तत्।। सरस्वतीकण्ठाभरण ५.३

३ ये रसस्याऽङ्गिनो धर्माः। काव्यप्रकाश ८.६६

४. रसादयस्तु जीवितभूताः नाऽलङ्कारत्वेन वाच्याः। अलङ्काराणामुपकारकत्वाद् रसानाञ्च प्राधान्येनोपकार्यत्वात्। तस्माद् व्यङ्ग्य एव वाक्यार्थीभूतः काव्यजीवितम्। एष एव च पक्षो वाक्यार्थविदां सहृदयानामावर्तकः। अलङ्कारसर्वस्व पृ० १०

५ काव्यस्याऽऽत्मनि अङ्गिनि रसादिरूपे न कस्यचिद् विमतिः। व्यक्तिविवेक पृ० २२

६. रस आत्मा। काव्यमीमांसा पृ० १४

७. साहित्यदर्पण १.३

८. शरीरं शब्दार्थौ ध्वनिरसव आत्मा किल रसः। अलङ्कारकौस्तुभ ११

९. वस्त्वलङ्काररसादिरूपं व्यङ्ग्यं चाऽऽत्मा। रसार्थमेव काव्यप्रवृत्तेः, ध्वनिषु परमरमणीयत्वाच्च रसध्वनेस्तदात्मा रसस्तावदभिधीयते। रसविलास - १.१ वृत्तिः

केशवमिश्रेण काव्ये रस एवाऽऽत्मस्थानीयत्वेन स्वीकृत: । नीरसे काव्ये रसिकजनास्तथैव नाऽऽनन्दं लभन्ते, यथा साधु साधितमपि भोजनं लवणं विना न स्वादिष्टतां भजते ।[१]

पण्डितराजो जगन्नाथो रसविषयेऽभिनवगुप्तस्य दर्शनमङ्गीचकार । "रसौ वै स "इति उपनिषद्वचनमुद्धृत्याऽसौ रसादिविषयकमावरणरहितमात्मचैतन्यं रसं प्राह । रसचैतन्ययोरेकत्व-भावाद् रत्यादिविशिष्टावरणरहितचैतन्यमेव रस: । स एव च काव्यस्याऽऽत्मा ।

रसस्याऽऽनन्दात्मकत्वात् प्राधान्याच्च काव्यशास्त्ररचनाप्रारम्भकालादाधुनिकसमयपर्यन्तं प्रायश: सर्वेऽप्याचार्या: रसमेव काव्यात्मानमाम्नासिषु: । न केवलं काव्यशास्त्रकर्तार एव रसस्य प्राधान्यं साधयामासु:, अपितु सुप्रसिद्धा: महाकवय: कालिदासभवभूतिप्रभृतयोऽपि रसमेव सहृदयानां तन्मयताहेतुं जगदु: । अथ चाऽऽनन्दवर्धनेन प्रोक्तम् -

"रस एव काव्यस्योत्कृष्टतमं तत्त्वम् । अत: प्रबन्धकाव्यं रचयता कविना रसपरतन्त्रेण भाव्यम् ।[२]

---

१. साधुपाकेऽप्यनास्वाद्यं भोज्यं निर्लवणं यथा।
तथैव नीरसं काव्यं स्यान्नो रसिकतुष्टये।। अलङ्कारशेखर अष्टम रत्न

२ कविना प्रबन्धकाव्युपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम्।
ध्वन्यालोक ३.१४ वृत्ति. ।

# अलङ्कारसम्प्रदायः

## १. अलङ्कारवादस्य: प्रारम्भः

रससम्प्रदायमनु द्वितीयस्थानमलङ्कारसम्प्रदायो भजते। "न हि रसादृते कश्चिदर्थः प्रवर्तत" इति रससिद्धान्तं प्रतिपाद्य भरतो मुनिः काव्येषु रसनिष्पादनस्याऽनिवार्यता-मुद्घाटयामास। एवञ्च तेन मुनिना काव्येषु रसस्याङ्गित्वं प्रतिष्ठाप्य तस्य काव्यात्मत्वमपि सुप्रतिष्ठापितम्। परन्तु भरतः सम्भवतः काव्यनाट्ययोरभिन्नत्वं परिकल्प्य तथा प्रोवाच। अनेकेषु स्थानेष्वसौ मुनिर्नाट्यार्थे काव्यपदं प्रायूयुजत्। रसानां विवेचनमपि तेन नाट्यमुपलक्ष्यैव विहितम्। रसश्च नाट्यमपि प्रोक्तः।

काव्यशास्त्रस्येतिहासे काव्यशास्त्ररचयितृषु मनीषिषु समयक्रमेण भरतमनु भामहो ज्ञायते। तस्य ग्रन्थः काव्यालङ्काराभिधानस्तत्र महिम्ना प्रथितः। भामहस्तदुत्तरवर्तिनो दण्ड्यादयश्चाऽऽचार्याः रसं प्राधान्येन नाट्यविषयं मत्वाऽन्येषु काव्येष्वलङ्काराणां प्राधान्यं प्रकल्पयामासुः। काव्येष्वलङ्कारानेवाऽङ्गित्वेन प्राधान्येन च प्रतिपाद्य ते रसादीं-स्तेषामलङ्काराणामङ्गरूपेणोपकारकरूपेण च साधयामासुः। भामहेनोक्तम् - "कान्तमपि वनितामुखं भूषणैर्विना न यथा शोभते,[1] तथैव सरसकाव्यस्य शोभाऽलङ्कारैरेव सम्पाद्यते। रसभावादीन्नलङ्कारेष्वेव समावेश्याऽसौ काव्येष्वलङ्काराणामङ्गित्वं रसानाञ्चाऽङ्गभावं प्रतिपादितवान्।

भामहानन्तरं प्रायशः सर्व आचार्याः काव्येष्वलङ्कारतत्त्वस्य प्राधान्यं तावत्कालपर्यन्तं स्वीकुर्वन्तो दरीदृश्यन्ते यावदानन्दवर्धनो ध्वनिं प्रतिष्ठाप्य तं ध्वनिं काव्यस्याऽऽत्मत्वेन प्रातिष्ठिपत्। इत्थञ्च तेनाऽऽनन्दवर्धनेन मनीषिणा काव्यसमीक्षा चिन्तनधारा सर्वथा परिवर्तिता।

आनन्दवर्धनस्य काव्यसमीक्षाचिन्तनं यद्यप्युत्तरवर्तिभिराचार्यैः प्रायशः स्वीकृतं, तथापि केचनाऽऽचार्याः काव्येष्वलङ्काराणां महिमानं प्रभूतं प्रत्यापादयन्। अयमेव हेतुरासीद् यन्मम्मटाचार्यस्य काव्यप्रकाशग्रन्थनिहितकाव्यलक्षणे "अलङ्कृती पुनः क्वापि" इति पदान्यवलोक्य चन्द्रालोककारो जयदेवोऽतितरामप्रसन्नो जगाद -

**अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।**
**असौ न मन्यते कस्मादनुष्णमनलङ्कृती।।**[2]

---

१ न कान्तमपि निर्भूषं विभाति वनितामुखम्। भामह - काव्यालङ्कार १.१३

२ चन्द्रालोक १.८

अलङ्कारवादिभिराचार्यैः काव्येष्वलङ्कारतत्त्वस्य प्राधान्यं सुप्रतिष्ठापितम्। काव्येषु सौन्दर्यस्य रमीणयतायाश्च सर्वाण्येव तत्त्वानि तैरलङ्कारेषु समावेशितानि। दण्डी तु काव्यशोभाकरान् धर्मानलङ्कारानाचख्यौ।[1] वामनः सौन्दर्यमलङ्कारतत्त्वं मत्वा तद्द्वारेण काव्यस्य ग्राह्यतां प्रतिपादयामास।[2]

## २. अलङ्काराणां विकासः

अलंपूर्वकात् √डुकृञ् धातोः अलङ्क्रियतेऽनेन अलङ्करोति वेति निर्वचने करणे भावे वाऽर्थे घञ् प्रत्यये कृते अलङ्कारपदं निष्पद्यते।

**अलङ्कारपदस्याऽयमभिप्रायः -**

येन पदार्थेन तत्त्वेन वा किञ्चिद् वस्तु सुशोभितं क्रियते, तेन तस्य सौन्दर्यवृद्धिर्भवति। स पदार्थस्तत् तत्त्वं वाऽलङ्कारोऽभिधीयते। प्रियवस्तुनि कमनीयकलेवरे वा परिधीयमाना एते ह्यलङ्कारास्तं पदार्थमलङ्कुर्वन्ति। तथैव शब्दार्थशरीरं काव्यमुपमादय अलङ्कारा अलङ्कुर्वन्ति।

काव्यगतानामलङ्काराणां प्रयोगो मानवानामादिमे प्रथमे ग्रन्थे ऋग्वेदे समुपलभ्यते। ऋग्वेदे अलमिति पदमरमिति रूपेणाऽपि प्रयुक्तमस्ति। अरमिति पदस्य निष्पत्तिः √ ऋ धातोर्भवति। अस्यार्थः - गतिः। गतिपदेन शब्दबोधो, मुक्तिः, गमनं, व्यापार इत्यादयोऽर्थाः बोध्यन्ते। ऋग्वेदे अरङ्कृत अरङ्कृतिरिति पदानां बहुशः प्रयोगः समुपलभ्यते। एकस्मिन् प्रसङ्गे वसिष्ठ इन्द्रं पप्रच्छ -

"का ते अस्त्यरङ्कृतिः सूक्तैः[3]

ऋग्वेदनिहितारङ्कृतपदस्य प्रयोगः काव्यशास्त्रिभिः सौन्दयार्थे विहितः। वेदेऽस्मिन् अनुप्रासयमकश्लेषोपमारूपकोत्प्रेक्षातिशयोक्त्यादीनामलङ्काराणां निवेशोऽनेकेषु मन्त्रेषु समुपलभ्यते।

ऋग्वेदमनु ब्राह्मणग्रन्थेषू[4]पनिषत्सु[5] च सौन्दर्याभिधायकतत्त्वरूपेण अलङ्कारपदप्रयोगः सुस्पष्टं समवलोक्यते। परन्तु तत्कालपर्यन्तमपि पदस्याऽस्य सम्बन्धः काव्यशास्त्रेण सह न सुस्पष्टं स्थापितो बभूव।

---

१. काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।
ते चाऽद्याऽपि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति।। काव्यादर्श २.१

२. काव्यं ग्राह्यमलङ्कारात्। सौन्दर्यमलङ्कारः। वामन - काव्यालङ्कारसूत्र १.१.१-२

३. ऋग्वेद ७.२९.३

४. अञ्जनाभ्यञ्जने प्रयच्छन्त्येव ह मानुषोऽलङ्कारः। शतपथ ब्राह्मण १३.८.४.७

५. वसनेन अलङ्कारेणेति संस्कुर्वन्ति। छान्दोग्योपनिषत् ८.८

अलङ्कारपदस्य काव्यशास्त्रीयः प्रयोगः प्रथमं तावद् यास्ककृतनिरुक्तग्रन्थे बभूव। यास्केन अलङ्कृतारङ्कृतपदयोर्व्याख्या पर्यायरूपेण विहिता।[१] तेनोपमापदस्य निरुक्तिरपि व्याख्याता।[२] उपमापदस्य यास्ककृतव्याख्या वर्तते -

**"तदासां कर्म ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वा प्रख्यातं वा उपमिमीते अथापि कनीयसा ज्यायांसम्।[३]**

यास्कस्तूपमायाः भेदानामनेकेषां कर्मोपमाभूतोपमारूपोपमासिद्धोपमालुप्तोपमार्थोपमानां स्थलान्युदाहरणानि च निर्दिदेश।

पाणिनिकृताष्टाध्याय्या अध्ययनेन प्रतिभातीदं यत्तस्मिन् समयेऽलङ्काराणां शास्त्रीय-मध्ययनं प्रचलितमासीत्। पाणिनिरुपमासादृश्योपमानसामान्यसदृशप्रतिरूपोपमितादिशब्दान् स्वसूत्रेषु प्रयुयोज।[४] तेनोपमासम्बन्धिनां प्रत्ययानामपि विधानं कृतम्।[५] पाणिनीयसूत्रेषु उपमायाः श्रौत्यार्थीभेदयोः रूपकाद्यलङ्काराणाञ्च सङ्केताः विद्यन्ते।

कात्यायनो ह्युपमावाचकेन इवपदेन सह नित्यं समासं विदधाति।[६] पतञ्जलिना पाणिनीयसूत्रगतानामुपमोपमानोपमितसामान्यवचनादिपदानां निर्वचनानि प्रस्तुतानि। तेन कृतमुपमानपदनिर्वचनं निम्नप्रकारेण वर्तते -

**"मानं हि नाम अनिर्ज्ञातज्ञानार्थम्। उप आदीयते अनिर्ज्ञातमर्थं ज्ञास्यामीति, तत्समीपे यन्नात्यन्ताय मिमीते तद् उपमानम्।"**

वेदेषु, ब्राह्मणग्रन्थेषु उपनिषत्सु, निरुक्ते.व्याकरणादिशास्त्रेषु इत्यादिग्रन्थेषु अलङ्कारनिर्वचनवाक्यानां सङ्केतेषु सत्स्वपि न कोऽपि तादृशो ग्रन्थो भरतपूर्वकालीनः समुपलभ्यते, यत्राऽलङ्काराणां साङ्गोपाङ्गं शास्त्रीयं विवेचनं प्राप्येत। भरतकृतनाट्यशास्त्रमेव प्राचीनतमो ग्रन्थो, यत्राऽलङ्काराणां शास्त्रीयं सूक्ष्मविवेचनं विद्यते।

---

१. सोमा अरङ्कृता अलङ्कृताः। निरुक्त १०.१.२

२. उपमा अतत् तत्सदृशम्। निरुक्त ३.३.१४

३. निरुक्त ३.४.११८

४. उपमानानि सामान्यवचनैः। अष्टाध्यायी २.१.५५
उपमानादाचारे। अ० ३.१.१०
उपमितं व्याघ्रादिभिः सामान्याप्रयोगे। अ० २.१.५६
तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्। अ० २.३.७२
यथा सादृश्ये। अ० २.१.७
सदृशप्रतिरूपयोश्च सादृश्ये। अ० ६.२.११

५. तेन तुल्यं क्रिया चेद्वतिः। अ० ५.१.११५
तत्र तस्येव। अ० ५.१.११६

६. इवेन नित्यसमासो विभक्त्यलोपश्च। अ० २.४.७१ सूत्रे वार्तिकः

भरतेन केवलं चतुर्णामिवाऽलङ्काराणामुपमारूपकदीपकयमकानां शास्त्रीयं विवेचनं विहितम्।[1] नाट्यलक्षणनिरूपणे तेन षट्त्रिंशद्गुणानामपि विवेचना कृता। अत्र हेतुसंशयदृष्टान्तनिदर्शनागुणातिशयार्थापत्तिलेशादयो गुणा उत्तरवर्तिभिराचार्यैरलङ्कारेषु परिगृहीताः। भरतानन्तरमलङ्काराणां विकासः शास्त्रीयविवेचनं चोत्तरोत्तरं विकासभावं भेजे। अप्पयदीक्षितसमये काव्यशास्त्रकृद्भिरलङ्काराणां संख्या पञ्चविंशत्युत्तरशतैकपर्यन्तं (१२५) संप्रापिता।

## ३. विविधाचार्याणामलङ्कारपरिभाषा काव्येषु च तस्याः महत्त्वम्

यद्यपि प्रथमं तावद् भरतेनैव नाट्यशास्त्रग्रन्थे काव्येष्वलङ्कारतत्त्वस्य समीक्षा विहिता, अथ च काव्येषु चत्वारोऽलङ्काराः प्रतिपादिताः, तथाऽप्यलङ्कारस्वरूपविवेचने भामह एव प्रथमः। तेन सुस्पष्टमलङ्काराः काव्यस्याऽऽत्मतत्त्वरूपेण प्रतिष्ठापिताः। असौ भरतस्य रसादितत्त्वान्यपि ह्यलङ्कारवर्गे परिगणय्य रसादीन् रसवदाद्यलङ्कारनाम्ना प्रतिपादयामास।

**भामहस्याऽभिमतमस्मिन् विषये वर्तते -**

अलङ्कारा एव काव्येषु प्राधान्येन सौन्दर्याधायकानि तत्त्वानि सन्ति। यथा कान्तमपि कामिनीमुखं भूषणैर्विना न विभाति,[2] तथैवाऽलङ्कारान् विना काव्यानि न शोभन्ते। शब्दार्थवक्रतायुतोक्तिरेवाऽलङ्कार इति विद्यते भामहकृताऽलङ्कारपरिभाषा।[3] वक्रोक्त्यभावे न विद्यते क्वचिदप्यलङ्कारः।[4] वक्रोक्तिं विनाऽलङ्कारस्याऽभाव एव। अथ च वक्रोक्त्यतिशयोक्ती अभिन्नत्वं भजेते। लोकोत्तरत्वादियमतिशयोक्तिरतिरमणीया भवति। अथ चाऽलङ्कारा अनयैव निष्पाद्यन्ते।[5]

आचार्यो दण्डी काव्यशोभाभाकरान् सर्वानेव धर्मानलङ्कारान् प्राख्यात्। विविधानामेतेषां धर्माणां गणना न सम्भवा।[6] काव्येषु शोभाधायकत्वाद् रसानामपि ग्रहणं दण्डी

---

१. उपमा रूपकं चैव दीपकं यमकं तथा।
अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः।। भरतनाट्यशास्त्र १७.४३

२. न कान्तमपि निर्भूषं विभाति वनितामुखम्। भामह - काव्यालङ्कार १.१३

३. वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः। भामह - काव्यालङ्कार १.१६
वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते। भामह - काव्यालङ्कार ५.६६

४. सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।। भामह - काव्यालङ्कार २.८५

५. निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम्।
मन्यन्तेऽतिशयोक्तिं तामलङ्कारतया यथा।। भामह - काव्यालङ्कार २.८१

६. काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।
ते चाऽद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति।। काव्यादर्श २.१

रसवदाद्यलङ्कारान्तर्गतं व्यदधात्। अथ च ते त्रयो वर्तन्ते - प्रेयः, रसवदूर्जस्वी च।[१] काव्येषु शोभाकरत्वादन्येऽपि काव्यगतधर्माः सन्धिसन्ध्यङ्गवृत्तिवृत्त्यङ्गादयोऽपि दण्डिना अलङ्कारा एव सम्मताः।[२]

अग्निपुराणकारेणाऽप्यलङ्कारलक्षणसम्बन्धे दण्डिन एवाऽनुसरणं विहितम्।[३] अर्थालङ्काररहिता सरस्वती विधवेव न शोभते।[४]

रीतिं काव्यस्याऽऽत्मानं प्रतिपादयन्नपि वामनः काव्यस्योपादेयतां सौन्दर्यरूपालङ्कारेणैव स्वीचकार।[५] काव्यसौन्दर्यमलङ्कार एव। यद्यपि काव्यशोभायाः कर्तारो गुणाः भवन्ति[६], तस्याः शोभाया अतिशयोऽलङ्कारैरेव निष्पाद्यते।[७]

उद्भटः काव्येष्वलङ्काराणां प्राधान्यं प्रत्यापादयत्। रसादयस्तेन रसवत्प्रेयउर्जस्वि-समाहितालङ्कारेषु समावेशिताः। तदनन्तरमसावाक्षेपसमासोक्तिपर्यायोक्ताद्यलङ्कारेषु[८] व्यङ्ग्यार्थं वाच्यार्थस्योपकारकं प्रतिपादितवान्। एवञ्चोत्तरवर्तिनां ध्वनिवादिनां रसवस्त्वलङ्काररूपं त्रिविधं व्यङ्ग्यार्थमसावुद्भटोऽलङ्काराङ्गं साधयामास।

रुद्रटोऽपि काव्येष्वलङ्काराणां प्राधान्यं स्वीचकार। एनमेव सिद्धान्तं प्रतिपादयन्नसौ स्वग्रन्थं काव्यालङ्कारनाम्ना प्रथितमकरोत्।[९] तेनाऽपि रसादयोऽलङ्कारेष्वेव परिगणिताः।

वक्रोक्तिसम्प्रदायप्रवर्तक आचार्यः कुन्तकोऽपि काव्येष्वलङ्काराणां प्राधान्यं स्वीचकार। काव्यपरिभाषायां तेन सालङ्कारोक्तिरेव काव्यमिति प्रतिपादितम्।[१०] अलङ्कृतं वचनमेव काव्यत्वं दधाति, न तु काव्यस्याऽलङ्कारयोगः।[११] इत्थञ्च तेन अलङ्कार एव काव्यस्याऽऽत्मा प्रतिपादितः।

---

१. प्रेयः प्रियतराख्यानं रसवद् रसपेशलम्।
ऊर्जस्वि रूढाहङ्कारं युक्तोत्कर्षञ्च तत् त्रयम्।। काव्यादर्श २.२७५

२. यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे।
व्यावर्णितमिदं चेष्टमलङ्कारतयैव नः।। काव्यादर्श २.३६७

३. काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते। अग्निपुराण ३४२.१७

४. अर्थालङ्काररहिता विधवेव सरस्वती। अग्निपुराण ३४४.२

५. काव्यं ग्राह्यमलङ्कारात्। सौन्दर्यमलङ्कारः।। काव्यालङ्कारसूत्र १.१.१-२

६. काव्यशोभायाः कर्तारो धर्माः गुणाः।। काव्यालङ्कारसूत्र ३.१.१

७. तदतिशयहेतवस्त्वलङ्काराः।। काव्यालङ्कारसूत्र ३.१.२

८. पर्यायोक्तं यदन्येन प्रकारेणाऽभिधीयते।
वाच्यवाचकवृत्तिभ्यां शून्येनाऽवगमात्मना।। काव्यालङ्कारसारसंग्रह ४.६

९. काव्यालङ्कारोऽयं ग्रन्थः क्रियते यथायुक्ति। रुद्रट-काव्यालङ्कार १.२

१०. अलङ्कृतिरलङ्कार्यमपोद्धृत्य विवेच्यते।
तदुपायतया तत्त्वं सालङ्कारस्य काव्यता।। वक्रोक्तिजीवित १.६

११. तत्त्वं सालङ्कारस्य काव्यता। अयमत्र परमार्थः। सालङ्कारस्य अलङ्कारसहितस्य निरस्तावयवस्य सतः काव्यता कविकर्मत्वम्। तेन अलङ्कृतस्य काव्यत्वमिति स्थितिः। न पुनः काव्यस्याऽलङ्कारयोगः। वक्रोक्तिजीवित १.६ वृत्तिः।

भोजराजः काव्यशोभाकरत्वमेवाऽलङ्कारस्य सामान्यलक्षणमिति प्रोवाच। काव्यशोभाया अभावे न विद्यतेऽलङ्काराणामस्तित्वम्। सर्वेऽप्यलङ्कारा वक्रोक्तिरूपेणाऽनेन हेतुना जायन्ते, यतस्तेषु काव्यशोभाकरत्वरूपो गुणो भवति। रसानां शोभाकरत्वात् तानपि भोजराजोऽलङ्कारानाचचक्षे।

भोजेनाऽलङ्कारास्त्रिषु वर्गेषु विभक्ताः - वक्रोक्तिः स्वभावोक्तिः रसोक्तिश्च। उपमाद्यलङ्काराणां प्राधान्ये वक्रोक्तिर्भवति, गुणानां प्राधान्ये स्वभावोक्तिर्भवति, रसानाञ्च प्राधान्ये रसोक्तिर्जायते।[1]

अलङ्कारसम्प्रदायाचार्यैः काव्येषु यदलङ्कारत्वप्राधान्यं प्रतिपादितं, तत्र प्रथमः प्रबलश्च प्रहारो ध्वनिकृताऽऽनन्दवर्धनेन कृतः। तेन प्रोक्तम् - काव्येष्वलङ्कारा रसस्याङ्गरूपेण नियोजनीयाः न त्वङ्गिरूपेण।[2]

आनन्दवर्धनस्तस्य चाऽनुसरणकर्तारो मम्मटादयो ध्वनिमेव काव्यस्याऽऽत्मानं मत्वा काव्येषु गुणरीत्यलङ्काराणां नियोजनं तदनुरूपं प्रतिपादयामासुः। अलङ्कारान् काव्यशोभाधायकधर्मान् स्वीकुर्वन्तोऽपि तान् काव्ये बहिरङ्गरूपेणैव ते प्रोचुः। काव्यशरीरशब्दार्थशोभावर्धनकराणामेतेषामलङ्काराणां नियोजनं रसानामुपकारकरूपेणैव कर्तव्यम्।

**आनन्दवर्धनेन प्रोक्तम् -**

यथा कामिनीशरीरं कुण्डलादयोऽलङ्कारा अलङ्कुर्वन्ति, तथैव काव्यगता अलङ्काराः काव्यशरीरशब्दार्थविवाऽलङ्कुर्वन्ति।[3] एषामलङ्काराणां विनिवेशनं रसदृष्ट्या तदुपकारकरूपेणैव स्वाभाविकेन विधेयं, न तु तत्र पृथग्यत्नो विधेयः।[4] मम्मट[5]-राजशेखर[6]-हेमचन्द्र[7]

---

१. त्रिविधः खल्वलङ्कारवर्गः - वक्रोक्तिः स्वभावोक्तिः रसोक्तिरिति। तत्रोपमाद्यलङ्कारप्राधान्ये वक्रोक्तिः, सोऽपि गुणप्राधान्ये स्वभावोक्तिः, विभावानुभावव्यभिचारिसंयोगात्तु रसोक्तिरिति।
शृङ्गारप्रकाश पृ० ११

२. विवक्षा तत्परत्वेन नाऽङ्गित्वेन कदाचन। ध्वन्यालोक २.१९

३. तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।
अङ्गाश्रितास्त्वलङ्काराः मन्तव्याः कटकादिवत्।। ध्वन्यालोक २.७

४. रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः।। ध्वन्यालोक २.१७

५. उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः।। काव्यप्रकाश ८.६७

६. अनुप्रासोपमादयश्च त्वामलङ्कुर्वन्ति। काव्यमीमांसा तृतीयोऽध्यायः

७. अङ्गाश्रिता अलङ्काराः। काव्यानुशासन पृ० १७

विश्वनाथ[१]-जगन्नाथ[२]-विश्वेश्वरा[३]दिभिराचार्यैः प्रस्तुताऽलङ्कारपरिभाषा इममेव सिद्धान्तं भजते।

भामहादयः प्राचीना अलङ्कारवादिन आचार्याः काव्येष्वलङ्कारमेवाऽङ्गिनं प्रतिपाद्य तं महत्तमं तत्त्वं प्रत्यापादयन्। अलङ्कारसर्वस्वग्रन्थस्य कर्ता रुय्यको ध्वनिवादी आचार्यो गण्यते। तस्याऽलङ्कारविवेचनमप्यनयैव दृष्ट्या समभवत्। तस्य कथनं वर्तते - प्राचीना आचार्याः काव्येष्वलङ्कारतत्त्वं प्राधान्येन जगदुः।[४] ध्वनिवादिन आचार्याः मम्मटादयः काव्येष्वलङ्काराणामवस्थितिं गुणेभ्यो हीनां प्रोचुः। गुणा अलङ्कारेभ्यो महनीयां स्थितिं भजन्ते। साक्षाद्रूपेण रसमुपकुर्वन्तस्ते काव्यगुणा अन्तरङ्गतां प्राप्नुवन्ति। ते काव्येष्वचलस्थितयो भवन्ति।[५]

अलङ्काराणां काव्येष्वेतद्विपरीता स्थितिर्भवति। अस्थिराः धर्मास्ते काव्ये भवेयुरपि वा न भवेयुः। रसमुपकुर्युरपि वा न कुर्युः।[६] इत्थञ्चाऽलङ्काराणामस्थिरधर्मत्वान्न काव्येषु तेषामनिवार्या स्थितिः।[७]

परं मम्मटप्रोक्तात् काव्येषु गुणालङ्कारयोरस्मात् स्थितिविवेचनात् संक्रुद्धो जयदेवस्त्वेवमाह -

यः काव्यमनलङ्कृती कथयति, सोऽनलनेवाऽनुष्णं कथं कथयितुं नोत्सहते।[८]

परन्तु चन्द्रालोके जयदेवो मनीषी ध्वनिरसादीन् प्रतिपाद्य यामलङ्कारपरिभाषां प्रास्तौत्, सा मम्मटमेवाऽनुसरति।[९]

---

१. शब्दार्थयोरस्थिराः ये धर्माः शोभातिशयशालिनः।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्।। साहित्यदर्पण १०.१
२. काव्यात्मनो व्यङ्ग्यस्य रमणीयताप्रयोजका अलङ्काराः। रसगङ्गाधर पृ० २४८
३. रसादिभिन्नत्वे शब्दविशेषश्रवणोत्तरम्।
चमत्कारकरत्वं यदलङ्कारत्वमत्र तत्।। काव्यकौस्तुभ
४. तदेवमलङ्कारा एव काव्ये प्रधानमिति प्राच्यानां मतम्। अलङ्कारसर्वस्व पृ० ७
५. ये रसस्याऽङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः।। काव्यप्रकाश ८.६६
६. उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः।। काव्यप्रकाश ८.६७
७. अलङ्कारा अस्थिरा इति नैषां गुणवदावश्यकी स्थितिः। साहित्यदर्पण १०.१ (वृत्तिः)
८. अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।
असौ न मन्यते कस्मादनुष्णमनलं कृती।। चन्द्रालोक १.८
९. हारादिवदलङ्कारसन्निवेशो मनोहरः। चन्द्रालोक ५.१

उपर्युक्तविवेचनेन स्पष्टमेवेदं यद् भरतमनु आनन्दवर्धनाच्च पूर्वं मध्यकालवर्तिभिः काव्यशास्त्रकृद्भिः काव्येष्वलङ्कारा अङ्गिरूपेण प्रतिष्ठापिताः। परन्तु ध्वनिवादिन आचार्यास्तान् शोभाधायकान् मत्वाऽपि न तथा माननीयानकथयन्। ते काव्येषु गौणं स्थानं भजन्ते। काव्येष्वलङ्कारसंयोजनं रसापेक्षयैव भवितव्यम्। आनन्दवर्धनानन्तरं काव्यसमीक्षायां काव्यशास्त्रकृतां विचारसरणी तस्य सिद्धान्तस्य परिपोषिका बभूव।

## ४. अलङ्काराणां संख्या

अलङ्काराणां प्रथमं विवेचनं भरतनाट्यशास्त्रग्रन्थे समुपलभ्यते। तत्र चत्वारोऽलङ्काराः भरतेन वर्णिताः - उपमारूपकदीपकयमकानि। परन्त्वलङ्काराणां विस्तृतं वैज्ञानिकं विश्लेषणमनेकशताब्द्यनन्तरं भामहेन काव्यालङ्कारे विहितम्। भामहेनाऽष्टात्रिंशदलङ्कारा वर्णिताः। भामहानन्तरं दण्डिना सप्तत्रिंशदलङ्काराः प्रोक्ताः। दण्डिनो वचनमवर्तत -

बहुविधत्वादलङ्काराणां संख्या गणयितुं न शक्यते। काव्येषु शोभाकराः सर्वे धर्मा अलङ्कारा एव।

काव्यशास्त्रग्रन्थेष्वलङ्काराणां संख्या ह्युत्तरोत्तरं वृद्धिमवाप। अत्र भामहदण्ड्युद्भटवामनरुद्रटभोजमम्मटरुय्यकविश्वनाथाप्पयदीक्षितजगन्नाथानां काव्यशास्त्रकृतां नामानि विशेषेणोल्लेखनीयानि वर्तन्ते। एभिराचार्यैरलङ्काराणामुद्भावना विवेचना वा मौलिकरूपेण कृता। अलङ्काराणां संख्या पञ्चविंशत्युत्तरैकशतं (१२५) सम्प्राप्ता। केषाञ्चिदलङ्काराणामनेके भेदा अपि काव्यशास्त्रकृद्भिः कल्पिताः। कुवलयानन्दग्रन्थेऽप्पयदीक्षितेन त्रयोविंशत्युत्तरैकशतानामर्थालङ्काराणां (१२३) विवेचना विहिता। कैश्चित् प्रसिद्धैः काव्यशास्त्रिभिः कल्पितानामलङ्काराणां संख्याऽत्र प्रस्तूयते।

(i) **भामहः -**

भामहोऽष्टात्रिंशदलङ्काराणां विवेचनं प्रास्तौत्। अत्र द्वौ शब्दालङ्कारौ षट्त्रिंशच्चाऽर्थालङ्काराः वर्तन्ते -

(क) शब्दालङ्कारौ - अनुप्रासो यमकञ्च = २ ।

(ख) अर्थालङ्काराः - उपमोपमेयोपमारूपकोपमारूपकोत्प्रेक्षोत्प्रेक्षावयवदीपकाऽऽक्षेपार्थान्तरन्यासव्यतिरेकविभावनाविशेषोक्तिसमासोक्त्यतिशयोक्तियथासंख्यस्वभावोक्त्यपह्नुतिश्लेषपर्यायोक्तसमाहितोदात्ततुल्ययोगिताविरोधसन्देहानन्वयाप्रस्तुतप्रशंसाव्याजस्तुतिनिदर्शनासहोक्तिपरिवृत्त्याशीःसंसृष्टिभाविकरसवत्प्रेयऊर्जस्वीत्यलङ्काराः = ३६ ।

(ii) **दण्डी -**

दण्डी सप्तत्रिशंदलङ्कारान् वर्णयामास। अत्र द्वौ शब्दालङ्कारौ पञ्चत्रिशंच्चाऽर्थालङ्काराः वर्तन्ते -

(क) **शब्दालङ्कारौ - चित्रं यमकञ्च = २।**

(ख) अर्थालङ्काराः - स्वभावोक्त्युपमारूपकदीपकावृत्त्याक्षेपार्थान्तरन्यास-व्यतिरेकविभावनासमासोक्त्यतिशयोक्त्युत्प्रेक्षाहेतुसूक्ष्मलेशक्रमरसवत्प्रेय-उर्जस्विपर्यायोक्तसमाहितोदात्तापह्नुतिश्लेषविशेषोक्तितुल्ययोगिता-विरोधाप्रस्तुतप्रशंसाव्याजस्तुतिनिदर्शनासहोक्तिपरिवृत्त्याशीःसंसृष्टि-भाविकालङ्काराः = ३५।

भामहोक्तालङ्कारेषु द्वात्रिंशदलङ्कारान् दण्डी स्वीचकार षट् च नाऽङ्गीचक्रे। तेन पञ्चालङ्काराणां मौलिककल्पना कृता - आवृत्तिहेतुसूक्ष्मलेशक्रमाणाम्।

(iii) **उद्भटः -**

उद्भटेनाऽलङ्काराणां संख्या वर्द्धिता। अत्रैकचत्वारिंशदलङ्काराः वर्तन्ते - चत्वारः शब्दालङ्काराः सप्तत्रिंशच्चाऽर्थालङ्काराः।

(क) **शब्दालङ्काराः** - पुनरुक्तवदाभासानुप्रासछेकानुप्रासलाटानुप्रासाः = ४।

(ख) **अर्थालङ्काराः** - उपमोपमेयोपमानन्वयरूपकदीपकाक्षेपाऽर्थान्तरन्यासव्यतिरेक-विभावनासमासोक्त्यतिशयोक्तियथासंख्योत्प्रेक्षास्वभावोक्तिरसवत्प्रेयऊर्जस्वि-समाहितपर्यायोक्तोदात्तश्लिष्टापह्नुतिविशेषोक्तिसन्देहविरोधतुल्ययोगिता-प्रस्तुतप्रशंसाव्याजस्तुतिनिदर्शनाप्रतिवस्तूपमाकाव्यलिङ्गदृष्टान्तसहोक्ति-परिवृत्तिभाविकसंसृष्टिसङ्करालङ्काराः = ३७।

उद्भटः प्राचीनाचार्याणां चतुस्त्रिंशलदङ्कारान् स्वीचकार। असौ सप्तालङ्कारान-प्युद्भावितवान् - पुनरुक्तवदाभासछेकानुप्रासलाटानुप्रासप्रतिवस्तूपमाकाव्यलिङ्गदृष्टान्त-सङ्करालङ्कारान्।

(iv) **वामनः -**

वामनेनैकत्रिंशदलङ्काराणां वर्णनं कृतम्। अत्र द्वौ शब्दालङ्कारावेकोनत्रिंशच्चार्थालङ्काराः वर्तन्ते -

(क) शब्दालङ्कारौ - अनुप्रासयमकौ = २।

(ख) अर्थालङ्काराः - उपमोपमेयोपमानन्वयसमासोक्त्यप्रस्तुतप्रशंसापह्नुतिरूपक-श्लेषोत्प्रेक्षातिशयोक्तिसन्देहविरोधविभावनापरिवृत्तिक्रमदीपकनिदर्शना-र्थान्तरन्यासव्यतिरेकविशेषोक्तिवक्रोक्तिव्याजोक्तिव्याजस्तुतितुल्ययोगिता प्रतिवस्तूपमाऽऽक्षेपसहोक्तिसमाहितसंसृष्ट्यलङ्काराः = २९।

एकत्रिंशदलङ्कारेषु वामनोऽष्टाविंशत्यलङ्कारान् प्राचीनाचार्येभ्यो जग्राह। त्रयाणा-मलङ्काराणामुद्भावना तेन नवीना विहिता।

(v) रुद्रटः -

अलङ्काराणां विशदाविवेचनं रुद्रटो वैज्ञानिकरूपेण चकार। अलङ्कारानसौ द्वयोर्वर्गयोः समाविशत् - शब्दालङ्कारा अर्थालङ्काराश्च। अर्थालङ्कारांश्चाऽसौ पुनः चतुर्षु वर्गेषु विभेजे - वास्तवौपम्यातिशयश्लेषाः। तेन द्विषष्ट्यलङ्काराणां विवेचना कृता -

(क) **शब्दालङ्काराः** - वक्रोक्त्यनुप्रासयमकश्लेषचित्रालङ्काराः = ५।

(ख) **अर्थालङ्काराः** -

(१) **वास्तववर्गः** - सहोक्तिसमुच्चयजाति(स्वभावोक्ति)यथासंख्यभावपर्यायविषमानुमानदीपकपरिकरपरिवृत्तिपरिसंख्याहेतुकारणमालाव्यतिरेकान्योन्योत्तरसारसूक्ष्मलेशावसरमीलितैकावल्यलङ्काराः = २३।

(२) **औपम्यवर्गः** - उपमोत्प्रेक्षारूपकापह्नुतिसंशयसमासोक्तिमतोत्तरान्योक्तिप्रतीपार्थान्तरन्यासोभयन्यासभ्रान्तिमदाक्षेपप्रत्यनीकदृष्टान्तपूर्वसहोक्तिसमुच्चयसाम्यस्मरणालङ्काराः = २१।

(३) **अतिशयवर्गः** - पूर्वविशेषोत्प्रेक्षाविभावनातद्गुणाधिकविरोधविषमासङ्गतिपिहितव्याघाताहेत्वलङ्काराः = १२।

(४) **श्लेषवर्गः** - श्लेषालङ्कारः = १।

केषाञ्चिदलङ्काराणां गणना द्वयोर्वर्गयोः समागता संलक्ष्यते, परं लक्षणानि तेषां भिन्नान्येव वर्तन्ते। रुद्रटः पञ्चत्रिंशदलङ्कारान् स्वयमकल्पयत् शेषांश्च प्राचीनाचार्येभ्यो जग्राह। तस्य स्वकल्पिता अलङ्काराः वर्तन्ते -

समुच्चय(द्विविधः)भावपर्यायविषमानुमानपरिकरपरिसंख्याहेतुकारणमालान्योन्योत्तर(द्विविधः)सारमीलितैकावलीमतप्रतीपोभयन्यासभ्रान्तिमत्प्रत्यनीकपूर्व(द्विविधः)साम्यस्मरण विशेषतद्गुणपिहितासङ्गतिव्याघाताहेतुवक्रोक्त्यधिकसहोक्तिश्लेषालङ्काराः = ३५।

(vi) भोजराजः -

भोजराजोऽलङ्कारान् त्रिषु वर्गेषु विभेजे - शब्दालङ्कारा अर्थालङ्कारा उभयालङ्काराश्च। प्रतिवर्गं चतुर्विंशत्यलङ्काराः वर्तन्ते। एवं तेन द्विसप्तत्यलङ्काराणां वर्णनं कृतम् -

(क) **शब्दालङ्काराः** - जातिगतिरीतिवृत्तिछायामुद्रोक्तियुक्तिभणितिगुम्फनाशय्यापठितियमकश्लेषानुप्रासचित्रवाकोवाक्यप्रहेलिकागूढप्रश्नोत्तराध्येयश्रव्यप्रेक्ष्याभिनीत्यलङ्काराः = २४।

(ख) **अर्थालङ्काराः** - जातिविभावनाहेत्वहेतुसूक्ष्मविरोधोत्तरसम्भवान्योन्यपरिवृत्तिनिदर्शनाभेद(व्यतिरेक)समाहितभ्रान्तिवितर्कमीलितस्मृतिभावप्रत्यक्षानुमानागमोपमानार्थापत्त्यभावालङ्काराः = २४।

(ग) **उभयालङ्काराः** - उपमारूपकसाम्यसंशयापह्नुतिसमासोक्तिसमाध्युत्प्रेक्षा-प्रस्तुतप्रशंसातुल्ययोगितालेशसहोक्तिसमुच्चयाक्षेपार्थान्तरन्यासविशेषोक्ति-परिकरदीपकक्रमपर्यायातिशयोक्तिश्लेषभाविकसंसृष्ट्यलङ्काराः = २४।

भोजराजवर्णितेष्वलङ्कारेषु स्वकल्पिता अलङ्कारा अष्टाविंशतिसंख्यापरिमिताः वर्तन्ते। चतुश्चत्वारिंशदलङ्कारानसौ प्राचीनाचार्यग्रन्थेभ्यो जग्राह। एवं तेन द्विसप्तत्यलङ्काराः वर्णिताः। भोजराजकल्पिता अलङ्काराः वर्तन्ते -

जातिगतिरीतिवृत्तिछायामुद्रोक्तियुक्तिभणितिगुम्फनाशय्यापठितिवाकोवाक्यप्रहेलिका-गूढप्रश्नोत्तराध्येयभव्यप्रेक्ष्याभिनीतिसम्भदवितर्कप्रत्यक्षागमोपमानार्थापत्त्यभावसमाध्यलङ्काराः = २८।

(vii) **मम्मटः** -

मम्मटः काव्यप्रकाशेऽष्टषष्ट्यलङ्कारान् वर्णयामास। तत्र षट् शब्दालङ्काराः द्विषष्ट्यर्थालङ्काराश्च वर्तन्ते।

(क) **शब्दालङ्काराः** - वक्रोक्त्यनुप्रासयमकश्लेषचित्रपुनरुक्तवदाभासालङ्काराः = ६।

(ख) **अर्थालङ्काराः** - उपमानन्वयोपमेयोपमोत्प्रेक्षारूपकसन्देहापह्नुतिश्लेष-समासोक्त्यप्रस्तुतप्रशंसानिदर्शनातिशयोक्तिप्रतिवस्तूपमादृष्टान्तदीपक-मालादीपकतुल्ययोगिताव्यतिरेकाक्षेपविभावनाविशेषोक्तियथासंख्यार्थान्तरन्यास-विरोधस्वभावोक्तिब्याजस्तुतिसहोतिक्तविनोक्तिपरिवृत्तिभाविककाव्यलिङ्ग-पर्यायोक्तोदात्तसमुच्चयपर्यायानुमानपरिकरब्याजोक्तिपरिसंख्याकारणमाला-न्योन्योत्तरसूक्ष्मसारासङ्गतिसमाधिसमविषमाधिकप्रत्यनीकमीलितैकावलीस्मरण-भ्रान्तिमत्प्रतीपसामान्यविशेषतद्गुणातद्गुणव्याघातसंसृष्टिसङ्करालङ्काराः = ६२।

अलङ्कारविवेचनप्रसङ्गे मम्मटः प्रायः प्राचीनाचार्यप्रतिपादितानेवाऽलङ्कारान् जग्राह। केवलं त्रयाणामेवाऽलङ्काराणामुद्भावना तेन विहिता - विनोक्तिसमातद्गुणा अलङ्काराः। मम्मटोऽलङ्कारविवेचने दण्डिना रुद्रटेन च प्रभावितो लक्ष्यते। तयोरेवालङ्कारास्तेन काव्यप्रकाशे स्वीकृताः।

(viii) **रुय्यकः** -

प्राचीनालङ्कारशास्त्रिणामलङ्कारविवेचने रुय्यकोऽनेकान् दोषानलक्षयत्। तान् दोषानपनेतुमसावलङ्कारसूत्रग्रन्थं विरच्य स्वयमेव तं व्याख्यातुमलङ्कारसर्वस्वनाम्नीं वृत्तिमलिखत्। अलङ्काराणां विशेषं वर्गीकरणं सम्पादयन्नसावष्टसप्ततिसंख्यापरिमितानलङ्कारान् व्याख्यातवान्। रुय्यकस्य वर्गीकरणेऽलङ्काराणां नामानि निम्नप्रकारेण वर्तन्ते -

(अ) शुद्धालङ्काराः -

(१) शब्दालङ्काराः -

(क) अर्थपुनरुक्तिः - पुनरुक्तवदाभासः।

(ख) व्यञ्जनपुनरुक्तिः - वृत्त्यनुप्रासश्छेकानुप्रासश्च।

(ग) स्वरव्यञ्जनपुनरुक्तिः - यमकम्।

(घ) शब्दार्थोभयपुनरुक्तिः - लाटानुप्रासः

(ङ) स्थानविशेषणश्लिष्टवर्णनपुनरुक्तिः - चित्रम्

(२) अर्थालङ्काराः -

(क) सादृश्यविच्छित्तिः - उपमानन्वयोपमेयोपमास्मरणरूपकपरिणामसन्देह-भ्रान्तिमदुल्लेखापह्नुत्युत्प्रेक्षातिशयोक्तितुल्ययोगितादीपकप्रतिवस्तूपमा-दृष्टान्तनिदर्शनाव्यतिरेकसहोक्त्यलङ्काराः।

(ख) विशेषणविच्छित्तिः - समासोक्तिपरिकरश्लेषालङ्काराः।

(ग) गम्यतार्थविच्छित्तिः - पर्यायोक्तव्याजस्तुत्याक्षेपालङ्काराः

(घ) विरोधविच्छित्तिः - विरोधविभावनातिशयोक्त्यसङ्गतिविषमविचित्र-व्याघाताधिकविशेषान्योन्यालङ्काराः।

(ङ) शृङ्खलाविच्छित्तिः - कारणमालैकावलीमालादीपकसारालङ्काराः

(च) न्यायविच्छित्तिः - काव्यलिङ्गानुमानयथासंख्यपर्यायपरिवृत्तिपरिसंख्या-र्थापत्तिविकल्पसमुच्चयसमाधिप्रत्यनीकप्रतीपमीलिततद्गुणातद्-गुणोत्तरालङ्काराः

(छ) गूढार्थपरताविच्छित्तिः - सूक्ष्मव्याजोक्तिवक्रोक्तिस्वभावोक्तिभाविकोदात्त-रसवत्प्रेयउर्जस्विसमाहितभावोदयभावसन्धिभावशबलतालङ्काराः।

(ब) मिश्रालङ्काराः

(१) संसृष्टिः - शब्दालङ्कारसंसृष्ट्यर्थालङ्कारसंसृष्ट्युमयालङ्कारसंसृष्ट्य-लङ्काराः

(२) सङ्करः

अष्टसप्तत्यलङ्कारेषु ह्येतेषु रुय्यकेनैकसप्तत्यलङ्काराः प्राचीनाचार्येभ्यो गृहीताः। सप्तालङ्काराणामुद्भावना तेन स्वयं कृता। ते च सन्ति -

परिणामोल्लेखविचित्रविकल्पभावोदयभावसन्धिभावशबलतालङ्काराः।

(ix) **विश्वनाथः -**

कविराजो विश्वनाथः साहित्यदर्पणस्य दशमे परिच्छेदे द्व्यशीत्यलङ्काराणां विवेचनं कृतवान्। रुद्रटस्य रुय्यकस्य वा वर्गीकरणमुपेक्षमाणोऽसौ द्वौ वर्गाविवाऽलङ्काराणां प्रतिपादयामास - शब्दालङ्कारा अर्थालङ्काराश्च। तेन सप्तशब्दालङ्काराणां पञ्चसप्तत्यर्थालङ्काराणाञ्च विवेचनं विहितम् -

(क) **शब्दालङ्काराः** - पुनरुक्तवदाभासानुप्रासयमकवक्रोक्तिभाषायमकश्लेषचित्रालङ्काराः = ७।

(ख) **अर्थालङ्काराः** - उपमानन्वयोपमेयोपमास्मरणरूपकपरिणामसन्देहभ्रान्तिमदुल्लेखापह्नुतिनिश्चयोत्प्रेक्षातिशयोक्तितुल्ययोगितादीपकप्रतिवस्तूपमादृष्टान्तनिदर्शनाव्यतिरेकसहोक्तिविनोक्तिसमासोक्तिपरिकरश्लेषाप्रस्तुतप्रशंसाव्याजस्तुतिपर्यायोक्तार्थान्तरन्यासकाव्यलिङ्गानुमानहेत्वनुकूलाक्षेपविभावनाविशेषोक्तिविरोधासङ्गतिविषमसमविचित्रान्योन्याधिकविशेषव्याघातकारणमालामालादीपकैकावलीसारयथासंख्यपर्यायपरिवृत्तिपरिसंख्योत्तरार्थापत्तिविकल्पसमुच्चयसमाधिप्रत्यनीकप्रतीपमीलितसामान्यतद्गुणातद्गुणसूक्ष्मव्याजोक्तिस्वभावोक्तिभाविकोदात्तरसवत्प्रेयउर्जस्विसमाहितभावोदयभावसन्धिभावशबलतालङ्काराः।

अथ च विश्वनाथेन संसृष्टिसङ्करालङ्कारावपि प्रोक्तौ।

रसवदादीनामलङ्काराणां गणना मम्मटोऽलङ्कारेषु न चकार। तानसौ गुणीभूतव्यङ्ग्यकाव्यान्तर्गतान् प्रतिपादयामास। परन्तु विश्वनाथस्य मतमत्र भिन्नमेव वर्तते। तेन प्रोक्तम् - रसवदादयो गुणीभूता अलङ्कारतां प्रपद्यन्ते।[1] अत्र तेनाऽऽनन्दवर्धनाचार्यस्य कारिका ह्युद्धृता -

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः।।**[2]

(x) **अप्पयो दीक्षितः -**

उत्तरवर्तिष्वलङ्कारशास्त्रकारेष्वप्पयदीक्षितो महनीयं स्थानं भजते। असावलङ्कारस्वरूपप्रकाशकौ द्वौ ग्रन्थावलिखत् - चित्रमीमांसां कुवलयानन्दञ्च। चित्रमीमांसायां द्वादशालङ्काराणां विवेचना विद्यते -

उपमोपमेयोपमानन्वयस्मरणरूपकपरिणामससन्देहभ्रान्तिमदुल्लेखापह्नुत्युत्प्रेक्षातिशयोक्त्यलङ्काराः।

---

१. रसभावौ तदाभासौ भावस्य प्रशमस्तथा।
गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा।। साहित्यदर्पण १०.९५

२. ध्वन्यालोक २.५

कुवलयानन्दस्योपजीव्यग्रन्थो वर्तते - जयदेवकृतश्चन्द्रालोक:। कुवलयानन्दे त्रयोविंशत्युत्तरैकशतालङ्काराणां विवेचनमस्ति। अत्र शतसंख्यका: शुद्धालङ्कारा: सप्त रसवदाद्यलङ्कारा: दश प्रमाणालङ्कारा: षट् च मिश्रालङ्कारा: वर्तन्ते। सर्वे चैतेऽलङ्कारा अर्थालङ्कारा: सन्ति।

अप्पयदीक्षित: शब्दालङ्काराणां विवेचनमुपेक्षितवान्। शब्दचित्रं काव्यं (शब्दालङ्कारप्रधानं काव्यम्) नीरसमेव। अत: कविभिर्नैतदाद्रियते। एतच्च विशेषेण न विचारणीयतां प्राप्नोति। अतोऽप्पयदीक्षितमहोदय: शब्दालङ्कारानुपेक्ष्याऽर्थालङ्काराणामेव विवेचनमकरोत्।[१]

अप्पयदीक्षितेन निम्नलिखिता अर्थालङ्कारा: व्याख्याता: -

उपमानन्वयोपमेयोपमाप्रतीपरूपकपरिणामोल्लेखस्मृतिभ्रान्तिसन्देहापह्नुत्युत्प्रेक्षातिशयोक्तितुल्ययोगितादीपकावृत्तिदीपकप्रतिवस्तूपमादृष्टान्तनिदर्शनाव्यतिरेकसहोक्तिविनोक्तिसमासोक्तिपरिकरपरिकराङ्कुरश्लेषाप्रस्तुतप्रशंसाप्रस्तुताङ्कुरपर्यायोक्तव्याजस्तुतिव्याजनिन्दाऽऽक्षेपविरोधाभासविभावनाविशेषोक्त्यसम्भवासङ्गतिविषमसमविचित्राधिकाल्पान्योन्यविशेषव्याघातकारणमालैकावलीमालादीपकसारयथासंख्यपर्यायपरिवृत्तिपरिसंख्याविकल्पसमुच्चयकारकदीपकसमाधिप्रत्यनीकार्थापत्तिकाव्यलिङ्गार्थान्तरन्यासविकस्वरप्रौढोक्तिसम्भावनामिथ्याध्यवसितिललितप्रहर्षणविषादनोल्लासानुज्ञावज्ञालेशमुद्रारत्नावलीतद्गुणपूर्वरूपातद्गुणानुगुणमीलितसामान्योन्मीलितविशेषोत्तरसूक्ष्मपिहितव्याजोक्तिगूढोक्तिविवृतोक्तियुक्तिलोकोक्तिछेकोक्तिवक्रोक्तिस्वभावोक्तिभाविकोदात्तात्युक्तिनिरुक्तिप्रतिषेधविधिहेतुरसवत्प्रेयउर्जस्विसमाहितभावोदयभावसन्धिभावशबलताप्रत्यक्षानुमानोपमानशब्दस्मृतिश्रुत्यर्थापत्त्यनुपलब्धिसम्भवैतिह्यसंसृष्ट्यङ्गाङ्गिभावसङ्करसमप्राधान्यसङ्करसन्देहसङ्करैकवाचकानुप्रवेशसङ्करसङ्करसङ्करालङ्कारा:।

अर्थालङ्कारविवेचने दीक्षितमहोदय: सामान्येन चन्द्रालोकमुपजीव्यरूपेण स्वीचकार। चन्द्रालोकादलङ्कारनामानि गृहीत्वाऽप्यसौ सप्तदश नवानलङ्कारानुद्भावयामास। तेनोद्भाविता अलङ्कारा: निम्नलिखिता: सन्ति -

प्रस्तुताङ्कुराल्पकारकदीपकमिथ्याध्यवसितिललितानुज्ञामुद्रारत्नावलीविशेषगूढोक्तिविवृतोक्तियुक्तिलोकोक्तिछेकोक्तिनिरुक्तिप्रतिषेधविध्यलङ्कारा:।

जयदेवो रसवदाद्यलङ्काराणामुल्लेखमात्रञ्चकार। अथ चाऽसौ प्रमाणालङ्कारान् न गणयामास।

---

१. शब्दचित्रस्य प्रायो नीरसत्वान्नात्यन्तं समाद्रियन्ते कवय:। न च तत्र विचारणीयता वोपलभ्यत इति शब्दचित्रांशमपहायार्थचित्रमीमांसा प्रसन्नविस्तीर्णा प्रस्तूयते। चित्रमीमांसा पृ० ५

**(xi) पण्डितराजोजगन्नाथः -**

पण्डितराजस्य जगन्नाथस्य मतेऽलङ्काराणां संख्या ज्ञातुं न सम्भवा। रसगङ्गाधर-ग्रन्थे तेन मनीषिणा ह्यलङ्काराणां विवेचनं तु कृतं, परन्तु ग्रन्थोऽसौ न सम्पूर्णतां प्राप्तः। उपमालङ्कारादारभ्योत्तरालङ्कारपर्यन्तं तत्र सप्तत्यलङ्काराणां विवेचनं वर्तते। ग्रन्थस्याऽध्ययनेन प्रतीयते यदसौ काव्यशास्त्रकर्ता विस्तृतं विवेचनमलङ्काराणां कुर्वन्नासीत्, परमुत्तरालङ्कार-विवेचनपर्यन्तमेव ग्रन्थोऽसौ समुपलभ्यते। केनचिदविदितेन कारणेन नाऽयं ग्रन्थः पूर्णतां प्राप्तः। पण्डितराजेन ग्रन्थोऽयं पूर्णतां न नीतोऽथवा उत्तरालङ्कारानन्तरं विनष्ट इति न निश्चयेन वक्तुं शक्यते।

अलङ्काराणां निरूपणे पण्डितराजो जयदेवकृतचन्द्रालोकग्रन्थस्याऽर्थालङ्कारानु-क्रमणिकामुपजीव्यरूपेण स्वीकृतवान्। प्रतिभातीदं यदनेनाऽलङ्कारशतं निरूपितव्यमासीत्। परं वर्तमानसमये तस्योपमालङ्कारत उत्तरालङ्कारपर्यन्तं सप्तत्यलङ्कारा एव समुपलभ्यन्ते। ते च वर्तन्ते -

उपमोपमेयोपमानन्वयासमोदाहरणस्मरणरूपकपरिणामससन्देहभ्रान्तिमदुल्लेखा-पह्नुत्युत्प्रेक्षातिशयोक्तितुल्ययोगितादीपकप्रतिवस्तूपमादृष्टान्तनिदर्शनाव्यतिरेकसहोक्ति-विनोक्तिसमासोक्तिपरिकरश्लेषाप्रस्तुतप्रशंसापर्यायोक्तव्याजस्तुत्याक्षेपविरोधविभावना-विशेषोक्त्यसङ्गतिविषमसमविचित्राधिकान्योन्यविशेषव्याघातकारणमालैकावलीसार-काव्यलिङ्गार्थान्तरन्यासानुमानयथासंख्यपर्यायपरिवृत्तिपरिसंख्यार्थापत्तिविकल्पसमुच्चय-समाधिप्रत्यनीकप्रतीपप्रौढोक्तिललितप्रहर्षणविषादनोल्लासावज्ञानुज्ञातिरस्कारलेश-तद्गुणातद्गुणमीलितसामान्योत्तरालङ्काराः।

पण्डितराजेन जगन्नाथेन प्राचीनप्रसिद्धालङ्काराणामेव व्याख्यानं विहितम्। न च तेन कश्चिन्नूतनोऽलङ्कार उद्भावितः।

## ५. अलङ्काराणां मूलतत्त्वम्

अलङ्कारनिरूपणप्रसङ्गे तेषां मूलतत्त्वमपि विचारणीयं ज्ञातव्यञ्च वर्तते। अलङ्कारास्तु काव्यगतचारुत्वहेतवः शोभातिशयाधायका वा प्रतिपादिताः। वस्तुतो ह्युक्तिवैचित्र्यमेवाऽलङ्कारः। सा चोक्तिः कविप्रतिभयोपस्थीयते। काव्यगतचमत्कृतिमुत्पादयन्तीयमुक्तिरेवाऽलङ्काररूपेण परिणमति। अलङ्काराणां मूलतत्त्वविषये काव्यशास्त्रकृद्भिर्मुख्यमतान्येवं प्रतिपादितानि -

**(i) अलङ्काराणां मूलं वक्रोक्तिरतिशयोक्तिर्वा -**

लोकातिक्रान्तगोचररूपेण कथनं वक्रातिशयरूपेण वा प्रवचनमेवाऽलङ्कारः। इयं वक्रोक्तिरतिशयोक्तिर्वा ध्रुवमलङ्काराणां मूलतत्त्वम्।

भामहेन वक्रोक्तिरलङ्काराणां मूलं प्रोक्ता। सर्वेष्वेवाऽलङ्कारेष्वियं समुपतिष्ठति। अनेन सिद्धमेव यद् वक्रोक्तिं विना न कोऽप्यलङ्कारः प्रवर्तते। कविनाऽत्र प्रयत्नः

कार्यः।[१] भामहेनाऽतिशयोक्तिरप्यलङ्काराणां मूलं प्रोक्ता। अतिशयोक्तियुक्तवचनानि लोकोत्तरत्वादतिरमणीयानि भवन्ति। एतेभ्योऽलङ्काराः निष्पद्यन्ते।[२] सम्भवतो भामहेन वक्रोक्तिरतिशयोक्तिश्चाऽभिन्नत्वेनाऽवलोकिता।

आचार्यो दण्डी ह्यतिशयोक्तिमलङ्काराणां मूलममनुत। अलङ्कारा अतिशयोक्ति-मेवाऽऽश्रित्य निष्पद्यन्ते। अलङ्कारेष्वलङ्कारत्वाधारोऽतिशयोक्तिरेव वर्तते।[३]

अलङ्काराणां निष्पादने ध्वनिवादिन आचार्या अपि वक्रोक्तिं वाऽतिशयोक्तिं वा मूलं गणयन्ति। आनन्दवर्धनः प्रोवाच -

यस्मिन्नलङ्कारे कविप्रतिभयाऽतिशयोक्तिर्विद्यते, तत्रैव चारुत्वं जायते। इयमतिशयोक्तिः सर्वालङ्कारशरीरेषु निवसति। सैव सर्वालङ्काररूपा वर्तते।[४]

अभिनवगुप्तेन ध्वन्यालोकलोचनटीकायां वक्रोक्तिरतिशयोक्तिर्वा सर्वालङ्कारगता प्रतिपादिता। अनयाऽतिशयोक्त्या पुराणीभूतः सकलजनोपभुक्तोऽप्यर्थो विचित्रतया नवत्वेन प्रतीयते।[५]

मम्मटाचार्यः सर्वेष्वेवाऽलङ्कारेष्वतिशयोक्तिं प्राणरूपां निरूपयामास। तां विना न कोऽप्यलङ्कारः प्रवर्तते।[६] अस्मिन् विषये तेन भामहोक्ता - "सैषा सर्वत्र वक्रोक्तिरिति" कारिका ह्युद्धृता।

एवं प्राचीनाचार्याः काव्येषु शोभाकरं धर्मं वक्रोक्तिरूपमतिशयोक्तिरूपं वा मन्वानस्तामेव वक्रोक्तिमलङ्काराणां मूलं प्रतिपादयन्ति।

---

१. सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना। भामह - काव्यालङ्कार २.८५

२. निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम्।
भाव्यन्तेऽतिशयोक्तिं तामलङ्कारतया यथा।। भामह काव्यालङ्कार २.८१

३. अलङ्कारान्तराणामप्येकमाहुः परायणम्।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम्।। काव्यादर्श २.२०

४. तत्राऽतिशयोक्तिर्यमलङ्कारमधितिष्ठति कविप्रतिभावशात् तस्य चारुत्वातिशययोगोऽन्यस्य त्वलङ्कारमात्रतैवेति सर्वालङ्कारशरीरस्वीकरणयोग्यत्वेनाऽभेदोपचारात् सैव सर्वालङ्काररूपेत्यय-मेवार्थोऽवगन्तव्यः। ध्वन्यालोक ३.२७ वृत्तिः।

५. तेनाऽतिशयोक्तिः सर्वालङ्कारसामान्यम्। तया ह्यनयाऽतिशयोक्त्याऽर्थः सकलजनोपभोगपुराणी-कृतोऽपि विचित्रतया भाव्यते। ध्वन्यालोकलोचनटीका: पृ० २३०

६. सर्वत्र एवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेनाऽवतिष्ठते। तां विना प्रायेणाऽलङ्कारत्वायोगात्।
काव्यप्रकाश १०.१३६ वृत्तिः

(ii) अलङ्काराणां मूलमुपमा -

अप्पयदीक्षितः सर्वेषामलङ्काराणां मूलमुपमामेवाऽऽमनुते। एकाकिनी ह्युपमारूपिणी-नर्तकी विभिन्नालङ्कारभूमिकां प्राप्ता काव्यरङ्गमञ्चे नृत्यन्ती सहृदयमनांस्यानन्दयति।[१] राजशेखरेणेयमुपमा अलङ्कारेषु शिरोमणिः काव्यसम्पत्तिसर्वस्वं कविवंशमाता च प्रोक्ता।[२]

(iii) अलङ्काराणां मूलं वास्तवौपम्यातिशयश्लेषाः -

रुद्रटेन प्रोक्तम् -

अलङ्काराणां मूलं न केवलमेकमेव तत्त्वम्। अलङ्काराश्चतुर्षु वर्गेषु विभज्यन्ते। प्रतिवर्गञ्च चाऽऽधारो भिन्न एव। केषाञ्चिदलङ्काराणां मूलं वास्तविकत्वं केषाञ्चित् सादृश्यं केषाञ्चिदतिशयोऽन्येषाञ्च श्लेषो विद्यते।[३] वास्तवौपम्यातिशयश्लेषानेवाऽऽधारीकृत्य रुद्रटेनाऽलङ्काराश्चतुर्षु वर्गेषु विभक्ताः।

## ६. अलङ्काराणां वर्गीकरणम्

प्राचीनाचार्येष्वलङ्काराणां वर्गीकरणस्य प्रवृत्तिर्न लक्ष्यते। भामहादिभिराचार्यैः काव्यशरीरं शब्दार्थमयं प्रतिपाद्य काव्यचारुत्वहेतवोऽलङ्काराः प्रोक्ताः। सम्भवतस्तैरलङ्काराः द्वयोर्वर्गयोः प्रतिष्ठापिताः -

(१) शब्दालङ्करणहेतवः शब्दालङ्काराः।

(२) अर्थालङ्करणहेतवोऽर्थालङ्काराः।

अलङ्काराणां वर्गीकरणे सर्वप्रथमं रुद्रटस्य प्रवृत्तिर्लक्ष्यते। अलङ्काराणां मूले चत्वारि तत्त्वानि सन्ति - वास्तवौपम्यातिशयश्लेषाः। अतोऽलङ्काराश्चतुर्षु वर्गेषु विभज्यन्ते।[४] रुद्रटमनुसृत्य वास्तववर्गे त्रयोविंशतिः, औपम्यवर्गे एकविंशतिः, अतिशयवर्गे द्वादश श्लेषवर्गे चैक एवेति ह्यलङ्काराः वर्ण्यन्ते। अथ चाऽसावलङ्काराणां मिश्रणेन द्विविधं सङ्करमपि प्रतिपादितवान्। अलङ्काराणामिदं वर्गीकरणं रुद्रटेनाऽर्थालङ्कारानुपलक्ष्यैव कृतम्। शब्दालङ्काराः पृथक् गण्यन्ते।

तदनन्तरं रुय्यकेनाऽलङ्काराणां वर्गीकरणं तेषां प्रकृतिमभिलक्ष्य सम्पादितम्। वर्गीकरणमिदमधिकविस्तृतं वैज्ञानिकञ्च विद्यते। प्रथमं तु तेनाऽलङ्काराणां द्वौ वर्गौ विहितौ - शुद्धालङ्कारा मिश्रालङ्काराश्च। शुद्धालङ्कारे पुनः द्वौ वर्गौ विद्येते - शब्दालङ्कारा अर्थालङ्काराश्च।

---

१. उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान्।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः।। चित्रमीमांसा पृ० ४०

२. अलङ्कारशिरोरत्नं सर्वस्वं काव्यसम्पदाम्।
उपमा कविवंशस्य मातैवेति मतिर्मम।। राजशेखर

३. अर्थस्यालङ्कारा वास्तवौपम्यातिशयश्लेषाः।
एषामेव विशेषा अन्ये तु भवन्ति निःशेषाः।। रुद्रट - काव्यालङ्कार ७.९

४. वही

शब्दालङ्काराणां मूलं वर्तते - पुनरुक्तिः। वर्णानां शब्दानाञ्च पुनरुक्तिः पञ्चविधा भवति, अतः शब्दालङ्काराणामपि पञ्च वर्गाः भवन्ति - स्वरपुनरुक्तिः, व्यञ्जनपुनरुक्तिः, स्वरव्यञ्जनसमुदायपुनरुक्तिः, शब्दार्थोभयपुनरुक्तिः,स्थानविशेषोपश्लिष्टवर्णनपुनरुक्तिश्च। एवञ्च रुय्यककृताः षट्शब्दालङ्काराणां पञ्च वर्गाः सन्ति।

रुय्यकोऽर्थालङ्कारान् सप्तसु वर्गेषु विभेजे। सप्तवर्गाश्चेमे मूलतत्त्वमवलम्ब्य निष्पन्नाः वर्तन्ते। सप्तमूलतत्त्वानि सन्ति -

" **सादृश्यविशेषणगम्यतार्थविरोधशृङ्खलान्यायगूढार्थपरताः।**

सप्तमूलतत्त्वान्युपलक्ष्य अर्थालङ्काराणां सप्तवर्गाः सन्ति। सप्तवर्गाणामेतेषामन्येऽप्यवान्तरभेदाः वर्तन्ते,, येषां विस्तरेण वर्णनं रुय्यकस्य काव्यालङ्कारे वर्तते।

मिश्रालङ्कारेषु रुय्यकेन संसृष्टिसङ्करालङ्कारयोर्व्याख्यानं कृतम्।

विद्याधरेणैकावल्यामप्यलङ्काराणां वर्गीकरणं निरूपितम्। तस्य च वर्गीकरणं रुय्यकमेवाऽनुसृत्य वर्तते। परं तस्य वर्गीकरणे कतिपयेऽलङ्काराः रुय्यकप्रोक्तभिन्नवर्गेष्वलोक्यन्ते।

प्रतापरुद्रयशोभूषणस्य रचयिता विद्यानाथोऽलङ्काराणां वर्गीकरणे सविशेषं विचारसरणिं प्रास्तौत्। वर्गीकरणविचारेऽसौ रुद्रटमनुसृत्याऽपि स्वल्पं परिवर्तनञ्चकार। अलङ्काराणां वर्गीकरणेऽर्थालङ्कारमूलतत्त्वानि नव वर्तन्त इति तेनाऽर्थालङ्काराणां नववर्गाः समुद्दिष्टाः -

(१) साधर्म्यमूलवर्गः
(२) अध्यवसायमूलवर्गः
(३) विरोधमूलवर्गः
(४) वाक्यन्यायमूलवर्गः
(५) लोकव्यवहारमूलवर्गः
(६) गम्यार्थप्रतीतिमूलवर्गः
(७) शृङ्खलावैचित्र्यमूलवर्गः
(८) अपह्नवमूलवर्गः
(९) विशेषणवैचित्र्यमूलवर्गः

विद्यानाथस्येदं विभाजनमलङ्काराणाञ्च वर्गीकरणं रुय्यकविद्याधरयोः ग्रन्थाननुसृत्य प्रस्थापितमपि यत्र तत्र नवीनो भिन्नश्च प्रतिभाति।

परमिदं तथ्यं परमविस्मयजनकं प्रतीयते, यदुत्तरवर्तिनो ध्वनिवादिन आचार्याः मम्मटादयोऽलङ्काराणां विशदं विवेचनं कृत्वाऽपि तेषां वर्गीकरणे महतीमुदासीनतामकल्पयन्। सम्भवतोऽस्यौदासीन्यस्य हेतुरयमेव, यद् ध्वन्यालोककार आनन्दवर्धनोऽतिशयोक्तिं (वक्रोक्तिम्) सर्वेषामेवाऽलङ्काराणां मूलमङ्गीचकार। एवञ्च सर्वेष्वेवाऽलङ्कारेषु मूलतत्त्वस्यैकस्य स्वीकरणात् तैराचार्यैरलङ्काराणां विशदं वर्गीकरणमुपेक्षितम्। तैः रुय्यकरुद्रटादीनामाचार्याणामनुसरणं

न कृतम्। अलङ्काराः काव्यशरीरशब्दार्थचारुत्वहेतव इति ते द्वावेव वर्गावकल्पयन् - शब्दालङ्कारवर्गोऽर्थालङ्कारवर्गश्च।

### ७. अलङ्काराणां काव्यात्मत्वसमीक्षा

भरतानन्तरं भामहो दण्डी चेत्येवमादय आचार्याः काव्येषु रसस्य प्राधान्यमुपेक्ष्याऽलङ्काराणां प्राधान्यं प्रस्थापयामासुः। अलङ्कारा एव काव्यानां सर्वस्वमिति।

अलङ्कारसिद्धान्तानुसारं स्थितिरियमस्ति -

काव्यानां संघटके द्वे वस्तुनी वर्तेते - शब्दश्च अर्थश्च। अनयोरेव द्वयोर्वस्तुनोरग्राम्यत्व-वक्रोक्त्यतिशयोक्तिनिर्दोषत्वौचित्यसंयुतं साहित्यं काव्यमित्युच्यते। अलङ्काराणां काव्येषु प्रधानकार्याणि सन्ति -

काव्यस्य शब्दार्थशरीरमलङ्कारा अलङ्कुर्वन्ति। ते तस्य सौन्दर्यस्योत्कर्षकाः भवन्ति चमत्कृतिञ्चाऽऽदधति। सौन्दर्यचमत्कृतिपूर्णे काव्ये च काव्यत्वं सन्निहितं भवति। सौन्दर्यविहीनं काव्यमकाव्यमेव। भामहेनोक्तम् -

अलङ्कारेषु सौन्दर्याधायकेषु सत्स्वेव शब्दार्थयोः साहित्यं काव्यमुच्यते। वनितामुखं सुन्दरमपि भूषणैर्विना यथा न शोभते, तथैव सरसमपि काव्यमलङ्कारविहीनं न रमणीयं प्रतिभाति। यथा कपित्थफलं सरसमपि न रमणीयं भवति।

ध्वनिवादिभिरलङ्कारवादिनो बहुधाऽऽक्षिप्यन्ते, यत्ते शब्दक्रीडाविलासरताः भ्रमन्ति। अथ चाऽलङ्कारवादिनः काव्येषु भावप्रवणत्वं वा सरसत्वं वोपेक्षन्ते, तस्य महत्त्वं न गणयन्ति। तेषां कृतेऽलङ्काराणां चमत्कृतित्वमेव पर्याप्तम्। तत्रैव ते विरमन्ति। "न कान्तमपि निर्भूषं विभाति वनितामुखम्"[1], इति भामहोक्तिस्तैः प्रमाणरूपेण प्रस्तूयते। काव्येषु सरसेषु सत्स्वप्यलङ्कारशून्यता अरमणीयत्वहेतुरिति भामहस्य मतमासीत्। तत्र सरसत्वस्य न किमपि महत्त्वमवर्तत।

सूक्ष्मभावेन तत्त्वतो विचार्यमाणे ध्वनिवादिनामलङ्कारवादिष्वाक्षेपोऽयं न समुचितः। भामहस्त्वलङ्कारेभ्यो वक्रोक्तिमतिशयोक्तिं वाऽनिवार्यरूपेण प्रतिपादितवान्। तस्याऽभिप्रायोऽय-मन्तर्निहित आसीद्, यत् काव्यत्वं न केवलं शब्दमात्रे नाऽपि च केवलमर्थमात्रे सन्निहितं भवति, अपितु शब्दार्थयोरौचित्यपूर्णे दोषरहिते च साहित्ये निवसति। दण्डी तु सर्वानेव शोभाकरान् धर्मानलङ्कारानाख्यात्। तस्याऽभिप्रायोऽत्र न केवलं शब्दार्थचारुत्वहेतुष्वलङ्कारमात्रेषु अनुप्रासरूपकादिष्वेव सीमितो बभूव, परन्तु काव्यस्य सर्वाण्येवाऽङ्गानि तत्त्वानि रसादीन्यपि तत्र दण्डिना अलङ्कारेषु समावेशितानि। दण्डी तु भरतोक्तानि सन्धिसन्ध्यङ्गवृत्तिवृत्त्यङ्ग-लक्षणान्यपि काव्यशोभाकरधर्मत्वादलङ्कारान्तर्गतानि चकार।[2]

---

१. भामह - काव्यालङ्कार १.१३।।

२. काव्यादर्श २.३६७।।

दण्डी काव्येषु सरसत्वमनिवार्यं तत्त्वं जगाद। तेनेदमपि प्रतिपादितं यदलङ्कारा खलु रसोपकारका एव भवन्ति। तत्राऽग्राम्यत्वं विशेषेण रसभारं वहति।[1] अस्यार्थः - सरसेऽपि काव्ये रमणीयत्वं तदैव जायते, यदा तत्राऽग्राम्यत्ववक्रोक्त्यतिशयौचित्यतत्त्वानि सन्ति। ''न कान्तमपि निर्भूषं विभाति वनितामुखम्'', इति भामहवचनस्याऽभिप्रायोऽयमेव यत् काव्येषु कविना रसनिवेशने ह्यौचित्ययुतेन भाव्यम्। दोषप्रकरणेऽपि भामहेन प्रतिपादितं यत् काव्येषु रससामग्रीषु सन्निहितास्वपि दोषाणामुपस्थितिः काव्यान्यरमणीयानि विदधाति।

ध्वनिवादिनां व्यङ्ग्यार्थस्य प्रतीयमानार्थस्य वा तथाविधं विश्लेषणं निरूपणं वाऽलङ्कारवादिन आचार्याः कर्तुं नाऽपारयन्। तथापि ते ध्वनिवादिनां त्रिविधेन व्यङ्ग्यार्थेन, वस्त्वलङ्काररसरूपेण परिचिताः निश्चयेनाऽऽसन्। त्रयाणामप्येतेषां व्यङ्ग्यार्थानां समावेशं तेऽलङ्कारेष्वकुर्वन्। अलङ्कारवादिनो यतः सर्वानपि काव्यशोभाकरान् धर्मानलङ्काराना-मन्वते स्म, अतस्ते व्यङ्ग्यभूतान् रसानप्यलङ्कारानेव जगदुः। न केवलमनुप्रासोपमादय एवाऽलङ्कारा आसन् अपितु ध्वनिगुणरसरीतिनाट्यवृत्त्यादयोऽपि सर्वे धर्माः काव्यशोभाकरत्वाद-लङ्कारा एव सङ्कीर्तिताः।

अलङ्कारवादिन आचार्या अङ्गीभूतं रसं रसवदलङ्कारम्, अङ्गीभूतं भावं प्रेयोऽलङ्कारम्, अङ्गीभूतं रसाभासं भावाभासञ्चोर्जस्विअलङ्कारं जगदुः। अथ चाऽङ्गीभूतां भावशान्तिं समाहितालङ्कारं प्रोचुः। अङ्गीभूताः भावोदयभावसन्धिभावशबलताश्चैतन्नामभिरेव तैः कल्पिताः।

अथ चाऽलङ्कारवादिभिरङ्गभूतानां रसादीनां समावेश उदात्तालङ्कारान्तर्गतः कल्पितः। अलङ्कारवादिन आचार्याः भामह[2]दण्डि[3]रुद्रटो[4]द्भटादयः[5] सुस्पष्टं काव्येषु रसस्याऽनिवार्यतां प्रतिपादयन्ति। रसस्य महत्त्वेन परिचिताः सन्तोऽपि ते तमलङ्काररूपमेव मन्वते।

अलङ्कारवादिन आचार्याः ध्वनिवादिनामलङ्कारध्वनिं सुस्पष्टमलङ्कारमेव कथयन्ति। तेषां वस्तुध्वनिरप्यलङ्कारेषु समावेश्यते। तेऽलङ्कारवादिनः प्रतीयमानवस्तुरूपार्थेन निश्चयेन परिचिताः सन्तोऽपि नैनं ध्वनिं न च काव्यात्मानं प्राहुः। अस्याऽर्थस्य समावेशस्तैरप्रस्तुतप्रशंसा-समासोक्त्याक्षेपपर्यायोक्ताद्यलङ्कारेषु कृतः। समासोक्त्यलङ्कारलक्षणे भामहः सुस्पष्टं लिलेख -

---

१. काव्यादर्श १.६२

२. रसवद्दर्शितस्पष्टशृङ्गारादिरसं यथा।
देवी समगमद् धर्ममस्करिण्यतिरोहिता।। भामह काव्यालङ्कार ३.६

३. इह त्वष्टरसायत्ता रसवत्ता स्मृता गिराम्। काव्यादर्श २.२९२
मधुरं रसवद् वाचि वस्तुन्यपि रसस्थितिः। काव्यादर्श १.५१

४. तस्मात् तत् कर्तव्यं यत्नेन महीयसा रसैर्युक्तम्। रुद्रट - काव्यालङ्कार १२.२

५. रसवद्दर्शितस्पष्टशृङ्गारादिरसादयम्। उद्भटः काव्यलङ्कारसारसंग्रह - ४

अयमलङ्कारस्तस्यामेवाऽवस्थायां समुल्लसति, यदा कस्मिंश्चिद् वस्तुनि वर्णनीयताङ्गते तत्समानविशेषणमन्यद् वस्तु प्रतीयते।[१]

अनेनैव मार्गेण पर्यायोक्तालङ्कारोऽपि तदैव भवति, यदा वाच्यवाचकवृत्तिभ्यां भिन्नेनाऽन्येन प्रकारेणाऽर्था अभिधीयन्ते।[२]

एवमेष्वलङ्कारेषु प्रतीयमानार्थस्थितिमलङ्कारवादिनो निश्चयेन मन्वते।

काव्ये प्रतीयमानार्थं रुद्रटोऽनिवार्यत्वेनाऽङ्गीचकार। तत्सिद्धये तेन भावालङ्कारस्य कल्पना कृता। अत्र भावालङ्कारो द्विविधो वर्तते। प्रथमस्य भावालङ्कारस्योदाहरणं रुद्रटेनोद्धृतं मम्मटो गुणीभूतव्यङ्ग्यकाव्यस्योदाहरणत्वेन प्रास्तौत्।[३] रुद्रटेनोद्धृतं द्वितीयस्य भावालङ्कारस्योदाहरणमभिनवगुप्तो गुणीभूतव्यङ्ग्यकाव्यं जगाद।[४]

ध्वनिगुणीभूतव्यङ्ग्यादिपदप्रयोगानभिज्ञा अपि प्राचीनाचार्याः प्रतीयमानेनाऽर्थेन परिचिता अवर्तन्त। तथ्यस्याऽस्य प्रतिपादनं जगन्नाथः पण्डितराजः सबलशब्देषुः कृतवान्।[५]

विवेचनेनाऽनेन सुस्पष्टमेव यदलङ्कारवादिन आचार्याः प्रतीयमानेनाऽर्थेन नियतं परिचिता आसन्। अथ च सिद्धान्तोऽयं तैः स्वीकृतः। परन्त्वस्याऽर्थस्य समावेशस्तैरलङ्कारेषु कृतः। एवञ्च तेऽलङ्कारान् काव्यस्याऽनिवार्यं तत्त्वं प्रतिपादयामासुः।

आनन्दवर्धनस्तदुत्तरवर्तिनो ध्वनिवादिन आचार्याः काव्येष्वलङ्काराणामेतन्महत्त्वं नाङ्गीचक्रुः। अलङ्कारास्तैः न त्वन्तरङ्गगतत्त्वरूपेण नाऽपि चाऽनिवार्यत्वेनाऽङ्गीकृताः।

---

१. यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः।
सा समासोक्तिरुदिता संक्षिप्तार्थतया बुधैः।। भामह - काव्यालङ्कार २.७९

२. पर्यायोक्तं यदन्येन प्रकारेणाऽभिधीयते।
उवाच रत्नाहरणे चैद्यं शार्ङ्गधनुर्यथा।। भामह - काव्यालङ्कार ३.८

३. ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।
पश्यन्त्या भवति नितरां मलिना मुखच्छाया।। रुद्रट - काव्यालङ्कार ७.३९

४. एकाकिनी यदबला तरुणी तथाऽहम्
अस्मिन् गृहे गृहपतिश्च गतो विदेशम्।
किं याचसे यदिह वासमियं वराकी
श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ।। रुद्रट - काव्यालङ्कार ७.४१

५. ध्वनिकारात् प्राचीनैर्भामहोद्भटप्रभृतिभिः स्वग्रन्थेषु कुत्रापि ध्वनिगुणीभूतव्यङ्ग्यादिशब्दा न प्रयुक्ता इत्येतावतैव तैर्ध्वन्यादयो न स्वीक्रियन्त इत्याधुनिकानां वाचोयुक्तिरयुक्तैव। यतः समासोक्तिव्याजस्तुत्यप्रस्तुतप्रशंसाद्यलङ्कारनिरूपणेन कियन्तोऽपि गुणीभूतभेदास्तैरपि निरूपिताः। अपरश्च सर्वोऽपि ध्वनिप्रपञ्चः पर्यायोक्तकुक्षौ निक्षिप्तः। न ह्यनुभवसिद्धोऽर्थो बालेनाप्यपनिह्नोतुं शक्यते। ध्वन्यादिशब्दैः परं व्यवहारो न कृतः। न ह्येतावताऽनङ्गीकारो भवति। रसगङ्गाधर पृ० ४१४-४१५

अलङ्कारान् काव्यस्य बाह्योत्कर्षकतत्त्वं समर्थयन्तस्ते कनककुण्डलसदृशान् प्रतिपादयामासुः। यथा कनककुण्डलादयो बाह्याः सन्तः शरीरं विभूषयन्ति, तथैव काव्यालङ्काराः बाह्याः सन्तः काव्यशरीरभूतौ शब्दार्थौ समलङ्कुर्वन्ति।

ध्वनिवादिनामाचार्याणां धारणा सम्भवत इयमासीद् यत्काव्येष्वलङ्काराः सप्रयासं योज्यन्ते, तेषाञ्च रमणीयत्वं शब्दार्थायत्तम्। परन्तु रससम्भृतेषु काव्येषु रसयोजना सप्रयासप्रयुक्तपदायत्ता न। रसास्वादनमपि शब्दायत्तं वाच्यार्थायत्तञ्च न वर्तते। एतेन विवेचनेन निष्कर्षोऽयं कल्पयितुं शक्यते, यदलङ्काराः कविनिष्ठाः रसाश्च सहृदयनिष्ठाः भवन्ति। एवमलङ्कारा रसस्याऽङ्गीभूतस्योत्कर्षकाः। अथ च ते न साक्षाद्रूपेणोत्कर्षका, अपितु शब्दार्थद्वारेणैव। काव्येषु रसस्याऽङ्गीभूतस्योपकारका अलङ्कारा अनिवार्यरूपेण स्युरिति नाऽनिवार्यम्।

आनन्दवर्धनो रसनिष्ठेषु काव्येषु ह्यलङ्कारयोजनायै विशिष्टनियमान् निर्धारयामास। शृङ्गाररसनियोजने ह्येकरूपानुबन्धवान् अनुप्रासप्रयोगो[१] यमकादीनाञ्च नियोगो[२] रसव्याघातको भवति। काव्येष्वलङ्काराणामलङ्कारत्वं रसभावाद्यानुकूल्येनैव सम्भाव्यते। ध्वनिकाव्येऽलङ्कारः स एव यो रसानुकूल्येनैव निबध्यते, अपृथग्यत्ननिर्वर्त्यश्च भवति।[३] अलङ्काराणामौचित्येन निबन्धने निम्ननियमा आनन्दवर्धनेन प्रतिपादिताः[४] -

(i) अङ्गीभूतरसं प्रति रूपकाद्यलङ्काराणां विवक्षाऽङ्गरूपेणैव भाव्या।
(ii) अलङ्काराणां विवक्षाऽङ्गित्वेन कदापि न भवितव्या।
(iii) अवसरेऽलङ्काराणां ग्रहणं कर्तव्यमवसरे च त्यागः कार्यः।
(iv) आरम्भादन्तपर्यन्तं नाऽतिनिर्वहणस्य प्रयासः कार्यः।
(v) आरम्भादन्तपर्यन्तमलङ्काराणामनायासेनैव निर्वहणे सत्येतेऽङ्गीभूतस्य रसस्याऽङ्गरूपेणोपकारकरूपेण च रक्षणीयाः।

---

१. शृङ्गारस्याऽङ्गिनो यत्नादेकरूपानुबन्धवान्।
सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः।। ध्वन्यालोक २.१४
२. ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम्।
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः।। ध्वन्यालोक १५
३. रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः।। ध्वन्यालोक २.१६
४. विवक्षा तत्परत्वेन नाऽङ्गित्वेन कदाचन।
काले च ग्रहणत्यागौ नाऽतिनिर्वहणैषिता।।
निर्व्यूढावधि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्।
रूपकादिरलङ्कारवर्गस्याङ्गत्वसाधनम्।। ध्वन्यालोक २.१७- १८

भट्टलोल्लटेन प्रतिपादितम् -

काव्ये यमकाद्यलङ्कारा रसविरोधिनो भवन्ति। एषां प्रयोगः कवेरभिमानसूचको गड्डलिकादिप्रवाहो वा वर्तते।[1]

गुणालङ्कारविवेचनप्रसङ्गे मम्मटेनाऽलङ्काराः काव्येषु बाह्यतत्त्वरूपेण प्रतिपादिताः। काव्येष्वलङ्कारा रसं तूपकुर्वन्ति, परं न साक्षाद्रूपेण। शब्दार्थयोर्माध्यमेन ते रसस्योपकारकाः भवन्ति। रसैः सह तेषां न साक्षात् सम्बन्धः। काव्ये विद्यमाने रसे ते तमुपकुर्वन्ति। परन्तु नैष नियतो नियमः। नाऽप्युपकुर्वन्ति। काव्ये रसेऽविद्यमानेऽप्यलङ्काराणामवस्थितिः सम्भवति। तदा ते ह्युक्तिवैचित्र्यमात्रपर्यवसायिनो भवन्ति।[2] मम्मटानन्तरमप्याचार्यैस्तस्य विचाराणां पुष्टिर्विहिता।

उपरि प्रतिपादितेन वर्णनेन सुस्पष्टमिदं यद् भामहदण्डिरुद्रटरुय्यकप्रभृतिभिरलङ्कार-वादिभिः प्राचीनैराचार्यैः यदलङ्कारतत्त्वं काव्येषु महनीयमनिवार्यं प्राणरूपञ्च प्रतिपादितं, ध्वनिवादिभिराचार्यैस्तन्महत्त्वं न स्वीकृतमपितु खण्डितमेव। अलङ्कारान् काव्यस्य बाह्यतत्त्वानि प्रतिपाद्य तेषामनिवार्यत्वस्य विरोधमेव ते चक्रिरे।

तथापि ध्वनिवादिनो न तथाऽलङ्कारविरोधिनो न च काव्येषु तेषां नियोजन औदासीन्यं भजन्ते। स्वकाव्यशास्त्रग्रन्थेषु ध्वनिवादिभिराचार्यैरलङ्काराणां विशदं विवेचनं सूक्ष्मतया च विश्लेषणं विहितम्। मम्मटविश्वनाथजगन्नाथानां काव्यशास्त्रग्रन्थाः काव्यप्रकाशसाहित्यदर्पणरसगङ्गाधराश्चाऽस्य तथ्यस्य साक्षिणः सन्ति। ग्रन्थेष्वेतेष्वलङ्काराणां सूक्ष्मं विस्तृतञ्च विवेचनमुपलभ्यते। काव्यलक्षणं निरूपयता मम्मटेनाऽलङ्कारा अनिवार्यतत्त्वरूपेण प्रतिपादिताः, यद्यपि काव्ये ते गौणरूपेणैवाऽवतिष्ठन्ते। काव्यलक्षणे "अनलङ्कृती पुनः क्वापि" इति सन्दर्भस्य व्याख्यां कुर्वन् मम्मटो जगाद -

**क्वापीत्यनेनैतदाह यत् सर्वत्र सालङ्कारौ, क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः।**

मम्मटस्य विवरणेनाऽनेन सुस्पष्टमेवेदं यद् ध्वनिवादिन आचार्या अपि काव्यानाम-निवार्यतत्त्वरूपेणाऽलङ्कारान् नियतं स्वीकुर्वन्ति स्म, परं ते तान् काव्यस्यात्मानं न समाम्नासिषुः।

---

१. यमकोनुलोमतदितरचक्रादिभिदोऽतिरसविरोधिनः। अभिमानमात्रमेतद् गड्डलिका प्रवाहो वा।।
हेमचन्द्रस्य काव्यानुशासनात्

२. यत्र नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसायिनः। काव्यप्रकाश ८.६७ वृत्तिः

चतुर्थोऽध्यायः

# रीतिसम्प्रदायः

## १. रीतीनां प्रवर्तनम्

"रीतिरात्मा काव्यस्ये" ति वचनमुदीर्य वामनः सर्वप्रथमं काव्ये रीतिं महत्तमां प्रतिपादयामास। काव्यशास्त्रजगति रीतितत्त्वस्याऽऽविष्करणं यद्यपि वामनाचार्या-दप्यनेकशताब्दिपूर्वकालीनं वर्तते, तथापि वामन एव प्रथम आचार्यो यो रीतिं सविशदं सुस्पष्टञ्च व्याख्याय तां काव्यात्मतत्त्वं प्रतिपादितवान्। तदनन्तरमसौ रीतिगुणयोः परस्परं नित्य-सम्बन्धमपि प्रत्यास्थापयत्। रीतिस्वरूपं वामनेनैवं निर्दिष्टम् -

**"विशिष्टा पदसंघटना रीतिः। विशेषो गुणात्मा।**[१]

पदानां विशिष्टा संघटनैव रीतिः। विशेषपदस्याऽभिप्रायो गुणैः सह सम्बन्धः। काव्यशोभायाः कर्तारो गुणाः काव्यस्य नित्यधर्माः वर्तन्ते।[२] काव्यशोभासम्पादनं विना काव्यरचना न प्रवर्तते। एतां काव्यशोभां विना काव्ये शब्दार्थयोः प्रयोग उपचारमात्रमेव।

## २. रीतेरुद्भवविकासयोः क्रमविवेचनम्

विशिष्टा पदरचना रीतिरित्युच्यते। साहित्ये रीतिपदप्रयोगोऽतिप्राचीनः। रीतिपदस्य निर्वचनं √रीङ् धातोर्निष्पद्यते। यस्यार्थः - गमनं मार्गो वा। एवं रीतिपदं साहित्ये विभिन्नमार्गान् सूचयति।

ऋग्वेदे रीतिपदप्रयोगोऽनेकशो बभूव। तत्र तस्यार्थः - गमनं मार्गो वा वर्त्तते। यथा - "महीव रीतिः शवसा सरत् पृथक्"[३], "वातेवाजुर्या नद्येव रीतिः"[४], "तामस्य रीतिं परशोरिव"[५] इत्यादिषु स्थलेषु रीतिपदप्रयोगो गतिर्वा, धारा वा मार्गो वेत्याद्यर्थेषु समभूत्। वैदिकसाहित्येऽन्येष्वपि स्थानेषु रीतिपदप्रयोग एतेष्वर्थेष्ववलोक्यते।

वर्तमानसमये समुपलभ्यमानेषु काव्यशास्त्रग्रन्थेषु, वामनकृतकाव्यालङ्कारसूत्रग्रन्थ एव प्रथमा कृतिर्यत्र काव्यगतरीतीनां विशदा सुस्पष्टा व्याख्या वर्तते। वामनात् पूर्वं भामहेन दण्डिना चैषा दिक् सङ्केतिता। परं तत्र रीतिपदप्रयोगो नोपलभ्यते। दण्डिनाऽत्र मार्गपदप्रयोगः

---

१. काव्यालङ्कारसूत्र १.२.७-८,

२. काव्यशोभायाः कर्तारो धर्माः गुणाः। काव्यालङ्कारसूत्र ३.१.१

३. ऋग्वेद २.२४.१४। ४. ऋग्वेद २.३९.५।। ५. ऋग्वेद ५.४८.४

कृतः। ताभ्यां पूर्वमपि मुनिना भरतेन प्रवृत्तिपदप्रयोगोऽनेनैवाऽभिप्रायेण कृत आसीत्। राजशेखरेण काव्यमीमांसायां लिखितम् -

पूर्वं सुवर्णनाभाभिधानो ह्याचार्यो बभूव, यो रीतिविषयकं ग्रन्थं लिलेख।[१] परन्तु वर्तमानसमये नाऽयं ग्रन्थ उपलभ्यते।

काव्यसमीक्षासंविधाने रीतेर्वा मार्गस्य वा पदस्य प्रयोगः प्राचीनकाले भौगोलिकवैशिष्ट्यानि समुपलक्ष्य बभूव। आचार्यैर्निर्दिष्टम् -

विभिन्नप्रदेशेषु निवसन्तो मनीषिणो निजप्रदेशप्रचलितासु प्रसिद्धासु शैलीषु काव्यानि निबबन्धुः। यथा गौडप्रदेशीयाः लेखकाः समासबहुलायां गौडीशैल्यां विदर्भदेशवासिनश्च लेखकाः समासरहितायां वैदर्भीशैल्यां काव्यानि रचयामासुः। अत एवैताः शैल्यो मार्गाः वा तत्तत्प्रदेशाभिधानेन प्रसिद्धाः समभवन्।[२] परन्तूत्तरवर्तिनि युगे लेखनशैलीनामियं स्थितिः प्रदेशविशेषेभ्यः सम्बन्धविच्छिन्ना भूत्वा कवीनां निजप्रवृत्तिभिः सह सम्बद्धा सञ्जाता।

पदसंघटनायै प्रथमं भरतेन प्रवृत्तिपदस्य प्रयोगो विहितः। इयं प्रवृत्तिर्विभिन्नप्रदेशैर्भूभागैर्वा भारतस्य सम्बद्धाऽवर्तत। भरत एव प्रथमं काव्यगतगुणान् व्याख्यातवान्। गुणानेवाऽऽश्रित्योत्तरवर्तिभिराचार्यैः रीतीनां विशालप्रासादस्य रचना कृता।

रीतीनां प्रथमप्रयोगो भामहेन विहितः। परमनेनाऽऽचार्येण वर्तमानसमीक्षापद्धत्यर्थे रीतिपदप्रयोगं न कृत्वा मार्गपदस्य प्रयोगः कृतः। भामहकृतकाव्यालङ्कारस्याऽध्ययनेन विज्ञायते, यत्तस्मिन् युगे साहित्यरचनायाः द्वौ मार्गौ सुप्रतिष्ठितावभवताम् - वैदर्भो गौडीयश्च। वैदर्भमार्गे प्रशंसितेऽपि गौडीयमार्गस्य निजवैशिष्ट्यमासीत्। भामहसमये मार्गयोरेतयोः देशविशेषेभ्यः सम्बन्धाभावो जातः। वामनेन तथ्यस्याऽस्य समर्थनं कृतम्।[३]

भामहानन्तरं दण्डी रीतीनामधिकं वैज्ञानिकं विश्लेषणञ्चकार। परं तेनाऽपि मार्गपदस्यैव प्रयोगो विहितः।[४] दण्डिना कथितम् -

सूक्ष्मभेदात् काव्यरचनामार्गा अनन्ताः सन्ति। परन्तु मुख्यौ मार्गौ द्वावेव स्तः। तयोश्च भेदानां गणना न सम्भवा। प्रतिकवेर्मार्गः पृथगेव भवति।[५] सरस्वत्यपि मार्गानेतान् गणयितुमसमर्था। दण्डिनः समये मार्गयोरेतयोर्भौगोलिकवैशिष्ट्यं विद्यमानमासीत्।

---

१. रीतिनिर्णयं सुवर्णनाभः। काव्यमीमांसा प्रथमोऽध्यायः
२. विदर्भादिषु दृष्टत्वात् तत् समाख्या। काव्यालङ्कारसूत्र १.२.१०
३. न पुनः देशैः किञ्चिदुपक्रियते काव्यानाम्। काव्यालङ्कारसूत्र १.२.१०, वामनकृतवृत्तिः
४. अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम्। काव्यादर्श १.४०
५. इति मार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात्।
तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकविस्थिताः।। काव्यादर्श १.१०१

काव्यरचनाया: मार्गयोरेतयो: सम्बन्धं दण्डी गुणै: सह प्रास्थापयत्। भरतप्रोक्ता: दशगुणा: दण्डिना मार्गाभ्यां सह संयोजिता:। दश गुणा: ह्येते वैदर्भमार्गस्य प्राणा:। गौडमार्गे त्वेषां विपर्ययो दृश्यते।[1]

रीतितत्त्वस्य साङ्गोपाङ्गं विवेचनं वामनेन कृतम्। तेन सा रीति: काव्यस्यात्मा प्रतिपादिता। इति रीतिलक्षणमुक्त्वा वामनाचार्य: पदसंघटनायां गुणानां वैशिष्ट्यं निधायैतत् तत्त्वं व्याचख्यौ। रीतीनां गुणानाञ्च नित्यसम्बन्धं प्रतिष्ठाप्याऽसौ रसादीनां समावेशमप्यत्र चकार। वामनेन गुणानां संख्या विंशतिर्निर्धारिता। गुणानां नामानि तु प्राचीनाचार्यप्रोक्तान्यसौ प्रोवाच, परं दश शब्दगुणा: दश चार्थगुणा: भवन्तीत्युक्त्वा तान् विंशतिसंख्यकानगणयत्।

वामनाचार्यपूर्वं काव्यरचनाया: द्वौ मार्गौ प्रसिद्धावास्ताम् - वैदर्भो गौडश्च। वामनेन तृतीयोऽपि मार्गो मध्यम: पाञ्चाल उद्घाटित:। एवं रीतयस्तिस्र: सञ्जाता: वैदर्भी, गौडी पाञ्चाली च। एतासां भेदा: गुणानां भिन्नत्वात्तेषां संख्यायाश्च न्यूनाधिकत्वात् सञ्जायन्ते।

रीतीनां विकासस्येतिहासे रुद्रटस्य महत्तमं स्थानमस्ति। प्रथमोऽसावाचार्यो यो रीती: भौगोलिकबन्धनेभ्यो विमोच्य काव्यव्यवहारपरम्परायां संयोजितवान्। वामनस्य तिसृभि: रीतिभि: सहाऽसावेकामन्यां चतुर्थीं रीतिं लाटीमप्युद्घाटयामास। रुद्रटो रीतिभि: सह रसानां सम्बन्धमपि प्रास्थापयत्। रीतीनां संयोजनं रसौचित्यमपेक्ष्य करणीयमिति व्यवस्था तेन स्थापिता।

रीतिविभाजनं रुद्रट: समासमधिकृत्याऽकरोत्।[2] समासरहिता रचना वैदर्भी रीति:, द्वित्रिपदसमासा पाञ्चाली रीति:, पञ्चसप्तपदसमासा लाटी रीति:, समासबहुला च रचना गौडी रीतिरिति रीतीनां व्यवस्था वर्तते।

---

१. श्लेष: प्रसाद: समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोज: कान्ति: समाधय:।।
इति वैदर्भमार्गस्य प्राणा: दश गुणा: स्मृता:।
एषां विपर्यय: प्रायो दृश्यते गौडवर्त्मनि।। काव्यादर्श १.४१-४२

२. वृत्तेरसमासाया वैदर्भीरीतिरेकैव।। रुद्रट - काव्यालङ्कार २.६
पाञ्चाली लाटीया गौडीया चेति नामतोऽभिहिता:।
लघुमध्यायतविरचनसमासभेदादिमास्तत्र।।
द्वित्रिपदा पाञ्चाली लाटीया पञ्च सप्त वा यावत्।
शब्दा: समासवन्तो भवति यथाशक्ति गौडीया।। रुद्रट - काव्यालङ्कार २.४-५

रुद्रटेन प्रतिपादितं यत् सुकुमाररसानां शृङ्गारप्रेयःकरुणभयानकाद्भुतानां विनिवेशने वैदर्भी पाञ्चाली च रीत्यौ प्रयोजनीये। कठोराणामोजायमानानाञ्च रसानां रौद्रादीनां विनिवेशने लाटी गौडी च रीत्यौ प्रयुज्येते।[1]

रीतीनां भौगोलिकविवेचनं ह्यालङ्कारिकरूपेण विधाय राजशेखरस्ताभिः सह प्रवृत्तीनां वृत्तीनामपि च सम्बन्धं प्रास्थापयत्। राजशेखरेण वर्णितम् -

भारतवर्षस्य चतसृषु दिक्षु काव्यापुरुषो बभ्राम। यस्यां दिश्यसौ यां भाषां प्रयुयोज, तस्यां दिशि तदनुकरणात् तथाविधा रीतिः प्रचलिताऽभवत्। इत्थञ्च पूर्वदिशि गौडी, पाञ्चालेष्वन्तीषु च पाञ्चाली, दक्षिणदिशि च वैदर्भी रीतिः प्रचलिता बभूव। साहित्यवधूरपि बभ्राम। तदनुकरणे पूर्वीयेषु देशेषु भारतीवृत्तिरौड्रमागधी च प्रवृत्तिः प्रववृते। पाञ्चालदेशे सात्त्वत्या आरभट्याश्च वृत्त्याः पाञ्चालमध्यमायाश्च प्रवृत्त्याः प्रचलनमभूत्। अवन्तीषु सात्त्वत्याः कैशिक्याश्च वृत्त्या आवन्त्याश्च प्रवृत्त्याः प्रचलनं सञ्जातम्। विदर्भजनपदे कैशिक्याः वृत्त्याः दाक्षिणात्यायाश्च प्रवृत्त्याः प्रचलनं प्रावर्तत।

एतासां रीतिवृत्तिप्रवृत्तीनां पारस्परिकसम्बन्धो निम्नलिखिततालिकायां प्रदर्श्यते -

| देशः | रीतिः | वृत्तिः | प्रवृत्तिः |
|---|---|---|---|
| पाञ्चाल | पाञ्चाली | सात्त्वती<br>आरभटी | पाञ्चाली<br>मध्यमा |
| अवन्ती | पाञ्चाली | सात्त्वती<br>कैशिकी | आवन्ती |
| गौड | गौडी | भारती | औड्रमागधी |
| विदर्भ | वैदर्भी | कैशिकी | दाक्षिणात्या |

राजशेखरो रीतीनां मूलं वचनविन्यासक्रमं जगाद। काव्यपुरुषो यदा समासबहुलमनुप्रास-सम्भृतं योगपरम्परागर्भं वचनमुच्चचार, तदा गौडी रीतिः प्रादुर्भूता। यदाऽसावल्पसमासमल्पानु-प्राससहितमुपचारगर्भं वचनमुच्चचार तदा पाञ्चाली रीतिर्विकसिता बभूव। एवमेव यदाऽसौ समासरहितं स्थानानुप्रासयुतं योगनिवृत्तिगर्भं वचनमुच्चचार तदा वैदर्भी रीतिर्निष्पन्ना।

---

१. इह वैदर्भी रीतिः पाञ्चाली वा विचार्य रचनीया।
मधुरा ललिते कविना कार्ये वृत्तिस्तु शृङ्गारे।। रुद्रट - काव्यालङ्कार १४.३७
वैदर्भीपाञ्चाल्यौ प्रेयसि करुणे भयानकाद्भुतयोः।
लाटीयगौडीये रौद्रे कुर्याद् यथौचित्यम्।। रुद्रट - काव्यालङ्कार १५.२०

अनेन विधिना सिद्धमेव यद् राजशेखरो गौडीरीतिं दीर्घसमासां पाञ्चालीरीतिमल्पसमासां वैदर्भीञ्च रीतिं समासरहितां पदविन्यासयुतां मेने। काव्यमीमांसायां राजशेखरो यद्यपि तिसृणामेव रीतीनामुल्लेखञ्चकार, तथापि तेन कर्पूरमञ्जरीसट्टके मागधीरीतिरपि प्रतिपादिता। अथ च सर्वास्वपि रीतिष्वसौ वैदर्भी रीतिं प्रत्यतितरामादृतवानासीत्। तन्मते काव्येषु रीतयो रसपरिस्रवणायाऽनिवार्याणि तत्त्वानि वर्तन्ते।[1]

रीतीनां विवेचने भोजराजोऽपि महनीयं विशिष्टं स्थानं भजते। शृङ्गारप्रकाशेऽसौ चतसृणां रीतीनां पाञ्चालीगौडीवैदर्भीलाटीनां विश्लेषणञ्चकार। परं सरस्वतीकण्ठाभरणे तेन द्वे रीती आवन्तिका मागधी चाऽपि कल्पिते। एवमसौ षड्रीतीः प्रत्यापादयत्। रीतीनां विवेचने भोजराजो राजशेखरमनुससार। अग्निपुराणे चतसृणामेव रीतीनां वर्णनं विद्यते। अत्र भोजराजेनाऽग्निपुराणस्याऽनुसरणं विहितम्। अथवाऽग्निपुराणकारेण भोजराजस्याऽनुकरणं कृतम्। अत्रेतिहासविद्भिरनुसन्धानं करणीयं - कोऽत्र पूर्ववर्ती , अग्निपुराणकारो वा भोजराजो वा। सिंहभूपालस्तु रीतीनां व्याख्याने भोजराजमनुससार। भोजराजेन गुणाः समासाश्च रीतीनां मूलत्वेन प्रस्थापिताः।

रीतीनां विकासक्रमे कुन्तकोऽपि सविशेषमुल्लेखनीयो विद्यते। कुन्तको रीतिपदप्रयोगमकृत्वा मार्गपदं प्रयुनक्ति। तेन वैदर्भी रीतिः सुकुमारमार्गनाम्ना, गौडी रीतिर्विचित्रमार्गरूपेण पाञ्चाली रीतिश्च मध्यममार्गाभिधानेन कल्पिता।

मार्गाणामेतेषां न किञ्चिद् भौगोलिकमहत्त्वमपितु ते कवीनामान्तरिकगुणानां स्वभावानाञ्च बाह्याभिव्यक्तयो वर्तन्ते। मार्गस्तु कविस्वभावेन सम्बध्यते। कविस्वभावानामनन्तत्वान्मार्गा अप्यनन्ताः सम्भवन्ति। परन्तु ते त्रिषु मार्गेषु वर्गीकर्तुं शक्यन्ते। कालिदासादिकवयः सुकुमार-मार्गस्य, मातृगुप्तादयो मध्यममार्गस्य, बाणभट्टभवभूत्यादिकवयश्च विचित्रमार्गस्य साधकाः काव्यकर्तारो वर्तन्ते।

कुन्तकेनैतेषां मार्गाणां विशिष्टानां साधारणानाञ्च धर्माणामपि कल्पना विहिता। सुकुमारमार्गस्य चत्वारो विशिष्टाः धर्माः गुणाः वा सन्ति - माधुर्यप्रसादलावण्याभिजात्याः। विचित्रमार्गस्याऽप्येत एव गुणाः वर्तन्ते। परन्त्वस्मिन् मार्गे ते पूर्वमार्गापेक्षयाऽतिशययुक्ताः सञ्जायन्ते प्रयत्नसाध्यबाह्यशोभोत्पादकाश्च भवन्ति। मध्यमार्गेऽप्येत एव गुणाः भवन्ति; यत्राऽन्येषां मार्गाणामपि वैशिष्ट्यं भवति।

शारदातनयो वचनविन्यासक्रममेव रीतीनां मूलं प्रतिपादितवान्। प्राचीनाचार्यैः प्रतिपादितानां चतसृणां रीतीनां वैदर्भीगौडीपाञ्चालीलाटीनां वर्णनं कृत्वा शारदातनयो

---

१. सति वक्तरि सत्यर्थे सति शब्दानुशासने।
अस्ति तन्न विना येन परिस्रवति वाङ्मधु।। काव्यमीमांसा

द्वयोरन्ययोरपि रीत्योः सौराष्ट्रीद्राविड्योः प्रतिपादनञ्चकार।[१] तेन देशविशेषैः सह रीतीनां सम्बन्धः स्वीकृतः।

अलङ्कारसंग्रहेऽमृतानन्दो योगी चतुर्विधानां रीतीनां निरूपणं कृत्वा ताः काव्यात्मरूपेण प्रतिपादयामास।[२] रीतिस्वरूपनिर्धारणेऽसौ गुणसमासवर्णानामपि सम्बन्धं संयुयोज।

रीतीनां निरूपणे विद्यानाथो वामनमनुसृत्य यद्यपि तिसृणां गौडीपाञ्चालीवैदर्भीणां रीतीनां स्वरूपं न्यरूपयत्, तथाऽप्यसौ तिसृणामेतासां सम्मिश्रणेनाऽन्यासां तिसृणां रीतीनामावन्तिकालाटीयामागधीनामप्युद्भावनां व्यदधात्।[३]

ध्वनिवादिभिराचार्यैरपि रीतयो निरूपिताः। परन्तु पदसंघटनाविशिष्टां रीतिं प्रतिपाद्याऽपि तां ते काव्यस्य बाह्यतत्त्वमूचुः। आनन्दवर्धनमम्मटविश्वनाथानां मतमिदं यत् पदसंघटना माधुर्यादिगुणानाश्रित्य रसान् अभिव्यनक्ति।[४]

मम्मटेन प्रोक्तम् - वर्णानां विशिष्टविन्यासक्रम एव रीतिः। रीतीनां समावेशमसौ वृत्त्यनुप्रासान्तर्गतञ्चकार। वृत्तयश्च त्रिविधा भवन्ति - उपनागरिका, परुषा कोमला च। ता एव कैश्चिद् वैदर्भ्यादयो रीतयः कथ्यन्ते।[५]

मम्मटमनुसृत्य पण्डितराजो जगन्नाथोऽपि ह्युपनागरिकादिषु वृत्तिषु वैदर्भ्यादिषु रीतिषु चाऽभेदत्वममनुत। परन्त्वसौ रीतिषु केवलं वैदर्भीरीतिमेवाऽवर्णयत्। वैदर्भीरीतिरचनासु कविना सावधानेन भाव्यम्।[६]

ध्वनिवादिष्वाचार्येषु विश्वनाथो रीतीनां सविशदं विशेषवर्णनं व्यदधात्। साहित्यदर्पणस्य नवमे परिच्छेदे रीतीनामेव निरूपणं विद्यते। विश्वनाथेन प्रोक्तम् -

---

१. बुद्ध्यारम्भानुभावेषु रीतिः प्रथममुच्यते।
रीतिर्वचनविन्यासक्रमः साऽपि चतुर्विधा।।
तत्र वैदर्भपाञ्चाललाटगौडविभागतः।
सौराष्ट्री द्राविडी चेति रीतिद्वयमुदाहृतम्।। भावप्रकाशन

२. रीतिरात्मा काव्यस्य कथ्यते सा चतुर्विधा। अलङ्कारसंग्रह ५.१०

३. एतासामेव साङ्कर्याद् भवन्त्यावन्तिकादयः।
पार्थक्येन ततोऽस्माभिर्नाभ्यधीयन्त ताः पुनः।। एकावली ५.३

४. गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा।
रसान्................................।। ध्वन्यालोक ३.६

५. केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः। काव्यप्रकाश ९.८१

६. अस्याश्च निर्माणे कविना नितरामवहितेन भाव्यम्। अन्यथा तु परिपाकभङ्गः स्यात्।
रसगङ्गाधर - पृ० ११७

अङ्गसंस्थानवत् पदसंघटनारूपा रीतिः रसानुपकरोति। रीतयश्च चतुर्विधाः - वैदर्भी, गौडी, पाञ्चाली लाटी च।[1] रीतीनां निरूपणे विश्वनाथो वर्णानां विन्यासं समासञ्च विशेषहेतुत्वेन न्यरूपयत्।

रीतीः निरूपयन् विश्वनाथो ध्वनिवादिनामाचार्याणां रीतिवादिनाञ्चाऽऽचार्याणां मतानां समन्वये प्रययास। रीतिः काव्यस्य बाह्यं तत्त्वमिति मम्मट एनां रसाभिव्यञ्जकरूपेण न समर्थयामास। परन्तु विश्वनाथो रीतीः रसानामुपकारकत्वरूपेण प्रादर्शयत्। पण्डितराजेन विश्वनाथस्य विरोधः कृतः - वर्णरचनाविशेषो माधुर्यादिगुणानामभिव्यञ्जको भवेत्, किन्तु न रसानाम्।[2]

रीतीनामुद्भवस्य विकासस्य च संक्षिप्तविवेचनेन स्पष्टमेवेदं यत् काव्यसमीक्षायां रीतितत्त्वव्यवहारो वामनाचार्यात्पूर्वमपि प्रावर्तत। परन्तु तस्मिन् समये तत् तत्त्वं मार्गनाम्ना प्रसिद्धमासीत्। वामनात्पूर्वं द्वौ मार्गौ प्रवर्तेते स्म - वैदर्भो गौडीयश्च। रीतितत्त्वस्य वैज्ञानिकी व्याख्या प्रथमं वामनेनैव कृता। अथ च तेन सा काव्यस्याऽऽत्मा प्रतिपादिता। वामनेन तिस्रो रीतयः प्रोक्ताः।

वामनानन्तरं रीतितत्त्वं काव्यशास्त्रविद्भिर्भूयिष्ठं विवेचितं बभूव। परन्तु कश्चिदपि समीक्षको रीतिं काव्यस्याऽऽत्मरूपेण समर्थयितुं न साहसञ्चक्रे। केवलममृतानन्देन योगिना वामनस्य समर्थनं कृतम्। वामनो गुणानेव रीतीनां मूलं प्रोवाच, परन्तूत्तरवर्तिन आचार्याः वर्णानां विन्यासं समासञ्चाऽपि रीतिहेतुत्वेन समापादयन्। प्राचीनाचार्याः रीतिस्वरूपनिरूपणे भौगौलिकस्थितिमपि हेतुरूपेण ददृशुः, परमुत्तरवर्तिभिराचार्यैः कविस्वभाव एव तत्स्वरूपनिरूपणे प्रमुखहेतुत्वेन कल्पितः।

वामनो रीतिं काव्यस्याऽऽत्मानं प्रत्यापादयत्। रसादीनाञ्च समावेशस्तेन कान्तिगुणे स्वीकृतः। परमुत्तरवर्तिन आचार्याः रीतिस्वरूपं वर्णविन्यासक्रमं पदसंघटनाञ्च संस्थाप्य तामप्रत्यक्षरूपेण रसोपकारकरूपेणैव प्रतिष्ठितामकुर्वन्, एवं वामनेन याः रीतयः काव्यसमीक्षासरण्यां महनीयतमाः प्रतिष्ठिताः, ध्वनिवादिभिराचार्यैस्ताः रसोपकारकहेतुत्वेन कल्पिताः गौणीरूपेण च परिवर्तिताः।

## ३. रीतिलक्षणं गुणैश्च सह तासां सम्बन्धः

वामनपूर्ववर्तिनौ भामहदण्डिनौ काव्येष्वलङ्कारान् महनीयतमरूपेण प्रास्थापयताम्। परन्तु वामनेनाऽनुभूतम् -

---

१. पदसंघटना रीतिरङ्गसंस्थाविशेषवत्।
उपकर्त्री रसादीनां सा पुनः स्याच्चतुर्विधा।।
वैदर्भी चाऽथ गौडी च पाञ्चाली लाटिका तथा।। साहित्यदर्पण ९.१-२

२. वर्णरचनाविशेषाणां माधुर्यादिगुणाभिव्यञ्जकत्वमेव न रसाभिव्यञ्जकत्वम्।
रसगङ्गाधर - प्रथम आनन

काव्ये किञ्चिदलङ्कारेभ्योऽपि सूक्ष्मतरं तत्त्वं वर्तते, यद्विना काव्यरचना न तथा चमत्कारकारिणी सफला च भवति। तेनोद्घोषितम् - रीतिरेव तत् तत्त्वं वर्तते। रीतिरेव काव्यस्याऽऽत्मा।[१] काव्यशरीरं ध्रुवं शब्दार्थनिर्मितं वर्तते, तयोश्च सौन्दर्यं तत्र चमत्कृतिमादधाति। परं यावत् पदसंघटनायां पदसन्निवेशे च औचित्यं न प्रतिष्ठते, तावत् काव्ये काव्यत्वं न प्रवर्तते।

पदानामियं संघटनैव रीतिर्वर्तते। अथ चेयं संघटना गुणविशिष्टाऽपि भवितव्या। अतो वामनो रीतिलक्षणं जगाद -

**विशिष्टा पदसंघटना रीतिः। विशेषो गुणात्मा।।**

पदानां विशिष्टा संघटनैव रीतिर्वर्तते। वैशिष्ट्यमत्र गुणयुतत्वम्।

एवञ्च वामनो रीतिं काव्यस्याऽऽत्मानं प्रतिपादयामास, गुणांश्च रीतेरात्मानम्।[२]

संवादेनाऽनेन स्पष्टमिदं यद् रीतयो गुणैर्निष्पद्यन्ते। वामनो विंशतिगुणानां निर्वचनञ्चकार। वामनात्पूर्वं भरतेन मुनिना दश गुणाः व्याख्याताः। परं भामहेन निष्पादितेष्वपि त्रिषु गुणेषु - माधुर्यौजःप्रसादेषु, दण्डी भरतोक्तान् दश गुणान् स्वीचकार। वामनेन भरतोक्ता एते गुणास्तु स्वीकृताः, परं गुणान् द्विधा विभज्य तेषां संख्या विंशतिः प्रतिपादिता - दश शब्दगुणाः दश चाऽर्थगुणाः। परं वामनोक्तानि गुणलक्षणानि भरतेन दण्डिना च प्रोक्तेभ्यो गुणलक्षणेभ्यो भिद्यन्ते। यथा भरतोक्ता ओजोगुणपरिभाषा वर्तते -

**समासवद्भिर्विविधैर्विचित्रैश्च पदैर्युतम्।**
**सा तु स्वरैरुदारैश्च तदोजः परिकीर्त्यते।। नाट्यशास्त्र १६.१९**

दण्डिना प्रोक्ता ओजोगुणपरिभाषा विद्यते -

**''ओजःसमाससमूयस्त्वम्''**

वामनोक्ता ओजोगुणपरिभाषाऽस्ति -

**शब्दगुणः - गाढबन्धत्वमोजः। काव्यालङ्कारसूत्र ३.१.५**

**अर्थगुणः - अर्थस्य प्रौढिरोजः। काव्यालङ्कारसूत्र ३.२.२१**

**शब्दगुणाः - ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसकुमारतोदारतार्थव्यक्तिकान्तयः।**

**अर्थगुणाः - ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसुकुमारतोदारतार्थव्यक्तिकान्तयः।**

वामनेन गुणानां सम्बन्धः साक्षाद्रूपेण रीतिभिः सह संस्थापितः। असौ तिस्रो रीतीः प्रतिपादितवान् - वैदर्भीं गौडीं पाञ्चालीं च। तिसृष्वेतासु रीतिषु वैदर्भी रीतिः समस्तगुणा भवति, गौडीरीतिर्विशेषत ओजःकान्तिगुणसम्पन्ना भवति पाञ्चालीरीतिश्च विशेषेण माधुर्यसुकुमारताभ्यां युता वर्तते।[३] वामनात्पूर्वं रीतीनां मार्गाणां वा भौगोलिकवैशिष्ट्यमपि

---

१. रीतिरात्मा काव्यस्य।। काव्यालङ्कारसूत्र १.२.६

२. काव्यालङ्कारसूत्र १.२.७ - ८,

३. काव्यालङ्कारसूत्र १.२.११ - १३

काव्यशास्त्रकृद्भिः सम्पादितम्। तेषामेतत् प्रतिपादनं स्वीकृत्याऽपि रीतीः भौगोलिकसम्बन्धेभ्यो विच्छिद्य वामनस्ताः कविव्यवहाररूपेण प्रत्यापादयत्।[1]

वामनस्य रीतिलक्षणमुत्तरवर्तिभिराचार्यैः प्रायशः स्वीकृतम्। गुणैः रीतीनां सम्बन्धोऽपि तैः स्वीकृतः। रुद्रटेन समासैः सह सम्बन्धोऽपि तासां स्वीकृतः। अथ च ध्वनिवादिन आचार्याः वर्णविन्यासमपि रीतिलक्षणे न्यवेशयन्।

## ४. रीतीनां संख्या

वामनात् पूर्ववर्तिनौ भामहदण्डिनौ वैदर्भगौडमार्गयोराविर्भावमकुरुताम्। दण्डी यद्यपि कविव्यवहारमेव मार्गं प्रतिपाद्य तस्याऽनन्तत्वं व्याजहार, तथापि तेन ते मार्गाः द्वयोर्वर्गयोर्विभक्ताः - गौडो वैदर्भश्च।[2] वामनेन तिस्रो रीतयः - वैदर्भी पाञ्चाली गौडी च वैज्ञानिकव्याख्यया सह निरूपिताः। रुद्रटेन संख्यावृद्धिर्विहिता। वामनोक्तासु तिसृषु रीतिषु वैदर्भीगौडी-पाञ्चालीष्वेकामन्यां लाटीं संयोज्य संख्या चतस्रः कृताः।

काव्यशास्त्रे रीतीनां संख्या तिस्रो वा चतस्रो वा भूयिष्ठेन गण्यते। वामनराजशेखर-कुन्तकानन्दवर्धनोद्भटमम्मटहेमचन्द्रविद्याधरसिंहभूपालजगन्नाथादयः शास्त्रकृतस्तिस्रो रीतीः गणयन्ति। अथ च रुद्रटवाग्भटामृतानन्दजयदेवविश्वनाथादयो मनीषिणश्चतस्रो रीतीः संख्यायन्ते।

केचनाऽऽचार्याः रीतयस्ततोऽधिकमामनन्ति। यथा भोजराजेन षड् रीतयो वैदर्भी गौडी पाञ्चाली लाटी मागध्यावन्तिका प्रतिपादिताः। नरेन्द्रप्रभसूरिः द्वादश रीतीः प्रत्यापादयत्। शारदातनयेनाऽपि वैदर्भी गौडी पाञ्चाली लाटी सौराष्ट्री द्राविडी चेति षड् रीतयो व्याख्याताः।

केचन प्राचीनाः मनीषिणः शास्त्रकर्तारः पञ्चोत्तरशतसंख्यकाभी रीतिभिः परिचिता आसन्। परं न तैर्नामानि तासामुद्घाटितानि।

विद्याधरेण तिस्रो रीतयो वैदर्भी गौडी पाञ्चाली च व्याख्याताः। परं तासां सम्मिश्रणेन तिस्रोऽप्यन्याः मागधी लाटीया आवन्तिका चाऽपि तेनाऽऽविष्कृताः।

## ५. रीतीनां नियामकतत्त्वानि

रीतिसम्प्रदायप्रतिष्ठापको वामनो रीतिनियामकतत्त्वानि न निर्दिदेश। परं ध्वनिसंस्थापकेनाऽऽनन्दवर्धनेन पदसंघटनारूपाणां रीतीनां नियमनाय चत्वारि नियामकतत्त्वानि निर्दिष्टानि - रसवक्तृवाच्यविषयौचित्यानि। ध्वन्यालोकस्योद्योते तृतीये तत्त्वानामेतेषां विस्तरेण

---

१. विदर्भादिषु दृष्टत्वात् तत्समाख्या। विदर्भगौडपाञ्चालेषु देशेषु तत्रस्थैः कविभिर्यथास्वरूप-मुपलब्धत्वात् देशसमाख्या न पुनर्देशैः किञ्चिदुपक्रियते काव्यानाम्।

काव्यालङ्कारसूत्र १.२.१० तस्य वृत्तिश्च

२. काव्यादर्श १.४०, १.१०१

व्याख्या वर्तते। मम्मटः संघटनादयो गुणपरतन्त्रा इति प्रतिपादयन्नपि वक्तृवाच्यप्रबन्धौचित्येन संघटनां नियन्तुं निर्दिदेश।[१]

### ६. रीतीनां काव्यान्यतत्त्वैः सह सम्बन्धः

पदसंघटनारूपायाः रीत्याः रसालङ्कारवृत्तिप्रवृत्तिशैलीभिः सह साक्षात् सम्बन्धो वर्तते। अस्मिन् प्रकरणे तस्य विवेचनं संक्षेपेण प्रस्तूयते -

(i) रीतयो रसाश्च -

रीतयः काव्येषु महनीयतमं स्थानं भजन्त इति वामनेन प्रोक्तम्। ताः काव्येष्वात्मस्थानीयाः वर्तन्ते। काव्येषु रसानां न तथाविधं महत्त्वं यथा रसवादिन आचार्याः प्रतिपादयन्ति। गुणास्तु रीतीनामुपादानकारणानि। तत्र कान्तिगुणोऽपि वर्तते। वामनेन रसानां समावेशः कान्तिगुणे प्रतिपादितः। एवं रसाः काव्येषु रीतीनामङ्गरूपेणाऽवतिष्ठन्ते न च तेषामवस्थितिरङ्गिरूपेणेति वामनस्य व्याख्यानम्। अथ च वामनो गौडीरीतिमूलं कान्तिगुणं व्याजहार। काव्येषु वैदर्भी रीतिस्तिसृष्वपि रीतिषु प्रशस्यतमा गण्यते गौडीरीतिश्च वैदर्भीरीत्यपेक्षातो हीना। एवं वामनः काव्येषु रसान् रीतीनामङ्गत्वेन प्रतिपाद्य तेषामवस्थितिं हीनां व्यवस्थापितवान्। लोकव्यवहाराविरुद्धञ्चैतदभिमतम्।

ध्वनिवादिभिराचार्यैर्ध्वनिः, विशेषतो रसध्वनिः काव्यस्याऽऽत्मरूपेण व्यवस्थापितः। अङ्गिरूपेण रसास्तिष्ठन्ति रीतयश्चाऽङ्गरूपेणाऽवतिष्ठन्ते। अत एवाऽऽनन्दवर्धनः पदसंघटनायां रसौचित्यस्य नियामकत्वं प्रतिपादितवान्।[२]

(ii) रीतयोऽलंङ्काराश्च -

"**विशिष्टा पदसंघटना रीतिः, विशेषो गुणात्मा**" इत्युक्त्वा वामनो रीतिनिर्धारणे गुणानामनिवार्यत्वं साधयामास। गुणाः काव्यशोभायाः कर्तारोऽलङ्काराश्च काव्यशोभाया अतिशयेहतव[३] इति प्रतिपाद्य वामनः काव्येषु गुणविशिष्टां रीतिमङ्गित्वेनाऽलङ्कारांश्चाऽङ्गत्वेन न्यरूपयत्।

दण्डी काव्यशोभाकरान् धर्मान् अलङ्कारान् जगाद। एवञ्च दण्डिनः "काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते" इत्यलङ्कारलक्षणे, वामनस्य च "काव्यशोभायाः कर्तारो धर्माः

---

१. वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् क्वचित्।
रचनावृत्तिवर्णानामन्यथात्वमपीष्यते।। काव्यप्रकाश ८.७७

२. रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता।
रचना विषयापेक्षं तत्तु किञ्चिद् विभेदवत्।। ध्वन्यालोक ३.९

३. काव्यशोभायाः कर्तारो धर्माः गुणाः। तदतिशयहेतस्त्वलङ्काराः। काव्यालङ्कारसूत्र ३.१.१-२

गुणा'' इति गुणलक्षणे न कोऽपि भेदः संलक्ष्यते। यथा दण्डिना प्रोक्ता अलङ्काराः काव्यशोभां सम्पादयन्ति, तथैव वामनोक्ताः गुणाः काव्यशोभाधायकाः भवन्ति। एवं वामनेन अलङ्काराणामपेक्षातो गुणानां गौरवं काव्ये प्रतिपादितम्। अलङ्कारास्तु गुणानामुत्कर्षका अङ्गत्वमेवाऽऽवहन्ति। अनेन वामनस्य धारणेयं संलक्ष्यते - काव्यस्याऽऽत्मरूपरीतिरन्तस्तत्त्वं वर्तते, शोभोत्कर्षकराश्चाऽलङ्काराः बाह्यतत्त्वानि सन्ति। काव्यस्याऽऽत्मरूपायाः रीतेरलङ्कारा अङ्गत्त्वेनाऽवतिष्ठन्ते।

**(iii) रीतयो वृत्तयश्च -**

रीतीनां वृत्तीनाञ्चाऽपि पारस्परिकसम्बन्धोऽत्र विचारणीयः। अस्मिन् प्रसङ्गे प्रथमं वृत्तीनां स्वरूपमवधेयम्। काव्येषु द्विविधाः वृत्तयः प्रकीर्तिताः - अर्थवृत्तयः शब्दवृत्तयश्च। नाट्यशास्त्रे भरतेन काव्यमातृकारूपिण्यश्चतुर्विधाः वृत्तयः प्रोक्ताः - कैशिकी, सात्त्वती, आरभटी भारती च। आभिर्वृत्तिभिर्दशरूपकाण्यभिनीयन्ते।[1] आचार्यैरेताः वृत्तयोऽर्थवृत्तयः प्रोक्ताः।

काव्येषु शब्दवृत्तयोऽपि भवन्ति, यासां सम्बन्धः पदानां संघटनया भवति। शब्दवृत्तयो ह्येतास्तिस्रो वर्तन्ते - उपनागरिका, परुषा कोमला च। रसौचित्येन वर्णक्रमौचित्येन चैताः नियोज्यन्ते। छेकानुप्रासस्य वृत्त्यनुप्रासस्य च व्याख्यानप्रसङ्गे मम्मटेन प्रोक्तम् -

**''नियतवर्णगतरसविषयकव्यापारो वृत्तिरित्युच्यते।[2]**

ध्वन्यालोके आनन्दवर्धनेन शब्दगता अर्थगताश्च द्विविधाः वृत्तयः प्रदर्शिताः। रसाद्यनुगुणत्वेन शब्दार्थानामौचित्ययुतो व्यवहारः कैशिक्यादयो वृत्तयः। अथ च वाच्यवाचकाश्रयगतो व्यापारो ह्युपनागरिकादयो वृत्तयो वर्तन्ते।[3]

वृत्तिविषयकविवेचनेनाऽनेन स्पष्टमिदं यत् कैशिक्यादीनामर्थवृत्तीनां न कोऽपि साक्षात् सम्बन्धो रीतिभिः सह संलक्ष्यते। यदि कश्चिदपि सम्बन्धो वर्तत एव, सोऽप्यप्रत्यक्षरूपेण वर्तते, न प्रत्यक्षरूपेण। उपनागरिकादिवृत्तिषु रीतिषु च काव्यशास्त्रकृद्भिरभेदत्वं प्रतिपादितम्। आचार्येण मम्मटेनोपनागरिकादिवृत्तयो रीतयश्चाऽभेदत्वेन प्रोक्ताः। परन्तु केचन मनीषिणो वृत्तय एताः रीतीनामेकांशभूता एवाऽऽमनन्ति। हेतुरयमत्र वृत्तीनां सम्बन्धः काव्येषु वर्णयोजनया वर्तते, रीतानाञ्च सम्बन्धो वर्णयोजनया पदयोजनया चाऽस्ति।

---

१. सर्वेषामेव काव्यानां मातृका वृत्तयः स्मृताः।
आभ्यो विनिःसृता ह्येतद् दशरूपं प्रयोगतः।। भरत - नाट्यशास्त्र २०.४

२. वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः। काव्यप्रकाश ९.७९ वृत्तिः।

३. रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः।
औचित्यवान् यस्ता एता वृत्तयो द्विविधाः स्मृताः।। ध्वन्यालोक ३.३३
तत्र रसानुण औचित्यवान् वाच्याश्रयो व्यवहारस्ता एताः कैशिक्याद्या वृत्तयः। वाचकाश्रयाश्चोपनागरिकाद्याः। उपर्युक्तकारिकायाः वृत्तिः।

(iv) रीतयः प्रवृत्तयश्च -

नाट्यशास्त्रे भरतेन चतुर्विधाः प्रवृत्तयः प्रोक्ताः - आवन्ती, दाक्षिणात्या, पाञ्चाली औड्रमागधी च।[१]

प्रवृत्तीनामासां निरूपणं भरतेन विविधप्रान्तगतवेशभाषाचारवार्तामुपलक्ष्य विहितम्।[२] उत्तरवर्तिभिराचार्यैः प्रवृत्तिनिरूपणे भरतस्य समर्थनं कृतम्। देशादीनुपलक्ष्य राजशेखरसिंहभूपाल[३]-प्रभृतिभिर्मनीषिभिरेतासामेव चतसृणां प्रवृत्तीनां स्वरूपं वर्णितम्।

प्रवृत्तिरीतिसम्बन्धे विचारणीयमिदं यत् प्रवृत्तीनां सम्बन्धो नियतरूपेण विविध-देशवेषभाषाचारव्यवहारप्रभृतिभिः वर्तते, परं रीतीनां सम्बन्धः केवलं वचनविन्यासेनाऽस्ति। अतो रीतीनां क्षेत्रं प्रवृत्त्यपेक्षातः सङ्कुचितमेव। अथ च काव्यशास्त्राचार्याः प्रवृत्तिं काव्यानां बाह्यतत्त्वं रीतिञ्चाऽन्तस्तत्त्वं प्रतिपादयामासुः। रीतिः काव्यस्वभावेन प्रवृत्तिश्च भूगोलेन सम्बध्यते।[४]

(v) रीतयः शैल्यश्च -

आधुनिकभारतीयकाव्यशास्त्रे शैलीपदप्रयोग आंग्लभाषायाः स्टाइल (Style) इति पदस्यानुवादो वर्तते। प्राचीनभारतीयसाहित्ये शैलीपदस्य प्रयोगो ध्रुवमुपलभ्यते, परन्तु भिन्नार्थेऽसौ प्रयोगः। व्याख्यानपद्धत्यादिप्रसङ्गे शैलीपदस्य प्रयोगो बभूव।[५] साहित्यपद्धत्यभिव्यक्तये पदस्याऽस्य प्रयोगः प्राचीनसाहित्ये नैव लभ्यते। केचन वर्तमानकालीनसमीक्षकाः शैलीपदं रीतिपदञ्च समानार्थकं प्रतिपादयन्ति। परन्तु द्वयोरपि पदयोः किञ्चिद् भिन्नत्वं सुस्पष्टम्। न समानार्थके ते। शैलीपदेनाऽभिव्यक्तिपद्धतिर्गुणो वा लक्ष्यते।[६] शैलीपदं वस्तुतत्त्वं व्यक्ति-तत्त्वञ्चेति धत्ते। शैल्याः वस्तुतत्त्वं शब्दविन्यासादिसम्बद्धं रीतिरिति सम्भाव्यते, परन्तु व्यक्तितत्त्वं रीतिभिन्नमेवाऽस्ति। पाश्चात्यसमालोचकाः शैल्याः (Style) व्यक्तितत्त्वमेव

---

१. चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोगतः।
आवन्ती दाक्षिणात्या च पाञ्चाली औड्रमागधी।। भरत - नाट्यशास्त्र १४.३६

२. प्रवृत्तिरिति कस्मात् ? कथ्यते - पृथिव्यां नानादेशवेषवार्ताः ख्यापयतीति प्रवृत्तिः।
भरत - नाट्यशास्त्र अ० १८ पृ० १६५

३. तत्तद्देशोचिता भाषा क्रियाः वेषाः प्रवृत्तयः। रसार्णवसुधाकर १.२९

४. हिन्दी साहित्य कोश (ज्ञानमण्डल लिमिटेड वाराणसी) प्रथम संस्करण पृ० ७७३

५. प्रायेणाऽऽचार्याणामियं शैली यत् सामान्येनाऽभिधाय विशेषेण विवृणोति।
मनुस्मृति १.१४ कुल्लूकभट्टटीका।

६. Style is a term of literary criticism viewed as specific by some and a generic by others, use to name or describe it, the manner of quality of an expression. डिक्शनरी आफ वर्ल्ड लिटरेचर (१९६०) पृ० १५७

प्राधान्येन व्याख्यातवन्तः ।[१] परन्तु भारतीया रीतिः वस्तु (विषय) तत्त्वप्रधानत्वान्न व्यक्तितत्त्वं साकल्येन प्रकटयति। अतो रीतिः शैली च न पूर्णत्वेनाऽभिन्ने, अपितु रीतिः शैलीपदेऽन्तर्निविष्टाऽवगन्तव्या।

## ६. रीतीनां पारस्परिकप्राशस्त्यम्

वामनो गौडीं पाञ्चालीं वैदर्भीञ्चेति रीतित्रयं काव्यस्याऽऽत्मपदे प्रतिष्ठितञ्चकार। तिसृष्वपि रीतिष्वसौ वैदर्भीं रीतिं विशेषेण हृदयाह्लादकरीमाख्यत्। अत्र हेतुरयमेव यद् वैदर्भी रीतिर्गुणानां स्फुटत्वात् समग्रगुणयुतत्वाच्च श्रेष्ठा। वैदर्भीरीत्यां तथाविधः सहृदयावर्जकोऽलौकिको भाव उदयति, यमवाप्य शब्दसौन्दर्यमपि चमत्कृतिमवाप्नोति।

वामनात् पूर्वं तदनन्तरञ्चाऽपि प्रायशः सर्वे समालोचकाः कवयश्चाऽपि वैदर्भीरीतिमेव प्रशस्यतमामापादयन्। केवलं कुन्तक एव रीतिषु नोत्तममध्यमाधमभावमङ्गीचक्रे।[२]

वामनात् पूर्ववर्ती दण्डी वैदर्भगौडमार्गयोर्वैदर्भमार्गं गुणवत्तरं गौडमार्गञ्च हीनं जगाद। वैदर्भमार्गे दशगुणाः विद्यमानाः सन्ति[३] न गौडमार्गे।

वामनानन्तरं काव्यशास्त्रकर्तारः कवयश्च प्रायशो वैदर्भीं रीतिमेव प्रशस्यतमां जगदुः। राजशेखरः वैदर्भीमेव रीतिं श्रेष्ठां प्रोवाच। अतः विदर्भदेशस्य वत्सगुल्मनगरे कामदेवस्य क्रीडावासः। अत्र च सरस्वतीपुत्रेण काव्यपुरुषेण काव्यवधूरूढा।[४] इयं वैदर्भी वाणी श्रोत्रलेह्यं मधुरं मधु प्रवाहयति।[५]

वैदर्भीं रीतिं प्रयुञ्जन् महाकविः कालिदासो महतो यशसो भाजनं बभूव। कालिदासस्य वैदर्भमार्गं दण्डी स्तुतिवचनैः प्रशशंस -

**लिप्ता मधुद्रवेणाऽऽसन् यस्य निर्विष्टया गिरः।**
**तेनेदं वर्त्म वैदर्भं कालिदासेन शोधितम्।।**

---

१. The choice of words, the turn of phrases, the structure of sentences, their peculiar rythm and cadence - these are all curiously instinet with individuality of the writer......... this is enough to show that style, I am using the word, in its broadest sence is fundamentally a personal quality.
डब्लू०एच० हडसन : एन इन्ट्रोडक्शन टु दी स्टडी आफ लिटरेचर पृ० २९

२. न च रीतीनामुत्तममध्यमाधमभेदेन वैविध्यं व्यवस्थापयितुं न्याय्यम्। यस्मात् सहृदयाह्लादकारिकाव्यलक्षणप्रस्तावे वैदर्भीसदृशसौन्दर्यासम्भवान्मध्यमाधमयोरुपदेशवैयर्थ्यमायाति। परिहार्यत्वेनाऽप्युपदेशो न युक्ततामवलम्बते, तैरेवाऽनभ्युपगतत्वात्।
वक्रोक्तिजीवित पृ० ४६

३. इति वैदर्भमार्गस्य प्राणाः दश गुणाः स्मृताः। काव्यादर्श १.४२

४. तत्राऽस्ति मनोजन्मनो देवस्य क्रीडावासो विदर्भेषु वत्सगुल्मं नाम नगरम्। तत्र सारस्वतेयस्तामौमेयीं गन्धर्ववत् परिणिनाय। काव्यमीमांसा तृतीयोऽध्यायः

५. वाग्वैदर्भी मधुरिमगुणं स्यन्दते श्रोत्रलेह्यम्। बालरामायण ३.१४

परिमलगुप्तः प्राचीनैः कविभिः कालिदासभर्तृमेण्ठादिभिः प्रदर्शितं वैदर्भमार्गं खड्गधारमिव कीर्तितवान्।[१]

तिलकमजर्यां धनपालो वैदर्भीरीतिं प्रति पक्षपातमधिकं प्रादर्शयत्।[२] बिह्लणोऽपि वैदर्भी-रीतिं भूयिष्ठं प्रशशंस। कर्णेष्वमृतवर्षिणी, सरस्वतीविलासभूमिरियं वैदर्भी कैश्चिदेव परमसौभाग्यशालिभिः प्राप्यते।[३]

श्रीहर्षोऽपि वैदर्भी रीतिं बहुतरां प्रशशंस। नैषधीयचरितकाव्यस्य नायिका दमयन्ती विदर्भदेशराजकन्या वैदर्भी ह्यासीत्। सा वैदर्भी धन्या या स्वैरुदारैर्गुणैः नैषधम् (काव्यं तथा काव्यनायकं नलम्) अप्याचकर्ष।[४]

वैदर्भी रीतिं प्रशंसन् नीलकण्ठो दीक्षितस्त्वाह -

इयम् (वैदर्भी रीतिः) आस्वाद्यमानेषु पदार्थेषु प्रथमा, आरोहणे कविकौशलस्य पराकाष्ठा, सरस्वत्याः निःश्वासः, शृङ्गारादिनवरसैः परमरमणीया वर्तते। पाञ्चालीरीतिस्तु कविपरम्परैव। कवीनां वाणीषु वैदर्भी रीतिर्वर्तते, यत्र स्वर्गमोक्षयोरानन्दोऽपि तुच्छ एव।[५]

विवेचनेनाऽनेन सिद्धमेवेदं यन्न केवलं काव्यसमीक्षकाः कवयोऽपि कविपरम्परागताः वैदर्भीमेव रीतिं श्रेष्ठामाचचक्षिरे।

## ७. रीतीनां काव्यात्मत्वसमीक्षा

अलङ्कारसम्प्रदायाचार्याणामपेक्षातो रीतिसम्प्रदायाचार्याः काव्यस्य मूलतत्त्वमधिकसूक्ष्मरूपेण सविशदं विशिश्लेषुः। रीतीनां सम्बन्धं कविस्वभावेन संयोज्य ते जगदुः -

कविः स्वभावानुसारं विषयानुकूल्येन यथा पदानि संयोजयति, सैव रीतिर्वर्तते। इत्थं सरसत्वेन वैज्ञानिकभावेन काव्यसमीक्षां कुर्वन्तस्ते रीतिवादिनोऽलङ्कारवादिभ्य आचार्ये-भ्योऽधिकं साफल्यमधिजग्मुः।

---

१. तत्त्वस्पृशस्ते कवयः पुराणाः श्रीभर्तृमेण्ठप्रमुखाः जयन्ति।
निस्त्रिंशधारासदृशेन येषां वैदर्भमार्गेण गिरः प्रवृत्ताः।। नवसाहसाङ्कचरितम् २.५

२. वैदर्भीमिव रीतीनामधिकमुद्भासमानाम्। तिलकमञ्जरी पृ० १३०

३. अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रमजन्मभूमिः।
वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रतिभूः पदानाम्।। विक्रमाङ्कदेवचरितम् १.९

४. धन्यासि वैदर्भि गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि।
इतः स्तुतिः का खलु चन्द्रिकायाः यदब्धिमप्युत्तरलीकरोति।। नैषधीयचरितम् ३.११६

५. आदिः स्वादुषु या परा कवयतां काष्ठा यदारोहणे
या ते निःश्वसितं नवाऽपि च रसा यत्र स्वदन्तेराम्।
पाञ्चालीति परम्परापरिचितो वादः कवीनां परं
वैदर्भी यदि सैव वाचि किमितः स्वर्गेऽपवर्गेऽपि वा।। नलचरितनाटकम् ३.१८

भामहदण्डिनौ काव्यसमीक्षायां काव्यगतां रीतिं मार्गनाम्ना प्रकटयाञ्चक्राते, द्वौ च मार्गौ निर्दिदिशतुः – वैदर्भं गौडञ्च।

वामनेन तृतीयस्याऽपि मार्गस्य पाञ्चालस्याऽऽविष्करणं कृतम्। इत्थं तेन तिस्रो रीतयः प्रवर्तिताः। वैदर्भी पाञ्चाली गौडी च। अथ च रीतिः काव्यस्याऽऽत्मा प्रतिपादिता। वामनानन्तरं ध्वनियुगारम्भे काव्यात्मतत्त्वरूपेण रीतेर्महत्त्वेऽवहीनतां प्राप्तेऽपि वामनस्य टीकाकार-स्तिप्पभूपालोऽलङ्कारसंग्रहस्य च रचनाकारोऽमृतानन्दो योगी द्वावेव पुनरपि रीतिं महत्त्वशालिनीं विदधातुं प्रयेताते।

काव्यशोभाधायकानि सर्वाण्येव तत्त्वानि दण्डिनाऽलङ्कारा इति प्रोक्तानि।[१] एवञ्च दण्डी गुणानप्यलङ्कारान्तर्गतान् मनुते स्म। परन्तु वामनो गुणानामलङ्काराणाञ्च पृथग्भावं प्रादर्शयत्। तेन काव्यशोभाकराः धर्माः गुणाः प्रोक्तास्तदतिशयहेतवश्चाऽलङ्काराः।[२] एवं गुणानामलङ्काराणाञ्च भेदं प्रदर्श्याऽसावलङ्कारेभ्यो गुणान् महत्त्वशालिनः साधयामास। गुणाः काव्येषु नियतरूपेणाऽवतिष्ठन्ते तांश्च विना न काव्यानि शोभन्ते।[३]

एवं वामनमते काव्यशोभाधायकाः गुणा एव। यथा यौवनहीना कामिनी विविधै-रलङ्कारैर्वपुषि समलङ्कृताऽपि न शोभते, तथैव गुणहीनं काव्यं केवलमलङ्कारयोजनया न भवति रुचिकरमाकर्षकरञ्च।[४] एवं वामनो गुणानां काव्यस्याऽऽह्लादकत्वं प्रतिपाद्य ध्वनिवादिनामाचार्याणां निकटमाजगाम। ध्वनिवादिनोऽपि गुणान् काव्यस्य नियतधर्मान् कथयन्ति।

वामनप्रोक्तपदरचनारूपरीतिवैशिष्ट्यं पदगतेन पदार्थगतेन च सौन्दर्येणाऽनुप्राणितं वर्तते। शब्दगता अर्थगताश्च गुणास्तस्य मूलतत्त्वानि वर्तन्ते। गुणास्तु वस्तुतः काव्यशैल्य एव, याः समाश्रित्य कविः काव्यानि रचयति। ध्वनिवादिन आचार्याः रसध्वनिं काव्यस्याऽऽत्मानं प्रत्यापादयन्। वामनेन रसानां महत्त्वं तु स्वीकृतं, परं तेषां समावेशः कान्त्यर्थगुणे कृतः। दीप्तरसत्वं कान्तिरिति कान्त्यर्थगुणस्य लक्षणम्। शृङ्गारादयो गुणाः यत्रोद्दीप्यन्ते तत्र कान्तिगुणो भवति। रसानामन्तर्भावं गुणेष्वेव विधाय वामनो रसवदाद्यलङ्काराणां विधानं न चक्रे, यथा भामहदण्डिनौ चक्रतुः। एवं रसान् गुणेष्वन्तर्भाव्य वामनः काव्ये तेषां महत्त्वमङ्गीचक्रे।

वामनानन्तरं नाऽप्यलङ्कारवादिभिराचार्यैर्न च ध्वनिवादिभिर्मनीषिभिः रीतिः काव्यस्याऽऽत्मा स्वीकृता। रीतेरनिवार्यत्वमङ्गीकृत्याऽपि ते तां काव्यस्य बहिरङ्गसाधनरूपेण चक्लृपाते।

---

१. काव्यादर्श २.१।। २. काव्यालङ्कारसूत्र ३.१. १-२

३. पूर्वे नित्याः। पूर्वे गुणाः नित्याः। तैर्विना काव्यशोभानुपपत्तेः।

काव्यालङ्कारसूत्र (३.१.३) तत्र च वृत्तिः

४. यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः।
अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते।। काव्यालङ्कारसूत्रवृत्ति (३.१.२)

प्रथमं तावद् रीतीनां प्रतिपादनं भौगोलिकाऽऽधारेण समभूत्; तदनन्तरं तत्र समासा आधाररूपेण सन्निहिता:। सन्निधानेऽस्मिन् रुद्रट: प्रमुखो बभूव। रुद्रटेन प्रोक्तम् -

असमासा रचना वैदर्भी रीतिर्वर्तते, द्वित्रिपदसमासा रचना पाञ्चाली रीतिर्भवति, समासबहुला च रचना गौडीरीतिरवगन्तव्या। तेन पञ्चसप्तपदसमासा लाटीरीतिरपि कल्पिता।[1]

रीतिसंख्याविषयेऽपि नैकं मतम्। प्रथमं भामहदण्डिनौ द्वौ मार्गौ वैदर्भगौडावकल्पयताम्। तदनन्तरं वामनेन तिस्रो रीतयो वैदर्भीपाञ्चालीगौड्य: कल्पिता:। रुद्रटेन चतुर्थी रीतिर्लाटी संयोजिता। राजशेखरेण चतुर्थी रीतिर्मागधी प्रोक्ता। भोजराजेन: षड्रीतय: प्रोक्ता: - वैदर्भी, पाञ्चाली, गौडी, लाटी, मागधी, आवन्तिका च। शारदातनयेन सूचितम् - प्राचीना आचार्या: पञ्चोत्तरशतं रीती: प्रवदन्ति स्म। ध्वनिवादिन आचार्या अपि रीतिसंख्याविषये मतभेदं प्रदर्शयन्ति।

आनन्दवर्धनमम्मटादयस्तु तिस्रो रीती: गणयन्ति वैदर्भीं पाञ्चालीं गौडीञ्च। परं विश्वनाथश्चतस्रो रीती: ब्रवीति - वैदर्भीं पाञ्चालीं गौडीं लाटीञ्च।

आचार्याणां बहुलसंख्या तिस्र एव रीती: स्वीकरोति। अस्य स्वीकरणस्य बहवो हेतवो वर्तन्ते। कविस्वभावानां त्रिविधत्वाद् रीतयस्तिस्र एव भवन्ति। कोमलस्वभावेन वैदर्भी, कठोरस्वभावेन गौडी मध्यमस्वभावेन च पाञ्चाली रीति: प्रवर्त्यते। पदसंघटनां समासांश्चाऽप्यधिकृत्य तिस्रो रीतयो सम्भवन्ति। असमासा अल्पसमासा वा रचना वैदर्भी रीतिर्वर्तते, मध्यमसमासा पाञ्चालीरीतिरिष्यते। दीर्घसमासा च रचना गौडीरीतिरवगन्तव्या।

एवं तिस्र एव रीतयोऽवगन्तव्या:। अन्यासां रीतीनां कल्पना बुद्धिव्यायाम एव। दण्डिना प्रोक्तम् -

कविस्वभावानामानन्त्यात् काव्यमार्गाणामनन्तत्वमवगन्तव्यम्। न च ते गणयितुं शक्यन्ते।[2]

ध्वनितत्त्वस्य स्थापनायां सत्यां काव्यसमीक्षाजगति रीतीनां तन्महत्त्वं स्वतन्त्रास्तित्वञ्च तिरोहितमभवत्। वामनप्रतिपादितं महत्त्वं हीनतां गतम्। वामनो रीतिं काव्यस्याऽऽत्मानं साधयामास। न च तस्या: नियामकं किमपि तत्त्वं काव्यसमीक्षायां बभूव। रीतिरेवाऽन्येषां तत्त्वानां नियामिकाऽवर्तत। परन्तु ध्वनिवादिभिराचार्यै: रीति: काव्यस्य बहिरङ्गत्वेन व्यवस्थापिता, रसश्च तस्या: नियामकोऽभवत्। अथ च रसवक्तृवाच्यविषयौचित्यैर्नियमिता सा रीतिराचार्यै: पारतन्त्र्यं काव्यसमीक्षायां प्रापिता।

रीते: पारतन्त्र्यं सर्वथा समुचितमासीत्। काव्येषु रसानां ध्वनेश्च महत्तमं महनीयं महत्त्वमस्ति। तेषु सत्स्वेव सहृदया: काव्येष्वानन्दमनुभवन्ति। तदर्थमेव काव्यरचना क्रियते।

---

१. रुद्रट - काव्यालङ्कार २.६; २.४-५

२. तद्भेदास्तु न गण्यन्ते वक्तुं प्रतिकविस्थिता:। काव्यादर्श १.१०१

पदसंघटनारूपा रीतिरुक्तिवैचित्र्यमात्रमेव। सा रसादीनामुत्कर्षहेतु: सम्भवति, परं न स्वयं काव्यस्याऽऽत्मा।

आनन्दवर्धन: काव्येषु रीतीनां महत्त्वं तु स्वीचकार, परं साधनरूपेण, न साध्यरूपेण। रीतयस्तु काव्यस्याऽऽत्मभूतस्य रसस्योत्कर्षसाधनं न तु स्वयं साध्यम्। अत एवाऽऽनन्दवर्धनेन प्रोक्तम् -

**रीतिवादिनोऽस्फुटस्फुरितकाव्यतत्त्वस्य व्याख्याकरणेऽसमर्था: सन्तो रीती: प्रावर्तयन्।**[१]

मम्मट: काव्यसमीक्षायां रीती: पूर्वतोऽप्यवहीनस्थितियुताश्चकार। तेन वामनस्य मतं स्थाने स्थाने खण्डितम्। प्रथमं तावदसौ वामनोक्तान् विंशतिगुणान् नाऽङ्गीचकार। तेन वामनोक्ता: दशार्थगुणा: सम्पूर्णरूपेण खण्डिता:। अथ च तस्य दशशब्दगुणानामपि खण्डनं विधाय त्रयाणामेव गुणानां माधुर्यौज:प्रसादानामस्तित्वमसौ साधयामास। वर्णसंघटना गुणवृत्त्या माधुर्यादिगुणानभिव्यनक्तीति प्रतिपाद्याऽसौ वक्तृवाच्यप्रबन्धान् वर्णसंघटनाया: नियामकान् प्रतिपादयामास।

मम्मट: काव्यप्रकाशे रीतीनां महत्त्वं कथमपि नाऽङ्गीचकार। तेन प्रोक्तम् -

रीतयो यदि सन्ति, तासामन्तर्भावो वृत्त्यनुप्रासालङ्कारे भवति। एवं वृत्तयस्तिस्र: - उपनागरिका, परुषा कोमला च। एता एव वामनेन वैदर्भी गौडी पाञ्चालीति तिस्रो रीतय: प्रोक्ता:।[२]

आनन्दवर्धनमम्मटाभ्यां स्वकाव्यसमीक्षाप्रबन्धेषु रीतीनां विवेचनमुपेक्षितम्। कारणमत्रेदमेव सम्भाव्यते, यत्ताभ्यां काव्यसमीक्षायां रीतितत्त्वस्य तथाविधं महत्त्वं नाऽनुभूतम्।

विश्वनाथेन तु रीतय: काव्यस्य बहिरङ्गतत्त्वमिति स्वीकुर्वताऽपि तासां महत्त्वमनुभूतम्। साहित्यदर्पणस्य समग्रं नवमं परिच्छेदमसौ रीतिस्वरूपप्रदर्शनाय समर्पितवान्। रीतिं काव्यस्याऽऽत्मानमस्वीकुर्वन्नप्यसौ तां रसोत्कर्षकरूपेण प्रतिपादितवान्। पदसंघटनारूपा रीति: काव्ये रसस्योपकारकरूपेणाऽवतिष्ठते।[३] परन्तु पण्डितराजो जगन्नाथस्तादृशं महत्त्वमपि रीतीनां नाऽङ्गीचक्रे। तेन प्रोक्तम् -

वर्णरचनारूपा: रीतयो माधुर्यादिगुणानभिव्यञ्जयन्ति, न च साक्षाद्रूपेण रसान्।[४]

---

१. अस्फुटस्फुरितं काव्यतत्त्वमेतद् यथोदितम्।
अशक्नुवद्भिर्व्याकर्तुं रीतय: सम्प्रवर्तिता:।। ध्वन्यालोक ३.४७

२. केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मता:। काव्यप्रकाश ९.८१

३. पदसंघटनारीतिरङ्गसंस्थाविशेषवत्।
उपकर्त्री रसादीनाम्.......................................।। साहित्यदर्पण ९.१

४. वर्णरचनाविशेषाणां माधुर्यादिगुणव्यञ्जकत्वमेव न रसाभिव्यञ्जकत्वं गौरवान्मानाभावाच्च।
रसगङ्गाधर - प्रथमाननम्।

उपरि प्रोक्तेन विवेचनेन सिद्धमेव यत् काव्ये रीतीनां महत्त्वं ध्रुवं नियतं वर्तते, परन्तु तत्र ताः साधनरूपेण प्रवर्तन्ते न तु साध्यरूपेण। कवीनां कवित्वं काव्येषु निहिते सहृदयहृदयाह्लादकत्वे भवति, तच्च रसध्वनौ वर्तते। पदसंघटनारूपा रीतयो रसादितत्त्वानामुन्मीलनं कुर्वन्ति, तेषामुपकारिकाः भवन्ति। साधनरूपाः रीतयो न काव्यसर्वस्वं न च काव्यात्मरूपाः। तासां महत्त्वं काव्यस्याऽङ्गत्वेन वर्तते न त्वङ्गित्वेन।

रीतयः काव्यस्य बहिरङ्गतत्त्वानीत्यवबुध्याऽपि काव्यसमीक्षायां तासां महत्त्वं न शक्योऽपोहयितुम्। काव्यस्याऽऽत्मतत्त्वनिरूपणे वामनोऽलङ्कारवादिनामपेक्षातो ध्वनिवादिनां निकटतरं लक्ष्यते। वामनो रीतीनां भव्यं प्रासादं गुणानाश्रित्य चकार। काव्यशोभायाः कर्तारो धर्माः गुणाः रसस्य नियतधर्माः। ते च रसे विद्यमाने तत्र नियतरूपेण वसन्ति। उपस्थितञ्च रसं ते नियतरूपेणोपकुर्वन्ति। गुणान् विना काव्ये काव्यत्वं न भवति। अत आत्मरूपेणाऽनङ्गीकृतानामपि रीतीनां काव्यसमीक्षायां महत्त्वमसन्दिग्धरूपेण भवत्येव।

---

पञ्चमोऽध्याय:

# वक्रोक्तिसम्प्रदाय:

## १. वक्रोक्तिसम्प्रदायस्य प्रवर्तनम्

वक्रोक्ति: काव्यस्याऽऽत्मेति सिद्धान्तस्य प्रतिपादक आचार्य: कुन्तक: काव्यसमीक्षाजगति नवीनं मार्गमेकं प्रावर्तयत्। प्राचीनकाव्यसमीक्षामार्गाद् भिन्नं मार्गमेकमवलम्बमानोऽसौ वक्रोक्तिं काव्यस्य प्राणभूतं तत्त्वमापादयत्।

आचार्येण कुन्तकेन प्रोक्तम् -

साहित्यलेखनस्य द्वौ मार्गौ वर्तेते। प्रथमो मार्ग: शास्त्रीयग्रन्थानां रचनाया अस्ति, यत्र लेखको: लोकप्रसिद्धशब्दान् सामान्यव्यवहारार्थेषु प्रयुनक्ति। द्वितीयो मार्ग: काव्यप्रणयनस्य वर्तते। अत्र कवि: सामान्यव्यवहारार्थेषु प्रयुज्यमानानां शब्दार्थानां रचनाया भिन्नमार्गमवलम्ब्य काव्येषु वैचित्र्यमापाद्य सौन्दर्यमादधाति। इदं वैचित्र्यमेव वक्रोक्तिरुच्यते।[1] इयं वक्रोक्तिरेव काव्यस्य प्राणा: यां विना काव्ये न काव्यत्वं प्रवर्तते।

## २. वक्रोक्तेरैतिहासिकक्रमविकास:

काव्यसमीक्षायां वक्रोक्तिपदप्रयोगोऽतिप्राचीनकालादेव समवलोक्यते। वक्रोक्तिशब्दस्य रचना द्वाभ्यां पदाभ्यां निष्पद्यते (वक्र+उक्ति = वक्रोक्ति)। सामान्यलोकव्यवहारत: किञ्चिद्वक्ररूपेण भिन्नरूपेण कथनं वक्रोक्तिर्भवति। प्राचीनमनीषिभि: पदस्याऽस्य प्रयोगो वाक्छलपरिहासकथनवचनवैदग्ध्यक्रीडालापाद्यर्थेषु कृतमासीत्। कालिदासबाणभट्टामरुकादिकवीनां काव्येषु वक्रोक्तिपदप्रयोगा एष्वेवाऽर्थेषु समुपलभ्यन्ते।

वक्रोक्तिपदस्य काव्यशास्त्रीयप्रयोगं प्रथमं भामहश्चक्रे। भामहेन प्रोक्तम् -

काव्येषु सौन्दर्याधायकं तत्त्वमलङ्कार एव। ...ऽलङ्काराणामस्तित्वं वक्रोक्तिं विना न सम्भवति।[2] वक्रोक्त्यभावे काव्ये काव्यत्वं न प्रवर्तते, वार्तामात्रमेव तद् भवति।[3]

---

१. विचित्रैवाऽभिधा वक्रोक्तिरित्युच्यते। वक्रोक्तिजीवितम् १.१० वृत्ति:

२. सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।
यत्नोऽस्यां कविना कार्य: कोऽलङ्कारोऽनया विना।। भामह - काव्यालङ्कार २.८५

३. गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिण:।
इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षते।। भामह - काव्यालङ्कार २.८७

हेतुसूक्ष्मलेशालङ्काराः भामहेन नाऽलङ्काराः मताः वक्रोक्त्यभावात्।[१] परं तेन वक्रोक्तिर्न सुस्पष्टं परिभाषिता। भामहवचनैर्वक्रोक्त्यतिशयोक्तिशब्दौ पर्यायवाचिनौ समानार्थकौ प्रतीयेते। भामहेनाऽतिशयोक्तिः परिभाषिता -

"लोकातिक्रान्तगोचरं वचनमतिशयोक्तिः।"

अर्थात् सामान्यलोकवचनातिक्रमणवचनमतिशयोक्तिर्भवति। सैव च वक्रोक्तिर्वर्तते। लोचनकारोऽतिशयोक्तिमेनामलङ्काराणां जीवितं प्राह। एवं भामहवचनेन काव्येषु वक्रोक्ते-राधिपत्यं ध्रुवं निश्चीयते। सा च वक्रोक्तिस्त्रिधाऽभिव्यज्यते - स्वभावोक्तिरुपमाद्यलङ्कारवर्गो रसोक्तिश्च।

दण्डिनाऽपि वक्रोक्तिः सर्वेषामलङ्काराणां मूलं प्रोक्ता। परं तस्य वक्रोक्तिप्रतिपादनं भामहात् किञ्चिद् दिभिद्यते। दण्डिना सकलं वाङ्मयं द्वयोर्भागयोर्विभक्तम् - स्वभावोक्तिर्वक्रोक्तिश्च।[२] नानावस्थानां पदार्थानां स्वरूपाणां स्वाभाविकरूपेण कथनं तेन स्वभावोक्तिर्जात्य-लङ्कृतिर्वा मतम्। तदेव कथनं प्रथमोऽलङ्कारः।[३] दण्डिना प्रोक्तम् -

न विद्यते वक्रोक्तिः काचिदलङ्कृतिविशेषा, अपितूपमाद्यलङ्कारा एव सर्वे वक्रोक्तिरूपाः वर्तन्ते।[४] वक्रोक्तीनां सर्वासां शोभा श्लेषेण वर्धते।[५] दण्डी ननु वक्रोक्त्यतिशयोक्तिशब्दौ पर्यायवाचिनौ प्रतिपाद्यातिशयोक्तिं सर्वेषामलङ्काराणां मूलं प्रत्यापादयत्।[६]

भामहदण्डिनौ वक्रोक्तिमतिव्यापकरूपेण सामान्यालङ्कृतिमेवाऽङ्गीचक्रतुः। परन्तूत्तरवर्तिभिराचार्यैर्वक्रोक्तिक्षेत्रमतिशयेन सीमितम्। तैर्वक्रोक्तिरलङ्कारविशेष एव प्रतिपादिता। वामनो वक्रोक्तिमेकामलङ्कृतिविशेषां प्रोवाच। वामनोक्तं वक्रोक्तिलक्षणं विद्यते -

**सादृश्याल्लक्षणा वक्रोक्तिः।**[७]

परं वक्रोक्तिलक्षणमिदं सामान्यपरम्पराभ्यो भिन्नमेव। अथ चेदं लक्षणं दण्डिनः समाधिगुणस्याऽन्तर्भूतं प्रतीयते।

---

१. हेतुश्च सूक्ष्मो लेशोऽथ नाऽलङ्कारतया मतः।
समुदायाभिधानस्य वक्रोक्त्यनभिधानतः।। भामह काव्यालङ्कार २.८६

२. भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्। काव्यादर्श २.३६३

३. नानावस्थं पदार्थानां रूपं साक्षाद् विवृण्वती।
स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिर्यथा।। काव्यादर्श २.७

४. वक्रोक्तिशब्देनोपमादयः सङ्कीर्णपर्यन्ता अलङ्कारा उच्यन्ते। काव्यादर्श (२.८) हृदयङ्गमाटीका

५. श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम्। काव्यादर्श २.३६३

६. अलङ्कारान्तराणामप्येकमाहुः परायणम्।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम्।। काव्यादर्श २.२२०

७. काव्यालङ्कारसूत्र ४.३.८

वामनेन वक्रोक्तिरर्थालङ्कृतिर्मता। परमुत्तरवर्तिभिराचार्यैरियं शब्दालङ्कृतिषु परिगणिता। रुद्रटोऽब्रवीत् - वक्रोक्ति: शब्दालङ्कृतिर्वर्तते या वाक्छलमाश्रिता श्लेषेण काक्वा वा द्विविधा वर्तते।[१] अग्निपुराणकारेणाऽपि वक्रोक्ति: श्लेषकाकुभेदेन द्विविधा मता।[२]

अलङ्कारवादिनामाचार्याणामनन्तरं ध्वनिवादिभिराचार्यैर्वक्रोक्ति: किञ्चिद् व्यापकरूपेण परिभाषिता। आनन्दवर्धनो वक्रोक्तिमतिशयोक्तिञ्चैकत्वेन प्रतिपादयंस्तां काव्यसौन्दर्याभिव्यञ्जिकाममनुत। सर्वेऽलङ्कारा अतिशयोक्तिगर्भिता: भवन्ति। महाकविभि: संयोजितेयमतिशयोक्ति: काव्येष्वनिर्वचनीयां शोभां पुष्णाति।[३] तदनन्तरमाचार्य आनन्दवर्धनो भामहोक्तिं (सैषा सर्वत्र सर्वत्र वक्रोक्ति:०) प्रमाणरूपेण प्रास्तौत्। अभिनवगुप्तोऽपि लोचनटीकायामानन्दवर्धनकथनं समर्थितवान्। तेन प्रोक्तम् -

**वक्रोक्तिरतिशयोक्तिर्वा सर्वेष्वलङ्कारेषु सामान्या वर्तते।[४]**

वक्रोक्तिस्वरूपविषये मम्मटोऽप्यानन्दवर्धनमनुससार। यद्यप्यसौ वक्रोक्तेर्गणनां शब्दालङ्कारेषु कृत्वा तस्या: द्वौ भेदौ श्लेषेण काक्वा च प्रादर्शयत्[५], तथापि विशेषालङ्कारविवेचने वक्रोक्तिरूपामतिशयोक्तिं सर्वेषामलङ्काराणां प्राणत्वेन व्यवस्थिताञ्चकार।[६] तदनन्तरमसौ भामहवचनं (सैषा सर्वत्र वक्रोक्ति:) प्रमाणरूपेण प्रास्तौत्।

भोजराजेन वक्रोक्तिरतिव्यापकत्वेन प्रतिष्ठापिता। तेन प्रोक्तम् -

साहित्यं द्विविधम् - वचनरूपं काव्यरूपञ्च। शास्त्रे लोके च यान्यवक्रवचनानि, तद्वचनम्। अर्थवादादौ या वक्रता, तत् काव्यम्।[७] अतिशयवक्रतायुते काव्यवचने योऽभिप्राय: स एव ध्वनिरिति। अलङ्कारेषु वक्रोक्तिमूलताया अनुसरणं कर्तव्यं, यत: सर्वेऽप्यलङ्कारा: वक्रोक्तिवाच्या: भवन्ति।

वक्रोक्तिं व्यापकत्वेन प्रतिपादयन्नपि भोजराजस्तां न तथा व्यापकगुणां न्यरूपयद् यथा भामहेन दण्डिना च निरूपिता। भामहेन स्वभावोक्तिरसवदाद्यलङ्कारसहिता: सर्वेऽप्यलङ्कारा:

---

१. रुद्रट - काव्यालङ्कार २.१४, २.१६।। २. अग्निपुराण ३४२.३२-३३

३. यत: प्रथमं तावदतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया कृतेव च सा महाकविभि: कामपि काव्यच्छविं पुष्णाति। ध्वन्यालोक (३.३७) वृत्ति:

४. शब्दस्य हि वक्रताभिधेयस्य च वक्रता लोकोत्तरेण रूपेणाऽवस्थानमित्ययमेवाऽसौ अलङ्कारस्याऽलङ्कारान्तरभाव:। लोकोत्तरेण चैवाऽतिशय:। येनाऽतिशयोक्ति: सर्वालङ्कारसामान्यम्। ध्वन्यालोकलोचन टीका। पृ० २०८

५. यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा। काव्यप्रकाश ९.७८

६. सर्वत्रैवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेनाऽवतिष्ठते। तां विना प्रायेणाऽलङ्कारत्वायोगात्। काव्यप्रकाश (१०.१३६) वृत्ति:

७. यदवक्रं वच: शास्त्रे लोके च वच एव तत्।
वक्रं यदर्थवादादौ तस्य काव्यमिति स्मृति:।। शृङ्गारप्रकाश ९.६०

अतिशयोक्त्यां समाहिताः। वक्रोक्तेर्मार्गं स्वभावोक्तेः पृथक्कुर्वन्नपि दण्डी रसवदाद्यलङ्कारान् वक्रोक्तौ समाहितवान्। परन्तु भोजराजो रसवदाद्यलंकारानपि वक्रोक्तेः पृथक् चकार। अथ चाऽसौ काव्यवाङ्मयस्य वर्गत्रयं प्रादर्शयत् –

स्वभावोक्तिर्वक्रोक्ती रसोक्तिश्च।[1]

एवञ्च भोजराजस्य वक्रोक्तेः स्वभावोक्तिरसोक्ती भिन्ने। अन्ये सर्वेऽप्यलङ्काराः वक्रोक्त्यां समाविशन्ति।

कुन्तकभोजराजौ समकालीनौ समदेशीयौ चाऽभवताम्। परं तयोः काव्यसमीक्षापद्धती सर्वथा भिन्ने। भोजराजेन स्वकृतिषु वक्रोक्तिर्विस्तरेण व्याख्याता, अथ च सा महनीया प्रतिपादिता। परन्तु तस्य रचनास्वन्येषां विषयाणां तथा विस्तरेण व्याख्यानं विद्यते, यथा वक्रोक्तिविचारविषयः पृष्ठभूमिं गतः।

कुन्तकेन वक्रोक्तिविषयो विस्तरेण व्याख्यातः। वक्रोक्तेः प्रतिपादनमनेन वक्रोक्तिजीवितग्रन्थे कृतम्। अस्य ग्रन्थस्य विचारविषयो वक्रोक्तिरेव वर्तते, अतो वक्रोक्ति-निरूपणसम्बन्धे कुन्तक एव प्रमाणं मन्तव्यः। वक्रोक्तिं सविशदं समीक्ष्याऽसौ तां काव्यस्य प्राणरूपां प्रत्यस्थापयत्।

कुन्तकोत्तरवर्तिन आचार्याः वक्रोक्तिं न तथा महनीयामगणयन्। काव्यशास्त्रग्रन्थेषु तैस्तस्याः समावेशः शब्दालङ्काररूपेण प्रस्तुतः। विशेषालङ्कारविवेचने मम्मटो यद्यपि विशेषोक्तिमतिशयोशक्तिरूपां सर्वालङ्काराणां प्राणान् अगणयत्, तथापि काव्यप्रकाशस्य नवमोल्लासे सा शब्दालङ्काररूपेणैवोपलभ्यते।

मम्मटानन्तरं हेमचन्द्रजयदेवविद्याधरविद्यानाथवाग्भटविश्वनाथकेशवमिश्रादय आचार्याः वक्रोक्तिं शब्दालङ्कारेष्वेवाऽगणयन्। परं रुय्यकामृतानन्दादिभिः सा वक्रोक्तिरर्थालङ्काररूपा निरूपिता।

वक्रोक्तिं काव्यस्य प्राणरूपेण प्रतिष्ठाप्य कुन्तकः काव्यसमीक्षाजगति वक्रोक्तिसम्प्रदायं प्रावर्तयत्। काव्यसौन्दर्याधायकानि सर्वाणि तत्त्वानि कुन्तकेन वक्रोक्तौ समावेशितानि। परन्तु कुन्तकानन्तरं तस्येदमभिमतं नाधिकां प्रतिष्ठां लेभे। काव्यशास्त्रस्येतिहासे कुन्तक एव तथा-विधः काव्यशास्त्रकारो वर्तते, येन वक्रोक्तिः काव्यस्याऽत्मा निरूपितः।

## ३. कुन्तककृतकाव्यलक्षणं वक्रोक्तिस्वरूपनिर्धारणञ्च

अलङ्कारशास्त्रसम्बन्धिषु ग्रन्थान्तरेषु विद्यमानेष्वपि कुन्तकस्य वक्रोक्तिजीवितमिति ग्रन्थरचनाया उद्देश्यो लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धयेऽपूर्वकाव्यालङ्कारवर्णनमेवाऽवर्तत।[2]

---

१. वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्च वाङ्मयम्। सरस्वतीकण्ठाभरण ५.९

२. लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये।
काव्यस्याऽयमलङ्कारः कोऽप्यपूर्वो विधीयते।। वक्रोक्तिजीवित १.२

एनमेव लक्ष्यं स्वीकृत्य कुन्तकः काव्यलक्षणमपि प्राचीनाचार्यपद्धतिमुपेक्ष्य भिन्नप्रकारेण प्रास्तौत्। कुन्तककृतं काव्यलक्षणं वर्तते -

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थिते काव्यं तद्विदाह्लादकारिणि।।[१]**

अस्याऽयमभिप्रायः -

काव्यमर्मविदां सहृदयानामाह्लादकेन वक्रकविव्यापारेण युतायां काव्यरचनायां व्यवस्थितौ शब्दार्थौ काव्यमित्युच्येते।

अत्र कुन्तकस्याऽभिमतमासीत् -

शब्दार्थयोः साहित्यमेव काव्यम्। शब्दार्थयोः साहित्येन काव्यं निष्पद्यते। परं शब्दार्थयुगलं द्विविधवैशिष्ट्ययुतं भाव्यम् -

(i) कवीनामुक्तयः प्रसिद्धवचनव्यापारभिन्नवक्रतायुताः भवन्ति।

(ii) उक्तयस्ताः सहृदयहृदयाह्लादिकाः भवन्ति।

एवं कुन्तकेन काव्यगनिवार्यरूपेण वक्रोक्तियुतं प्रतिपादितम्।

काव्ये सन्निहितायाः वक्रोक्तेः स्वरूपस्याऽपि व्याख्या कुन्तकेन कृता। तत्कृतं वक्रोक्तिलक्षणं विद्यते -

**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।[२]**

अस्य वाक्यस्य व्याख्या कुन्तकेन निम्नप्रकारेण कृता -

**वक्रोक्तिः - प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाऽभिधा। कीदृशी वैदग्ध्यभङ्गीभणितिः? वैदग्ध्यं विदग्धभावः कविकर्मकौशलं, तस्य भङ्गी विच्छित्तिः, तया भणितिः विचित्रैवाऽभिधा वक्रोक्तिरित्युच्यते।**

कुन्तकस्य कथनस्याऽभिप्रायो वर्तते -

वैदग्ध्यभङ्गीभणितिरेव वक्रोक्तिर्वर्तते। प्रसिद्धकथनं विलक्षणप्रकारकथनमेव वक्रोक्तिः। कथनमिदं वैदग्ध्यभङ्गिमायुतं भवति। वैदग्ध्यस्याऽर्थो भवति - विदग्धस्य भावः, निपुणकविकाव्यरचनारूपकर्मकौशलम्। तस्य भङ्गी विच्छित्तिश्चमत्कारः। तद्द्वारेण कथनं वक्रोक्तिर्भवति। एवं विचित्रा अभिधा उक्तिरेव वक्रोक्तिः। विचित्रोक्तेर्वक्रोक्तेस्त्रिविधा व्याख्या त्रिषु स्थानेषु कुन्तकेन कृता -

(i) शास्त्रादिप्रसिद्धशब्दार्थप्रयोगभिन्नप्रयोगः।[३]

---

१. वक्रोक्तिजीवित १.७०।। २. वक्रोक्तिजीवित १.१

३. शास्त्रादिप्रसिद्धशब्दार्थोपनिबन्धव्यतिरेकि। वक्रोक्तिजीवित (१.१८) वृत्तिः

(ii) लोकादिप्रसिद्धशब्दार्थप्रयोगभिन्नप्रयोगः।[१]

(iii)लोकादिप्रसिद्धशब्दार्थव्यवहारमार्गातिक्रमणशब्दार्थप्रयोगः।[२]

व्याख्यानस्याऽस्याभिप्रायोऽयमेव यद् वर्णनशैली द्विविधा भवति - एका लोकशास्त्रादि-सामान्यार्थेषु प्रयुज्यते द्वितीया च तद्भिन्नलोकोत्तरचमत्कारकारिणी भवति। इयं लोकोत्तर-चमत्कारकारिणी शैली विचित्रोक्तिर्वक्रोक्तिर्वा वर्तते। यत्रेयं वक्रोक्तिस्तदेव काव्यमित्युच्यते।

कुन्तकप्रतिपादितेयं वक्रोक्तिपरिभाषोत्तरवर्तिभिः काव्यशास्त्रकृद्भिः समर्थिता। व्यक्तिविवेककारेण महिमभट्टेन प्रोक्तम् -

शास्त्रादिप्रसिद्धमार्गं परित्यज्य चमत्कारसिद्धये स एवाऽर्थो यदाऽन्येन प्रकारेण प्रोच्यते सैव वक्रोक्तिः।[३] ध्वनिवादिन आचार्या अपि काव्यं लोकोत्तरवर्णनानिपुणकविकर्म कथयन्ति।[४]

उपर्युक्तविवेचनेन स्पष्टमेवेदं यद् वक्रोक्तिर्द्वाभ्यां वैशिष्ट्याभ्यां संयुता वर्तते -

(i) प्रसिद्धकथनशैलीव्यतिरेकिलोकोत्तरशब्दार्थप्रयोगः।

(ii) सहृदयहृदयाह्लादकारित्वम्।

एतद् द्विविधवैशिष्ट्ययुतकथनमेव वक्रोक्तिः। अथ चेयं वक्रोक्तिरेव काव्यजीवितम्।

### ४. वक्रोक्तेर्भेदप्रभेदाः

कुन्तको वक्रोक्तेर्भेदप्रभेदविवेचनं सविशदं याथार्थ्येन सप्रमाणमकरोत्। तेन प्रतिपादितम् -

काव्यस्य सर्वेषामङ्गानां तत्त्वानां समावेशो वक्रोक्त्यन्तर्गतो भवति। अथ च वक्रोक्तेः-र्मुख्याः भेदाः षड् वर्तन्ते[५] -

---

१. प्रसिद्धप्रस्थानव्यतिरेकि। वक्रोक्तिजीवित (१.१८) वृत्तिः

२. अतिक्रान्तप्रसिद्धव्यवहारसरणि। वक्रोक्तिजीवित पृ० १९५

३. प्रसिद्धं मार्गमुत्सृत्य यत्र वैचित्र्यसिद्धये।
अन्यथैवोच्यते सोऽर्थः सा वक्रोक्तिरुदाहृता।। व्यक्तिविवेक १.६६

४. लोकोत्तरवर्णनानिपुणकविकर्म। काव्यप्रकाश (१.२) वृत्तिः

५. कविव्यापारवक्रत्वप्रकाराः सम्भवन्ति षट्।
प्रत्येकं बहवो भेदास्तेषां विच्छित्तिशालिनः।।
वर्णविन्यासवक्रत्वं पदपूर्वार्द्धवक्रता।
वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः।।
वाक्यस्य वक्रभावोऽन्यो विद्यते यः सहस्रधा।
यत्राऽलङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति।।
वक्रभावः प्रकरणे प्रबन्धेऽप्यस्ति यादृशः।
उच्यते सहजाऽऽहार्यः सौकुमार्यमनोहरः।। वक्रोक्तिजीवित १.१८-२१

(i) वर्णविन्यासवक्रता
(ii) पदपूर्वार्द्धवक्रता
(iii) प्रत्ययवक्रता
(iv) वाक्यवक्रता
(v) प्रकरणवक्रता
(vi) प्रबन्धवक्रता

(i) **वर्णविन्यासवक्रता -**

व्यञ्जनवर्णसौन्दर्यप्रकाराणां विवेचनं कुन्तकेन वर्णविन्यासवक्रतान्तर्गतं विहितम्। काव्यरचनायामेकस्य द्वयोरधिकानां वा वर्णानां स्वल्पान्तरेण पुनरुपनिबन्धनं वर्णविन्यासवक्रता वर्तते। अनुप्रासयमकालङ्काररयोस्तिसृणां वृत्तीनां रीतीनाञ्चाऽन्तर्भावो वर्णविन्यासक्रतायां भवति।

(ii) **पदपूर्वार्द्धवक्रता -**

धातुरूपस्य प्रातिपदिकरूपस्य वा पदस्य प्रत्ययस्य च संयोगात् शब्दरचना निष्पद्यते। अत्र प्रथमो भागस्तावत् पदपूर्वार्द्धः प्रकृतिर्वा निगद्यते। उत्तरार्धश्च परार्द्धो वा प्रत्ययश्चोच्यते। प्रकृत्याः पूर्वार्द्धस्य वा विन्यासवैचित्र्यं पदपूर्वावक्रता प्रकृतिवक्रता वा वर्तते। कुन्तकेनाऽस्याः वक्रतायाः नवभेदाः प्रदर्शिताः -

(१) रूढिवैचित्र्यवक्रता (२) पर्यायवक्रता (३) उपचारवक्रता (४) विशेषणवक्रता (५) संवृतिवक्रता (६) वृत्तिवक्रता (७) भाववैचित्र्यवक्रता (८) लिङ्गवैचित्र्यवक्रता (९) क्रियावैचित्र्यवक्रता च।

अत्र ध्वनिवादिनामर्थान्तरसङ्क्रमितवाच्यस्य ध्वनेरन्तर्भावो रूढिवैचित्र्यवक्रतायामत्यन्त-तिरस्कृतवाच्यस्य च ध्वनेरन्तर्भाव उपचारवक्रतायां कुन्तकेन कृतः।

(iii) **प्रत्ययवक्रता -**

प्रत्ययवक्रता पदपरार्द्धवक्रता चाऽपि प्रोच्यते। पदस्योत्तरार्धे स्थितानां प्रत्ययादीनां सुप्तिङादीनां विन्याससौन्दर्यमत्राऽन्तर्निहितं भवति। अस्य प्रमुखाः भेदाः षट् वर्तन्ते -

(१) कालवैचित्र्यवक्रता (२) कारकवक्रता (३) वचनवक्रता (४) पुरुषवक्रता (५) उपग्रहवक्रता (६) प्रत्ययवक्रता च।

(iv) **वाक्यवक्रता -**

पदसमूहस्य वाक्यविन्यासस्य वा सौन्दर्यं वाक्यवक्रता वर्तते। इयं वस्तुवक्रता चाऽप्युच्यते। द्विरूपा चेयं वक्रता कुन्तकेन प्रोक्ता - सहजा आहार्या च। पूर्ववर्तिभिः काव्यशास्त्रकारैः प्रतिपादितानामुपमाद्यलङ्काराणामन्तर्भावमस्यां वक्रतायां कुन्तकश्चकार। रसवदाद्यलङ्कारा अप्यत्रैवाऽन्तर्हिताः भवन्ति।

(v) **प्रकरणवक्रता -**

प्रबन्धस्यैकदेशः प्रकरणमित्यभिधीयते। प्रकरणानां परस्परसहयोगेन प्रबन्धस्योत्कृष्टत्वं प्रतिपाद्यते। प्रकरणानां लोकोत्तरविन्यासेन प्रकरणवक्रता निष्पाद्यते। प्रकरणवक्रता नवभिः प्रकारैर्निष्पन्ना भवति -

(१) पात्राणां चरित्रवैशिष्ट्येन
(२) नवीनप्रसङ्गानामुत्पादनेन
(३) प्रकरणस्य प्रधानकार्यस्य प्रबन्धप्रत्युपकारकभावेन विन्यासेन
(४) भावपूर्णस्थलानां विन्यासेन
(५) रुचिकरबाह्यवर्णनैः प्रकृतिचित्रणादिविस्तरेण
(६) प्रधानरसस्योत्कर्षकप्रकरणकल्पनया
(७) प्रधानोद्देश्यसिद्धये नूतनप्रसङ्गानामवधारणेन
(८) गर्भाङ्कविधानेन
(९) प्रकरणेषु पूर्वापरान्वितिक्रमे मुखादिसन्धीनां विधानेन

(vi) **प्रबन्धवक्रता -**

सम्पूर्णप्रबन्धदृष्ट्या विन्याससौन्दर्यं प्रबन्धवक्रता विभाव्यते। कुन्तकेनाऽस्याः वक्रतायाः षड् भेदाः प्रदर्शिताः

(१) मूलरसपरिर्वतनवक्रता
(२) समापनवक्रता
(३) कथाविच्छेदवक्रता
(४) आनुषङ्गिककथावक्रता
(५) नामकरणवक्रता
(६) तुल्यकथावक्रता

षड्विधानां वक्रतानामासां कुन्तकेन विस्तृता विवेचना विहिता। कुन्तक एवमप्याह -

वक्रतानामासामन्येऽपि प्रकाराः सम्भवन्ति। प्रतिभानामनन्तप्रकारा इव वक्रतानामप्यनन्त-प्रकाराः वर्तन्ते। अत्र वक्रतानां मुख्यभेदानां निदर्शनं विहितम्। शेषाः सहृदयैः स्वयमुत्प्रेक्षयीयाः।[१]

---

१. एते च मुख्यतया वक्रताप्रकाराः कतिचिन्निदर्शनार्थं प्रदर्शिताः। शिष्टाश्च सहस्रशः सम्भवन्तीति महाकविप्रवाहे स्वयमेवोत्प्रेक्षणीयाः। वक्रोक्तिजीवित (१.१९) वृत्ति.

### ५. वक्रोक्तेः काव्यस्याऽन्यतत्त्वैः सह सम्बन्धः

**(i) वक्रोक्तिः स्वभावोक्तिश्च -**

काव्यशास्त्रग्रन्थेषु स्वभावोक्त्यलङ्कारस्याऽपि स्वरूपवर्णनमुपलभ्यते। स्वभावोक्त्यलङ्कारस्य समावेशो वैदग्ध्यभङ्गीभणितिरूपवक्रोक्त्यां विधातुं शक्यते न वेति विवादास्पदम्। वर्ण्यवस्तुनः स्वभावरूपादीनां यथावद्वर्णनमेव स्वभावोक्तिः। परन्तु सामान्यमार्गविलक्षणकथनं तु वक्रोक्तिः।

स्वभावोक्त्यलङ्कारं प्रथमं भामहः काव्यालङ्कारग्रन्थे ह्युल्लिलेख। परन्त्वसौ स्वभावोक्त्यलङ्कारस्याऽस्तित्वं न सुस्पष्टमङ्गीचकार। अन्येषामाचार्याणां मतान्युद्धृत्य तेन प्रोक्तम् -

केचनाऽऽचार्याः स्वभावोक्त्यलङ्कारमामनन्ति। वस्तुनो यथावत् स्वभाववर्णनमेव स्वभावोक्तिः।[१]

भामहो वक्रोक्त्यां लोकातिक्रान्तगोचरतां प्रतिपादयंस्तामलङ्कारमूलामाचक्षते। स्वभावोक्तेर्यदुदाहरणं भामहेन प्रदर्शितं तद् वार्तामात्रमेव वर्तते।

स्वभावोक्तेः सुस्पष्टमलङ्कारत्वमङ्गीकृत्य दण्डी तामाद्यामलङ्कृतिं जगाद। विविधपदार्थानां यथावद् रूपप्रकटनं स्वभावोक्तिर्जातिर्वाऽलङ्कृतिर्भवति।[२] सा स्वभावोक्तिर्न वक्रोक्त्यन्तर्गता तेनाऽभिमता। समस्तं वाङ्मयं तेन द्वयोर्वर्गयोर्विभक्तम् - स्वभावोक्तिर्वक्रोक्तिश्च। एवं तेन स्वभावोक्तिर्वक्रोक्तेः पृथक्कृता।

उद्भटो लीलाविशेषवर्णनं स्वाभावोक्तिं मत्वा तत्र पदार्थानां यथावद् वर्णनमलङ्कृतिं प्राह। काव्यालङ्कारसंग्रहटीकायां प्रतिहारेन्दुराजेन प्रोक्तम् -

स्वभावोक्त्यां पदार्थस्याऽसाधारणरूपध्वननत्वादत्राऽलङ्कारत्त्वं विद्यते।[३]

वामनेन स्वभावोक्तिरलङ्कृतिरूपत्वेन न स्वीकृता। तेन प्रोक्तम् -

वस्तुनो यथावद् रूपवर्णनस्य तस्य स्पष्टकथनस्याऽन्तर्भावोऽर्थव्यक्तिगुणे भवति।[४]

भोजराजेन स्वभावोक्तिरलङ्कृतित्वेन स्वीकृता, परं न सा वक्रोक्त्यन्तर्गता। काव्यस्य त्रयो मार्गाः भवन्ति - स्वभावोक्तिर्वक्रोक्ती रसोक्तिश्च।[५]

---

१. स्वभावोक्तिरलङ्कार इति केचित् प्रचक्षते।
अर्थस्य तदवस्थत्वं स्वभावोऽभिहितो यथा।। भामह - काव्यालङ्कार २.९३

२. नानावस्थं पदार्थानां रूपं साक्षाद् विवृण्वती।
स्वभावोक्तिश्च जातिश्चेत्याद्या सालंकृतिर्यथा।। काव्यादर्श २.८

३. तस्याश्च अलङ्कारत्वमसाधारणस्वरूपध्वननात्। काव्यालङ्कारसंग्रह (३.५) लघुवृत्तिटीका।

४. वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः। काव्यालङ्कारसूत्र ३.२.१४

५. वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्च वाङ्मयम्।। सरस्वतीकण्ठाभरण ५.९

रुद्रटः काव्यालङ्कारे वास्तववर्गस्य त्रयोविंशत्यलङ्कारेषु जात्यलङ्कार (स्वभावोक्तिम्)-मप्यगणयत्। पदार्थानां यथासंस्थानावस्थानक्रियादयो भवन्ति, तेषां तथा यथावद् वर्णनं जात्यलङ्कृतिर्भवति।[१] अस्य वाक्यस्य व्याख्या टीकाकारेण नमिसाधुना निम्नप्रकारेण कृता -

**जातिस्त्वनुभवं जनयति। यत्र परस्य स्वरूपं वर्ण्यमानमेव अनुभवमिवैति इति स्थितिः।**[२]

वक्रोक्तिस्वभावोक्त्योः सम्बन्धः कुन्तकेन विस्तरेण निरूपितः। न तेन स्वभावोक्तिर-लङ्काररूपेण स्वीकृता। स्वभावाक्तेरलङ्कारत्वं तेन निराकृतम्। कुन्तकेन प्रोक्तम् -

स्वभाववर्णनेनैव स्वभावोक्तिः। परमियं स्वभावोक्तिस्तु काव्यशरीरमेव यदलङ्कार्यं न त्वलङ्कृतिः। यदि स्वभावोक्तिरेवाऽलङ्कृतित्वेन गण्यते, तदा स्वभाववर्णनातिरिक्तं काव्यशरीरस्थानीयं किमन्यद् वस्तु सम्भवेद् यदलङ्कार्यतया ह्यलङ्क्रियेत।[३] अतः स्वभावोक्तेर-लङ्कृतिरूपेण स्वीकरणमसङ्गतमेव।

परं स्वभावोक्तेरलङ्कारत्वं प्रतिपादयता महिमभट्टेन कुन्तकवचसां सशक्तं खण्डनं विहितम्। तेन प्रोक्तम् -

वस्तुवर्णनप्रकारो द्विविधः - सामान्यो विशिष्टो वा। प्रथमवर्णनप्रकारः साधारणजनानां द्वितीयश्च प्रतिभावतां कवीनां वर्तते। वस्तूनां विशिष्टं रूपं कविप्रतिभया प्रत्यक्षवद् दृष्टिगोचरं भवति। तदेवाऽलङ्कारत्वेन समीक्षकैर्गण्यते।[४] अतो लोकोत्तरभावेनैव स्वभावोक्तिरलङ्कृतित्वेन प्रशस्यते।

महिमभट्टानन्तरमपि मम्मटरुय्यकहेमचन्द्रविश्वनाथादिभिराचार्यैः स्वभावोक्ति-रलङ्कारत्वेनाऽङ्गीकृता।

---

१. संस्थानावस्थानादि यद्यस्य यादृशं भवति।
लोके चिरप्रसिद्धं तत् कथनमनन्यथा जातिः। रुद्रट - काव्यालङ्कार ७.३०

२. रुद्रट - काव्यालङ्कार (७.३०) नमिसाधुकृतटीका

३. अलङ्कारकृतां येषां स्वभावोक्तिरलङ्कृतिः।
अलङ्कार्यतया तेषां किमन्यदवतिष्ठते।।
स्वभावव्यतिरेकेण वक्तुमेव न युज्यते।
वस्तु तद्रहितं यस्मान्निरूपाख्यं प्रसज्यते।।
शरीरं चेदलङ्कारः किमलङ्कुरुते परम्।
आत्मनैवाऽऽत्मनः स्कन्धं क्वचिदप्यधिरोहति।। वक्रोक्तिजीवित १.११-१३

४. विशिष्टमस्य यद्रूपं तत् प्रत्यक्षस्य गोचरः।
स एव सत्कविगिरां गोचरः प्रतिभाभुवाम्।।
अर्थस्वभावस्योक्तिर्या सालङ्कारतया मता।
यतः साक्षादिवाऽऽभान्ति तत्राऽर्थाः प्रतिभार्पिताः।। व्यक्तिविवेक २.१२०

उपर्युक्तविवेचनेन सिद्धमेवेदं यत् स्वभावोक्त्यां लोकोत्तरभावस्य हृदयाह्लादकत्वस्य च निहितत्वादधिकसंख्यकैराचार्यैः सा ध्रुवमलङ्कारत्वेन स्वीकृता। परन्तु कुन्तक एनां स्वभावोक्ति-मलङ्कृतिरूपेण नाऽङ्गीकृत्य ह्यलङ्कार्यमेव न्यरूपयत्।

(ii) वक्रोक्तिः रसश्च -

चमत्कृतिवादी कुन्तकाचार्यो विचित्राऽभिधारूपवक्रोक्तिं काव्यस्य जीवितरूपेण प्रतिपादयन्नपि काव्ये रसस्याऽनिवार्यत्वं स्वीचकार। काव्यप्रयोजनलक्षणगुणादीनां वर्णनप्रसङ्गेष्वसौ रसमपि प्रत्यापादयत्।

कुन्तकेन प्रोक्तम् -

काव्यमर्मविदां सहृदयानामन्तःकरणेषु धर्मार्थकाममोक्षाणामतिक्रमणकारी काव्यामृत-रसश्चत्कारं वितनोति।[१] काव्यस्याऽयं सुकुमारो मार्गो रसादितत्त्वविदां सहृदयानां मनोऽनुकूलत्वात् रमणीयो भवति।[२]

काव्यस्य विभिन्नानामङ्गानां प्रतिपादने वक्रतास्वरूपनिरूपणे च कुन्तको रसस्य महनीयतामाचचक्षे। प्रबन्धवक्रताप्रसङ्गे तेनोक्तम् -

कवीनां गिरो निरन्तरं रसप्रवाहयितृसन्दर्भानवलम्बन्ते। न तु कथामात्रम्।[३]

काव्यवस्तुविवेचने कुन्तको रसं महनीयमाचख्यौ। वर्ण्यमानं वस्तु द्विविधं भवति - स्वभावप्रधानं रसप्रधानञ्च। अत्र स्वभावप्रधानं वस्तु प्रशस्यतरम्। काव्ये चेतनाचेतनवस्तु-वर्णने चेतनमेव प्रधानम्। रत्यादिभावा अत्रैवाऽक्लिष्टरूपपरिपोषं प्राप्ताः रसतामाप्नुवन्ति।[४]

अलङ्कारसम्प्रदायाचार्याः काव्ये रसादीन् रसवदाद्यलङ्कारत्वेन प्रतिपाद्य गौणस्थानीयान् चक्रुः। परन्तु कुन्तकेन रसादयोऽलङ्कार्याः प्रोक्ताः, यथा ध्वनिवादिन आमनन्ति। रसभिन्नकिञ्चिद्वस्त्वलङ्कारः प्रतीत्यभावाद् रसो नाऽलङ्कारः।[५] परं रसतत्त्वविधानेन यदि

---

१. चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते।। वक्रोक्तिजीवित १.५

२. रसादिपरमार्थज्ञमनःसंवादसुन्दरः। वक्रोक्तिजीवित १.२६

३. निरन्तररसोद्गारगर्भसन्दर्भनिर्भराः।
गिरः कवीनां जीवन्ति न कथामात्रमाश्रिताः।। वक्रोक्तिजीवित ४.११

४. मुख्यमक्लिष्टरत्यादिपरिपोषमनोहरम्। वक्रोक्तिजीवित ३.७
अक्लिष्टः कदर्थनाविरहितः प्रत्यग्रतामनोहरो यो रत्यादिः स्थायिभावस्तस्य परिपोषः शृङ्गारप्रभृतिरसत्वापादनम्, स्थाय्येव रसो भवेदिति न्यायात् तेन मनोहरो हृदयहारी।
वक्रोक्तिजीवित (३.७) वृत्तिः

५. अलङ्कारो न रसवत् परस्याप्रतिभासनात्।
स्वरूपादतिरिक्तस्य शब्दार्थासङ्गतेरपि।। वक्रोक्तिजीवित ३.११

कोऽप्यलङ्कारो रसवत् सहृदयहृदयान्याह्लादयति, तत्र रसवदलङ्कारः सम्भवतिः। अयञ्चाऽलङ्कारोऽलङ्काराणां सर्वेषां जीवितमथ च काव्यस्यैकसारः।[१]

कुन्तकोऽपि रसं व्यङ्ग्यमेवाऽऽचचक्षे। ध्वनिवादिनामिवेदं तस्याऽभिमतम्। परमुद्भटो रसं वाच्यमाह। अयं तु क्वचित् स्वशब्देन क्वचित् स्थायिभावैः क्वचित् सञ्चारिभावैः क्वचिद् विभावैः कवचिच्चाऽभिनयैर्वाच्यं भवति।[२] परं कुन्तकेन रसः प्रतीयमान एव निरूपितः। तेन प्रोक्तम् –

यदि शृङ्गारादिपदैरेव रसस्योद्रेको भवेत्, तदा घृतापूपादिशब्दानामुच्चारणेनैव श्रोतारो रसास्वादमनुभवेयुः।।

काव्ये रसं महनीयं मत्त्वाऽपि, परमतत्त्वं कृत्वाऽपि कुन्तकः कथं वक्रोक्तिमेव काव्यजीवितमाचचक्षे, न रसमिति प्रश्नः समुदेति। उत्तरं त्वत्रैवमिति, यत् काव्ये रसनिष्पत्तिरपि वक्रतां विना न प्रभवति। अपितु रसं विना काव्ये वक्रता तिष्ठत्येव। अतो रसस्य वक्रोक्त्य-धीनत्वात् कुन्तको वक्रोक्तिमेंव काव्यजीवितं न्यरूपयत्।

(iii) **वक्रोक्तिरलङ्कारश्च –**

सामान्यतः वक्रोक्त्यलङ्कारावेकतत्त्वरूपेण प्रतीयेते। अथ च वक्रोक्तिसिद्धान्तोऽलङ्कार-सिद्धान्तरूपेण रूपान्तरमेव विज्ञातुं शक्यते। वक्रोक्तिलक्षणप्रतिपादनावसरे कुन्तकः शब्दार्थौ ह्यलङ्कार्यौ प्रतिपाद्य वैदग्ध्यभङ्गीभणितिरूपां वक्रोक्तिमलङ्कारत्वेन तयोः समर्थितवान्।[३]

वक्रोक्त्यलङ्कारौ स्थाने स्थाने साम्यं भजेते। द्वयोरपि काव्यसौन्दर्यं वस्तुगतं सत् कविकौशलप्रतिभाश्रितं भवति। सौन्दर्यमिदं चमत्कारस्याऽऽश्रयेण तिष्ठति। अलङ्कारसम्प्रदायेऽ-लङ्काराणां चमत्कृतिर्वक्रोक्तिसम्प्रदाये च वक्रतायाश्चमत्कृतिर्विद्य[illegible]क्तिवैचित्र्यरूपौ। द्वावेवाऽभिधाप्रधानौ। द्वयोरेव रसादीनां वर्णनस्यैवैको प्रकारः।

अलङ्कारवक्रोक्तिसम्प्रदाययोः साम्येष्वेतेषु सत्स्वपि न तावेकत्वं भजेते। वक्रोक्तेः क्षेत्रमलङ्कारक्षेत्रापेक्षातो विस्तृततरम्। वक्रताया अनेकानि रूपाणि यद्यलङ्काररूपाणि वर्तन्ते, अन्यान्यनेकानि रूपाणि नाऽलङ्कृतिविषयाणि। वक्रोक्तिसिद्धान्ते रसः परमतत्त्वं वर्तते। अथ च रसादयोऽलङ्कार्याः कथ्यन्ते, परमलङ्कारसिद्धान्ते रसवदेकः सामान्यरूपेणाऽलङ्कारः।

---

१. यथा स रसवन्नाम सर्वालङ्कारजीवितम्।
काव्यैकसारतां याति तथेदानीं विवेच्यते।। वक्रोक्तिजीवित ३.१४

२. रसवद्दर्शितस्पष्टशृङ्गारादिरसोदयम्।
स्वशब्दस्थायिसञ्चारिभावाभिनयास्पदम्।। उद्भट – काव्यालङ्कारसारसंग्रह ४.४

३. उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।। वक्रोक्तिजीवित १.१०

अलङ्कारसिद्धान्ते स्वभावोक्तिरेका सामान्यरूपेणाऽलङ्कृतिः। परन्तु वक्रोक्तिसिद्धान्ते स्वभावोक्तिरियमुत्कृष्टा ह्यलङ्कार्यरूपा वर्तते। अलङ्काराणां चमत्कारः काव्यस्य बाह्यसौन्दर्यं प्रतिभासयति, परन्तु वक्रोक्तिः काव्यानां सूक्ष्मतत्त्वान्युन्मीलयति। सर्वस्यैतस्य विमर्शनेन प्रतिभाति, यद् वक्रोक्तिसिद्धान्तोऽलङ्कारसिद्धान्तापेक्षातो विस्तृततरः परिपूर्णश्च विद्यते।

**(iv) वक्रोक्तिः रीतयो गुणाश्च -**

वक्रोक्तिसिद्धान्तस्याऽऽविष्कर्ता कुन्तको रीतिविषयमपि सुसूक्ष्मं सुविशदञ्च विममर्श। वामनेन रीतिः काव्यस्याऽऽत्मा प्रतिपादिता। परं कुन्तकेन प्रोक्तम् -

रीतिरपि वक्रतायाः भेदः। रीतिस्थाने कुन्तको मार्गपदं प्रयुयोज। वैदर्भीरीतिः सुकुमारमार्गो, गौडीरीतिः विचित्रमार्गः पाञ्चालीरीतिश्च मध्यमार्ग इति तेन निरूपितम्। रीतीनां मूलं भौगोलिकतत्त्वमिति पूर्ववर्तिनामाचार्याणां विमर्शमवैज्ञानिकममान्यञ्च कृत्वाऽसौ त्रयाणामपि मार्गाणां मूलं कविस्वभावं प्रत्यापादयत्। कविस्वभावेष्वनन्तेष्वपि ते त्रिषु मार्गेषु वर्गीक्रियन्ते।

वामनेन रीतीनां मूलं गुणाः कल्पिताः। विंशतिर्गुणाः भवन्ति, तेषाञ्चाधारेण रीतयः सम्पाद्यन्ते। कुन्तकोऽपि कविस्वभावमेव मार्गाणां (रीतीनां) मूलं परिकल्प्य तैः सह गुणानां सम्बन्धं विममर्श। तेनोक्तम् - द्विविधाः गुणाः- सामान्याः विशेषाश्च। ते च वर्तन्ते -

**सामान्यगुणाः - औचित्यं सौभाग्यञ्च।**

**विशेषगुणाः - माधुर्यं प्रसादो लावण्यमाभिजात्यञ्ज।**

सामान्यगुणाः प्रतिमार्गं सम्बद्धाः, परं विशेषगुणाः विशेषमार्गेणैव सम्बध्यन्ते।

वामनेन रीतीनां वैशिष्ट्यक्रमोऽपि विमृष्टः। समग्रगुणा वैदर्भी प्रशस्यतमा गौडी चाऽधमा। परन्तु कुन्तको रीतीनां (मार्गाणां) पारस्परिकप्रशस्यभावं नाऽङ्गीकरोति। तेन प्रोक्तम् -

**मार्गाः समानरूपेण ग्राह्याः भवन्ति।**

वक्रोक्तिः रीतेरधिकं विस्तृतक्षेत्रं व्याप्नोति। रीतिस्तु पदसंघटनापर्यन्तं प्रवर्तते। या वक्रोक्तेर्वर्णवक्रताप्रकृतिवक्रताप्रत्ययवक्रतावाक्यवक्रतापर्यन्तं परिमिता भवति। परं वक्रोक्तिः काव्याङ्गानां विस्तृततरं क्षेत्रं व्याप्नोति। प्रकरणवक्रताप्रबन्धवक्रते रसनिष्पत्तिं सङ्केतयतः। एवञ्च वक्रोक्तिसिद्धान्तो रीतिसिद्धान्ततुलने रसस्य समीपतरो वर्तते।

**(v) वक्रोक्तिरौचित्यञ्च -**

कुन्तकाचार्येणौचित्यस्याऽपि महत्त्वं स्वीकृतम्। काव्यलक्षणं प्रदर्श्याऽसौ प्रबन्ध-वक्रतापर्यन्तमौचित्यमेव वक्रतायाः प्राणत्वेन न्यरूपयत्।[1] कुन्तकप्रोक्ता वक्रता यत्र तत्र कुत्रचिदौचित्यरूपत्वेनैव प्रवर्तते।[2] कुन्तकेन प्रोक्तम् -

सौभाग्येन सहौचित्यमपि सर्वसाधारणो गुण। काव्यस्य सर्वेष्वपि मार्गेष्विदमौचित्य-मन्तर्निहितमनिवार्यत्वेन भवति। औचित्यस्य स्वल्पेऽप्यभावे काव्यस्याऽऽह्लादकत्वं, ध्रुवं

---

१. तत्र पदस्य तावदौचित्यं बहुविधभेदभिन्नो वक्रभावः। वक्रोक्तिजीवित (१.५०) वृत्तिः।

२. आञ्जसेन स्वभावस्य महत्त्वं येन पोष्यते।
प्रकारेण तदौचित्यमुचिताख्यानजीवितम्।। वक्रोक्तिजीवित १.५३

विहन्यते ।[१] यथा काव्येषु प्रत्यङ्गं पदवाक्यप्रबन्धगुणालङ्कारक्रियाकारकलिङ्गवचनादिषु वक्रता सन्निहिता भवति, तथैवौचित्यस्याऽप्यस्तित्वं वर्तते ।

इति वचनेन स्पष्टमेव यदि कुन्तको वक्रोक्तिं काव्यस्य जीवितमङ्गीकरोति, औचित्यमपि वक्रतायाः प्राणतत्त्वं प्रतिपादयति ।

औचित्यस्य महनीयत्त्वं प्रतिपादयताऽपि कुन्तकेन वक्रोक्तिः कथं काव्यस्याऽऽत्मा प्रोक्ता, इत्यत्र प्रश्नः समुत्पद्यते। अथ चौचित्यं वक्रतायाः मूलं मत्वाऽपि कुन्तक औचित्यवक्रतयोर्नैकत्वमङ्गीकृतवान् । तयोर्भिन्नत्वमेव तेन प्रदर्शितम् । परमत्र विचारणीयं यत् कुन्तकस्य वक्रोक्तिः क्षेमेन्द्रस्य चौचित्यं नैकत्वं बिभृतः । औचित्यं तु वक्रोक्त्या अनिवार्यं तत्त्वमित्युक्त्वा कुन्तकेन प्रतिपादितम् -

वक्रोक्तिर्वस्तुनिष्ठा सती काव्याङ्गैः सह सम्बद्धा। परमौचित्यं कवीनां विवेकेन सम्बद्धं रसैरपि सम्बध्यते ।

**(vi) वक्रोक्तिर्ध्वनिश्च -**

वक्रोक्तिसिद्धान्तप्रतिष्ठापकाचार्यः कुन्तक आनन्दवर्धनस्य ध्वनिसिद्धान्तं निश्चयेन परिचिकाय । वक्रोक्तिजीवितग्रन्थेऽसौ ध्वनिकारमानन्दवर्धनं तस्य च ध्वनिसिद्धान्तमुल्लिलेख । ध्वनिकारं प्रति श्रद्दधानेन तेन तद्रचितानि पद्यान्युदाहरणरूपेण वक्रोक्तिजीवितग्रन्थे प्रस्तुतानि । अथ च ध्वन्यालोकस्य "स्वेच्छाकेसरिण" इति मङ्गलश्लोकस्तेन क्रियावैचित्र्यवक्रताया उदाहरणत्वेन प्रस्तुतः ।

कुन्तकस्य वक्रोक्तिसिद्धान्ते ध्वनिकारस्य च ध्वनिसिद्धान्ते साम्यैरनेकैः सह वैषम्यमपि भूयिष्ठं परिलक्ष्यते । द्वयोरपि सिद्धान्तयोः लोकप्रसिद्धशब्दार्थातिक्रमणं, वैचित्र्यप्रतिपादनाय च कवेरलौकिकी प्रतिभेति सर्वेऽनतिक्रमणीयाः हेतवः सन्ति। परन्तु कुन्तकेन वक्रोक्तिर-भिधाव्यापारो मतः । सा अभिधारूपवृत्तिवाच्या भवति ।

ध्वनिकारो वाचकशब्दार्थभिन्नव्यङ्ग्यव्यञ्जकभावमेव काव्ये रमणीयत्वप्रतिपादकं न्यरूपयत् । यत्र वाच्यार्थ आत्मानं वाचकशब्दश्च आत्मानं स्वार्थञ्चोपसर्जनीकृत्य वाच्यार्थभिन्न-प्रतीयमानमर्थमभिव्यनक्ति तत्रैव ध्वनिकाव्यं भवतीति ध्वनिकारस्य प्रतिपादनम् ।[२]

परन्तु कुन्तकस्य वाचकशब्दो ध्वनिकारस्य व्यञ्जकशब्दं व्यङ्ग्यार्थञ्च स्वात्मन्यन्तः निवेशयति। कुन्तको जगाद - द्योत्यव्यङ्ग्ययोः प्रत्येयत्वसाम्यादुपचाराच्च तावपि वाचकौ स्तः ।[३] इत्थञ्च कुन्तकेन ध्वनिकारस्य व्यङ्ग्यव्यञ्जकभावः वाच्यवाचकभावे समावेशितः ।

---

१. उचिताभिधानजीवितत्वाद् वाक्यस्याऽप्येकदेशेऽप्यौचित्यविरहात् तद्विदामाह्लादकारित्वहानिः । वक्रोक्तिजीवित २.५७ वृत्ति

२. यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ।। ध्वन्यालोक १.१३

३. यस्मादर्थप्रतीतिकारित्वसामान्यादुपचारात्तावपि (द्योतकव्यञ्जकौ) वाचकावेव। एवं द्योत्य-व्यङ्ग्ययोरर्थयोः प्रत्येयत्वसामान्यादुपचाराद् वाच्यत्वमेव। वक्रोक्तिजीवित (१ ८) वृतिः ।

कुन्तकानन्दवर्धनयोः काव्यसौन्दर्यसमीक्षाविषये यत्र तत्र साम्यमपि संलक्ष्यते। यथा - आनन्दवर्धनेन सुप्तिङ्वचनकारककृत्तद्धितसमासोपसर्गनिपातकालादयो ध्वनेरभिव्यञ्जकाः मताः।[1] कुन्तकेनाऽपि वर्णवक्रतातः प्रबन्धवक्रतापर्यन्तं सर्वत्र वक्रता प्रतिपादिता।

कुन्तको ध्वनेरनेकान् भेदान् वक्रोक्तेर्विशिष्टभेदेषु समादधे। पदपूर्वार्द्धवक्रतायाः भेदो रूढिवैचित्र्यवक्रता वर्तते। तत्र लक्षणामूलोऽर्थान्तरसङ्क्रमितवाच्यध्वनिः समावेश्यते। अथ च पर्यायवक्रतायां शब्दशक्तिमूलानुरणनरूपध्वनेः समावेशो भवति। इति तथ्यं कुन्तकेन स्वयं स्वीक्रियते।[2]

उपचारवक्रतायां ध्वनिकारस्याऽत्यन्ततिरस्कृतवाच्यध्वनिः समाविष्टः। अत्र ध्वनिकारेण प्रस्तुतमुदाहरणमेव कुन्तकेनाऽपि प्रस्तुतम्।[3] उत्तरवर्तिभिराचार्यैः रुय्यकादिभिरुपचारवक्रतादिषु ध्वनेः सर्वेषां भेदानां समावेशः स्वीकृतः।[4] एवं कुन्तकस्य वस्तुवक्रतायां वस्तुध्वनेः वाच्यवक्रतायामलङ्कारध्वनेः प्रबन्धवक्रतायाञ्च प्रबन्धध्वनेः समावेशोऽवगन्तव्यः।

कुन्तकेन प्रतीयमानोऽर्थः सुस्पष्टं स्वीकृतः। काव्यस्य विचित्रमार्गे वाच्यवाचकवृत्त्यतिरिक्तं वाच्यार्थस्य प्रतीयमानत्वं विद्यते।[5] अलङ्कारेष्वपि कुन्तकः प्रतीयमानार्थमङ्गीकरोति। कुन्तकेन प्रोक्तम् -

द्विविधा ह्यलङ्काराः - वाच्याः प्रतीयमानाश्च। प्रतीयमाना अलङ्काराः न वाच्याः। ते व्यङ्ग्येन प्रस्तूयन्ते। रूपकव्यतिरेकनिदर्शनादीपकोपमादयोऽलङ्काराः वाच्यत्वेन सह प्रतीयमान-भावमपि दधति।

ध्वनिवक्रोक्तिसिद्धान्तयोस्तथाभूतेऽपि साम्ये कुन्तको ध्वनिविरोधिष्वाचार्येषु गण्यते। २अत्र मुख्यो हेतुरयमेव यद् ध्वनिकारेण ध्वनितत्त्वं व्यञ्जनावृत्तिप्रतिपाद्यं प्रतीयमानं निरूपितं, परं कुन्तकेन तत् तत्वं विचित्राभिधावृत्तिप्रतिपादितमभिधीयमानं साधितम्।

## ६. वक्रोक्तेः काव्यात्मत्वसमीक्षा

वक्रोक्तिसिद्धान्तं प्रतिष्ठाप्य कुन्तकः काव्यसमीक्षायां नवमेकं मार्गमाविश्चकार। कुन्तकसमये भारतीयसमालोचनाशास्त्रप्रवाहे सम्प्रदायानां विविधानां प्रतिपादनं प्रावर्तत। तत्र

१. सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित्।। ध्वन्यालोक ३.१६

२. एष एव शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यस्य पदध्वनेर्विषयः। वक्रोक्तिजीवित (२.१२) वृत्तिः।

३. गगनं च मत्तमेघं धारालुलितार्जुनानि च वनानि।
निरहङ्कारमृगाङ्का हरन्ति नीला अपि निशाः।। ध्वन्यालोक (२.१) उदाहरणम्

४. उपचारवक्रतादिभिः समस्तो ध्वनिप्रपञ्चः स्वीकृतः। अलङ्कारसर्वस्व

५. प्रतीयमानता यत्र वाक्यार्थस्य निबध्यते।
वाच्यवाचकवृत्तिभ्यामतिरिक्तस्य कस्यचित्।। वक्रोक्तिजीवित १.४०

सम्प्रदाया आसन् - रससम्प्रदायोऽलङ्कारसम्प्रदायो रीतिसम्प्रदायो ध्वनिसम्प्रदायश्च। आनन्दवर्धनेन पूर्ववर्तिनां सर्वेषां सिद्धान्तानामध्ययनं विधाय ध्वनेः साम्राज्यं स्थापितम्। ध्वनिविरोधिनां सर्वेषां मनीषिणामाक्षेपान् समाधायाऽसौ ध्वनिं काव्यस्याऽऽत्मानं प्रत्यापादयत्। आनन्दवर्धनस्य तर्कान् प्रमाणानि, पूर्ववर्तिनाञ्चाऽऽचार्याणां सिद्धान्तान् साङ्गोपाङ्गमधीत्य कुन्तकः प्राचीनकाव्यशास्त्रसाहित्याद् वक्रोक्तिमाविश्चकार। सा वक्रोक्तिस्तेन काव्यस्याऽऽत्मपदे संस्थापिता।

प्रथमं कुन्तकेनाऽलङ्कारवादिनां मतस्य खण्डनं कृतम्। तेन प्रोक्तम् -

शब्दार्थयोर्नाऽलङ्कारयोगेन काव्यत्वम् अपित्वलङ्कृतौ शब्दार्थाविव काव्यम्। एवञ्च काव्येऽलङ्काराणां पृथग् विवेचनं कल्पनाप्रसूतमेव वर्तते। रसवदाद्यलङ्कारेषु नाऽलङ्कारत्वमिति प्रतिपाद्य तेनाऽलङ्कारवादिनः पुनः निराकृताः। सर्वेऽलङ्काराः वक्रोक्त्यन्तर्हिताः भवन्ति।

रससिद्धान्तमाक्षिप्य कुन्तकेन रसस्याऽऽत्मत्वं निराकृतम्। काव्ये रसस्याऽनिवार्यत्वमलङ्कार्यत्वञ्च प्रतिपाद्याऽपि कुन्तकस्तं रसं वक्रोक्तिसम्पादितं मेने। तेन प्रोक्तम् -

**"काव्ये रसो वक्रोक्त्यधीनो भवति।"**

कुन्तकेन रीतयोऽपि वक्रोक्त्यन्तःपातिताः। वामनस्य वैदर्भीरीतिः सुकुमारमार्गो गौडीरीतिर्विचित्रमार्गः पाञ्चालीरीतिश्चः मध्यममार्गोऽस्तीति प्रतिपाद्य तेन रीतीनां सम्बन्धः कविस्वभावेन स्थापितः। काव्ये सर्वे मार्गाः समानः त्वं भजन्ते, न च तत्र किमपि परस्परश्रेष्ठत्वभावकथनस्यौचित्यमिति कुन्तकस्य मतम्। इति प्राचीनाचार्यप्रतिपादितानां रीतीनां समावेशः कुन्तकेन वक्रोक्तिसिद्धान्ते विहितः।

कुन्तकस्य महान् प्रयासोऽयमासीद् यदसौ वक्रोक्तिसिद्धान्ते ध्वनेः समावेशस्य साहसञ्चक्रे। ध्वनेर्विभिन्नभेदाः वक्रोक्तेर्विभिन्नभेदेषु समाविष्टाः भवन्तीति तेन प्रोक्तम्। अतो ध्वन्यपेक्षया वक्रोक्तेर्व्यापकत्वात्तस्य काव्यात्मत्वमुपयुक्ततरमेव।

वक्रोक्तिः काव्यजीवितमिति प्रतिपादयन्नपि कुन्तकः रसाद् ध्वनेरौचित्याच्च पराङ्मुखो नाऽवर्तत। त्रीण्यपि तत्त्वान्येतानि तेन काव्यस्याऽन्तरङ्गत्वेन सम्मतानि। औचित्यस्याऽऽवश्यकतायाः रसस्याऽऽह्लादकतायाः ध्वनेश्च महिम्नः प्रतिपादनं तेन सर्वत्र विहितम्। रसश्चौचित्यञ्च वक्रोक्तेः प्राणा इत्यपि तेन प्रतिपादितम्।

अत्र विचारणीयोऽयं विषयो यद् रसो ध्वनिरौचित्यञ्चाऽपि त्रीणि तत्त्वानि काव्ये महनीयानीति विमृशन्नपि कुन्तको वक्रोक्तिमेव कथं काव्यात्मत्वेन प्रत्यापादयत् ? अत्र कुन्तकः प्राह -

रसध्वन्यौचित्यतत्त्वेभ्यो वक्रोक्तितत्त्वं व्यापकतरं विस्तृततरञ्च वर्तते। वैदग्ध्यभङ्गीभणितिरूपा वक्रोक्तिः सर्वाण्येतानि तत्त्वानि ह्यन्तर्निदधाति। एतेषां काव्ये प्रतिपादनं वक्रोक्त्यैव भवति। रसध्वन्यौचित्यानि वक्रोक्तेरावश्यकमहत्त्वशालीन्यङ्गानि सन्ति, परन्तु

नाऽनिवार्याणि। तानि वक्रोक्तेः सौन्दर्यं वर्धयन्ति, परं तैर्विनाऽपि काव्ये काव्यत्वमवतिष्ठते। परन्तु वक्रोक्तिरहिते काव्ये न काव्यत्वम्। वार्तामात्रमेव तत्। अत एव कुन्तको वक्रोक्तिं काव्यस्याऽऽत्मानं मेने।

काव्यसमीक्षकाणामाचार्याणां द्वौ वर्गौ स्तः। प्रथमो वर्गस्तेषां विद्यते, ये काव्यशरीरं महनीयं मन्वते, शब्दार्थयोः सौन्दर्यञ्च काव्यत्वं गणयन्ति। अलङ्कारवादिनो रीतिवादिनश्चाऽऽचार्यास्तथाविधाः वर्तन्ते। अभिधावादिनश्चाऽपि ते कथ्यन्ते।

द्वितीयो वर्गस्तेषामाचार्याणां वर्तते, ये काव्यस्य बाह्यपक्षापेक्षयाऽन्तरङ्गपक्षं सम्मन्वते। रसध्वनिसिद्धान्तौ तस्य प्रतिपादकौ। आचार्यास्ते व्यञ्जनावादिनो भवन्ति। पूर्वदर्शिनां रीतिवादिनामलङ्कारवादिनाञ्चाऽऽचार्याणामभिमतानां खण्डनं कृत्वाऽऽनन्दवर्धनः काव्ये व्यञ्जनां प्रतिष्ठाप्य व्यङ्ग्यार्थस्य श्रेष्ठत्वं सम्पादितवान्। तेन साधितम् -

प्रतीयमानार्थस्य रमणीयत्वे सत्येव काव्यमुत्तमं भवति, अथ च स एव ध्वनिः।

अभिधावादिना कुन्तकेन प्रोक्तम् -

प्रतीयमानार्थप्रतिपादनाय आचार्येणाऽऽनन्दवर्धनेन व्यञ्जनावृत्तेरनिवार्यत्वं प्रोक्तम्। परं लक्ष्यार्थस्य प्रतीतिरभिधयैव सम्भवति। इयमभिधा न सामान्या या लोकव्यवहारे प्रयुज्यते। इयं लोकव्यवहारभिन्ना विचित्रैवाऽभिधा। वक्रोक्तिविषये डा० नगेन्द्रमहोदयेन विचारः प्रकटीकृतः-

वक्रोक्तिसम्प्रदायस्य प्रादुर्भावः प्रत्युत्तररूपेण समभूत्। काव्यात्मवादिनः प्रति देहवादिनामयमन्तिमो विफलो विद्रोह आसीत्। काव्यस्य येषां सौन्दर्यभेदानामानन्दवर्धनेन ध्वनिमार्गेण आत्मपरकव्याख्या कृता, तेषां सर्वेषां कुन्तकेन स्वाऽपूर्वप्रतिभासामर्थ्येन वक्रोक्तिमार्गेण वस्तुपरकव्याख्या प्रस्तुता। कुन्तकस्य सा चेष्टा वक्रोक्तिर्विद्यते। एवमियं वक्रोक्तिः प्रायशो ध्वनेर्वस्तुगतपरिकल्पनेव प्रतिभाति।[1]

वक्रोक्तेः साङ्गोपाङ्गविवेचनानन्तरमपि कुन्तकस्याऽयं सिद्धान्तो न सर्वमान्यो बभूव। कुन्तकेन सार्द्धमेवाऽयं प्रादुर्बभूव तेन च सार्द्धमेव गतप्राणोऽपि सञ्जातः। कुन्तकानन्तरं ध्वनिवादिभिराचार्यैर्वक्रोक्तिः शब्दालङ्कारमात्रं प्रतिपादिता। तदनन्तरं काव्यशास्त्रग्रन्थेषु वक्रोक्तिः शब्दालङ्काररूपेण सामान्यमेव स्थानं भेजे।

कुन्तकस्योत्तरवर्तिनामाचार्याणां विमर्शने वक्रोक्तिः वचसामेवैकः प्रकारो वर्तते। यद्यपीदं वचनं लोकोत्तरं विलक्षणञ्चाऽस्ति। अस्य सम्बन्धः काव्यस्य बाह्यशरीरस्य शब्दार्थाभ्यां वर्तते। अतो वक्रोक्तिः काव्यशरीरगता न तु तदात्मगता। कुन्तकेन प्रतिपादितेषु वक्रतायाः भेदप्रभेदेषु ध्वनितत्त्वमेव प्रकाशते। कुन्तकस्य वक्रता नूनं ध्वनेः नामान्तरणमेव प्रतिभाति। अतो वक्रोक्तेः पृथक् प्रतिपादनमनावश्यकमेव।

---

१. साहित्यानुशीलन - डा० राकेश गुप्त (१९७२) २०३ पृष्ठादुद्धृतम्

वक्रोक्तिसिद्ध ... ध्वनिवादिभिराचार्यैरमान्ये कृतेऽपि काव्यसमीक्षेतिहासे कुन्तकस्य महत्त्वं न क्षीयते। कुन्तकः काव्यस्य शरीरमात्मानञ्च न पृथग्रूपेणाऽङ्गीचकार। सर्वाणि तत्त्वानि तेन वक्रोक्तावेव समावेशितानि। वर्णतः प्रबन्धरचनापर्यन्तं सर्वाणि काव्याङ्गानि वक्रतायामन्तर्हितानि संलक्ष्यन्ते।

कुन्तकस्य विवेचनं विलक्षणं महत्वशालि वैज्ञानिकञ्च संलक्ष्यते। अतोऽसौ महामान्यानां समीक्षकाणां श्रेण्यां गणनीयो वर्तते। अभिधावादिनोऽपि कुन्तकस्याऽभिधा न सामान्या। विचित्रैवाऽभिधा सा लक्षणां व्यञ्जनाञ्चाऽप्यन्तर्निदधाति। कुन्तकस्य महत्त्वमविज्ञायैवोत्तरवर्तिन आचार्यास्तस्य मूल्याङ्कने न समर्थाः बभूवुः।

वक्रोक्तिजीवितग्रन्थे कुन्तकेन यथा वक्रोक्तितत्त्वं विमृष्टं, वस्तुतस्तु तद् विमर्शनं महनीयं स्तुत्यं विचारयोग्यञ्च वर्तते।

षष्ठोऽध्याय:

# औचित्यसम्प्रदाय:

## १. औचित्यसिद्धान्तस्य प्रवर्तनम्

काव्ये विभिन्नतत्त्वानामौचित्येन विनियोजनमेव सौन्दर्याधायकं भवतीति काव्यशास्त्रिणामभिमतम्। औचित्यव्यवहारयुत एव जनो लोके यथा प्रतिष्ठां लभते, अनौचित्ययुतव्यवहारेण च हास्यास्पदत्वमनादरमप्रतिष्ठां वाऽऽप्नोति, तथैव स्थिति: काव्येष्वपि संलक्ष्यते। काव्ये रसालङ्कारगुणरीत्यादितत्त्वानि तदैव चमत्कारकारीणि रमणीयानि च भवन्ति यदा तेषां विनियोजनमौचित्यपूर्णं भवति। औचित्याभावे कवयो ध्रुवं हास्यास्पदानि निन्दापात्राणि च सञ्जायन्ते। अत: काव्येष्वौचित्यस्य महत्त्वं संलक्ष्य क्षेमेन्द्रेण प्रोक्तम् -

अलङ्कारास्त्वलङ्कारा: गुणाश्च गुणा: सन्ति। परन्तु रससिद्धकाव्यस्य जीवितमौचित्यमेव।[1] अलङ्कारास्तदैवाऽलङ्कारा: भवन्ति, यदा तेऽनौचित्येन विच्युता: भवन्ति।[2]

आचार्यस्य क्षेमचन्द्रस्याभिमतं वर्तते यदौचित्यं काव्यस्य प्रत्यङ्गं भवितव्यम्। काव्ये यत्रौचित्यस्याऽभावो भवति, तत्रैव रसभङ्गो भवति। अथ चाऽचारुत्वमरुचिश्चोपजायते। सौन्दर्यमौचित्यमेवाऽऽश्रयते। यदि काचित् कामिनी कण्ठे मेखलां, नितम्बयोर्हारं, करयोर्नूपुरे, चरणयोश्च केयूरे परिदधाति, कस्य जनस्य सोपहासास्पदतां, न गमिष्यति ? तथैव यदि कश्चिद् वीरपुरुषो विनम्रशरणागतेषु वीरतां प्रदर्शयति शत्रुषु च करुणां करोति, कस्तं नोपहसिष्यति ? इयमेव स्थिति: काव्येषु वर्तते। अतस्तत्रौचित्याभावे न गुणा: नाऽलङ्कारा रमणीयतां रोचकताञ्चाऽऽवहन्ति।[3] न केवलमलङ्कारेषु गुणेषु चैवंविधा स्थितिरस्ति, रसेष्वपि तथैव स्थिति:। काव्ये रसास्तदैव रमणीयतां भजन्ते, यदा तेषां विन्यास औचित्यपूर्णो भवति।

काव्यस्य प्रत्यङ्गं व्याप्नोतीति हेतो: क्षेमेन्द्रेणौचित्यतत्त्वं काव्यस्याऽऽत्मेति व्यवस्थापितम्। "औचित्यं काव्यजीवित" मिति कथनस्याऽभिप्रायोऽयमेव यद् रसेषु रसत्वमलङ्कारेष्वलङ्कारत्वं

---

१. अलङ्कारास्त्वलङ्कारा: गुणा एव गुणा: सदा।
   औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्। औचित्यविचारचर्चा - ५

२. उचितस्थानविन्यासादलङ्कृतिरलङ्कृति:।
   औचित्यादच्युता: नित्यं भवन्त्येव गुणा: गुणा:।। औचित्यविचारचर्चा - ६

३. कण्ठे मेखलया नितम्बफलके तारेण हारेण वा
   पाणौ नूपुरबन्धनेन चरणे केयूरपाशेन वा।
   शौर्येण प्रणते रिपौ करुणया नायान्ति के हास्यताम्
   औचित्येन विना रुचिं प्रतनुते नालङ्कृतिर्नो गुण:।। औचित्यविचारचर्चा (६) व्याख्या

गुणेषु गुणत्वं रीतिषु च रीतित्वं तदैव भवति, यदा तेषां संविधानमौचित्ययुतं भवति। औचित्याभावे तत्त्वान्येतानि विरसत्वमेवाऽऽवहन्ति। तदा काव्ये काव्यत्वं न संलक्ष्यते।

औचित्यं काव्यस्य प्रत्यङ्गं व्याप्नोतीति न केनाचिदाचार्येण विमतिरसहमतिर्वा प्रकटिता। औचित्यस्य व्यापकतायाः प्रदर्शनं महामहोपाध्यायेन कुप्पुस्वामिना शास्त्रिणा निम्नचित्रेण प्रदर्शितम्[1] -

**औचितीमनुधावन्ति सर्वे ध्वनिरसोन्नयाः।**
**गुणालङ्कृतिरीतीनां नयाश्चानृजुवाङ्मयाः।**

### २. औचित्यस्यैतिहासिको विकासक्रमः

यद्यप्यौचित्यतत्त्वस्य काव्यात्मरूपेण प्रतिष्ठा क्षेमेन्द्रेणैव प्रतिपादिता, तथापि काव्येष्वेतस्य तत्त्वस्य महत्त्वमनिवार्यत्वञ्च प्राचीनाचार्या अपि जानन्ति स्म। औचित्यस्यैतिहासिक-विकासक्रमस्याऽवबोधनाय प्राचीनकाव्यशास्त्रकृतामाचार्याणामप्यभिमतान्यवलोकनीयानि, कथं ते काव्येष्वौचित्यतत्त्वस्याऽनिवार्यत्वं जगदुः।

काव्येष्वौचित्यस्याऽनिवार्यत्वप्रतिपादनं प्रत्यक्षमप्रत्यक्षं वा सर्वैरेवाऽऽचार्यैर्विहितम्। नाट्यशास्त्रप्रणेत्रा भरतेन प्रोक्तम् -

नाट्याभिनये लोकसिद्धानामेव धर्माणां ग्रहणं कर्तव्यम्।[2] प्रकृतिस्वभावानामनेकत्वात्तेषाञ्च नाट्ये प्रतिष्ठितत्वान्नाट्ये तेषां प्रयोगो लोकप्रामाण्येनैव कर्तव्यः।[3]

---

१. हाइवेज एण्ड वाइवेज आफ लिटरेरी क्रिटिसिज्म इन संस्कृत पृ० २७

२. लोकसिद्धं भवेत् सिद्धं नाट्यं लोकस्वभावजम्।
तस्मान्नाट्यप्रयोगेषु प्रमाणं लोक इष्यते। भरतनाट्यशास्त्र २६.११३

३. नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम्।
तस्माल्लोकप्रमाणं हि कर्तव्यं नाट्ययोक्तृभिः।। भरतनाट्यशास्त्र २६.११९

भरतप्रणीतनाट्यशास्त्रे यद्यप्यौचित्यपदव्यवहारो नोपलभ्यते, तथापि नाट्याभिनयाय भरतमुनिप्रोक्तेषु निर्देशेषु क्रियात्मकमहत्त्वमौचित्यस्य नाट्यशास्त्रकृद्भिराचार्यैः सुदृढं प्रतिपादितम्। भरतेन प्रोक्तम् -

नाट्यभिनये पात्राणां वेशभूषादिकं तत्तद्देशवयोऽनुरूपं कर्तव्यम्। देशाननुरूपं वेशभूषादिकं न शोभाधायकं वर्तते, यथा वक्षसि मणिबन्धे च मेखलाधारणमुपहासायैव भवति।[1] अभिनये वेशभूषा वयोऽनुरूपा कार्या, गतिक्रियाः वेशानुरूपाः साधनीयाः, संवादादयो गतिप्रचारानुरूपाः कार्या अभिनयाश्च संवादानुरूपाः प्रयोजनीयाः।[2]

भरतस्य तथाविधेषु सूत्रेष्वसत्यप्यौचित्यपदप्रयोगे औचित्यस्योद्भावना ध्रुवं वर्तते। एतदेव गृहीत्वोत्तरवर्तिभिराचार्यैः काव्येष्वौचित्यस्याऽनिवार्यत्वं प्रतिपादितम्।

भामहेनोक्तम् -

काव्येष्वौचित्यं महत्तमो गुणः। अनौचित्यमेव सुमहान् दोषः।

दोषान् विचारयन्नसौ विममर्श -

दुष्टोक्तिरपि सन्निवेशवैशिष्ट्येन तथैव शोभां जनयति, यथा स्रग्मध्यग्रथितं नीलपलाशमपि शोभामावहति।[3] यथा कामिनीलोचनगतं कृष्णकज्जलमपि शोभावर्धकं भवति, तथैवाश्रयसौन्दर्येणाऽसाध्वपि वस्तु शोभामादधाति।[4] पुनरुक्तं यद्यपि दोषस्तथापि भयशोकासूयाहर्षविस्मयादिभावाभिव्यक्तिषु न दोषत्वं वहति।[5] अभिज्ञानशाकुन्तलनाटके "न खलु न खलु बाण'' इति पद्ये पुनरुक्तिः सौन्दर्यमेव वर्धयति।

गुणदोषविधानेऽनौचित्यौचित्यकारणत्वं दण्डिनाऽपि प्रतिपादितम्। तेन प्रोक्तम् -

समुदायार्थशून्यवाक्येषु अपार्थो दोषो भवति, परन्तु उन्मत्तमत्तबालकानामालापेषु नाऽसौ दोषो विचारणीयः।[6] परस्परविरुद्धार्थप्रकाशनवाक्ये विरुद्धार्थदोषो लक्ष्यते, परन्तु कस्यचिद्

---

१. अदेशजो हि वेशस्तु न शोभां जनयिष्यति।
मेखलोरसि बन्धे च हास्यायैवोपजायते।। भरतनाट्यशास्त्र २३.६९-७०

२. वयोऽनुरूपः प्रथमस्तु वेशो वेशानुरूपस्तु गतिप्रचारः।
गतिप्रचारानुगतं च पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः।। भरतनाट्यशास्त्र १४.६८

३. सन्निविशेषविशेषात्तु दुरुक्तमपि शोभते।
नीलपलाशमाबद्धमन्तराले स्रजामिव।। भामह-काव्यालङ्कार १.५४

४. किञ्चिदाश्रयसौन्दर्याद् धत्ते शोभामसाध्वपि।
कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम्।। भामह - काव्यालङ्कार १.५५

५. भयशोकाभ्यसूयासु हर्षविस्मययोरपि।
यथाह गच्छ गच्छेति पुनरुक्तं न तद् विदुः।। भामह - काव्यालङ्कार ४.१४

६. समुदायार्थशून्यं यत् तदपार्थमितीष्यते।
उन्मत्तमत्तबालानामुक्तेरन्यत्र दुष्यति। काव्यादर्श ३.१२८

वस्तुनोऽतितरामासक्तिप्रसङ्गेऽसौ गुण एव।[१] देशकालकलालोकन्यायागमविरुद्धकथनं दण्डिना विरोधदोषः प्रोक्तः। परन्तु विशेषासु परिस्थितिषु स विरोधोऽपि गुणो जायते।[२]

दण्डिभामहयोर्वचसामयमेवाऽभिप्रायः यद् गुणाः स्वयं न गुणाः दोषाश्च स्वयं न दोषाः। परन्त्वौचित्यस्य विधाने गुणाः गुणाः भवन्ति। अथ चाऽनौचित्ये सति दोषेषु दोषत्वमुपलक्ष्यते। मुनिचन्दोऽप्याह -

एकस्मिन्नेवौचित्ये सति गुणानां राशयो भवन्ति, अनौचित्ये च सति सर्वगुणसमूहो विषतुल्यः प्रतीयते।[३]

आचार्या अलङ्कारवादिनः काव्यरचनास्वौचित्यस्य माहात्म्यं प्रतिपादयन्ति। अनुप्रासाऽलङ्कारस्याऽऽधारस्तैरौचित्यमेव स्वीकृतः।[४] यमकालङ्कारप्रयोगेऽपि तैरौचित्यमेवाङ्गीकृतम्। यमकालङ्कारप्रयोगं स एव कविः कर्तुं क्षमते, यो ह्यौचित्याभिज्ञः।[५]

दोषान् समीक्षमाणो रुद्रटो जगाद -

दोषा अनौचित्येनैव भवन्ति। देशकुलजातिविद्याधनवयःस्थानपात्राणां व्यवहाराकारवेशवचनेष्वनौचित्यमेव ग्राम्यत्वदोषः।[६] परन्तु विशेषावस्थास्वस्य ग्राम्यत्वदोषस्याऽपहारपूर्वकं गुणो जायते।[७]

---

१. अस्ति काचिदवस्था सा साभिषङ्गस्य चेतसः।
यस्यां भवेदभिमता विरुद्धार्थाऽपि भारती।। काव्यादर्श ३.१३३

२. विरोधः सकलोऽप्येषः कदाचित् कविकौशलात्।
उत्क्रम्य दोषगणनां गुणवीथीं विगाहते।। काव्यादर्श ३.१७९

३. औचित्यमेकमेकत्र गुणानां राशिरेकतः।
विषायते गुणग्राम औचित्यपरिवर्जितः।। धर्मबिन्दु टीका पृ० २९

४. एताः प्रयत्नादधिगम्य सम्यगौचित्यमालोच्य तथार्थसंस्थाम्।
मिश्राः कवीन्द्रैरघनाल्पदीर्घाः कार्याः मुहुश्चैव गृहीतमुक्ताः।। रुद्रट - काव्यालङ्कार २.३२

५. इति यमकविशेषं सम्यगालोचयद्भिः
सुकविभिरभियुक्तैर्वस्तु चौचित्यविद्भिः।
सुविहितपदभङ्गं सुप्रसिद्धाभिधानं
तदनु विरचनीयं सर्गबन्धेषु भूम्ना।। रुद्रट - काव्यालङ्कार ३.५९

६. ग्राम्यत्वमनौचित्यव्यवहाराकारवेशवचनानाम्।
देशकुलजातिविद्यावित्तवयःस्थानपात्रेषु।। रुद्रट - काव्यालङ्कार ११.९

७. अर्थविशेषवशाद्वा सभ्येऽपि तथा क्वचिद् विभक्तेर्वा।
अनुचितभावं मुञ्चति तथाविधं तत्पदं सदपि।। रुद्रट - काव्यालङ्कार ६.२३

ध्वनिकारः काव्येष्वनौचित्यस्य महिमानं प्रोवाच। अलङ्कारगुणरसादीनां सर्वेषां विनियोजने ह्यौचित्यं तेन प्रतिपादितम्। क्षेमेन्द्रेण ह्यौचित्यसिद्धान्तप्रतिपादने ध्वनिकारादेव प्रेरणा गृहीता। अथ चाऽसावौचित्यविचारचर्चाग्रन्थे सिद्धान्तमेनं प्रस्फुटीचकार।

रसौचित्यमेवोपलक्ष्य काव्येष्वलङ्काराणां विनियोजनं कर्तव्यम्। रसानामलङ्कार्यत्वाद् रसादितात्पर्येण विनियोजिता अलङ्कारा अलङ्कारत्वमुद्वहन्ति।[१] आनन्दवर्धनेनाऽलङ्काराणामौचित्यपूर्णसन्निवेशमहत्त्वं ध्वन्यालोके सुस्पष्टं प्रतिपादितम्।[२] काव्येष्वलङ्कारनियोजननियमानां निर्धारणं कृत्वा ध्वनिकारेण सुस्पष्टं ते ध्वन्यालोके प्रकाशिताः।[३]

आनन्दवर्धनोऽलङ्कारैः सह गुणरीतिवृत्तिसंघटनाप्रबन्धरसानां सन्नियोजनेऽप्यौचित्यं विमृष्टवान्। गुणानां सम्बन्धो रसैः सह वर्तते। गुणाः रसधर्मा एव। अतो वर्णानां शब्दानाञ्च विनियोजनं तथा कर्तव्यं यथा प्रकृतगुणैः रसैश्च सह तेषां समन्वयो भवेत्।

वृत्तिविषये ह्यानन्दवर्धनेनोक्तम् -

रसाद्यनुकूलशब्दवर्णानामौचित्यव्यवहार एव द्विविधा वृत्तयः।[४] अनौचित्येन नियोजिता एताः वृत्तयो वा रीतयो वा रसभङ्गहेतवो भवन्ति।[५] रीतीनां नियमनं रसवक्तृवाच्यविषयौचित्येन भवति। माधुर्यादीन् गुणानाश्रित्य तिष्ठन्ती त्रिविधा संघटना रसानभिव्यनक्ति। वक्तृवाच्यौचित्येन सा नियम्यते।[६]

---

१. रसभावादितात्पर्यमाश्रित्य विनियोजनम्।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम्।। ध्वन्यालोक - ३.६

२. रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः।। ध्वन्यालोक २.१६

३. ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः।
रूपकादिरलङ्कारवर्ग एति यथार्थताम्।।
विवक्षा तत्परत्वेन नाऽङ्गित्वेन कदाचन।
काले च ग्रहणत्यागौ नातिनिर्वहणैषिता।।
निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्।
रूपकादिरलङ्कारवर्गस्याङ्गत्वसाधनम्।। ध्वन्यालोक २.१७-१९

४. रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः।
औचित्यवान् यस्ता एता वृत्तयो द्विविधा स्थिताः।। ध्वन्यालोक ३.३३

५. यदि वा वृत्तीनां भरतप्रसिद्धानां कैशिक्यादीनां काव्यालङ्कारान्तरप्रसिद्धानामुपनागरिकाद्यानां यदनौचित्यं तदपि रसभङ्गहेतुः। ध्वन्यालोक (३.३३) वृत्तिः

६. गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा।
रसांस्तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः।। ध्वन्यालोक ३.६

आनन्दवर्धनेन प्रबन्धौचित्यस्याऽप्यनिवार्यत्वं निरूपितम्। प्रबन्धकाव्ये कथाशरीरं द्विविधं भवति - वृत्तमुत्प्रेक्षितञ्च। सर्वत्रैवौचित्यमनिवार्यम्। कथाशरीरं विभावभावानुभावस्थायिभावानुसार्यौचित्येन कविना रमणीयं कार्यम्। रसप्रतिकूलस्थितावननुकूलां स्थितिमुत्सृज्य कथायां रसानुकूला नवकल्पना कार्या।[१]

काव्ये रसध्वनिर्महनीयतम इत्यानन्दवर्धनो रसौचित्यं सविशेषं विवेचयामास। अलङ्कारगुणरीतिसंघटनाप्रबन्धानां सर्वेषां काव्याङ्गानां नियोजनं रसौचित्येन विधीयते। रसनिबन्धनौचित्येनैव रचना शोभावहा भवति।[२] रसानुकूलानां वाच्यवाचकानां विनियोजनमेव कवेः मुख्यं कर्म।[३]

आनन्दवर्धनोऽलङ्कारगुणरीत्यादीनां नियोजनमपि रसौचित्येन निर्दिदेश। अथ च रसयोजनेऽप्यौचित्यस्य संविधानं चक्रे। अनौचित्यादृते रसभङ्गस्याऽन्यत् कारणं न विद्यते। प्रसिद्धौचित्यस्य बन्धो रसस्य परा उपनिषद् विद्यते।[४]

आनन्दवर्धनानन्तरमभिनवगुप्तेनाऽपि काव्येऽनिवार्यत्वमौचित्यस्य समर्थितम्। तेन प्रोक्तम् -

अलङ्कार्यं रसं येऽलङ्कुर्वन्ति सुशोभयन्ति त एवाऽलङ्कारा औचित्येनाऽवतिष्ठन्ति। निश्चेतनं मृतशरीरं कनककुण्डलादयो नाऽलङ्कुर्वन्ति, संन्यासिनो वपुषि च चामीकरालङ्काराः हास्यास्पदतामेवोपयान्ति।[५] अथ च तेन स्पष्टीकृतम् -

रसध्वनेरौचित्येन सह नित्यसम्बन्धः, औचित्यञ्च रसध्वनेर्जीवितमिति।[६]

---

१. विभावभावानुभावसञ्चार्यौचित्यचारुणः।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य च।।
इतिवृत्तवशायातां त्यक्त्वाऽननुगुणां स्थितिम्।
उत्प्रेक्षाऽप्यन्तराभीष्टरसोचितकथोन्नयः।। ध्वन्यालोक ३.१०-११

२. रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता।
रचना विषयापेक्षं तत्तु किञ्चिद् विभेदवत्।। ध्वन्यालोक ३.९

३. वाच्यानां वाचकानाञ्च यदौचित्येन बन्धनम्।
रसादिविषयेणैतन्मुख्यं कर्म महाकवेः।। ध्वन्यालोक ३.३२

४. अनौचित्यादृते नाऽन्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा।। ध्वन्यालोक (३.१४) वृत्तिः

५. तथाहि अचेतनं शरीरं कटकादियुक्तं हास्यावहं भवति, अलङ्कार्यस्याऽभावात्। यतिशरीरं कटकादियुक्तं हास्यावहं भवति अलङ्कार्यस्यानौचित्यात्।

६. उचितशब्देन रसविषयमौचित्यं भवतीति दर्शयन् रसध्वनेर्जीवितत्वं सूचयति। तदभावे हि किमपेक्षया इदमौचित्यं नाम सर्वत्रोद्घोष्यत इति भावः। ध्वन्यालोक (३.६) लोचनटीका

अथाऽभिनवगुप्तस्य शिष्येण क्षेमेन्द्रेणाऽऽनन्दवर्धनाभिनवगुप्ताभ्यां निरूपितमौचित्यमेव काव्यजीवितं मत्वा सिद्धान्तस्यौचित्यस्य यथा समर्थनं कृतं, तदग्रे कथयिष्यते।

भोजराजः सरस्वतीकण्ठाभरणे शृङ्गारप्रकाशे च काव्येष्वौचित्यस्योपयोगित्वं प्रत्यापादयत्। औचित्यसिद्धान्तस्य प्राधान्यं प्रतिपाद्याऽपि तस्यानिवार्यता तेन गौणत्वेन निरूपिता। गुणदोषाणालङ्काराणां समीक्षाप्रसङ्गे तेषां काव्यसौन्दर्यनिर्धारणे भोजराज औचित्यं युक्तियुक्तममनुत। काव्येषु नाटकेषु च प्रकृत्यनुरूपपदानामव्यवहरणमेव अपददोषः।[1] रसस्यानौचित्यमेव हि विरसदोषः।[2]

अथ च देशविरोधकालविरोधलोकविरोधानुमानविरोधादयो दोषाः विरुद्धदोषस्यैव भेदाः। ते चाऽनौचित्यमाश्रयन्ते।

भोजो भाविकगुणमकल्पयत्। अयमपि गुणो ह्यौचित्यमाश्रयते। भोजेन प्रोक्तम् -

विषयवक्तृकालदेशौचित्यानुरूपमेव भाषा कविना प्रयोज्या। यज्ञावसरेषु संस्कृतभाषा न्याय्या, स्त्रीभिः प्राकृतभाषा प्रयोज्या। कुलीनजनैः सङ्कीर्णभाषाप्रयोगोऽनुचितः। मूर्खाणामवबोधनाय संस्कृतभाषाप्रयोगो हास्यायैव भवति।[3] एवञ्च विषयाद्यौचित्येन भाषाप्रयोगविधानं भोजराजेन निर्दिष्टम्।

काव्येषु गद्यस्य, पद्यस्य, गद्यपद्यमिश्रस्य च प्रयोगः कुत्र कर्तव्य इत्यौचित्यमपि भोजराजो निर्दिदेश।[4] भोजेन प्रोक्तम् -

प्रबन्धकाव्ये रसालङ्कारादिविनियोजनमौचित्याश्रयेणैव भाव्यम्।[5] दोषपरिहारोऽपि ह्यौचित्यमाश्रयति।[6]

वक्रोक्तिजीवितग्रन्थे वक्रोक्तिं काव्यजीवितं प्रतिपादयन्नपि कुन्तकोऽनिवार्यतामौचित्यस्य प्रतिपादयामास। काव्येषु गुणवर्गो द्विविधः - औचित्यञ्च सौभाग्यञ्च। अथ चौचित्यमत्राऽनिवार्यम्। कुन्तककृतमौचित्यलक्षणं वर्तते -

---

१. विभिन्नप्रकृतिस्थादिपदयुक्त्यपदं विदुः। सरस्वतीकण्ठाभरण १.२४

२. सरस्वतीकण्ठाभरण १.४५

३. न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाऽप्राकृतं वदेत्।
सङ्कीर्णं नाऽभिजात्येषु नाऽप्रबुद्धेषु संस्कृतम्।। सरस्वतीकण्ठाभरण २.८

४. गद्यं पद्यञ्च मिश्रञ्च काव्यं यत् सा गतिः स्मृता।
अर्थौचित्यादिभिः साऽपि वागलङ्कार इष्यते।। सरस्वतीकण्ठाभरण २.१८

५. वाक्यवच्च प्रबन्धेषु रसालङ्कारसङ्करान्।
निवेशयन्त्यनौचित्यपरिहारेण सूरयः।। सरस्वतीकण्ठाभरण ५.१२६

६. विरोधः सकलोऽप्येषः कदाचित् कविकौशलात्।
उत्क्रम्य दोषगणनां गुणवीथीं विगाहते।। सरस्वतीकण्ठाभरण १.४७

वस्तुस्वभावस्पष्टवर्णनं यथानुरूपकथनमेवौचित्यगुणः। अत्र स्वभावमहत्त्वं पोष्यते।[१] वक्तुः श्रोतुर्वाऽतिरमणीयस्वभावेन वाच्यवस्तुनः सर्वथाऽऽच्छादनमप्यौचित्यगुणः।[२]

विविधवक्रताभेदान् प्रतिपादयन् कुन्तक औचित्यमेव तदाधारत्वेनाऽकल्पयत्। वर्णविन्यासवक्रतायां वृत्त्यौचित्यं रीत्यौचित्यमलङ्कारौचित्यञ्च तेन समर्थितम्।[३] एवञ्च प्रत्यय-वक्रतालिङ्गवक्रतादिष्वप्यौचित्यस्याऽनिवार्यत्वं वर्तत एव।[४]

वक्रतायाः भेदान् प्रतिपादयन् कुन्तक एवमपि प्रोवाच-

रसवस्त्वादिष्वनौचित्यपरित्यागः कार्यः। पुनः औचित्यवक्रतायाः विविधभेदान् प्रदर्शयन् कुन्तक उवाच-

वस्त्वादिष्वनौचित्यपरित्यागः कार्य औचित्यञ्च सम्पादनीयम्। केषुचित् प्रसङ्गेष्वसौ वक्रत्वौचित्ययोः भेदमपि प्राकटत्। काव्ये शब्दवैशिष्ट्यमर्थवैशिष्ट्यञ्चाऽसौ शब्दसामर्थ्यमर्थ-सामर्थ्यञ्चाऽभिधत्ते। इमे एव पदौचित्यार्थौचित्ये वर्तेते। अत्रैव प्रकृत्यौचित्यस्याऽपि समावेशो भवति।

काव्यसमीक्षायाः विभिन्नसिद्धान्तान् विमृशन् महिमभट्टः काव्येष्वौचित्यमनिवार्यमूचे। तेन प्रोक्तम् -

काव्यस्वभावनिरूपणं याथार्थ्येन सिद्धत्वादौचित्यस्य पृथग्रूपेण निरूपणं व्यर्थमेव। विभावादिनिबन्धनमेव कवेर्व्यापारो नान्यत् किञ्चित्। रसादीनामभिव्यक्तिः शास्त्रानुसारं निबद्धैर्विभावादिभिर्भवति, नाऽन्येन प्रकारेण। अतः काव्यस्याऽऽत्मभूते रसे कथमनौचित्यस्य स्पर्शोऽपि सम्भवति। अतस्तदनौचित्यनिराकरणाय पण्डिताः काव्यस्य विभिन्नलक्षणानि प्रस्तुवन्ति, तत्सर्वमालोचनं व्यर्थमेव।[५]

इत्थं महिमभट्टो रसानामनौचित्यं काव्यस्य सर्वातिशायिनं दोषं जगाद।[६] दोषोऽयं द्विविधो भवति - अन्तरङ्गो बहिरङ्गो वा। शब्दविषयको दोषो बहिरङ्गो भवति, अर्थविषय-कश्चाऽन्तरङ्गः।[७] अन्तरङ्गबहिरङ्गदोषाभ्यामेव महिमभट्टेन विविधकाव्यदोषाः कल्पिताः।

दशरूपके धनञ्जयेनौचित्यस्याऽऽवश्यकता सङ्केतिता। तेन प्रोक्तम् -

---

१. आञ्जसेन स्वभावस्य महत्त्वं येन पोष्यते।
प्रकारेण तदौचित्यमुचिताख्यानजीवितम्।। वक्रोक्तिजीवित १.५३

२. यत्र वक्तुः प्रमातुर्वा वाच्यं शोभातिशायिनः।
आच्छाद्यते स्वभावेन तदप्यौचित्यमुच्यते।। वक्रोक्तिजीवित १.५४

३. वृत्त्यौचित्यं मनोहारिरसानां परिपोषणम्। वक्रोक्तिजीवित २.१९

४. वक्रोक्तिजीवित २.१०, २१, २२,२३, २५, २६,३१

५. व्यक्तिविवेक पृ० १२६

६. एतस्य (अनौचित्यस्य) विवक्षितरसादिप्रतीतिविघ्नविधायित्वं नाम सामान्यलक्षणम्।
व्यक्तिविवेक पृ० १५२

७. व्यक्तिविवेक पृ० १४९-१५१

नाटके नायकस्य रसस्य वा यद्विरुद्धमनुचितं वा तस्य परित्याग: कार्य: । अन्यथा वा प्रकल्पनीयम् ।[1]

उत्तरवर्तिनो ध्वनिवादिन आचार्या: काव्येष्वौचित्यं महनीयं गुणममन्वत । काव्योत्कर्षा-धानाय रसगुणरीत्यादिविनियोजने ह्यौचित्यं परमावश्यकम् । सर्वेषां काव्याङ्गानां समावेशो रसौचित्येनैव विधीयते । रसाद्यौचित्यविधानमेव कवित्वस्य प्रथमं सोपानम् । रसदोषान् विमृशन् मम्मट: प्रोवाच -

दोषा ह्येतास्तदैव जायन्ते यदा रससंविधानमनौचित्ययुतं भवति । औचित्यमेव रसस्य परोपनिषत् । परन्तु ध्वनिवादिन आचार्या: काव्येष्वौचित्यस्याऽनिवार्यतां प्रतिपाद्याऽपि तत्प्रतिपादनं रसस्याऽङ्गरूपेणाऽऽमनन्ति ।

## ३. औचित्यस्याऽऽत्मत्वप्रतिपादनम्

आचार्य: क्षेमेन्द्रो ह्यौचित्यसिद्धान्तं प्रतिपाद्यैतत् तत्त्वं काव्यस्याऽऽत्मानं जगाद । ध्वनिप्रतिष्ठापकस्याऽऽनन्दवर्धनस्य कृतिर्ध्वन्यालोकोऽभिनवगुप्तेन व्याख्यात: । तस्याऽभिनवगुप्तस्य शिष्योऽवर्तत क्षेमेन्द्र: । अत: स्वाभाविकरूपेणाऽसौ ध्वन्यालोकेन प्रभावितो बभूव । ध्वन्यालोके यदौचित्यमानन्दवर्धनेन रसमुपलक्ष्याऽनिवार्यत्वेन प्रतिपादितं, तदेवौचित्यं क्षेमेन्द्रेण काव्यस्याऽऽत्मत्वेन प्रतिपादितम् ।

क्षेमेन्द्रो भगवतो विष्णोर्माध्यमेनौचित्यप्रतिष्ठामकरोत् । भगवान् विष्णुरेवौचित्यस्य परम: प्रतिष्ठाता ।[2] काव्यगतौचित्यस्य विमर्शनायैव क्षेमेन्द्रो ह्यौचित्यविचारचर्चाऽभिधानं ग्रन्थं प्रणीतवान् ।[3]

## ४. क्षेमेन्द्रकृतमौचित्यलक्षणम्

क्षेमेन्द्रेण प्रतिपादितमौचित्यलक्षणं विद्यते -

यद् वस्तु यस्याऽनुरूपमस्ति, तदेवाऽऽचार्यैरुचितमुच्यते । उचितस्य च भाव औचित्यमिति कथ्यते ।[4] औचित्यमिदं न केवलं काव्ये, लोकेऽपि सर्वत्र व्याप्तं लक्ष्यते । काव्यगतस्यौचित्यस्य निम्नाङ्कितानि वैशिष्ट्यानि सन्ति -

---

१. यत्तत्राऽनुचितं किञ्चिन्नायकस्य रसस्य वा।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत्।। दशकरूपक ३.२४-२५

२. अच्युताय नमस्तस्मै परमौचित्यकारिणे। औचित्यविचारचर्चा - १

३. औचित्यस्य चमत्कारकारिणश्चारुचर्वणे।
रसजीवितभूतस्य विचारं कुरुतेऽधुना।। औचित्यविचारचर्चा - ३

४. उचितं प्राहुराचार्या: सदृशं किल तस्य यत्।
उचितस्य च यो भावस्तदौचित्यं प्रचक्षते।। औचित्यविचारचर्चा - ७

(i) काव्येष्विदमौचित्यं चमत्कारमातनोति ।

(ii) काव्येष्वनेनाऽऽस्वाद्यता समुत्पाद्यते ।

(iii) काव्यस्याऽयं जीवितभूतमेव ।

क्षेमेन्द्रस्य मन्तव्यमिदं यदौचित्यमेव काव्यस्य प्राणभूतं तत्त्वमस्ति । काव्यजीवितभूतौचित्य-विरहिते काव्ये गुणालङ्काराणां विनियोजनं व्यर्थमेव ।[१] अलङ्कारास्त्वलङ्कारास्ते बाह्योपकरणानि वर्तन्ते काव्यस्य । अन्तरङ्गतत्त्वभूता अपि गुणाः गुणा एव, न तु प्राणप्रतिष्ठातारः । परन्तु रससन्निविष्टं काव्यस्य स्थिरजीवितमौचित्यमेव वर्तते ।[२] यथास्थानं विन्य-स्तेष्वेवालङ्कारेष्वलङ्कारत्वं भवति । औचित्यसीमासु निबद्धा एव गुणाः गुणत्वमावहन्ति ।[३] एवं क्षेमेन्द्रः काव्यस्य जीवितमौचित्यमेव प्रत्यापादयत् ।

## ५. औचित्यस्य भेदाः

औचित्यं काव्ये प्रत्यङ्गं सन्निविष्टं भवति । अतः क्षेमेन्द्रेण प्रोक्तम् -

औचित्यस्याऽनन्तभेदाः भवन्ति, न च ते संख्यातुं गण्यन्ते । तथापि केषाञ्चिद् भेदानां गणना क्रियते ।

अतः क्षेमेन्द्रेणौचित्यभेदानां गणना कृता, उदाहरणानि च प्रस्तुतानि । तदनन्तरं तेन प्रोक्तम् - शेषास्तु स्वयं सहृदयैः कल्पनीयाः[४]

औचित्यविचारचर्चाग्रन्थे क्षेमेन्द्रेणौचित्यस्य सप्तविंशतिभेदाः विमृष्टाः -[५]

---

१. काव्यस्याऽयमलङ्कारैः किं मिथ्यागणितैर्गुणैः ।
यस्य जीवितमौचित्यं विचिन्त्याऽपि न दृश्यते ।। औचित्यविचारचर्चा - ४

२. अलङ्कारास्त्वलङ्काराः गुणा एव गुणाः सदा ।
औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् ।। औचित्यविचारचर्चा - ५

३. उचितस्थानविन्यासादलङ्कृतिरलङ्कृतिः ।
औचित्याद् विच्युता नित्यं भवन्त्येव गुणाः गुणाः ।। औचित्यविचारचर्चा - ६

४. अन्येषु काव्याङ्गेष्वनयैव दिशा स्वयमौचित्यमुत्प्रेक्षणीयम् । तदुदाहरणान्यानन्त्यान्न प्रदर्शितानीत्यलमतिप्रसङ्गेन । औचित्यविचारचर्चा (३९) वृत्तिः

५. पदे वाक्ये प्रबन्धार्थे गुणेऽलङ्करणे रसे ।
क्रियायां कारके लिङ्गे वचने च विशेषणे ।।
उपसर्गे निपाते च काले देशे कुले व्रते ।
तत्त्वे सत्त्वेऽप्यभिप्राये स्वभावे सारसङ्ग्रहे ।।
प्रतिभायामवस्थायां विचारे नाम्न्यथाशिषि ।
काव्याङ्गेषु च प्राहुरौचित्यं व्यापि जीवितम् ।। औचित्यविचारचर्चा - ८-१०

(१) पदम् (२) वाक्यम् (३) प्रबन्धः (४) गुणः (५) अलङ्कारः (६) रसः (७) क्रिया (८) कारकम् (९) लिङ्गम् (१०) वचनम् (११) विशेषणम् (१२) उपसर्गः (१३) निपातः (१४) कालः (१५) देशः (१६) कुलम् (१७) व्रतम् (१८) तत्त्वम् (१९) सत्त्वम् (२०) अभिप्रायः (२१) स्वभावः (२२) सारसङ्ग्रहः (२३) प्रतिभा (२४) अवस्था (२५) विचारः (२६) नाम (२७) आशीः ।

इत्थं काव्यस्य प्रत्यङ्गं व्याप्तत्वादौचित्यस्याऽस्याऽनेकभेदाः सम्भवन्ति । क्षेमेन्द्रेण मुख्याः सप्तविंशतिभेदाः परिगणिताः । शेषास्तु समीक्षकैः स्वयमेव कल्पनीयाः ।

### ६. औचित्यस्य काव्यस्याऽन्यतत्त्वै सह सम्बन्धः

सर्वेष्वन्येषु काव्यतत्त्वेष्वौचित्यं व्याप्तमिति क्षेमेन्द्रस्तत् काव्यस्याऽऽत्मरूपेण प्रत्यापादयत् । परं केचनाऽऽचार्याः रसमन्येऽलङ्कारान् परे रीतिमपरे वक्रोक्तिं केचिच्च ध्वनिं काव्यस्याऽऽत्मानं साधयामासुः । अतस्तैस्तत्त्वैः सहौचित्यस्य सम्बन्धो निर्धारणीयः ।

**(i) औचित्यं रसश्च -**

काव्ये रस एवोत्कर्षकतमं तत्त्वमिति क्षेमेन्द्रेण प्रोक्तम् । अथ च तेनौचित्यं रससिद्धस्याऽपि काव्यस्य जीवितमिति साधितम् । एवञ्चौचित्यं व्यापकं रसश्च व्याप्यो वर्तते । औचित्ययुतो रस एव सहृदयाह्लादको भवति । यथा मधुमासोऽशोकतरुमङ्कुरयति, तथैवौचित्येन रुचिरो रसः सर्वाङ्गान्तःकरणव्याप्तो भूत्वा सहृदयहृदयान्यङ्कुरयति ।[1]

ध्वनिवादिनोऽप्याचार्या औचित्यस्य रसस्य च सम्बन्धं सगभीरं विममर्शुः । तेऽनौचित्यमेव रसभङ्गस्य प्रधानं हेतुमाचचक्षिरे । औचित्यविधानमेव रसस्य परमं रहस्यम् । काव्ये रसगतौचित्यस्याऽप्रतिपादनादेव बहुविधाः दोषाः समुत्पद्यन्ते । अतः काव्यस्य प्रत्यङ्गमौचित्यं सन्निविष्टं तथा विधातव्यं यथा रसस्य निष्पत्तौ रमणीयत्वे च न काचिद् बाधा समुत्पद्येत ।

**(ii) औचित्यमलङ्कारश्च -**

काव्यशास्त्रकृतः काव्येष्वलङ्कारविनियोजनायाऽपि परमावश्यकमौचित्यं जगदुः । काव्येष्वलङ्कारविनियोजनौचित्यस्य विस्तृतं निर्देशमानन्दवर्धनो ध्वन्यालोके प्रास्तौत् ।[2] सारांशोऽयमेवाऽत्र, यदलङ्काराणां योजना रसस्याऽङ्गरूपेणैव कर्तव्या न त्वङ्गिरूपेण । क्षेमेन्द्रेण प्रोक्तम् -

अलङ्कारेष्वलङ्कारत्वं तेषामौचित्यपूर्णनियोजने भवति । अर्थगतौचित्यसम्भृतालङ्कारैः सूक्तयस्तथैव शोभन्ते, यथा पीनपयोधरस्थितेन हारेण मृगनयनी शोभते ।[3]

---

१. कुर्वन् सर्वाशये व्याप्तिमौचित्यरुचिरो रसः ।
मधुमास इवाऽशोकं करोत्यङ्कुरितं मनः ।। औचित्यविचारचर्चा - १६

२. ध्वन्यालोक २.१९-२०

३. अर्थौचित्यवता सूक्तिरलङ्कारेण शोभते ।
पीनस्तनस्थितेनेव हारेण हरिणेक्षणा ।। औचित्यविचारचर्चा - १५

क्षेमेन्द्रस्य कथनं वर्तते -

उचितस्थानसन्निविष्टा एवाऽलङ्कारा: काव्यशोभावर्धका: भवन्ति। अनुचितस्थाने सन्नियोजितास्ते सर्वथाऽलङ्कारत्वरहिता: लक्ष्यन्ते। उदाहरणरूपेण तेन लौकिका अलङ्कारा: प्रस्तुता:। यथा कण्ठे मेखला, नितम्बयो: हार:, करयो: नूपुरे, पादयोश्च केयूरेऽलङ्कारा एते नाऽङ्गशोभावर्धका: भवन्ति, तथैवौचित्यं विना काव्यगता अलङ्कारा अपि न काव्यशोभावर्धका: जायन्ते।[१]

**(iii) औचित्यं रीतयश्च -**

वामनकृतं रीतिलक्षणं वर्तते -

**"विशिष्टा पदसंघटना रीति:"**

इयं रीति: वामनेन काव्यस्याऽऽत्मत्वेन प्रतिपादिता। औचित्यविचारचर्चाग्रन्थे क्षेमेन्द्रेण रीतयश्चर्चिता: न चौचित्यभेदेषु रीतिभेदस्य गणना कृता। द्वे कारणेऽत्र सम्भाव्येते -

(क) रीते: पदसंघटनारूपत्वात्तेन रीत्यौचित्यानौचित्यविचार: पदौचित्यान्तर्गत: कृतो भवेत्।

(ख) "अन्येषु काव्याङ्गेष्वनयैव०" इति वचनानुसारं तेन रीत्यौचित्यानौचित्यविचार: पाठकानामुत्प्रेक्षणायैव कृतो भवेत्।

अत्र सारांशोऽयमेव यत् क्षेमेन्द्र: काव्ये रीते: पृथग् विवेचनं न चकार।

रीत्यौचित्यसम्बन्धविचारविमर्शो ध्वन्यालोककृता किलाऽऽनन्दवर्धनेन कृत:। रीतिनियामकतत्त्वानि तेन संख्यातानि व्याख्यातानि च। रीत्यौचित्यं रसौचित्यस्याऽऽश्रयेणैव सम्पद्यते। तदनन्तरं तेन प्रोक्तम् -

अङ्गरूपेण वक्तृवाच्यविषयौचित्यानि खलु रीतिनियामकान्यपि भवन्ति। अस्य विमर्शस्याऽयमभिप्रायो यत् काव्येषु पदसंघटना रसानुकूला भवितव्या। कोमलप्रकृतिषु शृङ्गारादिरसाभिव्यक्तिप्रसङ्गेषु कोमलकान्तपदावली, कठोरप्रकृतिषु च रौद्रादिरसाभिव्यक्ति-प्रसङ्गेषु कठोरपदावली कविभि: प्रयोज्या। एतदेव वर्तते संघटनौचित्यम्। वक्तुरभिप्रायो वर्तते - कवि: कविनिबद्धपात्रं वा। पदानां संघटना वक्तृवाच्यविषयौचित्येन कार्या।

यथा, महाभारते भीमसेनेन प्रयुक्ता कोमलपदावली नौचित्यपूर्णा। वाच्यस्याऽभिप्राय: काव्यप्रतिपाद्यविषयो वर्तते। सुकुमारवर्ण्यविषयवर्णनाय कोमलपदावली अथ च कठोरवर्ण्यविषयवर्णनाय कठोरपदावली प्रयोजनीया भवति। विषयस्याऽभिप्रायो वर्तते काव्यस्य विविधविधा:। विधास्तु मुक्तकसन्दानितकविशेषककुलापकुलकपर्यायबन्धखण्डकाव्य-महाकाव्यरूपकपरिकथासकलकथाखण्डकथाकथाख्यायिकादय:। तत्र पदावलीप्रयोगस्तदनुकलो-ऽनुरूपश्च भवितव्य:। कुत्र कीदृशी पदावली प्रयोक्तव्येति विस्तृतनिर्देशो ध्वन्यालोके ध्वनिकारेण कृत:।[२]

---

१. औचित्यविचारचर्चा (६) वृत्ति:।। २. ध्वन्यालोक ३.६-९ वृत्तिश्च।

पदसंघटनारूपरीत्यौचित्यविधानं कृत्वाऽऽनन्दवर्धनेन उपनागरिकादीनां शब्दवृत्तीनां कैशिक्यादीनाञ्चाऽर्थवृत्तीनामप्यौचित्यं व्याख्यातम्।[१] वृत्तिष्वेतास्वौचित्यस्य विधानाभावे रसभङ्गो जायते।

**(iv) औचित्यं वक्रोक्तिश्च -**

वक्रोक्तिं काव्यस्याऽऽत्मत्वेन प्रतिपादयताऽपि कुन्तकेन नौचित्यमुपेक्षितम्। औचित्यं तेन वक्रतायाः जीवितं प्रोक्तम्। औचित्ययुतैव वक्रता काव्यजीवितं भवति। सुकुमारविचित्र-मध्यमेषु त्रिष्वेव मार्गेषु खलु औचित्यगुणोऽनिवार्यः। वस्तुस्वभावस्पष्टपोषणमेव वक्रतायाः परमरहस्यम्। तस्य च जीवितमुचिताऽभिधानम्। वाक्यस्यैकदेशेऽप्यौचित्यविरहः सहृदयहृदया-ह्लादहानिहेतुर्भवति।[२]

विभिन्नैः काव्याङ्गैर्गुणालङ्काररीतिवृत्तिरसैर्यथा औचित्यस्य सम्बन्धस्तथैव वक्रोक्त्या सहाऽप्यौचित्यस्य सम्बन्धो वर्तते। कुन्तको विविधवक्रतास्वौचित्यस्याऽऽवश्यकतां प्रत्यापादयत्। पदवक्रताविषये तेन प्रोक्तम् -

पदस्य तावदौचित्यं बहुभेदभिन्नो, वक्रभावः। प्रबन्धस्यैकदेशे प्रकरणे वक्रतौचित्याभावात् सर्वं काव्यं तथैव दूषितं भवति, यथा वस्त्रस्यैकदेशे ज्वलिते सति सकलमपि वस्त्रं दूषितं जायते। एवं कुन्तकेनौचित्यं वक्रताजीवितत्वेन स्वीकृतम्।

कुन्तकस्य पदवाक्यप्रबन्धादिषु सर्वास्वेव वक्रतास्वौचित्यविधानमनिवार्यमवर्तत। अतोऽनेकेषु प्रबन्धेषु वक्रतौचित्ययोरभिन्नत्वमेव प्रतिभाति। कुन्तकस्य पदवक्रतालिङ्गवक्रताकाल-वक्रतादिष्वथ च क्षेमेन्द्रस्य पदौचित्यलिङ्गौचित्यकालौचित्यादिषु च सर्वथैकरूपत्वं संलक्ष्यते। परन्तु साम्येऽभिन्नत्वे वा प्रतीयमानेऽपि वक्रतौचित्ययोर्नैकरूपत्वम्। कुन्तकेन स्वयमेवौचित्यं वक्रतायाः मूलं प्रोक्तम्। एवञ्च वक्रतासिद्धये साधनभूतमेवौचित्यम्। परन्तु काव्ये रसनिष्पत्तेरेव मुख्यप्रतिपाद्यत्वात् प्रधानत्वादङ्गिरूपत्वाच्च वक्रोक्तिरौचित्यञ्च द्वयमेव साधनत्वेनाऽवतिष्ठते।

**(v) औचित्यं ध्वनिश्च -**

आनन्दवर्धनेन ध्वनिः काव्यस्याऽऽत्मा समाम्नातः। परं क्षेमेन्द्रः काव्यस्य जीवितमौचित्यं जगाद। वस्तुत औचित्यस्य महत्त्वं ध्वनिमुपलक्ष्य वर्तते। नास्ति तस्य स्वातन्त्र्येणाऽस्तित्वम्। रसादिध्वनिर्यदि काव्यस्याऽऽत्मा, ह्यौचित्यं तस्य जीवितम्। आत्मानं विना यथा जीवनस्याऽस्तित्वं न वर्तते, तथैव रसादिध्वन्यभावे ध्रुवमौचित्यस्याऽप्यस्तित्वमसम्भवम्।

---

२. रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः।
औचित्यवान् यस्ता एता वृत्तयो द्विविधाः स्मृताः।। ध्वन्यालोक ३.३३

३. स्वभावस्याञ्जसेन प्रकारेण परिपोषणमेव वक्रतायाः परं रहस्यम्। उचिताभिधानजीवितत्वाद् वाक्यस्याऽप्येकदेशेऽप्यौचित्यविरहात् तद्विदामाह्लादकारित्वहानिः। वक्रोक्तिजीवित (१.५७) वृत्तिः

क्षेमेन्द्रेण सम्भवतो ध्वन्यालोक एव स्वरचनाया औचित्यविचारचर्चायाः मूलाधारः कल्पितः। तथ्यस्याऽस्योल्लेखो यद्यपि तेन प्रत्यक्षरूपेण न स्वयं कृतस्तथापि सिद्धान्तस्यौचित्यस्य प्रतिपादने तथ्यमिदं स्थाने स्थाने स्वयमेव स्फुटीभवति। रसादिनिबन्धने ध्वनिकारेणाऽऽनन्दवर्धनेनौचित्यस्याऽनिवार्यत्वं ध्रुवं प्रतिपादितमथ चौचित्यं रसस्य परमं रहस्यं निरूपितम्।[1] आनन्दवर्धनेनैतदपि प्रतिपादितं यच्छब्दार्थसंघटनादीनां सर्वेषामपि प्रतिपादनं रसौचित्येनैव करणीयम्। क्षेमेन्द्रस्त्वेतदेवौचित्यं काव्यस्य प्राणभूतं परिकल्प्य निजसिद्धान्तप्रासादरचनामकल्पयत्।

औचित्यसिद्धान्तप्रतिपादने क्षेमेन्द्रेणाऽऽनन्दवर्धनस्याऽनुसरणं विहितम्। आनन्दवर्धनेन प्रोक्तम् -

सुप्तिङ्वचनसम्बन्धकारकशक्तिकृत्तद्धितनिपातादिभिरसंलक्ष्यक्रमव्यङ्ग्यरसादिरूपोऽर्थोऽभिव्यज्यते।[2] अथ च पदवाक्यप्रबन्धा अपि रसादिरूपस्याऽर्थस्याऽभिव्यञ्जकाः भवन्ति। आनन्दवर्धनस्यैतामुक्तिमनुसृत्य क्षेमेन्द्रः पदवाक्यप्रबन्धक्रियाकारकलिङ्गवचनोपसर्गनिपातकालदेशादिभेदेनौचित्यस्य काव्यचमत्काराधायकत्वमङ्गीचकार।

अनेकेषु प्रसङ्गेष्वानन्दवर्धनस्य ध्वनौ क्षेमेन्द्रस्य चौचित्ये ह्येकरूपत्वं परिलक्ष्यते। यथा रत्नावल्यां "कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम्०", इति पद्ये ध्वनिकारः कृशाङ्गीति पदं विप्रलम्भशृङ्गाराभिव्यञ्जकं मेने। क्षेमेन्द्रेणाऽपि प्रोक्तम् -

**पदमिदं सागरिकायाः परमविरहावस्थां सूचयन् परमौचित्यं पुष्णाति।**

ध्वनावौचित्ये च परस्परं समन्वये सति औचित्येनैव काव्यस्य रमणीयत्वं पुष्यते। यथा कुमारसम्भवे **"द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः"**[3] इति वाक्ये "कपालिन" इति पदमौचित्यदृष्ट्या विचार्यमाणं सर्वथा समुचितं वर्तते, अथ चाऽभीष्टार्थमभिव्यनक्ति। अत्र कविः शिवं प्रति पार्वत्याः विरागमुत्पादयितुमभिलषति। स च विरागो बीभत्सरसाभिव्यञ्जकेन **"कपालिन"** इति पदेनैव सम्भवति। यदि **"कपालिन"** इति पदस्य स्थाने **"पिनाकिन"** इत्याद्यन्यपदं प्रयुज्यते, न तादृशी समुचिताऽभिव्यञ्जना सम्भविष्यति। यतः **"पिनाकिन"** इति पदस्य वीररसाभिव्यञ्जकत्वान्न विषयानुकूल्यमस्ति। अतः प्रकृतविषयस्याऽनुकूलत्वादत्र **"कपालिन"** इति पदस्य प्रयोग एवौचित्यपूर्णः।

उपर्युक्तेन विवेचनेन सिद्धमेव यत् काव्ये रसादिध्वनेरौचित्यस्य च पारस्परिकसम्बन्धे सत्यपि ध्वनिरङ्गीरूपेण व्यवस्थितो वर्तते। ध्वनेरनिवार्यत्वेन स्थितमप्यौचित्यं ध्वनेः साधकत्वेन वर्तमानं ध्वन्यङ्गरूपेण व्यवस्थितम्।

---

१. अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा।। ध्वन्यालोक (३.१४) वृत्तिः

२. सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित्।। ध्वन्यालोक ३.१६

३. कुमारसम्भव ५.७१

## ७. औचित्यस्य काव्यात्मत्वसमीक्षा

क्षेमेन्द्रो लोकमर्यादामङ्गीकृत्यौचित्यं काव्यजीवितमकथयत्। लोकव्यवहारे मर्यादापालनाय सुव्यवस्थास्थापनाय च यथौचित्यस्य निर्वाहः परमावश्यकस्तथैव काव्यव्यवहारे मर्यादापालनाय तत्र च सौन्दर्यचमत्कृत्युत्पादनायौचित्यस्य पालनमनिवार्यमेव। काव्येऽलङ्कारगुणरसरीतिवृत्त्यादि-तत्त्वानां नियोजने मर्यादौचित्यं ध्रुवं पालनीयम्। अस्यैकस्याऽप्यौचित्यस्याऽभावे सर्वे गुणाः निरर्थकाः निष्फलाश्च सञ्जायन्ते। आचार्याः काव्येष्वौचित्यं गुणराशिमाहुः। औचित्याभावे सर्वोऽपि गुणगणः समुद्वेजको जायते।

आचार्यक्षेमेन्द्रस्य मन्तव्यमिदं यदौचित्यं सर्वस्मिन् लोके व्याप्तमस्ति। अनेनैव च क्रमेण काव्यस्य प्रत्यङ्गमिदं व्याप्नोति। अत एवेदं काव्यजीवितमुच्यते।

लोकव्यवहारे ह्यौचित्यपालनं कर्तव्यमेव। अन्यथा जनो निश्चयेनोपहासपात्रं भवति। तथैव काव्येऽप्यौचित्यस्याऽपरिपालनं काव्यमुपहासास्पदं विदधाति। कामिनीवक्षसि स्थिता मौक्तिकस्रक् सौन्दर्यं वर्धयति। परं सैव स्रक् पादयोः स्थितोपहासास्पदं जायते। तथैव काव्येऽलङ्काराः सौन्दर्योत्कर्षकास्तदैव भवन्ति यदा ते समुचितस्थानेषु विनियोज्यन्ते। विप्रलम्भशृङ्गारे यमकालङ्कारविनियोजनं निश्चयेन रसस्यापकर्षकरं भवति।

मनुष्येषु शौर्यौदार्यकारुण्यादयो गुणाः ध्रुवं गौरवमावहन्ति, परन्त्वौचित्यमर्यादायामवस्थिता एव। प्रणतशत्रुं प्रति शौर्यप्रदर्शनमाक्रमणकारिणञ्च प्रति कारुण्यप्रदर्शनं निश्चयेनाऽवगुणकोटि-मधिरोहति। तत्र न भवति गुणत्वम्। एवमेव रौद्रादिषु सुकठोररसेषु माधुर्यगुणनिवेशो यथा दोषावहस्तथैव शृङ्गारादिषु कोमलरसेषु ओजोगुणनिवेशनं काव्यस्यापकर्षहेतुरेव। अत एव क्षेमेन्द्रेण प्रोक्तम् -

अलङ्कारेषु तदैवालङ्कारत्वं भवति यदा तेषां विन्यासः समुचितस्थानेषु विधीयते। एवं गुणेष्वपि तदैव गुणत्वं जायते, यदा ते नौचित्ययुता वर्तन्ते।[1]

रसानां विनिवेशनेऽप्यौचित्यविधानमनिवार्यम्। लोके मधुराम्ललवणकटुतिक्तकषायाः रसाः भोजनपदार्थेषु पाचकेनौचित्येन नियोजिता यथा भोजनस्य रमणीयत्वं वर्धयन्ति, तथैव रसनियोजनमौचित्येन संविधीयमानं काव्यस्य रमणीयतामाह्लादकतां वा पुष्णाति। शृङ्गाररसः सर्वेषां रसानामधिपतिः, परमसमयेऽस्य विनियोगो विरसतामेवाऽऽवहति। यथा वेणीसंहारनाटके दुर्योधनस्य भानुमतीं प्रति प्रणयप्रसङ्गः। महाभारतीये युद्धे दुर्योधनपक्षीयेष्वनेकमहावीरेषु हतेषु सत्सु दुर्योधनस्य भानुमतीं प्रति प्रेमप्रदर्शनं ध्रुवमनुचितं शृङ्गाररसस्याऽपकर्षकरं वर्तते।

---

१. उचितस्थानविन्यासादलङ्कृतिरलङ्कृतिः।
औचित्यादच्युताः नित्यं भवन्त्येव गुणाः गुणाः।। औचित्यविचारचर्चा - ६

कस्यचिद्ररसस्य पौनःपुन्येनाऽभिव्यक्तिरपि सीमानमौचित्यस्योल्लंघ्य विरसत्वहेतुर्भवति । कुमारसम्भवमहाकाव्ये कामदेवभार्यायाः शोकस्य करुणरसस्थायिभावस्य पौनःपुन्येनोद्दीपनं रसदोषत्वमुपैतीति समीक्षकाः विदन्ति ।[१]

उपभुक्तरसस्य पौनःपुन्येन परिपोषोऽप्यानन्दवर्धनेन रसदोषोऽभिहितः ।[२] औचित्यं रसस्य परमं रहस्यमनौचित्यञ्च रसभङ्गहेतुरित्यानन्दवर्धनस्य विमर्शः ।[३] अयमेव हेतुर्यत् क्षेमेन्द्रोऽपि रससिद्धकाव्ये यद्यौचित्यमेव तस्याऽऽत्मानं जीवितं वा प्रतिपादितवान्,[४] तदत्र को दोषः किमनौचित्यं वा सम्भावनीयम् ।

एवं काव्यात्मरूपमौचित्यसंविधानं क्षेमेन्द्रेण स्वीकृतम् । परन्त्वनेन तस्य काव्यात्मभावो न सिध्यति । अनिवार्यरूपेण स्थितमप्यौचित्यं न काव्यस्याऽऽत्मा । तद्विना काव्ये काव्यत्वं न वर्तत इति नैव लक्ष्यते । अतः समीक्षणीयं काव्यसमीक्षकैर्यदौचित्यं काव्योत्कर्षसाधनं वर्तते साध्यं वा । साध्यरूपेण यदि स्थितिरौचित्यस्य भवेत् तदैव तस्याऽऽत्मत्वं सम्भवेत् । परन्तु तन्न साध्यम् । तत्तु साध्यस्य रसस्याऽऽत्मतत्त्वस्योत्कर्षहेतुः साधनमेव । कविना काव्यरचना काव्यरसानन्दानुभूत्यै क्रियते न त्वौचित्यप्रतिपादनाय । रसाद्यौचित्यं तस्योत्कर्षकं ध्रुवं परन्तु तदौचित्यमेव कवेः साध्यं वोद्देश्यो वा न वर्तते । रसानुभूतयेऽनिवार्यत्वमौचित्यस्य ध्रुवं वर्तते, परमौचित्याय न रसादीनां निबन्धनं भवति । अतः काव्येष्वौचित्यापेक्षातः रसादीनां किल प्रधानत्वं सिद्धमेव ।

गुणालङ्कारादीनामौचित्यस्येयमेव स्थितिः । गुणालङ्कारादीनां विनियोजनं नौचित्याय, परमौचित्यमेतेषामुत्कर्षसिद्धये साधनत्वेनाऽवतिष्ठते । एवं काव्येष्वौचित्यं साधनत्वेन तिष्ठति, न तु साध्यत्वेन । अतः काव्ये रसध्वनिगुणालङ्कारादीनामपेक्षात औचित्यस्याऽऽत्मतत्त्वप्रतिपादनं न समुचितम् ।

क्षेमेन्द्रेण प्रोक्तम्

"रससिद्धकाव्यस्यौचित्यं स्थिरं जीवितम् ।"[५]

अत्रोच्यते -

काव्यानामनेके भेदाः परिगणिताः । यथा - उत्तमं मध्यममधमञ्च । अधमं चित्रकाव्यं न रससिद्धं , तत्र रसस्याऽप्रधानत्वात् । ध्वनिकाव्येष्वपि रसध्वनिरेव रससिद्धो भवति, न

---

२. दीप्तिः पुनः पुनः । दीप्तिः पुनः पुनर्यथा कुमारसम्भवे रतिविलापे ।
काव्यप्रकाश (७.४१) वृत्तिः

३. परिपोषं गतस्याऽपि पौनःपुन्येन दीपनम् ।
रसस्य स्याद् विरोधाय......................... ।। ध्वन्यालोक ३.१९

४. अनौचित्यादृते नाऽन्यद् रसभङ्गस्य कारणम् ।
औचित्योपनिबद्धस्तु रसस्योपनिषत्परा ।। ध्वन्यालोक (३.१४) वृत्तिः

५. औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् । औचित्यविचारचर्चा - ५

त्वलङ्कारध्वनिर्वस्तुध्वनिर्वा। अत: काव्यस्याऽनेकभेदेषु रससिद्धत्वाभावात्तत्रौचित्यस्य का स्थिति: सम्भविता ? तेषु काव्येषु काव्यस्य जीवितमौचित्यं भवेन्न वेति विचारविमर्श: क्षेमेन्द्रेण न कृत:।

औचित्यं रससिद्धकाव्यस्य जीवितं प्रतिपादयन् क्षेमन्द्र: प्रोवाच -

उचितरूपेण धातुवादरससिद्धमौषधं (पारदरससिद्धमौषधं) यथा वपुषि जीवनं स्थिरयति, तथैव शृङ्गारादिरससिद्धकाव्यस्य जीवितमौचित्यं स्थिरयति।[1]

क्षेमेन्द्रस्य वचनेन सिद्धमिदं यत्काव्यजीवनधारकं किञ्चिदन्यदेव तत्त्वं विद्यते, परमौचित्यं तज्जीवितं स्थिरीकरोति। यथा पारदरससिद्धमौषधं न जीवनमपितु जीवनस्य स्थिरीकरण-साधनं तत्त्वं वर्तते। काव्यस्य जीवनं रसादिध्वनिर्वर्तते, परमौचित्यं तस्य स्थिरीकरणसाधनं विद्यते।

उपर्युक्तविवेचनेन सिद्धमिदं यत्काव्ये महत्त्वमौचित्यस्याऽनिवार्यं वर्तते, परं तस्य काव्यात्मरूपेण स्थितिर्न स्वीकरणीया। प्रायश: सर्वैरेवाऽऽचार्यै: काव्येऽनिवार्यतत्त्वरूपेणौचित्यस्य स्थिति: केनाऽपि प्रकारेण स्वीकृत्य स्वसिद्धान्तानुसारं व्याख्याता। क्षेमेन्द्रस्तन्महत्त्वमौचित्य-स्याऽनुभूय काव्यजीवितरूपेण तत् प्रत्यापादयत्।

परं क्षेमेन्द्रस्य दृष्टि: काव्यस्य बाह्यक्षेत्रपर्यन्तमेव परिमिता बभूव। काव्य-स्यान्तरङ्गत्वङ्गतेन रसध्वनिना परिचितोऽप्यसौ तस्य महिमानं व्याख्यातुं न समर्थो बभूव। वस्तुतो रसध्वनिरेव काव्यस्याऽऽत्मा। स एव साध्य:। औचित्यतत्त्वं साध्यस्य रसस्य साधनत्वात्तस्याऽङ्गत्वमेव प्रपद्यते।

---

१. रसेन शृङ्गारादिना सिद्धस्य प्रसिद्धस्य काव्यस्याऽऽत्मा धातुवादरससिद्धस्येव तज्जीवितं स्थिरमित्यर्थ:। औचित्यविचारचर्चा (५) वृत्ति:

सप्तमोऽध्याय:

# ध्वनिसम्प्रदाय:

काव्यशास्त्रस्येतिहासे रसालङ्काररीतिवक्रोक्त्यौचित्यसम्प्रदायानां विश्लेषणं समीक्षाञ्च विधाय प्रसङ्गवशादत्र ध्वनिसम्प्रदायस्याऽपि निरूपणमनिवार्यम्। इतिहासक्रमेण यद्यपि वक्रोक्त्यौचित्यसम्प्रदायौ ध्वनिसिद्धान्तानन्तरवर्तिनौ, तथापि निष्कर्षतो ध्वनिसिद्धान्तस्य सर्वमान्यत्वात्तस्य निरूपणमन्तिमनिष्कर्षरूपत्वेन स्वीक्रियते। अधिकसंख्यकै: काव्यशास्त्राचार्यै- र्ध्वनि: काव्येषु प्रधानत्वेन महनीयत्वेन चाऽभिमत:।

## १. ध्वनिसिद्धान्तस्य प्रारम्भ:

आनन्दवर्धनाचार्यो ध्वनिमेव काव्यस्याऽऽत्मरूपेण न्यरूपयत्। एवमसौ काव्यसमीक्षाक्षेत्रे नवमेकं युगं प्रारभत। आनन्दवर्धनेनोक्तम् -

पूर्वकाले ध्वनिरेव काव्यात्मरूपेण प्रतिष्ठितो बभूव। परं केचनाऽऽचार्यास्तस्याऽभिमतस्य खण्डनं कुर्वन्ति तस्याऽऽत्मभावञ्च निराकुर्वन्ति। अतो ध्वनेरेव काव्यस्याऽऽत्मभावात् तत्प्रतिपादनायाऽसौ ध्वनिं व्याख्यातुमुद्यतो वर्तते।[1]

आनन्दवर्धनेन व्याख्यातम् -

काव्ये मुख्यतो द्वावर्थौ भवत: - वाच्य: प्रतीयमानश्च। द्वयोरनयोरर्थयो: प्रतीयमानार्थे प्रधाने सति, तस्य सौन्दर्ये चमत्कारिरूपेणाऽभिव्यज्यमाने सति काव्यं ध्वनिकाव्यमित्य- भिधीयते।

आनन्दवर्धनो ध्वनिकाराभिधानेनाऽपि प्रसिद्ध:। काव्यसमीक्षाक्षेत्रे तत्पूर्वं रसालङ्काररीति- सिद्धान्तत्रयस्य प्रादुर्भावोऽभवत्। विविधैराचार्यै: काव्ये तत्त्वेष्वेतेषु किञ्चिदेकं तत्त्वं काव्यस्या- ऽऽत्मत्वेन प्रतिपादितम्, इत्यस्मिन् ग्रन्थे पूर्वमेव समालोचितम्। परन्त्वानन्दवर्धनेन सामर्थ्यशालिनीभिर्युक्तिभि: साधितं, यदेतानि सर्वाणि तत्त्वान्यङ्गभूतान्येव सन्ति। केवलं ध्वनिरेव सर्वव्यापकत्वात् काव्यस्याऽऽत्मपदे प्रतिष्ठापयितुं शक्य: योग्यश्च।

---

१. काव्यस्यात्मा ध्वनिरिति बुधैर्य: समाम्नातपूर्व-
स्तस्याऽभावं जगदुरपरे भाक्तमाहुस्तमन्ये।
केचिद् वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूम: सहृदयमन:प्रीतये तत्स्वरूपम्।। ध्वन्यालोक १.१

ध्वनेर्मूलं प्रतीयमानोऽर्थः। किञ्चिदनिर्वचनीयरूपोऽसौ काव्यस्य विभिन्नाङ्गेभ्यो गुणाऽलङ्कारादिभ्योऽतिरिक्तत्वेन शोभते।[1] अयमेवाऽर्थः सहृदयानां हृदयान्यानन्दयति। अयमेवाऽर्थः काव्यस्याऽऽत्मा। अयमर्थो महाकवेरादिकवेर्वाल्मीकेर्भारत्यां काव्यरूपेण प्रस्फुटितो बभूव। अथ च क्रौञ्चद्वन्द्ववियोगोत्थशोकः श्लोकतया परिणतः।[2]

ध्वनिकारेण पुनः प्रोक्तम् -

काव्ये प्रतीयमानार्थस्त्रिविधो भवति - रसरूपोऽलङ्काररूपो वस्तुरूपश्च।[3] अतो ध्वनिरपि त्रिविधो भवति - रसध्वनिरलङ्कारध्वनिर्वस्तुध्वनिश्च। त्रयाणामप्येतेषां ध्वनीनां तेन रसध्वनिर्महनीयतमो मतः। महाकवीनां कृतिभ्योऽनेकान्युदाहरणानि प्रस्तूय ध्वनिकारः प्रतीयमानस्याऽर्थस्य चारुत्वं काव्ये न्यरूपयत्।

ध्वनिं काव्यस्याऽऽत्मभावेन प्रतिपादयन्नपि, काव्ये च तं महत्तमं कथयन्नपि ध्वनिकारोऽलङ्कारगुणरीतिवृत्त्यादीनि तत्त्वानि नोपेक्षितवान्। काव्ये चैतेषामप्युचितस्थानानि तेन निर्धारितानि। परन्त्वेतानि तत्त्वानि सर्वाणि काव्ये ध्वनेरुत्कर्षकरूपेण तिष्ठन्ति। काव्ये ध्वनिरेव प्रधानत्वेन केन्द्ररूपेणाऽवतिष्ठते, गुणालङ्काररीतीनां विधानं ध्वनेरुपकारकत्वेनाऽङ्गीरूपेणैव सम्भवति।

## २. ध्वनेः प्राचीनता ऐतिहासिकविकासक्रमश्च

ध्वनिप्रतिष्ठापक आनन्दवर्धनः काव्यसमीक्षाजगति ध्वनिकारः प्रोच्यते। स एव ध्वनिप्रतिष्ठातेति प्रशंसनीयं यशःप्रदं पदमलभत। परन्तु प्राचीनप्रमाणानि साधयन्ति, यदानन्दवर्धनात् पूर्वमपि काव्यसमीक्षकैर्ध्वनिः काव्यस्य प्रमुखतत्त्वरूपेण समाम्नातः।

आनन्दवर्धनो ध्वन्यालोकग्रन्थस्य प्रारम्भ एव तथ्यमिदमुद्घाटयामास - विद्वज्जनैः पूर्वमेव काव्यस्याऽऽत्मा ध्वनिः समाम्नातः।[4] अत्र बुधैरिति पदं बहुवचनान्तम्। अनेन स्पष्टमेव, न केवलमेकेनैव विदुषा ध्वनिः काव्यस्याऽऽत्मत्वेनाङ्गीऽकृतोऽपितु बहूनां विदुषामेवैतदभिमतम्। अस्य कथनस्याऽभिनवगुप्तेन व्याख्या कृता -

---

१. प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।। ध्वन्यालोक १.४

२. काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।। ध्वन्यालोक १.५

३. स ह्यर्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रमलङ्काररसादयश्च इत्यनेकप्रभेदप्रभिन्नो दर्शयिष्यते।
ध्वन्यालोक (१.४) वृत्तिः

४. काव्यस्याऽऽत्मा ध्वनिरिति बुधैर्यः सामाम्नातपूर्वः। बुधैः काव्यतत्त्वविद्भिः काव्यस्याऽऽत्मा ध्वनिरिति संज्ञितः परम्परया यः समाम्नातपूर्वः सम्यग् आ समन्तान्म्नातः प्रकटितः।
ध्वन्यालोक (१.१) वृत्तिः

प्रतिपादनमेतत् परम्परागतमवर्तत, यद्यपि पुस्तकविशेषे न लिखितमासीत्।[१]

ध्वन्यालोकस्याऽन्याभिः कारिकाभिर्वृत्तिभिश्च ध्वनेः प्राचीनत्वं सिध्यति। एकस्मिन् प्रसङ्गे ध्वनिकारेण लिखितम् -

यदि ध्वनेर्लक्षणं प्राचीनाचार्यैः पूर्वमेव कृतं, तेनाऽप्यस्मत्पक्षसिद्धिर्भवति।[२] ध्वनिकारेणेदमपि प्रोक्तम् -

भरतो नाट्यशास्त्रे काव्यनिबन्धनं रसादितात्पर्येण जगाद।[३] अयं रसध्वनिरेव काव्यरचनाकलाया आत्मा। रीतिवादिनामपि ध्वनिरूपस्याऽऽत्मनोऽस्फुटरूपेणाऽऽभासोऽविद्यत, परन्तु तत्त्वमेतत्ते व्याख्यातुमसमर्थाः रीतिप्रवर्तकाः बभूवुः।[४]

आनन्दवर्धनेन ध्वन्यालोके लिखितम् -

ध्वनिना केवलं समालोचका एव परिचिताः सन्तीति न। महाकवयो वाल्मीकिव्यास-कालिदासादयोऽपि ध्वनिना परिचिता अवर्तन्त। ध्वनितत्त्वं तेषां कृतिषु सर्वत्र समुपलभ्यते, यद्यपि काव्यलक्षणकारैर्न पूर्वमस्योन्मीलनं कृतम्।[५]

ध्वनेर्मूलं प्रतीयमानोऽर्थः। प्राचीना अलङ्कारवादिनोऽपि तेन ध्वनिना परिचिता आसन्। भामहादय आलङ्कारिका अलङ्कारानेव काव्यशोभाकराणि तत्त्वानि गणयन्तोऽपि अनेकेष्वलङ्कारेषु पर्यायोक्ताप्रस्तुतप्रशंसादिषु प्रतीयमानार्थस्य सौन्दर्यमङ्गीचक्रुः। एतदेवाऽऽ-धारीकृत्याऽलङ्कारवादिनो ध्वनिमलङ्कारान्तर्गतं विधातुं प्रयेतिरे। परन्तु मुख्यसमस्यासमाधाने तेऽसमर्था एवाऽभवन्।[६] उद्भटोऽपि रसादिध्वनीन् रसवत्-प्रेयस्-ऊर्जस्वि-समाहितादिष्वलङ्कारेष्वन्तर्भावयितुं प्रायतत।

---

१. बुधस्यैकस्य प्रमादादिकमपि तथाऽभिधानं स्यात् न तु भूयसा तद् युक्तन्। तेन बुधैरिति बहुवचनम्। अविच्छिन्नेन प्रवाहेण तैरुक्तं विनाऽपि विशिष्टपुस्तकेषु विनिवेशनादित्यभिप्रायः। ध्वन्यालोक (१.१) लोचनटीका

२. लक्षणेऽन्यैः कृते वाऽस्य पक्षसंसिद्धिरेव नः। ध्वन्यालोक १.१९

३. एतच्च रसादितात्पर्येण काव्यनिबन्धनं भरतादावपि सुप्रसिद्धमेव।
ध्वन्यालोक (३.३७) वृत्तिः।

४. अस्फुटस्फुरितं काव्यतत्त्वमेतद् यथोदितम्।
अशक्नुवद्भिर्व्याकर्तुं रीतयः सम्प्रवर्तिताः॥ ध्वन्यालोक ३.४७

५. तस्य हि ध्वनेः स्वरूपं सकलसत्कविकाव्योपनिषद्भूतमतिरमणीयमणीयसीभिरपि चिरन्तनकाव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वम्। अथ च रामायणमहाभारतप्रभृतिनि काव्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानामानन्दो मनसि लभतां प्रतिष्ठामिति प्रकाश्यते।
ध्वन्यालोक (१.१) वृत्तिः

६. ध्वन्यालोक (१.१३) वृत्तिस्तत्र चाऽभिनवगुप्तकृतलोचनटीका

काव्यसमीक्षकेषु ध्वनिचर्चा आनन्दवर्धनात्पूर्वमपि प्रतिष्ठां प्राप्नोति तथ्यमेवमपि सिध्यति –

ध्वनिकारो ध्वन्यालोके ध्वनिविरोधिमतान्युल्लिख्य तानि निराचक्रे। ध्वन्यालोकस्य प्रथमकारिकायामेव त्रयाणां ध्वनिविरोधिमतानाम् – अभाववादिनां भक्तिवादिनामलक्षणीयता-वादिनाञ्च विभिन्नपक्षाणामुल्लेखो विद्यते। तदनन्तरं प्रबलयुक्तिभिस्तेषां खण्डनमपि वर्तते।

ध्वनिविरोधिमतानां खण्डनप्रसङ्गे ध्वनिकारेण कस्यचिद् ध्वनिविरोधिन आचार्यस्य श्लोक एक उद्धृतः।[1] अभिनवगुप्तेनाऽसौ ध्वनिविरोधी मनोरथः प्रोक्तः।[2]

प्राचीनसाहित्ये मनोरथस्य समयः सुनिश्चितः। कल्हणकृतराजतरङ्गिण्या एकस्मिन् श्लोके[3] मनोरथो राज्ञो जयापीडस्य मन्त्री वर्णितः। तदनन्तरं कल्हणेनोक्तम् –[4]

मनोरथो जयापीडस्योत्तराधिकारिणं ललितादित्यं तत्याज, तस्य कामोन्मत्ततहेतुत्वात्।

अतो मनोरथस्य समयः ८०० ई० तमः सम्भाव्यते।

मनोरथस्याऽस्मिन् श्लोके ध्वनेर्विरोधस्य ध्वनिविरोधिनाञ्चोल्लेखेन सिद्ध्यति – आनन्दवर्धनात् प्रचुरकालपूर्वमेव ध्वनिसिद्धान्तस्य चर्चा काव्यसमीक्षाजगति प्रचलिता बभूव।

ध्वनिसिद्धान्तप्रवर्तनमानन्दवर्धनात् पूर्वमेव सञ्जातमिति निश्चये कृतेऽपि, ध्वनिकार आनन्दवर्धन एव ध्वनिसिद्धान्तं व्यवस्थितरूपेण निस्सन्दिग्धभावेन च प्रतिष्ठापयामास, इत्यवगन्तव्यम्। ध्वनिकारेण प्रथमं तावद् द्वयोः कारिकयोर्ध्वनेरतिसंक्षिप्तपरिचयः प्रस्तुतः, तदनन्तरञ्च वृत्तिभिरुदाहरणैश्चाऽस्य स्वरूपं विस्तरेण व्याख्यातम्। ध्वनिकारस्य लेखनेनेदमपि स्पष्टं, यदसौ ध्वनिमार्गस्य निर्माता न, अपितु प्रदर्शयिता व्याख्याता च वर्तते।[5] तेन

---

१. तथा चाऽन्येन कृत एवाऽत्र श्लोकः –
  यस्मिन्नस्ति न वस्तु किञ्चन मनःप्रह्लादि साऽलङ्कृति
  व्युत्पन्नैः रचितं न चैव वचनैर्वक्रोक्तिशून्यञ्च यत्।
  काव्यं तद् ध्वनिना समन्वितमिति प्रीत्या प्रशंसन् जडो
  नो विद्मोऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः।। ध्वन्यालोक (१-१) वृत्तिः

२. अन्येनेति। ग्रन्थकृत्समानकालभाविना मनोरथनाम्ना कविना।
  ध्वन्यालोकस्याऽभिनवगुप्तकृता लोचनटीका

३. राजतरङ्गिणी ४.४९७।। ४. राजतरङ्गिणी ४.६७१

५. इत्यक्लिष्टरसाश्रयोचितगुणालङ्कारशोभाभृतो
  यस्माद् वस्तु समीहितं सुकृतिभिः सर्वं समासाद्यते।
  काव्याख्येऽखिलसौख्यधाम्नि विबुधोद्याने ध्वनिर्दर्शितः
  सोऽयं काव्यतरूपमानमहिमा भोग्योऽस्तु भव्यात्मनाम्।। ध्वन्यालोक (४.१७) वृत्तिः

ध्वनितत्त्वस्य केवलं व्याख्या कृता।[१] परन्तु तस्य व्याख्या तादृशी सुस्पष्टा प्रमाणसङ्गता चाऽवर्तत, यथाऽसावानन्दवर्धन एव ध्वनिकारः प्रोक्तो ध्वन्याचार्यपदस्य च प्रतिष्ठितोऽधिकारी सञ्जातः।

आनन्दवर्धनेन ध्वनेः सुस्पष्टं निस्सन्दिग्धञ्च प्रतिष्ठापनं यद्यपि विहितं, तथापि कैश्चिदुत्तरवर्तिभिराचार्यैर्ध्वनिसिद्धान्तं निराकर्तुं प्रयासाः कृता एव। अत्र प्रमुखा आचार्या अभूवन् - भट्टनायकः, कुन्तको महिमभट्टश्च।

भट्टनायकेन व्यञ्जनावृत्तिरेव न स्वीकृता, कुन्तकेन वक्रोक्तिरेव काव्यस्याऽऽत्मा प्रतिपादिता महिमभट्टेन च व्यञ्जनावादिनां व्यङ्ग्यार्थस्य प्रतीतिरनुमानेनैव साधिता। परमेतेषां ध्वनिविरोधिनां युक्तीनां प्रमाणानाञ्च खण्डनमभिनवगुप्तेन मम्मटेन च कृतम्।

क्षेमेन्द्रोऽपि काव्ये ध्वन्यपेक्षात औचित्यमेव महत्तरं साधयितुं प्रायतत, परं तस्य सिद्धान्तो नाऽधिको लोकप्रियो विद्वज्जनवन्दितश्च बभूव। आचार्येण मम्मटेन प्रबलयुक्तिभि-र्ध्वनिविरोधिन आचार्याः निराकृताः। तदनन्तरं ध्वनिसिद्धान्तः सर्वमान्यो बभूव। मम्मटानन्तरं प्रायशः सर्वे प्रमुखाचार्याः - रुय्यकविद्याधरविद्यानाथनरेन्द्रप्रभसूरिविश्वनाथजगन्नाथादयो निस्सन्दिग्धरूपेण ध्वनिं काव्यस्याऽऽत्मानमङ्गीचक्रुः।

## ३. ध्वनेः मूलप्रेरणा

ध्वनिवादिनो ध्वनेर्मूलप्रेरणां वैयाकरणानां स्फोटसिद्धान्तादध्यगच्छन्। ध्वनेर्लक्षणे[२] "सूरिभिः कथित" इति वचनस्य व्याख्यां कुर्वन्नानन्दवर्धनो ब्रवीति -

ध्वनिसिद्धान्तस्य प्रवर्तनं सप्रमाणैर्युक्तिसङ्गतैर्वचनैर्बभूव। प्रथमे प्रधानास्तावद् विद्वांसो वैयाकरणाः। ते श्रूयमाणेषु वर्णेषु ध्वनिसंज्ञां व्यवहरन्ति। वैयाकरणमतानुसारिभिः काव्यार्थतत्त्वविद्भिः समीक्षकैर्वाच्यवाचकसम्मिश्रः (व्यङ्ग्यार्थः) व्यञ्जनाव्यापारः (शब्दात्मा) काव्यञ्च सर्व एव गणो ध्वनिः प्रोक्तः।[३]

---

१. सत्काव्यतत्त्वनयवर्त्मचिरप्रसुप्त-
कल्पं मनस्सु परिपक्वधियां यदासीत्।
तद् व्याकरोत् सहृदयोदयलाभहेतो-
रानन्दवर्धन इति प्रथिताभिधानः। ध्वन्यालोक (४.१७) वृत्तिः

२. ध्वन्यालोक १.१३

३. सूरिभिः कथित इति विद्वदुपज्ञेयमुक्तिः, न तु यथाकथञ्चित् प्रवृत्तेति प्रतिपाद्यते। प्रथमे हि विद्वांसो वैयाकरणाः व्याकरणमूलत्वात् सर्वविद्यानाम्। ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति। तथैवाऽन्यैस्तन्मतानुसारिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः। ध्वन्यालोक (१.१३) वृत्तिः

ध्वनेः प्रेरणा ध्वनिवादिभिराचार्यैर्वैयाकरणेभ्यो गृहीता। मम्मटेनाऽप्यस्य तथ्यस्य पुष्टिः कृता। काव्यप्रकाशे "बुधैः कथित" इति वाक्यस्य व्याख्यां प्रस्तुवता मम्मटेन प्रोक्तम् -

बुधैर्वैयाकरणैः। वैयाकरणाः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकं शब्दं ध्वनिं कथयन्ति। ततस्तन्मतानुसारिणः काव्यशास्त्रविदोऽपि वाच्यार्थातिशायिव्यङ्ग्यार्थव्यञ्जकं शब्दार्थयुगलं ध्वनिं व्यवहरन्ति।[१]

व्याकरणं सर्वेषां शास्त्राणां मूलमिति शास्त्रविदो वदन्ति। भर्तृहरिणा प्रोक्तम् -

व्याकरणं सर्वासां विद्यानां दीपकं वर्तते। बुधाः व्याकरणं प्रथमं वेदाङ्गं प्राहुः। व्याकरणादृते शब्दानां तत्त्वावबोधः नाऽस्ति।[२]

वैयाकरणाः श्रूयमाणान् शब्दान् ध्वनिमाहुः। ध्वनिवादिनश्च शब्दार्थयुगलं ध्वनिं जगदुः।

ध्वनेराधारः स्फोटवादो वर्तते। अस्याऽभिप्रायः - स्फुटयति अर्थः अस्मादिति स्फोटः। स्फोटवादिनः शब्दं नित्यं मन्वते। वैयाकरणाः शब्दं नित्यमखण्डमेकञ्च प्रतिपादयन्ति।[३]

पतञ्जलिना प्रोक्तम् -

शब्दाः बुद्ध्या गृह्यन्ते। श्रोत्रग्राह्याः शब्दा आकाशस्थानीयाः।[४] कर्णदिशेऽवस्थिते आकाशदेशे शब्दप्राप्तिर्भवति। शब्दानां रचना वर्णैर्भवति। शब्दानामुच्चारणे सति वर्णानां क्रमश उच्चारणं जायते। क्रमशः कर्णाकाशञ्च सम्प्राप्ताः शब्दाः बुद्धिग्राह्याः भवन्ति। परन्तु प्रथमवर्णानन्तरं द्वितीये वर्णे प्राप्ते प्रथमो वर्णो विनश्यति। एवं शब्दोच्चारणे सति अन्तिम एव वर्णोऽवशिष्यते।

अत्र प्रश्नः समुपतिष्ठते -

अन्तिमेन वर्णेन कथमर्थप्रतीतिर्भवेत् ? यदि कश्चित् कथयति अन्तिमेन वर्णेनैवार्थ-प्रतीतिर्भवेत्, ततः पूर्ववर्णानां वैयर्थ्यं स्यात्। यदि कश्चिदन्यः कथयति - सर्ववर्णसमुदाय एवाऽर्थं प्रत्याययति, ततस्तस्मिन् काले पूर्ववर्णविनाशभावादन्तिमो वर्ण एवाऽवशिष्टः। प्रश्नस्याऽस्य समाधानं वैयाकरणैः निम्नप्रकारेण कृतम् -

---

१. इदमिति काव्यम्। बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः। ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य। काव्यप्रकाश (१.४) वृत्तिः

२. प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः। वाक्यपदीय - ब्रह्मकाण्ड - ११
तत्त्वावबोधः शब्दानां नाऽस्ति व्याकरणादृते वाक्यपदीय - ब्रह्मकाण्ड - १३

३. नित्याश्च शब्दाः। महाभाष्य द्वितीय आह्निक

४. श्रोत्रोपलब्धिर्बुद्धिग्राह्यः। प्रयोगेणाभिज्ज्वलित आकाशदेशः शब्दाः एकं च पुनराकाशम्। महाभाष्य द्वितीय आह्निक

पूर्ववर्णसंस्कारैः सह सम्मिश्रोऽन्तिमवर्णानुभवः सम्पूर्णं शब्दमुपस्थायाऽर्थमभिव्यनक्ति।

पतञ्जलिना प्रोक्तम् -

सः शब्दः स्फोटो ध्वनिश्च तस्य गुणः।

स्फोटस्य ध्वनेश्च स्वरूपं भर्तृहरिणा सुस्पष्टं व्याख्यातम्। तेन प्रोक्तम् -

इन्द्रियाणां (जिह्वादीनाम्) संयोगविभागाभ्यां समुत्पन्नः शब्दः स्फोटो भवति। स्फोटरूपाच्छब्दादुत्पन्नः शब्दो ध्वनिरित्युक्तः।[१]

अतोऽधिकं स्पष्टीकरणं भर्तृहरिणा पुनः कृतम् - अनिर्वचनीयव्यक्तरूपस्फोटगुणग्रहणानुकूलप्रत्ययैः ध्वनिना स्फोटरूपशब्दे प्रकाशिते तस्य स्वरूपमवधार्यते।[२]

एवं वैयाकरणाः स्फोटस्वरूपप्रकाशकं शब्दं ध्वनिं कथयन्ति। स्फोटो व्यङ्ग्यो ध्वनिश्च व्यञ्जकः। वैयाकरणाननुसरन्तो ध्वनिवादिनः काव्यशास्त्रविद आचार्या शब्दार्थयोः द्वयोरपि व्यञ्जकत्वाच्छब्दार्थयुगलं ध्वनिमाहुः। इमे ह्याचार्या अभिधालक्षणाव्यापारातिरिक्तं प्रतीयमानार्थाभिव्यञ्जकं व्यञ्जनाव्यापारमपि ध्वनिं जगदुः। तत्त्वानि सर्वाण्येतानि काव्ये यतः समुदायरूपेणाऽवतिष्ठन्ते, अतः तत्काव्यमपि ते ध्वनिमाहुः।

## ४. ध्वनिपदस्याऽर्थः

ध्वनिपदस्य निर्वचनं त्रिधा क्रियते -

(क) ध्वनतीति ध्वनिः।

(ख) ध्वन्यत इति ध्वनिः।

(ग) ध्वननं ध्वनिः।

प्रथमव्युत्पत्त्यनुसारेण प्रतीयमानार्थाभिव्यञ्जकौ वाचकवाच्यौ ध्वनिसंज्ञया गृह्येते। द्वितीयव्युत्पत्तिमनुसृत्य व्यङ्ग्योऽर्थो ध्वनिरस्ति। तृतीयव्युत्पत्तिमधिकृत्य व्यञ्जनाव्यापारो ध्वनिर्भवति। चत्वारोऽप्येते ध्वनयो यतः काव्येऽवतिष्ठन्ते, अतः काव्यमपि ध्वनिरुच्यते। आनन्दवर्धनेन पञ्चाऽप्येतानि तत्त्वानि वाच्यवाचकव्यङ्ग्यव्यञ्जनाव्यापारकाव्यानि ध्वनिपदेन व्यवहृतानि।[३] पञ्चानामेतेषां ध्वनीनां व्याख्याऽभिनवगुप्तेनैवं विहिता -

---

१. यः संयोगविभागाभ्यां करणैरुपजायते।
स स्फोटः शब्दजाश्शब्दाः ध्वनयोऽन्यैरुदाहृताः।। वाक्यपदीय - ब्रह्मकाण्ड - ८३

२. प्रत्ययैरनुपाख्येयैर्ग्रहणानुग्रहणैस्तथा।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते।। वाक्यपदीय - ब्रह्मकाण्ड - १०२

३. वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः।
ध्वन्यालोक (२.१३) वृत्तिः

अतः वाच्योऽपि ध्वनिः वाचकोऽपि शब्दो ध्वनिः द्वयोरपि व्यञ्जकत्वं ध्वनतीति कृत्वा। सम्मिश्र्यते विभावानुभावसंवलनयेति, व्यङ्ग्योऽपि ध्वनिः। ध्वन्यत इति कृत्वा। शब्दनं शब्दः शब्दव्यापारः। न चासावभिधारूपः, अपित्वात्मभूतः, सोऽपि ध्वनिः। काव्यमिति व्यपदेश्यश्च योऽर्थ., सोऽपि ध्वनिः, उक्तप्रकारेण ध्वनिचतुष्टयमयत्वात्।[१]

इत्थं वाचकः शब्दो, वाच्यार्थो, व्यङ्ग्यार्थो, व्यञ्जनाव्यापारः काव्यञ्च सर्वेऽपि ध्वनि-संज्ञया व्यवह्रियन्ते। आचार्येण विश्वेश्वरेण पञ्चस्वप्येतेषु भेदेषु ध्वनित्वप्रदर्शनं निम्नप्रकारेण कृतम्[२] -

(क) ध्वनति ध्वनयति वा यः स व्यञ्जकः शब्दः ध्वनिः।

(ख) ध्वनति ध्वनयति वा यः स व्यञ्जकोऽर्थः ध्वनिः।

(ग) ध्वन्यत इति ध्वनिः स व्यङ्ग्योऽर्थः ध्वनिः। अत्र वस्त्वलङ्कारसाः त्रिविधाः व्यङ्ग्यार्थाः गृह्यन्ते।

(घ) ध्वन्यतेऽस्मिन्निति ध्वनिः। यत्र वस्त्वलङ्काररसादयो ध्वनयोऽवतिष्ठन्ते तत् काव्यमपि ध्वनिः।

## ५. ध्वनिकाव्यस्य लक्षणम्

आनन्दवर्धनकृता ध्वनिकाव्यपरिभाषा वर्तते -

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।**[३]

यत्रार्थो वाच्यविशेषोः वाचकविशेषः शब्दो वा तमर्थं व्यङ्क्तः, स काव्यविशेषो ध्वनिरिति।

यत्र वाच्यार्थः स्वात्मानं वाचकशब्दश्च स्वात्मानं वाच्यार्थञ्चोपसर्जनीकृत्य प्रतीयमानार्थमभिव्यङ्क्तः स काव्यविशेषो ध्वनिरित्युच्यते।

आनन्दवर्धनमतमनुसृत्य प्रतीयमानार्थस्य वाच्यार्थस्य चातिशयमधिकृत्य ध्वनेर्लक्षणं विधीयते। काव्ये द्विविधाः सहृदयहृदयाह्लादकाः श्लाघ्या अर्थाः सम्भवन्ति - वाच्याः प्रतीयमानाश्च।[४] यदि वाच्यार्थात् प्रतीयमानस्यार्थस्यातिशयो भवति, तत्काव्यं ध्वनिरित्युच्यते। यदि च तत्र नातिशयस्तत्काव्यं गुणीभूतव्यङ्ग्यमित्युच्यते।[५]

---

१. ध्वन्यालोक (१.१३) वृत्तिलोचनटीका,

२. आचार्यविश्वेश्वरकृता ध्वन्यालोकव्याख्याभूमिका - पृ० ३,

३. ध्वन्यालोक १.१३

४. योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ।। ध्वन्यालोक १.२

५. प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षवत्।। ध्वन्यालोक ३.३५

वाच्यार्थाद् व्यङ्ग्यार्थस्याऽतिशयस्याऽयमभिप्रायो, यत्र वाच्यार्थाद् व्यङ्ग्यार्थे चमत्कृतिंचारुत्वमतिशयेन भवति।[१] वाच्यार्थव्यङ्ग्यार्थयोः प्राधान्यं वाऽतिशयत्वं वा चारुत्वातिशयेन प्रकल्प्यते।

चारुत्वातिशयमुपाश्रित्य ध्वनिकारेण द्वौ काव्यभेदौ संस्तुतौ -- ध्वनिः गुणीभूतव्यङ्ग्यश्च।

यस्मिन् काव्ये प्रतीयमानार्थस्य विवक्षा न विद्यते, अपितु शब्दालङ्काराणामर्थालङ्काराणां वा चमत्कृतिप्रदर्शनाय कविः काव्यरचनां विदधाति, तच्चित्रकाव्यं भवति। आनन्दवर्धनश्चित्र-काव्यं न काव्यमिति गणयति। काव्यस्याऽनुकरणमेव तत्। अत्र ध्वनिकारस्याऽभिमतं वर्तते -

चित्रकाव्यं वस्तुतो न काव्यम्, ध्वनौ गुणीभूतव्यङ्ग्ये चैव काव्यत्वं सन्निहितं भवति।[२]

आनन्दवर्धनेन कृतं ध्वनिकाव्यलक्षणमुत्तरवर्तिभिराचार्यैर्ध्वनिवादिभिस्तथैव स्वीकृतम्। मम्मटो ध्वनिकाव्यलक्षणमेवंप्रकारेण जगाद -

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।**[३]

वाच्यार्थाद् व्यङ्ग्येऽर्थेऽतिशयिनि काव्यमुत्तममुच्यते। तदेव बुधैर्ध्वनिरिति संज्ञितः। अस्याः कारिकायाः व्याख्या वर्तते -

**न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य ध्वनिरिति व्यवहारः कृतः।**

वाच्यार्थतिरस्कारिणो व्यङ्ग्यार्थस्य व्यञ्जने क्षमस्य शब्दार्थयुगलक्ष्य ध्वनिरिति संज्ञा विद्वद्भिः क्रियते।

प्रतीयमानार्थस्याऽतिशयमाश्रित्य मम्मटेन काव्यस्य त्रयो भेदाः प्रकीर्तिताः। यत्र वाच्यार्थात् प्रतीयमानस्याऽर्थस्याऽतिशयस्तदुत्तमं काव्यं ध्वनिकाव्यमिति। यत्र नाऽसावतिशयस्तन्मध्यमं गुणीभूतव्यङ्ग्यकाव्यम्।[४] यत्र प्रतीयमानार्थस्य न विवक्षा, शब्दालङ्काराणामर्थालङ्काराणां वा चमत्कृतिप्रदर्शनमेव कवेरभिप्रायस्तदधमं चित्रकाव्यम्। तच्च चित्रकाव्यं द्विविधम् - शब्दचित्रमर्थचित्रञ्च।[५]

---

१. चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा। ध्वन्यालोक (१.१३) वृत्तिः

२. ततोऽन्यद् रसभावादितात्पर्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यञ्च काव्यं केवलं वाच्यवाचकाश्रयेणोपनिबद्धमालेख्यप्रख्यं यदाभासते तच्चित्रम्। न तन्मुख्यं काव्यम्। काव्यानुकारो ह्यसौ। ध्वन्यालोक (३.४३) वृत्तिः

३. काव्यप्रकाश १.४

४. अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्। काव्यप्रकाश १.५

५. शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्। काव्यप्रकाश १.५

ध्वनिकाव्यलक्षणकरणे विश्वनाथोऽप्यानन्दवर्धनमन्वसरत्। तेनाऽपि प्रतीयमानार्थस्याऽतिशय आधारीकृतः। विश्वनाथेन प्रोक्तम् -

वाच्याद् व्यङ्ग्यार्थस्याऽतिशये ध्वनिकाव्यं तदेव चोत्तमम्।[१] परन्तु वाच्याद् व्यङ्ग्यार्थेऽनुत्तमे स्वल्पचमत्कारिणि गुणीभूतव्यङ्ग्यकाव्यं तदेव च मध्यमं काव्यम्।[२]

पण्डितराजो जगन्नाथोऽपि ध्वनिकाव्यलक्षणकरणे ध्वनिकारमनुचकार। तेनाऽपि प्रतीयमानार्थस्याऽतिशय आधारीकृतः। जगन्नाथेन प्रोक्तम् -

शब्दार्थौ स्वयमुपसर्जनीकृतस्वार्थौ व्यङ्ग्यार्थमभिव्यङ्क्तस्तदुत्तमोत्तमं ध्वनिकाव्यम्। व्यङ्ग्यार्थं यत्राऽप्रधानं सत् चमत्कृतिमुत्पादयति तद् गुणीभूतव्यङ्ग्यमुत्तमं काव्यम्। यत्र व्यङ्ग्यार्थचमत्कृत्यसमानाधिकरणो वाच्यालङ्कारश्चमत्कृतिमादधाति, तत्तृतीयमर्थचित्रं नाम मध्यमं काव्यम्। यत्रार्थचमत्कृत्युपकृतशब्दालङ्कारश्चमत्कृतिमातनोति, तच्चतुर्थमधमं शब्दचित्रं नाम काव्यं भवति।[३]

वाच्यव्यङ्ग्ययोरर्थयोरतिशयभेदेनाऽऽनन्दवर्धनेन ध्वनिगुणीभूतव्यङ्ग्ययोः काव्ययोः पृथक्त्वे स्थापितेऽपि निर्दिष्टम्ः -

यदि रसादितात्पर्येण काव्यस्य निबन्धनं क्रियते, तदा ध्वनिगुणीभूतव्यङ्ग्ययोः काव्ययोः भेदोऽपि निवर्तते। अतो रसादितात्पर्येण गुणीभूतव्यङ्ग्यकाव्यमपि ध्वनिरूपतामेव प्राप्नोति।[४]

ध्वनिवादिभिराचार्यैर्ध्वनेः मुख्यरूपेण त्रयो भेदाः प्रकल्पिताः - वस्तुध्वनिरलङ्कारध्वनी रसध्वनिश्च। आनन्दवर्धनप्रोक्ते व्याख्याने ध्वनिगुणीभूतव्यङ्ग्ययोर्भेदस्थितिः वस्तुध्वनावलङ्कारध्वनौ चैव सम्भवति। यत्र तु रसध्वनिस्तस्य काव्यस्य रसादितात्पर्येण विरचितत्वात् सर्वथा ध्वनिकाव्यत्वमेवेष्यते।

एवं ध्वनिकाव्यस्वरूपं सुस्पष्टमेव। यस्मिन् काव्ये वाच्याद् व्यङ्ग्यार्थस्याऽतिशयस्तद् ध्वनिकाव्यम्। अतिशयोऽयं चारुत्वोत्कर्षनिबन्धनमाश्रयते। रसादितात्पर्येण निबद्धं काव्यं सदा ध्वनिकाव्यमेव निर्धारणीयम्।

---

१. वाच्यादतिशयिनि व्यङ्ग्ये ध्वनिस्तद् काव्यमुत्तमम्। साहित्यदर्पण ४.१

२. अपरं तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये। साहित्यदर्पण ४.१३

३. शब्दार्थौ यत्र गुणीभूतात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम्। यत्र व्यङ्ग्यमप्रधानमेव सच्चमत्कारकारणं तद् द्वितीयम्। यत्र व्यङ्ग्यचमत्कारासमानाधिकरणो वाच्यचमत्कारस्तत् तृतीयम्। यत्रार्थचमत्कृत्युपस्कृता शब्दचमत्कृतिः प्रधानं तदधमं चतुर्थम्।
रसगङ्गाधर प्रथममाननम्

४. प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्यपर्यालोचनया पुनः।। ध्वन्यालोक ३.३१

## ६. ध्वनिकाव्यस्य भेदाः

पारमार्थिकरूपेण ध्वनेरेकत्वेऽपि लोकव्यवहारमाश्रित्य ध्वनिवादिभिराचार्यैर्ध्वनिकाव्यस्याऽनेके भेदाः प्रदर्शिताः। प्रथमं तावत् काव्यं द्विविधम् - अविवक्षितवाच्यं (लक्षणामूलम्) विवक्षितान्यपरवाच्यञ्च (अभिधामूलम्)। अविवक्षितवाच्ये ध्वनौ वाच्यार्थस्य बाधितत्वात्तस्य न विवक्षा। विवक्षितान्यपरवाच्यध्वनौ वाच्योऽर्थोऽबाधितोऽपि विवक्षितोऽपि व्यङ्ग्यार्थपरो भवति।

अविवक्षितवाच्यस्य ध्वनेर्द्वौ भेदौ भवतः -- अर्थान्तरेसङ्क्रमितवाच्यमत्यन्ततिरस्कृतवाच्यञ्च। विवक्षितान्यपरवाच्यस्याऽपि ध्वनेर्द्वौ भेदौ भवतः - संलक्ष्यव्यङ्ग्यक्रमोऽसंलक्ष्यक्रमव्यङ्ग्यश्च। असंलक्ष्यक्रमव्यङ्ग्ये ध्वनौ वाच्यव्यङ्ग्ययोरर्थयोः क्रमो न लक्ष्यते। रसभावादिभेदैरसौ बहुविधो भवति। अनन्तास्तस्य भेदाः सम्भवन्ति। अतस्तस्यैक एव भेदः सम्मतः।

संलक्ष्यव्यङ्ग्यक्रमध्वनेस्त्रयो भेदाः मुख्याः वर्तन्ते - शब्दशक्त्युद्भवोऽर्थशक्त्युद्भव उभयशक्त्युद्भवश्च।

शब्दशक्त्युद्भवध्वनेरपि द्वौ भेदौ कल्पितौ - अलङ्काररूपो वस्तुरूपश्च।

अर्थशक्त्युद्भवध्वनेर्द्वाद्वश भेदा सम्भवन्ति। प्रथमं तावदयं त्रिषु वर्गेषु विभज्यते - स्वतःसम्भवी, कविप्रौढोक्तिसिद्धः कविनिबद्धवक्तृप्रौढोक्तिसिद्धश्च। अथ प्रत्येकं द्विधा विभज्यते - वस्तुरूपो व्यञ्जकार्थोऽलङ्काररूपो व्यञ्जकार्थश्च। एवमस्य ध्वनेः षड्भेदाः कल्पन्ते। पुनः प्रत्येकं द्विधा विभज्यते - वस्तुरूपव्यङ्ग्यार्थोऽलङ्काररूपव्यङ्ग्यार्थश्च। एवमर्थशक्त्युद्भवध्वनेर्द्वादश भेदाः सम्भवन्ति।

उभयशक्त्युद्भवध्वनेरेक एव भेदो गण्यते।

मम्मटेन काव्यप्रकाशे ध्वनेरष्टादशमुख्यभेदाः निम्नप्रकारेण प्रदर्शिताः -

| | | |
|---|---|---|
| अविवक्षितवाच्यध्वनेर्भेदाः | = | २ |
| असंलक्ष्यक्रमव्यङ्ग्यध्वनेर्भेदाः | = | १ |
| शब्दशक्त्युद्भवध्वनेर्भेदाः | = | २ |
| अर्थशक्त्युद्भवध्वनेर्भेदाः | = | १२ |
| उभयशक्त्युद्भवध्वनेर्भेदाः | = | १ |
| | | १८ |

ध्वनेरिमेऽष्टादशभेदाश्चित्ररूपेण निम्नप्रकारेण प्रदर्श्यन्ते -

ध्वनि
अविवक्षितवाच्य (लक्षणामूल)
विवक्षितात्यपरवाच्य (अभिधामूल)
अर्थान्तरसंक्रमित (१)
अत्यन्ततिरस्कृत (२)
अलक्ष्यक्रम (३)
संलक्ष्यक्रम
रस
भाव
रसाभास
भावाभास
भावशान्ति
भावोदय
भावसन्धि
भावशबलता
शृङ्गारादयः
शब्दशक्त्युद्भव
अर्थशक्त्युद्भव
उभयशक्त्युद्भव (४)
वस्तु (५)
अलङ्कार (६)
स्वतःसम्भवी
कविप्रौढोक्तिसिद्ध
कविनिबद्धवक्तृप्रौढोक्तिसिद्ध
वस्तुरूप व्यञ्जक अर्थ
अलङ्काररूप व्यञ्जक अर्थ
वस्तुरूप व्यञ्जक अर्थ
अलङ्काररूपव्यञ्जक अर्थ
वस्तुरूप व्यञ्जक अर्थ
अलङ्काररूप व्यञ्जक अर्थ
वस्तु (७)
अलङ्कार (८)
वस्तु (९)
अलङ्कार (१०)
वस्तु (११)
अलङ्कार (१२)
वस्तु (१३)
अलङ्कार (१४)
वस्तु (१५)
अलङ्कार (१६)
वस्तु (१७)
अलङ्कार (१८)

## ७. ध्वनिविरोधिन आचार्याः

आनन्दवर्धनेन सर्वथा निर्भ्रान्तरूपेण ध्वनेः स्थापना कृता। परमस्य ध्वनिसिद्धान्तस्य विरोधो ध्वनिकारात् पूर्वमपि बभूव तदनन्तरञ्चाऽप्यासीत्। पूर्ववर्तिनां ध्वनिविरोधिनां युक्तीनां समाधानं स्वयमानन्दवर्धनेन कृतम्। परन्तु पश्चाद्वर्तिनां ध्वनिविरोधिनां युक्तीनां समाधानं मुख्यतोऽभिनवगुप्तेन मम्मटेन च विहितम्। तदनन्तरं ध्वनिसिद्धान्तोऽयं सर्वमान्यरूपेण प्रतिष्ठामवाप। ध्वनिसम्प्रदायस्य विवेचनाप्रसङ्गे ध्वनिविरोधिनामाचार्याणां युक्तीनां समीक्षणमावश्यकमुपयोगि च वर्तते।

ध्वनिविरोधिनामाचार्याणां मतानि मुख्यतस्त्रिषु वर्गेषु विभज्यन्ते -

(i) आनन्दवर्धनात् पूर्ववर्तिनो ध्वनिविरोधिनः

(ii) आनन्दवर्धनात् पश्चाद्वर्तिनो ध्वनिविरोधिनः

(iii) अलङ्कारसर्वस्वटीकायां जयरथेनोल्लिखिताः ध्वनिविरोधिनः

एतेषां मतानां विवेचना क्रमशः क्रियते।

**(i) आनन्दवर्धनात् पूर्ववर्तिनो ध्वनिविरोधिनः -**

ध्वन्यालोकग्रन्थस्य प्रथमकारिकायां ध्वनिकारेण ध्वनिविरोधिनां त्रीणि मतानि युक्तिसहितानि वर्णितानि।[1] एतानि मतानि सन्ति -

(क) अभाववादिनः

(ख) भक्तिवादिनः

(ग) अलक्षणीयतावादिनः

त्रयाणां मतानां सारांशोऽत्र प्रस्तूयते -

**(क) अभाववादिनः -**

अभाववादिभिराचार्यैर्ध्वनेरस्तित्वं नाऽङ्गीक्रियते। ते जगदुः -

काव्येषु ध्वनेरस्तित्वमेव न विद्यते। एते ह्याचार्याः काव्येष्वलङ्कारानेव प्रधानत्वेन गणयन्ति। ध्वनिकारेणाऽभाववादिनां त्रयो विकल्पाः प्रस्तुताः -

**(अ) प्रथमेऽभाववादिनो वदन्ति -**

शब्दार्थशरीरं तावत् काव्यं भवति। अतः शब्दानामर्थानाञ्च सौन्दर्यविधायकानि तत्त्वान्येव काव्यस्यात्मानो भवन्ति। शब्दसौन्दर्यहेतवोऽनुप्रासादयोऽलङ्काराः सन्ति।

---

१. काव्यास्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।
केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्।। ध्वन्यालोक १.१

अर्थसौन्दर्यहेतवश्चोपमादयोऽर्थालङ्काराः वर्तन्ते। अलङ्काराः ह्येते प्राचीनाचार्यैर्निरूपिताः। वर्णसंघटनासौन्दर्यहेतवो माधुर्यादयो गुणा अपि प्रोक्ताः। तदनतिरिक्तवृत्तयो वृत्तयोऽप्युपनागरिकाद्याः कथिताः। काव्यसौन्दर्याधायकान्येतान्येव तत्त्वानि तिष्ठन्ति। तद्भिन्नं ध्वनिनामकं तत्त्वं किञ्चिदपि काव्यचारुत्वहेतुर्न विद्यते।

(ब) **परम्पराश्रयिणोऽन्येऽभाववादिनो जगदुः -**

सहृदयहृदयाह्लादकारिणः शब्दा अर्थाश्चैव काव्यरचनाहेतवः। काव्यरचनायाः सौन्दर्यस्य च मार्गः प्राचीनाचार्यपरम्परासुः प्रसिद्धः। तन्मार्गभिन्नोऽन्यः कश्चिदपि मार्गः काव्यचारुहेतुर्न सम्भवति। ध्वनिकल्पना ध्वनिवादिभिः कृता। सा च कल्पना काव्यचारुत्वहेतुत्वेन न विद्वज्जनैः स्वीकरणीया।

(स) **अन्येऽभाववादिनः कथयामासुः -**

ध्वन्यभिधानः कश्चिन्नवः पदार्थः काव्यचारुत्वहेतुर्न वर्तते। यदि कश्चिदन्योऽस्त्येव, तस्याऽन्तर्भावोऽलङ्कारादिषु चारुत्वहेतुषु कर्तुं शक्यते। अलङ्कारादीनां कस्यचिदेकस्य ध्वन्यभिधानेन न कश्चिद् विशेषः सिध्यति। वाणीनामनन्तभेदत्वात् प्राचीनैरलङ्कारवादिभिरलङ्काराणां भेदाः भूयिष्ठं प्रदर्शिताः। यदि तैः कस्यचिदलङ्कारविशेषस्योल्लेखो न विहितो, ध्वनिवादिनश्च तं ध्वनिमाचक्षते, नाऽस्त्यत्र किञ्चित्तेषां वैशिष्ट्यम्।

अभाववादिनां त्रयाणामपि मतानां सारांशोऽयमेव यदभिधायां वाच्यार्थे च ध्वनेरन्तर्भावो ध्रुवं विधातुं शक्यते। सर्वेषामर्थानां बोधोऽभिधयैव सम्भवति। शब्देभ्यः प्रतीयमानाः सर्व एवाऽर्थाः वाच्याः सन्ति।

(ख) **भक्तिवादिनः -**

भक्तिवादिनो ध्वनेरन्तर्भावं लक्षणायां प्रतिपादयन्ति। अथ च व्यञ्जनावादिनां व्यङ्ग्यार्थस्य प्रतीतिर्लक्षणया जायते। एवमयं व्यङ्ग्योऽर्थो भाक्तो गुणवृत्तिर्वा वर्तते। आनन्दवर्धनोऽस्मिन् विषये जगाद -

यद्यपि लक्षणावादिभिर्ध्वनिपदस्योच्चारणं कृत्वा तदर्थं भाक्तस्य गुणवृत्तेर्वा पदस्य व्यवहारो न कृतः, तथापि तैः काव्ये लक्षणाव्यापारव्यवहारप्रदर्शनं कृत्वा ध्वनिमार्गो मनाक् स्पृष्टः। एवं लक्षणाव्यवहारप्रदर्शनकारिभिस्तैः व्यञ्जनावादिनां प्रतीयमानस्याऽर्थस्य प्रतीतिः लक्षणयैव प्रतिपादिता।

(ग) **अलक्षणीयतावादिनः -**

अलक्षणीयतावादिनामभिमतं वर्तते, यद्ध्वनेस्तत्त्वं न गिरा वर्णयितुं शक्यम्। तत्तु सहृदयसंवेद्यमेव वर्तते। अतो ध्वनितत्त्वस्य लक्षणकरणं न सम्भवम्।

आनन्दवर्धनो, ध्वनिविरोधिनामेतेषां युक्तीनां सम्यक् समाधानं कृत्वा ध्वनेः प्रतिष्ठाञ्चकार। परन्तु ध्वनिविरोधो न प्रशान्तो बभूव। आनन्दवर्धनानन्तरमपि ध्वनि-विरोधिनोऽनेक आचार्या स्वमन्तव्यानि प्राकाशयन्।

**(ii) आनन्दवर्धनोत्तरवर्तिनो ध्वनिविरोधिनः -**

आनन्दवर्धनोत्तरवर्तिषु ध्वनिविरोधिष्वाचार्येषु स्वपक्षप्रतिष्ठापकेषु चत्वारः प्रमुखाचार्याः वर्तन्ते -

भट्टनायकः कुन्तको, महिमभट्टः क्षेमेन्द्रश्च।

तेषां मतान्यधो प्रदर्श्यन्ते -

**(क) भट्टनायकः -**

भट्टनायको ह्यानन्दवर्धनोत्तरवर्ती बभूवाऽथ चाऽभिनवगुप्तपूर्ववर्ती। तेन हृदयदर्पणं सहृदयदर्पणं वा पुस्तकं विरचितम्। वर्तमानसमयेऽनुपलभ्यमानेऽपि तस्मिन् ग्रन्थे तद्विषयकाः ह्यनेकाः सूचना अन्येभ्यो ग्रन्थेभ्यः समुपलभ्यन्ते। भट्टनायकमन्तव्यानां निराकरणमभिनवगुप्तेन विहितम्। अभिनवगुप्तेनोक्तम् - भट्टनायको ध्वनेः खण्डनञ्चकारा।[1] व्यक्तिविवेककारो महिमभट्टोऽपि लिलेख - हृदयदर्पणे ध्वनेः खण्डनं वर्तते।[2]

भट्टनायकेन व्यञ्जनावृतिर्न स्वीकृता। काव्ये रसास्वादनं स्वीकुर्वन्नप्यसौ तदर्थं व्यञ्जनावृत्तेरावश्यकतां नाऽङ्गीचकार। काव्ये तेन केवलमभिधावृत्तिः स्वीकृता। रसस्याऽऽस्वादनायाऽसौ भावकत्वव्यापारं भोजकत्वव्यापारञ्च शक्तिद्वयमुद्भावयामास। भावकत्वव्यापारेण काव्यगतपात्राणां साधारणीकरणं जायते, भोजकत्वव्यापारेण च सामाजिको रसमास्वादयति।

भट्टनायकानन्तरं ध्वनिवादिभिराचार्यैः रसास्वादनाय साधारणीकरणसिद्धान्तस्तु स्वीकृतः, परं भावकत्वभोजकत्वव्यापारौ न स्वीकृतौ। तयोः खण्डनं कृतम्। तैर्व्यञ्जनावृत्त्या रसस्य प्रतीयमानत्वं प्रतिपाद्यते। एवं तैः रसस्याऽऽस्वादनं निरूपितम्। परं भट्टनायकेन भोजकत्वव्यापारेण रसस्य भोगः स्वीकृतः।

**(ख) महिमभट्टः -**

ध्वनिवादिनां प्रतीयमानस्याऽर्थस्य प्रतीतिरनुमानेन भवतीति प्रतिपादनाय महिमभट्टो व्यक्तिविवेकाभिधानं ग्रन्थमलिखत्।[3] ध्वनिमनुमानेऽन्तर्भावयितुमसौ प्रायतत।

---

१. किञ्च वस्तुध्वनिं दूषयता रसध्वनिस्तदनुग्राहकः समर्थ्यत इति ध्वनिध्वंसोऽयम्। अभिनवगुप्त।

२. दर्पणो हृदयदर्पणाख्यो ध्वनिध्वंसग्रन्थोऽपि। व्यक्तिविवेक।

३. अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्।। व्यक्तिविवेक - १.१

प्राचीनवर्णनैरनुमीयते यदानन्दवर्धनात् पूर्वमपि केचनाऽऽचार्याः ध्वनिमनुमानेऽन्तर्भावयितुं प्रायतन्त। ध्वन्यालोकस्य प्रथमोद्योते यद्यप्यनुमितिवादिनामुल्लेखो न विद्यते, तथापि तृतीयोद्योते ध्वनिकारेणाऽनुमितिवादिनां खण्डनं कृतम्।[१]

अभिधावादिना महिमभट्टेन ध्वनिवादिनां प्रतीयमानोऽर्थोऽनुमेयः प्रतिपादितः। असौ व्यङ्ग्यव्यञ्जकभावं निराकृत्य लिङ्गलिङ्गिभावं समर्थितवान्। अथ चाऽसौ ध्वनिकारस्याऽऽनन्दवर्धनस्य ध्वनेरुदाहरणेषु प्रतीयमानार्थमनुमानेनैव साधयितुं प्रायतत। अस्मिन् विषये "भम धम्मिअ वीसत्थो" इत्युदाहरणमेतदतिप्रसिद्धं वर्तते।

महिमभट्टेनाऽऽनन्दवर्धनकृता ध्वनिपरिभाषाऽपि "यत्राऽर्थः शब्दो वा०" प्रतिपदं खण्डिता, सनैपुण्यञ्च समालोचिता।[२]

महिमभट्टस्य वैदुष्यप्रतिभयोः पराकाष्ठा सर्वलोकप्रसिद्धा सुव्यक्ता। परं साहित्यसमालोचकसमाजे नाऽसौ तथा समादरास्पदतां जगाम। स्वपक्षप्रतिपादनेऽसौ सर्वथैकाकी संलक्ष्यते। व्यक्तिविवेकग्रन्थस्य टीकाकारो रुय्यकोऽपि स्वकीयेऽलङ्कारसर्वस्वग्रन्थे व्यक्तिविवेककारस्याऽभिमतस्य खण्डनञ्चकार।[३] अथ च तमुपजहास।[४] महिमभट्टस्य समर्थनाभावस्य साहित्यसमीक्षकसमाजे चाऽस्वीकरणस्य त्रीणि कारणानि विष्णुपदभट्टाचार्येण प्रोक्तानि[५] -

(अ) महिमभट्टेन साहित्यसमीक्षकेषु प्रतिष्ठामवाप्तस्याऽऽनन्दवर्धनस्याऽऽलोचना कृता।

(ब) महिमभट्टकृतव्यक्तिविवेकग्रन्थस्य भाषा सुक्लिष्टा कठोरा दुरूहा च वर्तते।

(स) न कोऽपि सुप्रतिभो मनीषी व्याख्याकारो महिमभट्टस्याऽनुमानसिद्धान्तस्य समर्थनञ्चकार। यद्यस्य ग्रन्थस्य कश्चिदभिनवगुप्तसदृशो व्याख्याकारोऽभविष्यत् स्थितिर्भिन्नैवाऽभविष्यत्।

---

१. अस्त्यतिसन्धानावसरः- व्यञ्जकत्वञ्च शब्दानां गमकत्वं तच्च लिङ्गत्वम्। अतश्च व्यङ्ग्यप्रतीतिर्लिङ्गप्रतीतिरेवेति लिङ्गलिङ्गिभाव एव तेषां व्यङ्ग्यव्यञ्जकभावो नाऽपरः कश्चित्। ध्वन्यालोक (१.३३) वृत्तिः

२. एवञ्च विविच्यमानमनुमानस्यैव सङ्गच्छते नाऽन्यस्य। तथाहि अर्थस्य तावदुपर्सजनीकृतात्मत्वमनुपादेयमेव। तस्य अर्थान्तरप्रतीत्यर्थमुपात्तस्य तद्व्यभिचाराभावात्। न हि अग्न्यादिसिद्धौ धूमादिरुपादीयमानो गुणतामतिवर्तते। व्यक्तिविवेक - प्रथमविमर्शः

३. यत्तु व्यक्तिविवेककारो वाच्यस्य प्रतीयमानं प्रति लिङ्गितया अनुमानान्तर्भावमाख्यत् तद्वाच्यस्य प्रतीयमानेन तादात्म्यतदुत्पत्त्यभावाद् अविचारिताभिधानम्। तदेतत् कुशाग्रीयधिषणैः क्षोदनीयमति गहनम्। इति नेह प्रतन्यते। अलङ्कारसर्वस्व

४. तदेवं महाविदुषां मार्गमनुसृत्य सहृदयशिक्षादराय विचारयतोऽस्य महामतेः न किञ्चित् पर्यानुयोगलेशस्याप्यवसर इत्यलमतिप्रसङ्गेन। व्यक्तिविवेक - रुय्यककृतटीका

५. विषणुपदभट्टाचार्यकृता ध्वन्यालोकस्य टीकायामाङ्गलभाषाप्रस्तावना पृ० Lixii

(ग) कुन्तकः -

ध्वनेः काव्यस्याऽऽत्मत्वप्रतिपादनविरोधे कुन्तकोऽपि वक्रोक्तिजीविताभिधानं ग्रन्थमलिखत्। परन्तु कुन्तकस्योद्देश्यं न तथा ध्वनिविरोधोऽवर्तत, यथा वक्रोक्तिसिद्धान्तस्य स्थापना। कुन्तकेन वक्रोक्तिः शब्दार्थभिन्ना न तथा काचिन्महनीयाऽभिमता, यथा ध्वनिवादिभी रसध्वनिरलङ्कारध्वनिश्च प्रतिपादितः। वक्रोक्तिस्तु शब्दार्थव्याप्तं काव्यस्य प्राणभूतं किञ्चित् तत्त्वमस्ति।

कुन्तकेन ध्वनिकारस्य ध्वनिभेदप्रभेदाः वक्रोक्तावन्तर्भाविताः। काव्येऽसौ रसस्य महत्त्वं स्वीकृत्य वक्रोक्तौ च तं समावेश्याऽलङ्काररूपेण न्यरूपयत्। काव्ये रसोऽपि तथैव चमत्कृतिजनको यथाऽन्येऽलङ्काराश्चमत्कृतिमापादयन्ति।

आनन्दवर्धनस्य लक्षणामूलध्वनेरर्थान्तरेसङ्क्रमितभेदं कुन्तकः पदपूर्वार्द्धवक्रतायाः रूढिवैचित्र्यवक्रतायां समाविष्टमकरोत्। अथ चात्यन्ततिरस्कृतभेदमुपचारवक्रतान्तर्गतं व्यदधात्।[1]

व्यञ्जनाव्यापारस्य स्वतन्त्रमस्तित्वं प्रतीयमानार्थस्य च विद्यमानत्वं कुन्तको नाऽङ्गीचकार। काव्ये वाचकवाच्यशब्दार्थाविव प्रसिद्धौ। अथ च तावेव काव्यं निर्मिमाते। व्यङ्ग्यार्थोऽपि वस्तुतो वाच्यार्थ एव।[2]

(घ) क्षेमेन्द्रः -

क्षेमेन्द्रो न वस्तुतो ध्वनिविरोधी। परमसौ ध्वनिं काव्यस्याऽऽत्मरूपेण नाऽङ्गीकुर्वन्नौचित्यमेव काव्यस्याऽऽत्मानं प्रत्यापादयत्। अत एवाऽसौ ध्वनिविरोधिषु समीक्षकेषु गण्यते।

काव्यसमीक्षकसमाजे क्षेमेन्द्रस्य प्रमुखं स्थानं वर्तते। अभिनवगुप्तशिष्येण तेनौचित्यं काव्यस्य प्राणाः रसश्च जीवितं प्रोक्तम्।

औचित्यस्य प्रतिपादनं विश्लेषणञ्च सर्वप्रथमं क्षेमेन्द्रेण कृतमिति न। औचित्यप्रतिपादनमाचार्याः ध्वनिवादिनोऽपि आनन्दवर्धनाभिनवगुप्तमम्मटादयोऽकुर्वन्त्। रसस्याऽभिव्यञ्जनायै

---

१. यत्र दूरान्तरेऽन्यस्मात् सामान्यमुपचर्यते।
लेशेनाऽपि भवत् काञ्चिद् वक्तुमुद्रिक्तवृत्तिताम्।।
यन्मूला सरसोल्लेखा रूपकादिरलङ्कृतिः।
उपचारप्रधानाऽसौ वक्रता काचिदुच्यते।। वक्रोक्तिजीवित २.१३-१४

२. वाच्योऽर्थो वाचकः शब्दः प्रसिद्धमिति यद्यपि।
तथाऽपि काव्यमार्गेऽस्मिन् परमार्थोऽयमेतयोः।। वक्रोक्तिजीवित १.८

अत्र वृत्तिः - ननु च द्योतकव्यञ्जकावपि शब्दौ सम्भवतः, तदसङ्ग्रहान्नाऽव्याप्तिः। यस्मादर्थप्रतीतिकारित्वसामान्यादुपचारात्तावपि वाचकावेव। एवं द्योत्यव्यङ्ग्ययोरर्थयोः प्रत्येयत्वसामान्यादुपचाराद्वाच्यत्वमेव।

दिभावानुभावव्यभिचारिभावस्थायिभावानां प्रसङ्गेष्वौचित्यं व्यवहरणीयम्। औचित्याभावे रसभङ्गदोषः समुत्पद्यते।[१]

क्षेमेन्द्रस्य प्रमुखं वैशिष्ट्यमिदमेव वर्तते, यत्तेन काव्यसौन्दर्याधायकानि सर्वाण्येव तत्त्वानि गुणालङ्काररसादीन्यौचित्ये समावेशितानि।

क्षेमेन्द्रेणौचित्यं काव्यस्य जीवितं सर्वस्वञ्च स्वीकृतम्। क्षेमेन्द्रकृता ह्यौचित्यपरिभाषा वर्तते -

**उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।**
**उचितस्य च यो भावस्तदौचित्यं प्रचक्षते।[२]**

क्षेमेन्द्रेण प्रोक्तम् -

भौतिका अलङ्कारा उचितस्थानसन्निवेशिताः यथा वपुषो सौन्दर्यं वर्धयन्ति, अनुचिताङ्गेषु च परिदधानाः कुरूपतामेव जनयन्ति, तथैव काव्यगताः गुणालङ्कारा अपि औचित्येन सन्नियोजिता एव काव्यशोभाधायकाः भवन्ति।[३]

एवं क्षेमेन्द्रः काव्ये ध्वनेरौचित्यमेव महत्तरममनुत, तच्च काव्यजीवितं जगाद।

**(iii) जयरथेनोल्लिखितानि ध्वनिविरोधीनि मतानि -**

जयरथेन रुय्यककृताऽलङ्कारसर्वस्वग्रन्थस्य टीका लिखिता। तत्र तेन ध्वनिविरोधिनां द्वादशमतानामुल्लेखः कृतः। समये समये ध्वनिसिद्धान्तमधिकृत्य कृतानामाक्षेपाणां संग्रहं कृत्वा केनचिद् विदुषा ते कारिकारूपेण निबद्धाः। तत्र कारिकाद्वयं जयरथेन स्वटीकायां समुद्धृतम् -

**तात्पर्यशक्तिरभिधा लक्षणानुमितिर्द्विधा।**
**अर्थापत्तिः क्वचित्तन्त्रं समासोक्त्याद्यलङ्कृतिः।।**
**रसस्य कार्यता भोगो व्यापारान्तरबाधनम्।**
**द्वादशेत्थं ध्वनेरस्य स्थिताः विप्रतिपत्तयः।।**

ध्वनिसम्बन्धिनां विप्रतिपत्तीनां वर्णनं निम्नप्रकारेण वर्तते -

**(१) तात्पर्या शक्तिः -**

**तात्पर्यावृत्तिप्रतिपादकानामभिहितान्वयवादिनां मतमेतत्।**

---

१. अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा।। ध्वन्यालोक (३.१४) वृत्तिः

२. औचित्यविचारचर्चा - ७

३. उचितस्थानविन्यासादलङ्कृतिरलङ्कृतिः।
औचित्ययादच्युता नित्यं गुणा एव गुणाः सदा।। औचित्यविचाचरचर्चा - ६

**(२) अभिधा -**

तात्पर्यावृत्तिविरोधिनामन्विताभिधानवादिनां मतमेतत्।

**(३-४) द्विधा लक्षणा -**

तृतीया चतुर्थी च विप्रतिपत्तिद्वयं लक्षणावादिनां वर्तते। लक्षणा द्विविधा वर्तते - जहत्स्वार्था अजहत्स्वार्था च। लक्षणावादिनो लक्षणाव्यापारद्वयेन व्यङ्ग्यार्थं प्रतिपादयन्ति।

**(५-६) द्विधा अनुमितिः -**

अनुमितिरपि द्विविधा भवति - स्वार्थानुमितिः परार्थानुमितिश्च। शङ्कुकमहिमभट्टादिभिराचार्यैरनुमानद्वयेन ध्वनिरनुमेयो प्रतिपादितः। व्यङ्ग्यार्थत्रयं वस्त्वलङ्काररसरूपमप्यनुमेयं भवति।

**(७) अर्थापत्तिः -**

केचन ध्वनिविरोधिनो मीमांसका अर्थापत्तिप्रमाणेन व्यङ्ग्यार्थं प्रतिपादयन्ति। अर्थापत्तिरियं द्विविधा भवति - श्रुतार्थापत्तिः दृष्टार्थापत्तिश्च।

**(८) तन्त्रम् -**

अनेकार्थप्रतिपादनाय एकस्यैव पदस्य प्रयोगः तन्त्रमित्युच्यते।[१] तन्त्रवादिनामभिमतं यद् वाच्यार्थव्यङ्ग्यार्थयोर्बोधनेच्छया तन्त्रप्रयोगेण व्यङ्ग्यार्थस्याऽपि बोधो भवति।

**(९) समासोक्त्यादयोऽलङ्काराः -**

अलङ्कारवादिनः प्राचीनाचार्याः समासोक्त्याक्षेपार्थान्तरन्यासानुक्तनिमित्तविशेषोक्तिपर्यायोक्तापह्नुत्यन्योक्तिव्यतिरेकादिष्वलङ्कारेषु ध्वन्यर्थमन्तर्भावयन्ति। अस्य मतस्य खण्डनं स्वयं ध्वनिकारेण कृतम्।

**(१०) रसस्य कार्यता -**

मतमिदं भट्टलोल्लटादीनां प्राचीनाचार्याणामलङ्कारवादिनां वर्तते। तेऽवदन् - रसः कार्यो वर्तते, यस्योत्पत्तिर्भवति। नाऽसौ प्रतीयमानः। मतमिदमपि ध्वनिकारेण ध्वन्यालोकस्य प्रथमोद्योते निराकृतम्।

**(११) भोगः -**

भट्टनायको रसं भोज्यमुवाद। रसविषयकानामुत्पत्त्यनुमित्यभिव्यक्तिसिद्धान्तानां तेन खण्डनं कृतम्। भट्टनायकेन प्रोक्तम् - अभिधया विभावादयो वाच्याः भवन्ति। तदनन्तरं ते भावकत्वव्यापारेण साधारणीक्रियन्ते। अथ भोजकत्वव्यापारेण रसः सामाजिकैर्भुज्यते। अस्य मतस्य खण्डनमभिनवगुप्तेन कृतम्।

**(१२) व्यापारान्तरबाधनम् -**

मतस्याऽस्य प्रवर्तको विवादास्पदतां भजते। डा० राघवन् महोदयोऽत्र लिखति - मतमिदं वक्रोक्तिवादिनां वर्तते, वक्रोक्तिव्यापारेण ध्वनेरन्तर्भावितत्वात्। परं महामहोपाध्यायः

---

१. तन्त्रं नाम अनेकार्थबोधनेच्छया पदस्यैकस्य यदुच्चारणम्

कुप्पूस्वामी ब्रूते - मतमिदमलक्षणीयतावादिनां मन्तव्यं, यतो वक्रोक्तिरलङ्कारेषु परिगणिता वर्तते। पुनः कुन्तको ध्वनिं स्वीकृत्याऽपि तं वक्रोक्तावन्तर्भावितवान्। असौ ध्वनिं काव्यास्यात्मानं नाऽब्रवीत्।

ध्वनिविरोधिनामाक्षेपाणामुत्तराणि ह्यानन्दवर्धनेन तदुत्तरवर्तिभिश्चाचार्यैः सम्प्रस्तुतानि। अत्र ध्वनिविरोधिनां मन्तव्यानि युक्तीश्च विचार्य तत्खण्डनमपि संक्षेपेण कर्तुमुचितम् -

### ८. ध्वनिविरोधिमतानां युक्तयस्तासाञ्च समाधानम्

ध्वनिविरोधिनां मतानामत्र संक्षेपेणोल्लेखे कृते तेषां सम्यक् समीक्षणमुचितम्। विमर्शेण सर्वाण्येतानि ध्वनिविरोधिमतानि षट्सु वर्गेषु विभज्यन्ते -

(i) अलङ्कारवादिनः प्राचीनाचार्याः ध्वनिमलङ्कारेष्वेवाऽन्तर्भावयन्ति। अथ च तेऽलङ्कारमार्गभिन्नमन्यं कञ्चिदपि चारुत्वमार्गं न स्वीकुर्वन्ति।

(ii) अलक्षणीयो ध्वनिर्न लक्षयितुं शक्यते।

(iii) केचनाऽलङ्कारवादिनो मनीषिणो ध्वनिवादिनां प्रतीयमानमर्थमभिधयैव प्रतिपादयन्ति। अर्थोऽसौ वाच्य एव।

(iv) केचन समीक्षकाः ध्वनिवादिनां प्रतीयमानमर्थं लक्षणया प्रतिपादयन्ति। अर्थोऽसौ लक्ष्य एव।

(v) अन्येषामाचार्याणां मते प्रतीयमानस्याऽर्थस्याऽस्तित्वं वर्तते, परन्तु तस्य प्रतीति-रभिधयैव जायते। न तत्र व्यञ्जनाव्यापारस्याऽऽवश्यकत्वम्।

(vi) अपरे ह्याचार्याः ध्वनिविरोधिनो ध्वनिवादिनां प्रतीयमानस्यार्थस्य प्रतीतिमनुमानेनैव साधयन्ति।

सर्वेषामेतेषां ध्वनिविरोधिनां मतानां पक्षाणाञ्च विशदमालोचनं ध्वन्यालोककाव्यप्रकाशादिषु ग्रन्थेषु विस्तरेण वर्तते। तदालोचनमत्र सारांशरूपेण संगृह्य प्रस्तूयते। ध्वनिविरोधिनामाचार्याणां युक्तीनां समाधानाय निम्नलिखितानि दश प्रमाणानि सयुक्ति प्रस्तूयन्ते।

**(१) प्रथमं प्रमाणम् -**

अलङ्कारवादिनो वदन्ति - शब्दार्थगतचारुत्वहेतवोऽनुप्रासोपमादयश्चाऽलङ्काराः गुणवृत्तिरीत्यादयश्च सन्त्येव। तद्भिन्नो न कोऽपि काव्येषु चारुत्वमार्गः। परमेतत् कथनं नोचितम्।

अलङ्कारादीनां विषयः पृथग् वर्तते, ध्वनेश्च विषयः पृथगस्ति। अनुप्रासोपमादयः केवलं शब्दार्थावुपकुर्वन्ति। ध्वनेर्विषयो भिन्न एव।

अलङ्कारवादिनो यत् प्रतिपादयन्ति - अलङ्कारादिप्रसिद्धप्रस्थानव्यतिरेकिणः काव्यमार्गस्यावलम्बनेन काव्यत्वहानिर्भविता। ध्वनिर्न केवलं लक्षणकृत्स्वेव प्रसिद्धः, परन्तु काव्यस्योत्तमस्य परीक्षायां ध्वनिरेव सहृदयाह्लादकं तत्त्वं सिद्ध्यति। ध्वनिविरहितं काव्यं तु केवल चित्रकाव्यमेव।

अलङ्कारवादिनो यदाहुः - ध्वनिरपि चारुत्वहेतुरलङ्काराश्चाऽपि चारुत्वहेतवः। अतो ध्वनेरन्तर्भावोऽलङ्कारेष्वेव सम्भवः, तदपि नोचितम्। अलङ्कारास्तु केवलं वाच्यवाचकावेवाऽऽश्रयन्ते, परं ध्वनेराश्रयो व्यङ्ग्यव्यञ्जकभावः। अलङ्कारा अङ्गरूपाः ध्वनिश्चाऽङ्गिरूपः। अलङ्काराः स्वल्पविषयाः ध्वनिश्च महाविषयः। अतो ध्वनेरन्तर्भावोऽलङ्कारेषु न सम्भवः।

एवमिदं सिद्धमेव, ध्वनेर्मार्गोऽलङ्कारादिमार्गाद् भिन्न एव। सहृदयहृदयाह्लादकस्य ध्वनेरन्तर्भावो न कथमप्यलङ्कारेषु सम्भवति।

(२) **द्वितीयं प्रमाणम्** -

ध्वनिरलक्षणीयोऽपि न विद्यते। ध्वनेः सामान्यविशेषलक्षणे सञ्जातेऽपि कथमसावलक्षणीयो वक्तुं शक्यते।

(३) **तृतीयं प्रमाणम्** -

ध्वनिर्नाभिधेयः। ध्वनेर्मुख्यौ द्वौ भेदौ वर्तेते - अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च। अत्राऽविवक्षितवाच्यो ध्वनिर्लक्षणामूलो विवक्षितान्यपरवाच्यश्चाऽभिधामूलः। कथमपि दुर्जनतोषन्यायेन प्रतीयमानोऽर्थो वाच्योऽपि यदि भवेत्, कथमविवक्षितवाच्यस्य ध्वनेस्तत्र समावेशः सम्भवेत्। मुख्यार्थबाधेऽभिधावैफल्ये लक्षणया लक्ष्यार्थस्य बोधे प्रतीयमानोऽर्थोऽवबुध्यते। अतो न ध्वनिरभिधाव्यापारविषयः। लक्षणया चाऽपि ध्वनिर्न सिध्यति, यतो विवक्षितान्यपरवाच्यध्वनावभिधाव्यापारस्याऽवैफल्याल्लक्षणायाः प्रयोगस्य नाऽवसरः।

(४) **चतुर्थं प्रमाणम्** -

वाच्यप्रतीयमानार्थौ नैकत्वं बिभ्रतः। अतः प्रतीयमानार्थो नाऽभिधाविषयः। वाच्यप्रतीयमानयोरर्थयोर्वैभिन्न्ये बोद्धृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालाश्रयविषयादयो हेतवोऽर्थनिर्णायकाः भवन्ति।[१] ते च हेतवो निम्नरूपेण सन्ति -

(i) **बोद्धा** -

बौद्धृभेदाद् वाच्यप्रतीयमानार्थौ भिद्येते। वाच्यार्थबोधः शब्दार्थानुशासनैः कोशव्याकरणादिभिः शास्त्रैर्जायते। परं प्रतीयमानार्थस्य प्रतीतिः काव्यमर्मविदां सहृदयानामेव भवति।[२]

(ii) **स्वरूपम्** -

वाच्यप्रतीयमानयोरर्थयोः स्वरूपभेदोऽपि भवति। वाच्यार्थे विधिरूपे क्वचित् प्रतीयमानोऽर्थः प्रतिषेधरूपो भवति। वाच्यार्थे प्रतिषेधरूपे क्वचित् प्रतीयमानोऽर्थो विधिरूपो भवति। क्वचिद्

---

१. बोद्धृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालानाम्।
आश्रयविषयादीनां भेदाद् भिन्नोऽभिधेयतो व्यङ्ग्यः।। साहित्यदर्पण ५.२

२. शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्।। ध्वन्यालोक १.७

वाच्यार्थे विधिप्रतिषेधरूपे सति प्रतीयमानोऽर्थोऽनुभयरूपो भवति। वाच्यार्थे क्वचित् संशयात्मके सति प्रतीयमानोऽर्थो निश्चयात्मको भवति।

(iii) संख्या -

वाच्यप्रतीयमानार्थौ संख्याभेदादपि भिन्नौ भवतः। वाच्यार्थः सर्वेषामपि श्रोतॄणामेक एव, परन्तु प्रतीयमानोऽर्थो विभिन्नश्रोतॄणां भिन्न एव सम्भवति। वाच्यार्थस्य साक्षात्सङ्केतितत्वात् तस्य स्वरूपं नियतमेव स्वभावश्चाऽपि नियतः। परन्तु प्रकरणादिवशाद् व्यङ्ग्योऽर्थोऽनियत-रूपोऽनियतस्वभावश्च भवति।

(iv) निमित्तम् -

वाच्यार्थस्य बोधः शब्दज्ञानेन प्रकरणादिसाहाय्येन च जायते। परन्तु व्यङ्ग्यार्थस्य बोधः प्रतिभानैर्मल्येनैव भवति।

(v) कार्यम् -

वाच्यार्थस्य कार्यं केवलं वस्तुज्ञानप्राप्तिर्विद्यते, परन्तु व्यङ्ग्यार्थेन आनन्दरूपचमत्कारा-स्वादनं भवति।

(vi) प्रतीतिः -

वाच्यार्थप्रतीतिः शब्दार्थबोधमात्रमेव। परं व्यङ्ग्यार्थप्रतीतिः शब्दमय्यपि चमत्कारमयी भवति।

(vii) कालः -

प्रथमं वाच्यार्थप्रतीतिस्तदनन्तरं व्यङ्ग्यार्थप्रतीतिरिति कालक्रमो भवति। वाच्यप्रतीतिपूर्विका भवति व्यङ्ग्यार्थप्रतीतिः। सर्वेष्वपि ध्वनिभेदेषु पूर्वपश्चाद्भावोऽयं नियत एव। संलक्ष्यक्रमेऽसंलक्ष्य-क्रमेऽपि। संलक्ष्यक्रमे कालभेदोऽयं लक्ष्यते। परन्तु कालभेदोऽयमसंलक्ष्यक्रमे न लक्ष्यते।

(viii) आश्रयः -

वाच्यार्थस्याऽऽश्रयः शब्दो वा पदं वा भवति। परन्तु व्यङ्ग्यार्थस्याऽऽश्रयाः शब्दशब्दार्थ-शब्दैकदेशवर्णसंरचनादयः सर्वे भवन्ति।

(ix) विषयः -

वाच्यार्थस्य विषयो नियत एव। अथ चाऽसौ बोध्यजनायैव भवति। परन्तु व्यङ्ग्यार्थस्य विषयो नियतो वाऽनियतो वा सम्बद्धसम्बन्धो वा वर्तते।

एवं हेतूनां भिन्नत्वाद् वाच्यप्रतीयमानार्थौ नैकत्वं बिभ्रतः। अतो ध्वनेः समावेशो नाऽभिधायां सम्भवति।

(५) पञ्चमं प्रमाणम् -

अभिधया अन्वितस्यैव वाच्यार्थस्य बोधो जायते नाऽनन्वितस्य। परं प्रतीयमानार्थो-ऽनन्वितोऽपि सम्भवति। यथा "रुचिं कुरु" इति पदसमूहेऽन्वितो वाच्यार्थः सर्वथा दोषरहितः। परन्तु पदयोर्मध्ये स्थिताच्चिंकुपदाद् अनन्वितस्याऽपि सदोषस्याऽश्लीलार्थस्य प्रतीतिर्भवति। न सा प्रतीतिरभिधया सम्भवति।

(६) षष्ठं प्रमाणम् -

संयोगादिभिस्तत्त्वैरभिधायाः नियन्त्रणादनेकार्थेभ्यो शब्देभ्योऽभिधया एकस्यैव वाच्यार्थस्य बोधो जायते। परन्तु कदाचिदन्यस्याऽप्यर्थस्य प्रतीतिर्लभ्यते। अयमन्योऽर्थः सदा व्यङ्ग्य एव। भर्तृहरिणा संयोगादीनां गणना निम्नप्रकारेण कृता -

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्याऽन्यस्य सन्निधिः।**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्याऽनवच्छेदे विशेषस्मृतिहेतवः।।**[१]

(i) **संयोगः -**

संयोगपदस्याऽभिप्रायो वर्तते - प्रसिद्धः सम्बन्धः। हरिपदस्याऽनेकेऽर्थाः सन्ति - विष्णुयमेन्द्रशुककपिसिंहादयः। परं "**सशंखचक्रो हरि**" रिति पदसमूहे हरिपदस्याऽर्थो विष्णुरेव वर्तति, यतस्तस्यैव शंखचक्राभ्यां सम्बन्धो लोके प्रसिद्धः।

(ii) **विप्रयोगः -**

विप्रयोगपदस्याभिप्रायो वर्तते - प्रसिद्धसम्बन्धस्याऽभावः। यथा "**अशंखचक्रो हरि**" रिति पदसमूहेऽपि हरिपदस्याऽर्थो विष्णुरेव सम्भवति, यतः शंखचक्रयोवियोगो विष्णोरेव सम्भवति।

(iii) **साहचर्यम् -**

साहचर्यम् = सदा सहचरभावः। यथा - रामपदमनेकार्थकम् - बलरामः, परशुरामो दशरथपुत्रो रामः, अभिराम इत्यादयोऽर्थाः भवन्ति। लक्ष्मणपदस्याऽप्यनेकेऽर्थाः भवन्ति - दुर्योधनपुत्रो लक्ष्मणः, दशरथपुत्रो लक्ष्मणः, सारस इत्यादयः। परन्तु "रामलक्ष्मणौ" इत्यत्र रामस्याऽर्थो दशरथपुत्रो रामः, लक्ष्मणस्य चाऽर्थो दशरथपुत्रो लक्ष्मण एव विज्ञेयस्तयोरेव साहचर्यं लोके प्रसिद्धम्।

(iv) **विरोधिता -**

विरोधिता = प्रसिद्धो वैरसम्बन्धः। रामपदमनेकार्थकम्। अर्जुनपदस्याऽपि बहवोऽर्थाः भवन्ति। यथा - कार्तवीर्यार्जुनपाण्डुपुत्रार्जुनवृक्षविशेषादयः। "रामार्जुनगतिस्तयोः" इति पदसमूहे रामपदस्य वाच्यार्थः परशुरामोऽर्जुनपदस्य च वाच्यार्थः कार्तवीर्यार्जुनो गृह्यते, यतस्तयोरेव विरोधभाव इतिहासे प्रसिद्धः।

(v) **अर्थः -**

अर्थपदस्याऽभिप्रायो वर्तते - तत्फलं यदन्यथा प्राप्तुं न शक्यम्। स्थाणुपदमनेकार्थकम्। यथा - शुष्कवृक्षशङ्कुशिवादयः। "स्थाणुं भज भवच्छिदे" इति वाक्ये स्थाणुपदस्य वाच्यार्थः शिव इति गृह्यते, तस्योपासनयैव भवच्छेदरूपफलं प्राप्यते।

---

१. वाक्यपदीय २.३१७-३१८

(vi) **प्रकरणम् -**

प्रकरणम् = वक्तुः श्रोतुर्वा बुद्धौ स्थिरत्वम्। देवपदस्याऽनेकार्थाः सम्भवन्ति, यथा - राजदेवमेघादयः। ''सर्वं जानाति देव'' इति वाक्ये देवपदेन राजैव वाच्यार्थो गृह्यते। यतः प्रकरणमधिकृत्य सम्मुखं विद्यमानो राजैव वक्तुः श्रोतुर्वा बुद्धौ स्थिरत्वेन गृह्यते।

(vii) **लिङ्गम् -**

लिङ्गम् = असाधारणो धर्मः। मकरध्वजपदमनेकार्थकम्। यथा - कामदेवसमुद्रादयः। ''कुपितो मकरध्वज'' इति वाक्ये मकरध्वजपदात् कामदेव एव वाच्यार्थो गृह्यते। युवानं प्रति कामदेवकोप एव तस्याऽसाधारणो धर्मः।

(viii) **अन्यशब्दस्य सन्निधिः -**

अनेकार्थकेन शब्देन सह कस्यचिन्नियतार्थवाचकस्य शब्दस्य सामीप्यम्। देवपदमनेकार्थकम्। ''देवस्य पुराराते:'' इति वाक्ये पुराराति (शिव) पदसामीप्याद् देवपदस्याऽपि वाच्यार्थः शिव एव भविता।

(ix) **सामर्थ्यम् -**

सामर्थ्यम् = कारणता समर्थता वा। मधुपदमनेकार्थकं वर्तते - वसन्तपुष्परसमाक्षिकमद्याद्यर्थाः। मधुना मत्तः कोकिल'' इति वाक्ये मधुपदस्य वाच्यार्थो वसन्तर्तुर्गृह्यते, वसन्तर्तोरिव कोकिलोन्मत्तभावस्य कारणत्वात्।

(x) **औचिती -**

औचित्यं योग्यता वा। मुखपदमनेकार्थकम् - आनुकूल्यप्रारम्भवदनाद्यर्थाः। ''पातु वो दयितामुखम्'' इति वाक्ये मुखमिति पदस्य वाच्योऽर्थ आनुकूल्यमेव विज्ञेयः। दयितानुकूल्येनैव प्रियरक्षासम्भवात्।

(xi) **देशः -**

देशः = स्थानविशेषः। परमेश्वरपदमनेकार्थकम् - राजविष्णुपरमात्मशिवादयः। ''भात्यत्र परमेश्वर'' इति वाक्ये परमेश्वरपदस्य वाच्यार्थो राजा एव विज्ञेयः। अत्रपदेन राजधानी व्यज्यते, राजधान्याञ्च राजैव भाति।

(xii) **कालः -**

कालः = समयविशेषः। चित्रभानुपदमनेकार्थकम्। अग्निसूर्याद्यर्थाः। ''चित्रभानुर्विभाति'' इति वाक्ये चित्रभानुपदस्यार्थो दिवसे सूर्यो रात्रौ च वह्निरिति ज्ञातव्यः।

(xiii) **व्यक्तिः -**

व्यक्तिः = स्त्रीलिङ्गपुल्लिङ्गनपुंसकलिङ्गानि। मित्रपदमनेकार्थकम् - सुहृत्सूर्याद्यर्थाः। '' मित्रं भाति'' इति वाक्ये मित्रपदस्य नपुंसकलिङ्गत्वात् सुहृदित्यर्थः। '' मित्रो भाति'' इति वाक्ये भित्रपदस्य पुल्लिङ्गत्वात् सूर्य इत्यर्थः।

(xiv) स्वरः -

स्वरा उदात्तानुदात्तस्वरिताः। स्वरस्तु केवलं वेद एवाऽनेकार्थकानां शब्दानां वाचकतायाः नियामको भवति। अतः स्वराणां वैशिष्ट्यं वेदेष्वेवाऽवलोक्यते। इन्द्रशत्रुरिति पदे आद्युदात्तत्वे बहुव्रीहिसमासे "इन्द्रः शत्रुः शातयिता अस्य" इत्यर्थो भवति। अन्तोदात्तत्वे षष्ठीतत्पुरुषसमासे सति" इन्द्रस्य शत्रु" रित्यर्थो विज्ञेयः।

(xv) आदयः -

आदिग्रहणादभिनयादीनां ग्रहणं क्रियते। अभिनयोऽपि वाचकतायाः नियामकः।

एवं प्रकरणादिभिर्हेतुभिरभिधायाः कस्मिंश्चिद् विशिष्टेऽर्थे नियन्त्रणेऽपि यदनेकार्थकाः शब्दाः कदाचिदर्थान्तरान् बोधयन्ति तेष्वभिधा न व्यापारः। अतस्तेऽर्थाः न वाच्याः। तेषां प्रतीतिर्व्यञ्जनाव्यापारेणैव ज्ञेया। व्यञ्जनाव्यापारो न कैश्चिदपि हेतुभिर्नियम्यते। अतो व्यञ्जनायाः समावेशोऽभिधायां व्यङ्ग्यार्थस्य च समावेशो वाच्यार्थे न कल्पनीयः।

(७) सप्तमं प्रमाणम् -

व्यङ्ग्यार्थप्रतीतिर्लक्षणयाऽपि न सम्भवति। अतो ध्वनेरन्तर्भावो न लक्षणायां सम्भाव्यते। अथ च प्रयोजनवतीलक्षणायां प्रथमं लक्षणया लक्ष्यार्थो लक्ष्यते। तदनन्तरं पुनर्व्यञ्जनया व्यङ्ग्यार्थप्रतीतिर्जायते। व्यङ्ग्यार्थोऽयं प्रयोजनरूप एव।

यथा - "गङ्गायां घोष" इति वाक्ये गङ्गापदस्य वाच्यार्थो गङ्गाप्रवाहो बाधितो भवति घोषस्थितेर्गङ्गाप्रवाहेऽसम्भवात्। अतो लक्षणयाऽत्र गङ्गेतिपदस्याऽर्थो गङ्गातटमिति विधीयते। वाक्येऽस्मिन् गङ्गातटमिति पदप्रयोगं न कृत्वा गङ्गायामिति पदप्रयोगस्य विशिष्टं प्रयोजनम्। गङ्गातटे गङ्गायाः शीतलत्वपावनत्वादिधर्माणां प्रतीतिरेवाऽत्र प्रयोजनम्। अस्मिन् वाक्ये गङ्गायामिति पदस्य गङ्गातटमित्यर्थो लक्षणया प्रतिपाद्यते, शीतलत्वादिधर्माणाञ्च प्रतीतिर्व्यञ्जनया भवति। एतादृशेषु प्रसङ्गेषु लक्ष्यार्थबोधनानन्तरं प्रयोजनबोधनार्थमेव लक्षणा प्रयुज्यते। प्रयोजनस्य च प्रतीतिर्व्यञ्जनाव्यापारेण जायते।[1]

अत्र प्रयोजनप्रतीतिरभिधयाऽपि न सम्भवा, गङ्गातटे शीतलत्वादिधर्माणां साक्षात् सङ्केतितत्वाभावात्। प्रयोजनप्रतीतिर्लक्षणयाऽपि न सम्भवा, लक्षणाव्यापाराय मुख्यार्थबाधादिहेतु-त्रयापेक्षितत्वात्। नाऽस्त्यत्र तेषां विद्यमानता।[2] कथञ्चिदपि प्रयोजने लक्ष्यार्थे कल्पितेऽपि

---

१. यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नाऽपरा क्रिया।। काव्यप्रकाश २.१४-१५

२. नाऽभिधा समयाभावाद्धेत्वभावान्न लक्षणा।
लक्ष्यं न मुख्यं नाऽप्यत्र बाधो योगः फलेन नो।
न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः।। काव्यप्रकाश २.१५-१६

पुन: प्रयोजनान्तरं कल्पनीयम्। पुनस्तस्य लक्ष्यार्थसिद्धये प्रयोजनान्तरं कल्पनीयम्। अतोऽनवस्थादोष: सम्पत्स्यते।[1] लक्ष्यार्थस्य च प्रयोजनविशिष्टे कल्पितेऽपि दोषदर्शनं सम्भाव्यते, यतो ज्ञानस्य विषयो ह्यन्य: फलञ्चाऽन्यद् भवतीति न्यायात्।[2] यथा प्रत्यक्षज्ञानस्य विषय: घटो वर्तते, तत्रोत्पन्ना ज्ञातता संवित्तिर्वा फलं विद्यते, फलं विषयश्च द्वावेव भिन्नौ, तथैव लक्षणाया: विषयो लक्ष्यार्थ: फलञ्च प्रयोजनं द्वावेव भिन्नौ। अत: प्रयोजनविशिष्टलक्ष्यार्थो न लक्षणया बोध्यते।

अतो ध्वनेरन्तर्भावो न लक्षणायां सम्भवति।

(८) **अष्टमं प्रमाणम् -**

लक्ष्यव्यङ्ग्ययोरर्थयोरेकत्वमपि न सम्भवति। अत्र तयोर्भेदा: वर्तन्ते -

(i) व्यङ्ग्यार्थस्येव लक्ष्यार्थस्याऽनेकभेदेषु सत्स्वपि लक्ष्यार्थो वाच्यार्थेन सम्बद्धो भवति, न त्वनियतसम्बन्ध: कदाचिदवलोक्यते। व्यङ्ग्यार्थो वाच्यार्थेन नियत-सम्बन्धोऽपि भवति, अनियतसम्बन्धोऽपि भवति, सम्बद्धसम्बन्धोऽपि भवति।

(ii) लक्ष्यार्थस्य प्रतीतिर्मुख्यार्थबाधे लक्षणयैव सम्भवति, परं व्यङ्ग्यार्थप्रतीति: मुख्यार्थ-बाधाऽभावेऽपि, लक्षणायाश्चाऽभावेऽपि भवति।

(iii) स्वकार्यसिद्धयेऽभिधा यथा साक्षात्सङ्केतमाश्रयते, तथैव लक्षणा स्वकार्यसिद्धये हेतुत्रयमपेक्षते। परन्तु व्यञ्जना स्वकार्यसिद्धये नाऽन्यं कमपि हेतुमपेक्षते।

(iv) लक्षणाव्यापारे प्रयोजनप्रतीतये व्यापारान्तरं व्यञ्जनमाश्रयणीयं भवति, परं व्यञ्जनाव्यापारे व्यङ्ग्यार्थप्रतीतिर्व्यञ्जनान्तरव्यापारं विना न कमप्यपेक्षते।

(v) लक्षणाव्यापारोऽपि व्यञ्जनाव्यापाराद् भिन्न एव। लक्षणायां व्यङ्ग्यार्थप्रतीतिर्लक्ष्यार्थ-प्रतीत्यनन्तरमेव सम्भवति। परन्तु न सा सर्वं व्याप्नोति। अभिधाश्रयेणाऽपि, लक्षणाव्यापारं विनाऽपि व्यङ्ग्यार्थप्रतीतिर्जायते। अभिधां लक्षणाञ्चाऽपि विना केवलैरवाचकवर्णैरपि व्यङ्ग्यार्थप्रतीति: सम्भवति। वर्णैर्विनाऽपि केवलं नयनसङ्केतैरभिनयैश्च व्यङ्ग्यप्रतीति: सम्भवति।

एवं व्यञ्जनाव्यापारस्य लक्षणाव्यापारात् सर्वथा भिन्नत्वेन लक्ष्यार्थाच्च व्यङ्ग्यार्थस्य भिन्नत्वाद् ध्वनेरन्तर्भावो न लक्षणायां सम्भवति।

(९) **नवमं प्रमाणम् -**

रसाद्यनुभवो नाऽभिधया न च लक्षणया कदाचिदपि सम्भव:। रसाद्यनुभवाय व्यञ्जनावृत्तिरनिवार्यत्वेन स्वीकरणीया। लक्षणयाऽभिधया च पूर्वसिद्धा एवाऽर्था: ज्ञायन्ते।

---

१. एवमप्यनवस्था स्याद्या मूलक्षयकारिणी। काव्यप्रकाश २.१७

२. प्रयोजनेन सहितं लक्षणीयं न युज्यते।
ज्ञानस्य विषयो ह्यन्य: फलमन्यदुदाहृतम्।। काव्यप्रकाश २.१७-१८

परन्तु रसरूपवस्तुनोऽनुभवपूर्वमविद्यमानत्वान्न पूर्वसिद्धता। अतोऽभिधालक्षणाभ्यां न तस्याऽनुभवः साधनीयः। लक्षणयाऽपि लक्ष्यार्थबोधे मुख्यार्थबाधादिहेतुत्रयमनिवार्यम्। रसप्रतीतौ मुख्यार्थ-बाधादिहेतुत्रयाऽभावान्न लक्षणाप्रयोगो न्याय्यः।[१] अतोऽभिधायां लक्षणायां वा न ध्वनेरन्तर्भावः।

(१०) **दशमं प्रमाणम्** -

व्यङ्ग्यार्थस्य प्रतीतिर्नानुमानेनाऽपि सम्भवा। अतो व्यङ्ग्यार्थो नाऽनुमेयः। महिमभट्टो ध्वनिवादिनां व्यङ्ग्यार्थप्रतीतिमनुमानेन प्रतिपत्तये व्यक्तिविवेकग्रन्थं लिलेख।[२] तेन प्रोक्तम् - ध्वनिवादिनो व्यङ्ग्यार्थप्रतिपत्तये यां व्यञ्जकतासामग्रीमकल्पयन् सा सामग्री परिणामेऽनुमितिपक्षे सम्भवा भवति।[३]

ध्वनिकारस्य "मम धम्मिअ वीसत्थो" इत्युदाहरणे निषेधरूपस्याऽर्थस्य प्रतिपादनं महिमभट्टेनाऽनुमानेन साधितम्। अत्र गोदावरीतीरं पक्षः, भीरुभ्रमणनिषेधः साध्यं, भयकारणभूतसिंहोपलब्धिश्च हेतुर्वर्तति। भयकारणभूतसिंहोपलब्धिरूपहेतुना गोदावरीतीररूपपक्षे भीरुभ्रमणनिषेधरूपस्य साध्यस्याऽनुमितिर्भवति।

परन्तु महिमभट्टस्य मतमिदं स्वयमेव स्वभावतः खण्डितं भवति। अत्रैकान्तिकाविरुद्ध-नियतसिद्ध एव हेतुः साध्यमनुमापयति। भयकारणसिंहोपलब्धिरूपहेतौ अनेकान्तिकत्वविरुद्धत्वा-नियतत्वासिद्धत्वदोषाणां विद्यमानत्वादसौ न स्वसाध्यसाधने क्षमः।

भीरुरपि गुरोः स्वामिनो वा आदेशेन सत्यपि भयकारणे भयस्थाने भ्रमणं करोत्येव। अतो हेतुरयमनैकान्तिकदोषयुक्तः। शुनकस्पर्शाद् बिभ्यदपि वीरत्वान्न सिंहाद् बिभेति। अतो हेतुरयं विरुद्धः। गोदावरीतीरे सिंहोपलब्धिर्न प्रत्यक्षेण, नाऽप्यनुमानेन सिद्धा। अतो हेतुरयमनियतः। सिंहोपलब्धिरियं दुराचारिण्याः वचनेनैव सिद्धा न च तद्वचनप्रामाण्यम्। अतो हेतुरयमसिद्धोऽपि वर्तते।

अतः सकलदोषयुतेन हेतुनाऽनेन धार्मिकस्य गोदावरीतीराभ्रमणरूपस्याऽर्थस्य प्रतीतिरनुमानेन न कदापि सिद्ध्यति। अतो नेयं प्रतीतिरनुमितिः। अस्याः सिद्धये व्यञ्जना-व्यापारोऽवश्यमभ्युपगन्तव्यः।

साहित्यदर्पणकारेण विश्वनाथेनोक्तम् -

---

१. प्रागसत्वाद् रसादेर्नो बोधिके लक्षणाभिधे।
किञ्च मुख्यार्थबाधस्य विरहादपि लक्षणा।। साहित्यदर्पण ५.३

२. अनुमानेऽन्तर्भावं सकलस्यैव ध्वनेः प्रकाशयितुम्।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्।। व्यक्तिविवेक १.१

३. याऽर्थान्तराभिव्यक्तौ वः सामग्रीष्टा निबन्धनम्।
सैवाऽनुमितिपक्षे नो गमकत्वेन सम्मता।। व्यक्तिविवेक

व्यञ्जनावृत्त्या प्रतीयमानानां व्यङ्ग्यार्थानां रसादीनां प्रतीतौ नाऽनुमानो समर्थः। रसमनुमेयत्वेन प्रतिपादनाय अनुमितिवादिभिः प्रोक्ताः हेतवो हेत्वाभासा एव। स्मृतिविषयोऽपि रसो न। स्मृतिस्तु पूर्वानुभूतानामनुभवानां संस्काररूपः प्रबोध एव। रसाः साक्षात्स्वरूपाः भवन्ति।[1]

प्रतीयमानार्थमनुमानेऽन्तर्भावयितुं प्रथमः प्रयासो महिमभट्टस्यैवाऽऽसीदिति न। आनन्द-वर्धनात् पूर्वं समकाले वा प्रश्नोऽयं विद्वद्गोष्ठीषु समुपस्थापितो भवेत् - प्रतीयमानार्थोऽनुमेयोऽपि भवेत्। ध्वनिकारेण ध्वन्यालोकस्य तृतीयोद्योते प्रश्नस्याऽस्य समुपस्थानपुरस्सरं समाधानं कृतम्। त्रयस्त्रिंशत्कारिकावृत्तावस्य प्रश्नस्य विवेचनमेवं वर्तते -

अस्त्यतिसन्धानावसरः व्यञ्जकत्वं शब्दानां गमकत्वं तच्च लिङ्गत्वमतश्च व्यङ्ग्यप्रतीति-र्लिङ्गप्रतीतिरेवेति लिङ्गलिङ्गिभाव एव तेषां व्यङ्ग्यव्यञ्जकभावो नापरः कश्चित्। अतश्चैतदवश्यमेव बोद्धव्यं यस्माद्वक्त्राभिप्रायापेक्षया व्यञ्जकत्वमिदानीमेव त्वया प्रतिपादितम्। वक्त्रभिप्रायश्चाऽनुमेयरूप एव।

अत्रोच्यते। नन्वेवमपि यदि नाम स्यात् तत् किन्नश्छिन्नम्। वाचकत्वगुणवृत्तिव्यतिरिक्तो व्यञ्जकत्वलक्षणः शब्दव्यापारोऽस्तीत्यस्माभिरभ्युगतम्। तस्य चैवमपि न काचित् क्षतिः। यदि व्यञ्जकत्वं लिङ्गत्वमस्तु अन्यद्वा। सर्वथा प्रसिद्धशाब्दप्रकारविलक्षणत्वं शब्दव्यापारविषयत्वं च तस्याऽस्तीति नाऽस्त्येवाऽऽवयोर्विवादः।

न पुनरयं परमार्थो यद् व्यञ्जकत्वं लिङ्गत्वमेव सर्वत्र, व्यङ्ग्यप्रतीतिश्च लिङ्गिप्रतीतिरेवेति।

यद्यपि स्वपक्षसिद्धयेऽस्मदुक्तमनूदितं त्वया वक्त्रभिप्रायस्य व्यङ्ग्यत्वेनाऽभ्युपगमात् तत्प्रकाशने शब्दानां लिङ्गत्वमेवेति तदेतद्यथाऽस्माभिरभिहितं तद्विभज्य प्रतिपाद्यते। श्रूयताम्।

द्विविधो विषयः शब्दानाम् - अनुमेयः प्रतिपाद्यश्च। तत्राऽनुमेयो विवक्षालक्षणः। विवक्षा च शब्दस्य प्रकाशनेच्छा शब्देनार्थप्रकाशनेच्छा चेति द्विप्रकारा। तत्राऽऽद्या न शब्दव्यवहाराङ्गम्। सा हि प्राणित्वमात्रप्रतिपत्त्नफला। द्वितीया तु शब्दविशेषावधारणा-वसितव्यवहिताऽपि शब्दकरणव्यवहारनिबन्धनम्। द्विविधोऽप्यसौ शब्दानां विषयोऽनुमेयः।

प्रतिपाद्यस्तु प्रयोक्तुरर्थप्रतिपादनसमीहाविषयीकृतोऽर्थः। स च द्विविधो - वाच्यो व्यङ्ग्यश्च। प्रयोक्ता हि कदाचित् स्वशब्देनार्थं प्रकाशयितुं समीहते कदाचित् स्वशब्दा-नभिधेयत्वेन प्रयोजनापेक्षया कयाचित्। स तु द्विविधोऽपि प्रतिपाद्यो विषयः शब्दानां न लिङ्गितया स्वरूपेण प्रकाशते, अपितु कृत्रिमेणाऽकृत्रिमेण वा सम्बन्धान्तरेण। कृत्रिमेण

१. नाऽनुमानं रसादीनां व्यङ्ग्यानां बोधने क्षमम्।
आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः।। साहित्यदर्पण ५.४

सङ्केतादिरूपतया, अकृत्रिमेण च अभिधाव्यञ्जनारूपतयाऽसौ प्रकाशते। विवक्षाविषयत्वं हि तस्याऽर्थस्य शब्दैर्लिङ्गितया प्रतीयते न तु स्वरूपम्।

यदि हि लिङ्गितया तत्र शब्दानां व्यापारः स्यात् तच्छब्दार्थे सम्यङ्मिथ्यात्वादिविवादा एव न प्रवर्तेरन्। धूमादिलिङ्गानुमितानुमेयान्तरवत्। अतः शब्दानामर्थाः न सर्वदाऽनुमेयाः भवन्ति।

व्यङ्ग्यश्चार्थो वाच्यसामर्थ्याक्षिप्ततया वाच्यवच्छब्दस्य सम्बन्धी भवत्येव। साक्षादसाक्षाद्भावो हि सम्बन्धस्याऽस्याप्रयोजकः। वाच्यवाचकभावाश्रयत्वं च व्यञ्जकत्वस्य प्रागेव दर्शितम्। तस्माद् वक्त्रभिप्रायरूप एव व्यङ्ग्ये लिङ्गतया शब्दानां व्यापारः। तद्विषयीकृते तु प्रतिपाद्यतया प्रतीयमाने तस्मिन्नभिप्रायरूपेऽनभिप्रायरूपे च वाचकत्वेनैव व्यापारः सम्बन्धान्तरेण वा। न तावद्वाचकत्वेन यथोक्तं प्राक्। सम्बन्धान्तरेण व्यञ्जकत्वमेव।

न च व्यञ्जकत्वं लिङ्गरूपत्वमेव आलोकादिष्वन्यथा दृष्टत्वात्। तस्मात् प्रतिपाद्यो विषयः शब्दानां न लिङ्गत्वेन सम्बन्धी वाच्यवत्। यो हि लिङ्गित्वेन तेषां सम्बन्धी यथा दर्शितो विषयः स न वाच्यत्वेन प्रतीयते, अपितूपाधित्वेन। प्रतिपाद्यस्य च विषयस्य लिङ्गित्वे तद्विषयाणां विप्रतिपत्तीनां लौकिकैरेव क्रियमाणानामभावः प्रसज्येतेति। तच्चोक्तमेव।

यथा च वाच्यविषये प्रमाणान्तरानुगमेन सम्यक्त्वप्रतीतौ क्वचित् क्रियमाणायां तस्य प्रमाणान्तरविषयत्वे सत्यपि न शब्दव्यापारविषयताहानिस्तद्वद् व्यङ्ग्यस्याऽपि।

काव्यविषये च व्यङ्ग्यप्रतीतीनां सत्यासत्यनिरूपणस्याप्रयोजकत्वमेवेति तत्र प्रमाणान्तरव्यापारपरीक्षोपहासायैव सम्पद्यते। तस्माल्लिङ्गिप्रतीतिरेव सर्वत्र व्यङ्ग्यप्रतीतिरिति न शक्यते वक्तुम्।

यत्त्वनुमेयरूपव्यङ्ग्यविषयं शब्दानां व्यञ्जकत्वं, तद् ध्वनिव्यवहारस्याऽप्रयोजकम्। अपितु व्यञ्जकत्वलक्षणः शब्दानां व्यापार औत्पत्तिकशब्दार्थसम्बन्धवादिनाऽप्यभ्युपगन्तव्य इति प्रदर्शनार्थमुपन्यस्तम्। तद्धि व्यञ्जकत्वं कदाचिल्लिङ्गित्वेन कदाचिद् रूपान्तरेण शब्दानां वाचकानामवाचकानाञ्च सर्ववादिभिरप्रतिक्षेप्यमित्ययमस्माभिर्यत्न आरब्धः।

एवमानन्दवर्धनेन ध्वन्यालोके प्रतीयमानार्थस्याऽनुमेयत्वं निराकृतम्। आनन्दवर्धनानन्तरं महिमभट्टो ध्वनिमनुमानेऽन्तर्भावयितुं यं प्रयासमकरोत्, तस्य खण्डनं मम्मटादिभिराचार्यैः कृतम्। अनेन विवेचनेन सिद्धमेवेदं यद् व्यङ्ग्यप्रतीतिः सर्वत्र नाऽनुमेया भवति। अतो ध्वनेरन्तर्भावो नाऽनुमाने प्रतिपादयितुं शक्यः।

आनन्दवर्धनेन काव्यसमीक्षायै प्रतिपादितस्य ध्वनिमार्गस्य समर्थनमुत्तरवर्तिभिराचार्यैः कृतम्। अथ चाऽसौ मार्गः सम्पूर्णतयाऽन्तिमपरिणामरूपेण काव्यसमीक्षकैः स्वीकृतः। यद्यप्यानन्दवर्धनात् पूर्वमपि पश्चादपि च ध्वनिविरोधिभिः काव्यसमीक्षकैराचार्यैर्विभिन्नयुक्तिभिः ध्वनिमार्गस्य

खण्डनं विहितं, तथापि प्रथमं तावदानन्दवर्धनेन तदनन्तरञ्च तदनुयायिभिर्ध्वनिविरोधियुक्तीनां समाधानं विधाय ध्वनिमार्गो निर्विवादं प्रतिष्ठापितः।

### ९. ध्वनेः काव्यान्यतत्त्वानाञ्च परस्परसम्बन्धः

आनन्दवर्धनो ध्वनिं महाविषयत्वेनाऽङ्गित्वेन च परिकल्प्य काव्यस्याऽऽत्मानं प्रतिपादयामास। परन्त्वन्यैः कैश्चिदाचार्यैः काव्यस्याऽन्यतत्त्वानि रसालङ्काररीतिवक्त्रौचित्यानि काव्यस्याऽऽत्मत्वेन सम्मतानि। अत एतेषां तत्त्वानां ध्वनिना सह सम्बन्धो विचारणीयः।

(i) ध्वनिः रसश्च -

ध्वनिभेदान् प्रदर्शयता प्रथममानन्दवर्धनेन ध्वनेः द्वौ भेदौ प्रकाशितौ - अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च। विवक्षितान्यपरवाच्यस्य च ध्वनेः पुनर्द्वौ भेदौ स्तः - संलक्ष्यक्रमव्यङ्ग्योऽसंलक्ष्यव्यङ्ग्यक्रमश्च। सर्वेष्वेतेषु ध्वनिभेदेषु असंलक्ष्यव्यङ्ग्यक्रमभेद एव रसादिध्वनिर्भवति। अयमेव रसध्वनिरभिधीयते। अभिप्रायोऽयम् -

ध्वनिकारेणाऽनेकेषु ध्वनिभेदेषु रसध्वनिरपि परिगणितः। एवं ध्वनिकारमते रसतत्त्वाद् ध्वनितत्त्वं मुख्यतरम्। रसाद् ध्वनिर्व्यापकतरः स एव च काव्यस्याऽऽत्मा प्रोक्तः। अतो रसस्य ध्वनेश्च परस्परसम्बन्धो विचारणीयः।

ध्वनेरनेकभेदप्रभेदेषु सत्स्वपि त्रयो भेदाः व्यङ्ग्यार्थभेदेन मुख्यत्वेन गण्यन्ते - रसध्वनिरलङ्कारध्वनिर्वस्तुध्वनिश्च। त्रिष्वेतेषु वस्त्वलङ्काररसेषु वस्त्वलङ्कारौ वाच्यावपि भवतो व्यङ्ग्यावपि च। परन्तु रसः कदापि वाच्यो न भवति, सदा व्यङ्ग्य एवाऽसौ। विभावादिभिरयं व्यज्यते। रसस्य वाच्यता काव्यदोष एव। अतः सहृदयेषु रसप्रतीतिः सदा ध्वन्यते। रसस्य प्रतीतिरभिव्यक्तिर्वा ध्वन्याश्रयेण तिष्ठति। अतः काव्ये रसे महनीयत्वेन स्थितेऽपि ध्वन्याश्रयेण व्यवस्थानाद् ध्वनिरेव काव्यस्याऽऽत्मा प्रोक्तो न तु रसः।

अथ ध्वनेः वस्त्वलङ्काररसेषु त्रिरूपेषु सत्स्वपि रसध्वनिरेव महत्तमः काव्यस्य च विशिष्टात्मा प्रोक्तः। आनन्दवर्धनस्तदुत्तरवर्तिनश्चाऽऽचार्याः तथ्यमिदं प्रतिपादयामासुः। अथ चाऽऽनन्दवर्धनेन निर्दिष्टम् -

अलङ्काराणां योजना रसाऽनुरूपा कर्तव्या।[1] रसरूप एवाऽर्थः काव्यस्य सारभूतः।[2]

ध्वन्यालोकस्य व्याख्यां कुर्वन्नभिनवगुप्तोऽपि स्थाने स्थाने प्रोवाच - ध्वनेरनेकेषु

---

१. रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः।। ध्वन्यालोक २.१६

२. काव्यस्य स एवाऽर्थः सारभूतः..........शोक एव श्लोकतया परिणतः।
ध्वन्यालोक (१.५) वृत्तिः।

भेदेषु सत्स्वपि रसध्वनिरेव मुख्यतः काव्यस्याऽत्माऽवगन्तव्यः ।[१]

मम्मटस्त्रिष्वप्येतेषु ध्वनिषु रसध्वनिमेव प्रधानत्वेन प्रत्यापादयत्। काव्यगुणान् लक्षयता तेन रस एव काव्यस्याऽङ्गीभूत आत्मा प्रोक्तः ।[२] रसस्वरूपमपि तेन अलौकिकचमत्कारकारि[३] लोकोत्तरञ्च निरूपितम् ।[४]

पण्डितराजेन जगन्नाथेन प्रोक्तम् - पञ्चप्रकारेषु ध्वनिषु रसस्य परमरमणीयत्वाद् रसध्वनिरेव काव्यस्याऽऽत्मा ।[५]

साहित्यसारकारेणाऽपि प्रोक्तम् - रसो वै सः। इति श्रुतिवचनेन रसमेवाऽयं लब्ध्वा प्राणी परमानन्दमवाप्नोति। अतस्तथ्यमिदं स्वीकरणीयम् - रसध्वनिरेव काव्यस्याऽऽत्मा ।[६]

उपरि प्रोक्तेन विवेचनेन स्पष्टमेवेदं यद् ध्वनेरनेकेषु भेदेषु सत्स्वपि रसध्वनिरेव प्रधानतमः श्रेष्ठश्चाऽवगन्तव्यः। तथापि रसस्य ध्वन्यात्मकत्वाद् रसानाञ्च ध्वनेर्व्यापकतरत्वाद् रस एवाऽऽत्मत्वेन न प्रोक्त आनन्दवर्धनेन, ध्वनिरेव काव्यस्याऽऽत्मा प्रोक्तः ।

(ii) **ध्वनिरलङ्कारश्च -**

ध्वनिं काव्यस्याऽत्मानं प्रतिपाद्य ध्वनिकारः काव्यस्याऽन्यानि तत्त्वानि गुणरीत्यलङ्कारादीनि ध्वन्यङ्गरूपेण न्यरूपयत्। अथाऽनेन प्रतिपादनेन काव्येऽलङ्काराणां स्थितिर्द्विविधाऽनुभूयते व्यङ्ग्या वाच्या च। आनन्दवर्धनेन प्रोक्तम् -

अलङ्कारेऽवाच्यत्वङ्गते व्यङ्ग्यत्वं प्राप्तेऽलङ्कारध्वनिर्भवति ।[७] अस्मिन् प्रसङ्गे काव्यमुत्तमं भूत्वा रसादिसमकक्षं जायते। अयमलङ्कारध्वनिरेव प्रधानत्वेनाऽवगन्तव्यः। ध्वनिवादिनामभिमतम् -

---

१. (क) स एवेति प्रतीयमानोऽपि तृतीय एव रसध्वनिरिति मन्तव्यम्। इतिहासबलात् प्रकान्तवृत्तिग्रन्थबलाच्च। तेन रस एव वस्तुत आत्मा। वस्त्वलङ्कारध्वनी तु सर्वथा रसं प्रति पर्यवस्येते इति, वाच्यादुत्कृष्टौ तावित्यभिप्रायेण ध्वनिः काव्यस्यात्मेति सामान्येनोक्तम्। ध्वन्यालोक, (१.५) लोचनटीका

(ख) रसस्य चर्वणात्मनः प्राधान्यं दर्शयन् रसध्वनेरेव सर्वत्र मुख्यतममात्मतत्त्वमिति दर्शयति। ध्वन्यालोक (१.१) लोचनटीका

२. ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः। काव्यप्रकाश ८.६६

३. अलौकिकचमत्कारकारी शृङ्गारादिको रसः। काव्यप्रकाश (४.२७-२८) वृत्तिः

४. उभयाभावरूपस्य चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामेव गमयति न तु विरोधम्। काव्यप्रकाश(४.२७-२८) वृत्तिः

५. पञ्चात्मके ध्वनौ, परमरमणीयता रसध्वनेस्तदात्मा रसस्तावदभिधीयते। रसगङ्गाधर - प्रथमाननम्।

६. रसो वै सः रसं लब्ध्वाऽऽनन्दयं स्यादितिश्रुतेः। पक्षश्चरम एवाऽत्र परमः परमास्पदम्। साहित्यसार ४.१५

७. शरीरीकरणं येषां वाच्यत्वेन व्यवस्थितम्।
तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतां गताः।। ध्वन्यालोक २.२८

अयमलङ्कारध्वनिर्याथार्थ्येन नाऽलङ्कारोऽपित्वलङ्कार्यः। ब्राह्मश्रमणन्यायेनाऽप्यमलङ्कार इत्युच्यते।

काव्येऽलङ्काराणां द्वितीया स्थितिर्वाच्या वर्तते। वाच्यतां गता अलङ्कारा अप्रधानत्वं प्राप्ताः रसाद्युत्कर्षकरूपेण चारुत्वहेतवो भवन्ति। यथाऽऽत्मतत्त्वरहितं निश्चेतनं शरीरं कनककुण्डलाद्यलङ्काराः न हि विभूषयन्ति, तथैव रसादिरहिते काव्येऽलङ्काराः न चारुत्वहेतवो भवन्ति। रसाद्यपेक्षयैव नियोज्यमाना अलङ्काराः काव्ये चारुत्वं वर्धयन्ति। अत एवाऽऽनन्दवर्धनेन ध्वन्यात्मकरूपे शृङ्गारे यमकाद्यलङ्काराणां निबन्धनं प्रतिषिद्धम्।[१] तेन प्रोक्तम् - काव्ये रसमङ्गिनं कृत्वाऽलङ्काराणां योजना करणीया, न तु कदाप्यङ्गिरूपेण।[२]

विवेचनेनाऽनेन स्पष्टमेव यद् ध्वनिवादिनामाचार्याणां मते काव्येऽलङ्काराणां स्थितिर्द्विविधा - व्यङ्ग्यगता वाच्यगता वा। अलङ्काराणां व्यङ्ग्यत्वेऽलङ्कारध्वनिरयम्। किन्तु वाच्यतां गतेष्वलङ्कारेषु तेषां निबन्धनं रसाद्यङ्गरूपेणैव विधीयते।

(iii) ध्वनिः रीतिश्च -

वामनेन गुणविशिष्टा पदसंघटनारूपा रीतिः काव्यस्याऽऽत्मा प्रतिपादिता। आनन्दवर्धनेन प्रोक्तम् -

रीतयस्त्रिविधाः सन्ति - असमासा मध्यमसमासा दीर्घसमासा च।[३] इयं पदसंघटना माधुर्यादिगुणानाश्रित्य रसानभिव्यनक्ति।[४]

ध्वनिवादिभिराचार्यैर्वामनस्येयं रीतिः रसापेक्षया नियमिता। इयं रसादीनुपकरोति। यथा शारीरिकं सौष्ठवमात्मानमुपकरोति, तथैव पदानां संगठनसौष्ठवमपि काव्यस्याऽऽत्मानं ध्वनिमुपकरोति।

अलङ्कारापेक्षातो रीतीनां रसैः सह सम्बन्धः स्थिरतरः। यतो रीतयो गुणाश्रिताः भवन्ति, गुणाश्चाऽङ्गिनो रसस्य धर्माः। गुणानां रसैः सह नित्यसम्बन्ध आस्ते। अत एव रुद्रटादयोऽलङ्कारवादिनोऽपि रसैः सह रीतीनां सम्बन्धविशेषं संस्थापयामासुः।[५]

---

१. ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम्।
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः।। ध्वन्यालोक २.१५

२. विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन। ध्वन्यालोक २.१७

३. असमासा समासेन मध्यमेन च भूषिता।
तथा दीर्घसमासेति त्रिधा संघटनोदिता।। ध्वन्यालोक ३.५

४. गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा।
रसादीन् ......................।। ध्वन्यालोक ३.६

५. रुद्रट - काव्यालङ्कार १४.३७, १५.२०

रीतिविषये ध्वनिकारेण प्रोक्तम् -

यद्यपि रीतिवादिन आचार्याः ध्वनितत्त्वं तावदपि विममर्शुस्तथापि ध्वनेः किमपि स्पष्टं चित्रं तेषां समक्षं नाऽविद्यत। केवलमव्यक्ता छाया तैरनुभूता। अत एव ध्वनिं व्याख्यातुमसमर्था एवाऽभवन्। तैरसौ ध्वनिः रीतिरूपेण सम्प्रवर्तितः।[१]

वस्तुतो रीतिक्षेत्रमतिसङ्कुचितं ध्वनिक्षेत्रञ्च व्यापकं वर्तते। अतो रीतिषु ध्वनिर्नाऽन्तर्भावयितुं शक्यते, रीतय एव ध्वनौ समाविष्टाः भवन्ति। इदमपि सत्यं यद् रीतीनां सम्बन्धं गुणैः संयोज्य रीतिवादिन आचार्याः अलङ्कारवादिभ्य आचार्येभ्यो ध्वनेर्निकटतरं सामीप्यमवापुः।

(iv) **ध्वनिर्वक्रोक्तिश्च** -

वक्रोक्तिसिद्धान्तप्रवर्तकः कुन्तकाचार्य आनन्दवर्धनस्य ध्वनिसिद्धान्तेन ध्रुवं परिचितोऽवर्तत। अथ चाऽसौ ध्वनिं वक्रोक्तावन्तर्भावयितुं प्रायतत। कुन्तको ध्वनिकारस्य ध्वनेरनेकान्युदाहरणानि वक्रोक्तेर्विभिन्नभेदानामुदाहरणरूपेण व्याचख्यौ।

अभिधावादिनः कुन्तकाचार्यस्याऽभिधा विचित्रैवाऽभिधाऽवर्तत। तस्येयमभिधा लक्षणां व्यञ्जनाञ्चाऽप्यन्तर्भावयति। आचार्याः ध्वनिवादिनो रसादीनामभिव्यक्तिं व्यञ्जनया प्रतिपादयन्ति। परं कुन्तकस्तां विचित्रयैवाऽभिधया साधयति। यद्यपि कुन्तकेन ध्वनिस्थितिः स्वीकृता, तथापि तस्याऽभिधाप्रतिपाद्यत्वादसौ ध्वनिविरोधिषु काव्यशास्त्रकृत्सु गण्यते।

कुन्तकस्य वक्रोक्तिसिद्धान्तस्याऽध्ययनेन स्पष्टमेवेदं यन्नासौ ध्वनेर्विरोधञ्चकार, परं ध्वनिं वक्रोक्तावन्तर्भावयितुं प्रयेते। प्रतीयमानार्थमसौ सुस्पष्टं स्वीचकार। विचित्रमार्गवर्णनेऽसौ लिलेख --

वाच्यवाचकवृत्तिभिन्नस्य कस्यचिद् वाच्यार्थस्य प्रतीयमानत्वं (व्यङ्ग्यरूपत्वम्) विरच्यते।[२]

कुन्तकेनाऽलङ्कारेषु प्रतीयमानोऽर्थः स्वीकृतः। प्रतीयमानार्थयुता अलङ्काराः व्यङ्ग्येनैव सम्भवन्ति।[३] रूपकव्यतिरेकनिदर्शनादीपकोपमादयोऽलङ्काराः वाच्यत्वेन सह प्रतीयमाना अपि भवन्ति।

कुन्तकस्य समीक्षणेन सुस्पष्टमेव यदसावभिधया वाच्यार्थबोधनानन्तरं विविधवक्रताप्रतिपत्तये यामभिधां विचित्रां स्वीकरोति, स व्यञ्जनावृत्तिरूपैव मन्तव्या।

---

१. अस्फुटस्फुरितं काव्यतत्त्वमेतद् यथोदितम्।
अशक्नुवद्भिर्व्याकर्तुं रीतयः सम्प्रवर्तिताः।। ध्वन्यालोक ३.४७

२. प्रतीयमानता यत्र वाक्यार्थस्य निबध्यते।
वाच्यवाचकवृतिभ्यामतिरिक्तस्य कस्यचित्।। वक्रोक्तिजीवित १.४०

३. वाच्यत्वेनेति नोक्तं व्यङ्ग्यत्वेनाऽपि प्रतिपादनसम्भवात्। वक्रोक्तिजीवित (३.१) वृत्तिः

अतः वक्रोक्तिं सम्पादयितुं ध्वनेर्विरोधं प्रदर्शयन्नपि कुन्तकाचार्यो न ध्वनिविरोधं विधातुं समर्थो बभूव। ध्वनिवादिभिराचार्यैः वक्रोक्तिस्तु स्वीकृता, परमेकेन विशिष्टालङ्काररूपेणैव। अथ च भामहमनुसरन्तस्ते वक्रोक्तिमलङ्काराणां मूलमप्याचचक्षिरे।[१]

(v) ध्वनिरौचित्यञ्च -

क्षेमेन्द्रेणौचित्यं काव्यस्याऽऽत्मरूपेण प्रतिपादितम्। परन्तु तेनौचित्यसिद्धान्तस्य मूलमानन्दवर्धनस्य ध्वन्यालोकादेव गृहीतम्।

रसादिनिबन्धने ध्वनिकारेणौचित्यस्याऽनिवार्यत्वं प्रतिपादितम्। तस्याऽभिमतमवर्तत -

महाकवेः मुख्यं कार्यमिदमेव यदसौ रसादिविषयमाश्रित्य वाच्यवाचकानामौचित्येन निबन्धनं कुर्यात्।[२] अनौचित्यमेव रसभङ्गस्य केवलो हेतुः, औचित्यञ्च रसस्य परमं रहस्यम्।[३]

इदमेवौचित्यं काव्यप्राणभूतमाकलय्य क्षेमेन्द्र औचित्यसिद्धान्तं प्रतिष्ठापयामास। रसनियोजने तु क्षेमेन्द्रेणौचित्यस्य प्रतिष्ठा कृतैव, काव्यस्याऽन्येष्वप्यङ्गेषु - गुणसंघटनावृत्त्यलङ्कार-प्रबन्धादिष्वप्यसावौचित्यस्य संविधानमकरोत्।

काव्ये महत्त्वमौचित्यस्य प्रतिपाद्याऽपि आनन्दवर्धनस्तन्न काव्यस्याऽऽत्मानं मेने। तेन प्रोक्तम् -

काव्यस्याऽऽत्मनो ध्वनेः सहायकरूपेणैवौचित्यमवतिष्ठते। अस्याऽयमभिप्रायः -

काव्ये महत्त्वमौचित्यस्य रसध्वन्यपेक्षयैव वर्तते न त्वात्मना। नीरसेषु काव्येष्वौचित्यस्य किं महत्त्वम्? अभिनवगुप्तस्य कथनमिदं सत्यमेव यदुचितशब्देन रसविषयकमौचित्यं गृह्यते। अतो रसध्वनेरभावे कं प्रत्यौचित्यमिदं भविष्यति?[४]

विवेचनेनाऽनेन स्पष्टमेव काव्ये रसध्वनेरङ्गरूपेणौचित्यमवतिष्ठते। यद्यप्यौचित्यं रसध्वनेरनिवार्यो गुणस्तथापीदं सहायकमेव। अत एवौचित्यं काव्ये नाऽऽत्मस्थानीयम्। अतो ध्वनेरेव काव्यस्याऽऽत्मत्वमङ्गीकरणं सर्वथा समुचितम्।

## १०. ध्वनेः काव्यस्याऽऽत्मत्वसमीक्षा

काव्यशास्त्रे ध्वनिसिद्धान्तो वैयाकरणानां स्फोटसिद्धान्तेनाऽनुप्राणितो विकसितो बभूव। काव्ये ध्वनिरेव प्रधानतमं तत्त्वमिति आनन्दवर्धनात् पूर्वमेव काव्यशास्त्रविद्भिः समाम्नातम्। तथापि काव्यसमीक्षाजगति नाऽसौ सिद्धान्तः परिपूर्णरूपेण प्रतिष्ठामलभत।

---

१. ध्वन्यालोक (३.३७) वृत्तिः

२. वाच्यानां वाचकानाञ्च यदौचित्येन योजनम्।
रसादिविषयेणैतत् कर्म मुख्यं महाकवेः॥ ध्वन्यालोक ३.३२

३. अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा॥ ध्वन्यालोक (३.१४) वृत्तिः

४. उचितशब्देन रसविषयमौचित्यं भवतीति दर्शयन् रसध्वनिजीवितत्वं सूचयति। तदभावे हि किमपेक्षया इदमौचित्यं नाम सर्वत्रोद्घोष्यत इति भावः। ध्वन्यालोक (१.१) लोचनटीका

आनन्दवर्धनो ध्वनिविरोधिनामाचार्याणामाक्षेपान् समाधाय ध्वनिं काव्यस्याऽऽत्मरूपेण प्रतिष्ठितञ्चकार। तेन ध्वनेर्विभिन्नान्यङ्गानि विस्तरेण व्याख्यातानि प्रतिपादितानि च। आनन्दवर्धनानन्तरमपि कैश्चिद् ध्वनिविरोधिभिराचार्यैर्ध्वनिसिद्धान्तस्य खण्डनं कर्तुं प्रयासो विहितः। अथ च निजाऽन्यसिद्धान्तान् प्रतिष्ठापयितुं ते प्रायतन्त। परममभिनवगुप्तादयो मनीषिणो ध्वनिविरोधिनामेतेषामाचार्याणां युक्तीनां प्राबल्येन खण्डनं चक्रुः। ध्वनिसिद्धान्तं सुदृढं संस्थाप्य ते निर्विरोधं ध्वनिं काव्यस्याऽऽत्मपदे प्रतिष्ठापयामासुः।

ध्वनौ काव्यस्याऽऽत्मपदे प्रतिष्ठिते सति काव्यस्याऽन्यान्यङ्गानि गुणालङ्काररीत्यौचित्यादीनि स्वतो ध्वन्यङ्गतां प्राप्तानि। उपसर्गनिपातप्रकृतिप्रत्ययपदसमासवाक्यप्रबन्धादीनामपि समावेशो ध्वनौ सञ्जातः। रसोऽपि ध्वनिभेदतां समानीतः। अथ च ध्वनेस्त्रयो भेदाः सम्मताः बभूवुः - वस्त्वलङ्काररसा इति। रसाऽभावे च वस्त्वलङ्कारयोर्ध्वनितत्त्वसमावेशात् तयोरपि काव्यत्वप्रतिष्ठा सम्मता।

ध्वनिवादिनः प्रोचुः -

रसाभावे वस्तुनि वाऽलङ्कारे वा न काव्यत्वं सम्मतम्। रसं विना तयोरुक्तिमात्रत्वमेव। परन्तु प्रधानत्वेन रसविवक्षाऽभावे ह्युक्तिसौन्दर्यबलाद् वस्तुनि काव्यत्वं भवत्येव। ध्वनौ काव्यस्याऽऽत्मपदे प्रतिष्ठिते सति वस्त्वलङ्कारचारुत्वमपि काव्यत्वप्रतिष्ठां लभत एव। यदि च रस एव काव्यस्यात्मा भवेत्, काव्यानां प्रचुरो भागः काव्यत्ववञ्चितः स्यात्। काव्यसमीक्षकाणां सम्भवतो न स्यादिदं सम्मतम्। ध्वनिं काव्यस्याऽऽत्मानं प्रतिपाद्य वस्त्वलङ्काररसांश्च तत्र समावेश्याऽऽनन्दवर्धनेन वस्त्वलङ्कारचारुत्वमपि काव्यत्वसीमनि समावेशितम्।

सत्यमेतद् याथार्थ्येन, यत् काव्यस्याधिकं सौन्दर्यं रसध्वनावेव निहितं भवति। "काव्यस्याऽऽत्मा स एवार्थ" इति कथयित्वाऽऽनन्दवर्धनो रसमेवाऽभीष्टतममाचचक्षे। परन्तु तेन रसध्वनिरेव काव्यस्याऽऽत्मा न प्रोक्तो, यथा रसापेक्षारहितेषु काव्येष्वकाव्यत्वदोषं समीक्षकाः न प्रतिपादयेयुः। वस्तुध्वनिरलङ्कारध्वनिश्च वाच्यादुत्कृष्टतरौ, तयोश्च काव्यत्वं निश्चयेन सन्निहितमस्तीति। अत एवाऽऽनन्दवर्धनो ध्वनिमेव काव्यस्यात्मानं जगाद।

काव्ये रसेन सह वस्त्वलङ्कारचारुत्वमप्यवतिष्ठते। अतो ध्वनिकारो वस्तुध्वनिमलङ्कारध्वनिं रसध्वनिं सर्वमेव चारुत्वहेतुतत्त्वं काव्यस्याऽऽत्मानं जगाद। सत्यमेतत्, काव्ये वस्त्वलङ्कारध्वनिभ्यां रसध्वनेः रामणीयकमुत्कृष्टतरं सहृदयहृदयाह्लादकरं, रससमावेशस्य ध्वनेरन्तर्गतत्वात् सोऽपि काव्यस्याऽऽत्मा वर्तत एव।

ध्वनिवादिनामाचार्याणां रसध्वनिं प्रति तथाविधे सत्यप्याग्रहे, ते सिद्धान्तरूपेण ध्वनिमात्रमेव काव्यस्याऽऽत्मानं जगदुः। यतो वस्तुध्वनिरलङ्कारध्वनिरपि च काव्ये काव्यत्वं प्रतिष्ठापयति। अतस्त्रिविधोऽपि ध्वनिः काव्यस्यात्मत्वेनाऽवतिष्ठते, सिद्धान्तोऽयमेव न्याय्यः।

---

प्रथमोऽध्यायः

# काव्यप्रयोजनानि

## १. काव्यशास्त्रस्य प्रयोजनानि

काव्यसमीक्षोपयोगिनामनेकेषां विषयाणां विवेचनं काव्यशास्त्रग्रन्थेषु विधीयते। तत्र केषुचिद् ग्रन्थेषु काव्यसमीक्षासम्बन्धिनां सर्वेषां विषयाणां समीक्षा ग्रन्थकृद्भिर्विहिता। यथा - साहित्यदर्पणप्रतापरुद्रयशोभूषणादयो ग्रन्थाः सन्ति। केषुचिद् ग्रन्थेषु नाट्यसमीक्षागत-विषयातिरिक्ता अन्ये सर्वे विषयाः वर्णिताः। यथा - काव्यालङ्कारकाव्यादर्शकाव्यालङ्कारसूत्र-काव्यप्रकाशचन्द्रालोकरसगङ्गाधरादयो ग्रन्थाः वर्तन्ते।

नाट्यशास्त्रं स्वयमेवाऽतिविस्तृतं क्षेत्रं वहति, यत्र नाट्यसमीक्षासम्बन्धिनां विषयाणां वर्णनं नाट्यशास्त्रकृद्भिर्लेखकैः स्वातन्त्र्येण कृतम्। सम्भवतो हेतुरयमेव यदेतैर्भामहदण्डि-मम्मटादिभिराचार्यैर्नाट्यसमीक्षागतविषयाः स्वग्रन्थेषु नोल्लिखिताः। नाट्यसमीक्षागत-विषयसम्बन्धिनोऽनेके प्राचीनग्रन्थाः समुपलभ्यन्ते। यथा - भरतनाट्यशास्त्रदशरूपक-नाट्यदर्पणादयः।

अथ केषुचित् काव्यशास्त्रीयग्रन्थेषु केवलमेक एव विषयो ग्रन्थकृद्भिर्वर्णितः। यथा - ध्वन्यालोके ध्वनेः, वक्रोक्तिजीविते वक्रोक्तेः, औचित्यविचारचर्चायामौचित्यस्य, अभिधामातृकावृत्तौ वृत्तीनां, रसतरङ्गिण्यां रसस्य, रसमञ्जर्याञ्च नायक-नायिकाभेदस्य च समीक्षा ग्रन्थकृद्भिर्मनीषिभिर्विहिता। अनेके ग्रन्था अलङ्कारविषयका एव सन्ति। यथा - रुय्यककृतालङ्कारसर्वस्वम् अप्पयदीक्षितविरचितं कुवलयानन्दं चित्रमीमांसा च।

काव्यसमीक्षागतानेकविषयाः सम्भवन्ति, काव्यशास्त्रीयेषु ग्रन्थेषु येषां विवेचना विधीयते। प्रमुखविषयाः निम्नलिखिताः सन्ति -

(१) काव्यप्रयोजनानि (२) काव्यहेतुः (३) काव्यलक्षणम् (४) काव्यभेदाः (५) शब्दा अर्थास्तेषाञ्च वृत्तयः (६) नाट्यविषयकतत्त्वानि (७) ध्वनिः (८) रसाः (९) गुणाः (१०) दोषाः (११) रीतयः (१२) वक्रोक्तिः (१३) औचित्यम् (१४) अलङ्काराश्च।

अत्र रसालङ्काररीतिवक्रोक्त्यौचित्यध्वनिविषयाः काव्यस्याऽऽत्मत्वेन विभिन्नैः समीक्षकैः प्रतिपादिताः। अतस्तेषां विस्तरेण वर्णनं तत्रैव ग्रन्थस्याऽस्य तृतीये खण्डे निरीक्षणीयम्। नाट्यविषयाः स्वयमेव विस्तृतं वर्णनमर्हन्ति। स्वतन्त्रग्रन्थप्रणयनमेव तत्र समुचितम्। शब्दार्थानां

वृत्तीनाञ्चाऽपि विवेचनं स्वतन्त्रग्रन्थेषु करणीयम्। अथ चाऽस्य विषयस्य सम्बन्धो ह्येकतस्तु काव्यशास्त्रेण वर्तते, अपरतश्च दर्शनव्याकरणशास्त्रादिभिरप्यस्ति। ध्वनिप्रसङ्गवशात् संक्षेपेण व्याकृतेष्वपि तेषु, तेषां विस्तृतं वर्णनमत्र विषयान्तरमेव विज्ञेयम्। अथ शेषाणां विषयाणां काव्यप्रयोजनहेतुलक्षणभेद- गुणदोषाणां विवेचनमत्र संक्षेपेण विधीयते।

## २. काव्यप्रयोजनसम्बन्धं प्रास्ताविकम्

कस्मैचिदपि कार्याय जनः किमपि प्रयोजनमुद्दिश्य प्रवर्तते। मूर्खोऽप्युद्देश्यं विना न किमपि कार्यं करोति। अतः काव्यप्रवृत्तये प्रयोजनानि सन्त्येव।

आभरतमुनेर्वर्तमानकालपर्यन्तं काव्यशास्त्राचार्याः व्यमृक्षुः, यत् काव्यरचना कविभिः केभ्यः प्रयोजनेभ्यः क्रियते। आचार्यैरत्राऽनेकानि प्रयोजनानि वर्णितानि। तेषामेकमनेकानि वा प्रयोजनान्यभिलक्ष्य कविः काव्यं निबध्नाति। अत्र कदाचन कविरेकमेव प्रयोजनमुद्दिश्य काव्यं करोति, परमन्यानि फलान्यप्यसावाकस्मिकरूपेण लभते।

## ३. मम्मटप्रतिपादितानि काव्यप्रयोजनानि

काव्यप्रयोजनविषयमधिकृत्याऽनेकैः काव्यशास्त्राचार्यैः स्वमन्तव्यानि व्याख्यातानि। परमत्र मम्मटाचार्यो मध्यबिन्दुरिव प्रतिभाति। मम्मटः षट्काव्यप्रयोजनानि न्यरूपयत्[1] -

(i) यशः (ii) धनम् (iii) लोकव्यवहारज्ञानम् (iv) अनिष्टनिवारणम् (v) आनन्दावाप्तिः (vi) उपदेशश्च।

अन्यैराचार्यैः समीक्षितानि प्रयोजनानि षट्स्वेवैतेषु प्रयोजनेषु ह्यन्तर्भावयितुं शक्यन्ते। अतोऽत्र सविशदं विमर्शनमुपयुज्यते। प्रथमं तावन्मम्मटोक्तप्रयोजनानि निरूप्यन्ते -

**(i) यशः -**

काव्यरचनायाः प्रथमं प्रयोजनं यशोऽधिगम एव। उदाहरणत्वेनाऽत्र मम्मटाचार्येण कालिदासस्योल्लेखः प्रस्तुतः। रघुवंशाभिज्ञानशाकुन्तलादिकाव्यानि निबध्याऽसौ प्रथितकीर्तिर-विनश्वरं यशो लेभे, यत् सहस्राब्दानन्तरमपि सर्वासु दिक्षु सर्वेषु देशेषु प्रथितमस्ति।

**(ii) धनम् -**

धनप्राप्तिहेतोरपि काव्यरचना क्रियते। कवयः स्वकाव्यकृतिभिर्नरपतीन् प्रजाजनांश्च प्रभाव्य प्रभूतं धनमर्जयन्ति। उदाहरणरूपेणाऽत्र मम्मटाचार्येण धावकादयः कवयः प्रस्तुताः, यैः काव्यरचनां कृत्वा श्रीहर्षादिभ्यो नरपतिभ्यः प्रभूतं धनमधिगतम्।

---

१. काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे।। काव्यप्रकाश १.२

(iii) लोकव्यवहारज्ञानम् -

मम्मटेन प्रस्तुतं यत्काव्यरचनया काव्यानामध्ययनेन च लोककव्यवहाराणामपि ज्ञानं भवति। काव्येषु विविधचरितानि व्यवहाराणि च वर्ण्यन्ते। काव्यानां निर्मित्या अध्ययनेन च कवयः सहृदयपाठकाश्च तैर्व्यवहारैः परिचिताः भवन्ति।

(iv) अनिष्टनिवारणम् -

काव्यानां रचनयाऽध्ययनेन च विविधानामनिष्टानामपि निवारणं जायते। प्रभुभक्ति-देवभक्तिविषयककाव्यानां निबन्धनेन पाठेन च बहवोऽनर्थाः निवर्तन्ते। उदाहरणरूपेणाऽत्र मम्मटेन मयूरः कविः प्रस्तुतः। कुष्ठरोगाक्रान्तोऽसौ कविः गंगातटमुपगम्य सूर्यमुपासिसीष्ट। सूर्यशतककाव्यं निबध्याऽसौ प्रतिदिनं तदपठत्। कतिपयेष्वेवाऽहःसु कविरसौ कुष्ठरोगविनिर्मुक्तो बभूव।

(v) आनन्दावाप्तिः -

काव्यरचनाकाले काव्यानुभूतिक्षणेषु च कवयः सहृदयाश्च विशेषमलौकिकमानन्दमनु-भवन्ति। रसास्वादनजन्येयमनुभूतिः सर्वलोकविलक्षणाऽलौकिकचमत्कारकारिणी सर्वमप्यन्यज्ज्ञानं तिरोदधाति। मम्मटस्त्विदं प्रयोजनं प्रधानतमं जगाद।[१]

(vi) उपदेशः -

काव्यस्यैकं प्रयोजनमुपदेशोऽपि वर्तते। उपदेशास्त्रिविधाः भवन्ति - प्रभुसम्मितः, सुहृत्सम्मितः कान्तासम्मितश्च। शब्दप्रधानानि वेदादिशास्त्राणि प्रभुसम्मितानि भवन्ति। तेषामुपदेशा आदेशप्रधानाः वर्तन्ते। आदेशकटुत्वादेषामुपदेशः प्रभुसम्मितो वर्तते। अयमुपदेशो राजादेशवदक्षरशः पालनीयो विद्यते।

पुराणादीनामुपदेशा अर्थप्रधानाः न च शब्दप्रधानाः। नाऽक्षरशः पालनीयस्तेषामुपदेशः। स तूपदेशो मित्रतुल्यः। मित्राण्युचितकार्यकरणाय यथा मित्रेभ्य उपदिशन्ति, तद्वदेषां ग्रन्थानामुपदेशोऽप्युचितकार्यकरणाय परामर्शरूपो भवति। न त्वसावुपदेशो ह्यादेशरूपः। अत एव पुराणादीनामुपदेशः सुहृत्सम्मितो कथ्यते।

तृतीयोपदेशः कान्तासम्मितः काव्यैरधिगम्यते। काव्येषु द्वयोरपि शब्दार्थयोः प्राधान्यं वर्तते। अत्र शब्दार्थाभ्यामभिव्यक्तो व्यङ्ग्यार्थः प्रधानो भवति। व्यङ्ग्यार्थस्याऽतिरमणीयत्वात् काव्यानि सरसतामापाद्योपदिशन्ति। यथा काचित् कान्ता प्रणयप्रदर्शनपूर्वकं स्वकान्तं प्रीणयित्वा समुचितमार्गमुपदिशति, तथैवाऽयमुपदेशः काव्यानां भवति।

रामायणमहाकाव्यस्योपदेशो वर्तते - रामादिवद् वर्तितव्यं न रावणादिवत्। रामायणस्याऽयमुपदेशो न त्वादेशरूपो नाऽपि च परामर्शरूपो वर्तते। परन्तु काव्ये यो

---

१. सकलप्रयोजनमौलिमूतं समनन्तरमेद रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दम्।
काव्यप्रकाश (१.२) वृत्तिः

व्यङ्ग्यरूपो ध्वनिः, स एव सहृदयान् पाठकानुपदिशति - रामादिवद् व्यवहरणीयं न रावणादिवत्। व्यवहारस्याऽस्य फलमस्ति - रामस्य विजयो रावणस्य च विनाशः। अतः काव्यस्य प्रयोजनमिदमुपदेशरूपं महनीयं वर्तते।

मम्मटकृतं काव्यप्रयोजनविवेचनमिदं स्वाभाविकं वैज्ञानिकं व्यावहारिकञ्च विश्लेषण-मभिव्यनक्ति। मम्मटपूर्ववर्तिभिरुत्तरवर्तिभिश्च काव्यशास्त्राचार्यैरस्मिन् विषये सुविशदं विचारितम्। काव्यप्रयोजनानां निरूपणे केषाञ्चित् प्रमुखाचार्याणां मतान्यत्र संक्षेपेणाऽधिगमनीयानि।

## ४. कतिपयकाव्यशास्त्रकृद्भिः प्रतिपादितानि काव्यप्रयोजनानि

(i) भरतो मुनिः -

सहस्राब्दानामवधिर्व्यतीतो, भरतो मुनिर्नाट्यशास्त्रं निबध्य नाट्योद्देश्यरूपेण काव्यप्रयोजनानि निर्दिदेश। नाट्यशास्त्रनिर्दिष्टनाट्यवेदनिर्मितिप्रस्तावनायां प्रयोजनान्येता-न्युपदेशरूपेण सुस्पष्टं भरतेन प्रोक्तानि। नाट्यशास्त्रप्रोक्ता उपदेशा एते निम्नलिखिता वर्तन्ते[१] -

नाट्यमिदमुत्तममध्यमाधमानां नराणां कर्मणामाश्रयभूतं, हितोपदेशजननं धैर्यप्रदं मनोविनोदनं सुखादिकरं विद्यते। अवसरेषु दुःखार्तानां पीडितानां शोकसन्तप्तानां जनानां विश्रान्तिप्रदं वर्तते। अनेन धर्मो वर्धते, यशः प्रसरति, आयुश्च वृद्धिमाप्नोति। इदं हि लोकानुपदिशति।

भरतप्रोक्तान्येतानि नाट्य (काव्य) प्रयोजनानि मम्मटोक्तेषु षट्प्रयोजनेष्वन्तर्भवन्ति।

बहव आचार्याश्चतुर्वर्गं (धमार्थकाममोक्षान्) काव्यप्रयोजनमामनन्ति। भामह-कुन्तक -रामचन्द्रगुणचन्द्रादयो जगदुः - काव्यं चतुर्वर्गसाधकम्। अन्ये प्राहुः - प्रीतिश्च यशश्चाऽपि काव्यप्रयोजने स्तः। अपरे यश एव काव्यस्य मौलिभूतं प्रयोजनं कथयन्ति।

(ii) भामहः -

भामहेनोक्तम्[२]- उत्तमकाव्यरचनया धर्मार्थकाममोक्षाणामधिगमो भवति, कलासु वैलक्षण्यं जायते, यशः प्रसरति, सुखञ्चाऽनुभूयते।

---

१. उत्तमाधममध्यानां नराणां कर्मसंश्रयम्।
हितोपदेशजननं धृतिक्रीडासुखादिकृत्।।
दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम्।
विश्रान्तिजननं काले नाट्यमेतद् भविष्यति।।
धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम्।
लोकोपदेशजननं नाट्यमेतद् भविष्यति।। भरत - नाट्यशास्त्र १.१०९-११३

२. धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिबन्धनम्।। भामह - काव्यालङ्कार १.२

**(iii) वामनः -**

वामनोऽतिसंक्षेपेण काव्यप्रयोजनान्युपदिदेश। काव्यरचनायाः द्वे प्रयोजने स्तः - आनन्दो यशश्च। अत्र ह्यानन्दो दृष्टप्रयोजनं यशश्चाऽदृष्टप्रयोजनं वर्तते काव्यस्य।[1]

अस्योपदेशस्य व्याख्या वामनेन वृत्तौ स्वयं कृता -

काव्यरचनया यशः प्रतिष्ठितं भवति, परं कुकाव्यमपकीर्तिमिव प्रयच्छति। यशः प्राप्य कविः स्वर्गरूपफलं प्राप्नोति, अपकीर्त्या च नरकगामी जायते। अतः श्रेष्ठकवयः कीर्त्युपार्जनाय अपकीर्तिनिवारणाय च काव्यालङ्कारसूत्राण्यधिगम्योत्तमानि काव्यानि विरचयेयुः।[2]

**(iv) भोजराजः -**

भोजराजेन काव्यरचनायाः द्वे प्रयोजने प्रोक्ते - यशसोऽधिगम आनन्दस्य चाऽवाप्तिः। दोषरहितं गुणसंयुतमलङ्कारैरलङ्कृतं रसैश्च सम्भृतं काव्यं कुर्वन् कविः कीर्तिं प्रीतिञ्च विन्दति।[3]

**(v) कुन्तकः -**

वक्रोक्तिजीवितग्रन्थे कुन्तकः काव्यप्रयोजनानि सुस्पष्टरूपेण जगाद[4] -

श्रेष्ठकुलोत्पन्नराजपुत्राद्युपकाराय काव्यरचना विधीयते। सुन्दरसरसक्रमप्रोक्तोऽयं धर्मार्थकाममोक्षसाधनोपायो वर्तते। उत्तमकाव्यास्याऽध्ययनेन सर्वे जनाः व्यवहारविदो भवन्ति। काव्यमृतरसास्वादनेन सहृदयहृदयेषु चतुर्वर्गफलमप्युत्क्रम्य आनन्दानुभूतिरूपश्चमत्कारः समुत्पद्यते।

---

१. काव्यं सद्दृष्टार्थं प्रीतिकीर्तिहेतुत्वात्। वामन - काव्यालङ्कारसूत्र १.१.५

२. प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः।
अकीर्तिवर्तिनीं त्वेवं कुकवित्वविडम्बनाम्।।
कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः।।
अकीर्तिं तु निरालोकनरकोद्देशदूतिकाम्।।
तस्मात् कीर्तिमुपादातुमपकीर्तिं निबर्हितुम्।
काव्यालङ्कारसूत्रार्थः प्रसाद्यः कविपुङ्गवैः।। काव्यालङ्कारसूत्र (१.१.५) वृत्तिः

३. निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति।। सरस्वतीकण्ठाभरण १.२

४. धर्मादिसाधनोपायः सुकुमारक्रमोदितः।
काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः।।
व्यवहारपरिस्पन्दसौन्दर्यं व्यवहारिभिः।
सत्काव्याधिगमादेव नूतनौचित्यमाप्यते।।
चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते।। वक्रोक्तिजीवित १.३-५

कुन्तकस्याऽनेन वचनेन सुस्पष्टमेव यदसौ ह्यानन्दरूपञ्चमत्कारमेव काव्यस्य प्रधानभूतं प्रयोजनमामनुते स्म।

प्रयोजनमुपलक्ष्य कुन्तकः काव्यशास्त्रयोर्भेदमपि जगाद। कटुकौषधसम्मितानि शास्त्राण्यविद्यारोगान् विनाशयन्ति। आनन्दामृततुल्यानि काव्यान्यविवेकरूपान् रोगान् निराकुर्वन्ति।[१]

(vi) वाग्भटः -

काव्यानुशासने वाग्भटः काव्यप्रयोजनानि सविशदं व्यवैक्षीत्। तेन प्रोक्तम् -

प्राचीनाचार्याः काव्यस्य षट् प्रयोजनानि मन्वते - आनन्दोऽनर्थनिवारणं व्यवहारज्ञानं, धर्मकामार्थाधिगमं, कान्तातुल्योपदेशं कीर्तिञ्च।[२] तदनन्तरं प्राचीनाचार्याणां मन्तव्यान्युद्धृत्याऽसौ जगाद -

एतेषूद्देश्येषु प्रथमपञ्चोद्देश्यास्तु साधनैरन्यैरपि प्राप्यन्ते, अतस्तेषामधिगमाय काव्यरचनया को लाभः ? अतः काव्यस्यैकमेव प्रयोजनमस्ति - कीर्तिरिव।[३]

(vii) रुद्रटः -

रुद्रटस्तु धर्मार्थकाममोक्षाधिगममेव काव्यप्रयोजनमाह।[४]

(viii) अग्निपुराणम् -

अग्निपुराणकारेण न चत्वारः पुरुषार्थाः काव्यप्रयोजनरूपेण स्वीकृताः। असौ त्रीनेव पुरुषार्थान् धर्मार्थकामान् काव्य (नाट्य) प्रयोजनानि ब्रवीति।[५]

(ix) रामचन्द्रगुणचन्द्रौ -

नाट्यदर्पणकारौ रामचन्द्रगुणचन्द्रौ सुस्पष्टं काव्यं चतुर्वर्गसाधनं जगदतुः। ताभ्यां काव्यप्रयोजनानि न स्वतन्त्ररूपेण वर्णितानि, परन्तु ग्रन्थस्य मङ्गलाचरणे तानि सङ्केतितान्येव।

---

१. कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम्।
आह्लाद्यामृतवत् काव्यमविवेकगदापहम्।। वक्रोक्तिजीवित (१.७) वृत्तिः

२. काव्यं प्रमोदायाऽनर्थनिवारणाय व्यवहारज्ञानाय त्रिवर्गफललाभाय कान्तातुल्यतयोपदेशाय कीर्तये च। वाग्भट - काव्युनशासन- काव्यमाला संख्या ४३ (१९९५) पृ० २

३. वयं तु कीर्तिमेवैकां काव्यहेतुतया मन्यामहे।................अतः कीर्तिरेवैका काव्यहेतुः।
काव्यानुशासन पृ० २

४. ननु काव्येन क्रियते सरसानामवगमश्चतुर्वर्गे।
लघु मृदु च नो रसेभ्यस्ते हि त्रस्यन्ति शास्त्रेभ्यः।। रुद्रट - काव्यालङ्कार १२.१

५. त्रिवर्गसाधनं नाट्यम्। अग्निपुराण ३३८.७

ताभ्यां जैनी वाणी चतुर्वर्गरूपफलसाधिका प्रोक्ता।[१] तदनन्तरं ताभ्यां जैनी वाणी दृश्यकाव्यैः सम्बद्धा विहिता। काव्यैः धर्मार्थकामास्तु प्राप्यन्त एव, धर्ममधिगम्य परम्परया मोक्षोऽप्यधिगम्यते।[२] नाट्यदर्पणकारौ धर्मार्थकामान् व्यस्तरूपेण प्रधानं फलं मन्वाते, अथ च मोक्षं गौणं फलं गदतः।[३]

(x) **विश्वनाथः** -

काव्यप्रयोजनानि विश्वनाथः सुविशदं सुस्पष्टञ्च विममर्श। चतुर्वर्ग (धर्मार्थकाममोक्ष) फलप्राप्तिस्तेन काव्यप्रयोजनं प्रतिपादितम्। विश्वनाथेन प्रोक्तम् -

काव्यस्य यानि प्रयोजनानि प्रोक्तानि, तानि काव्यशास्त्रस्याऽपि सन्त्येव। तत्कृतग्रन्थोऽपि काव्यस्याऽङ्गं वर्तत एव। अतस्तस्याऽध्ययनस्य लेखनस्य च काव्यप्रयोजनरूपेण प्रोक्तानि प्रयोजनानि वर्तन्ते। विश्वानाथप्रोक्तानि काव्यप्रयोजनानि सन्ति -

काव्यादल्पधियोऽपि जनाः सुखाच्चतुर्वर्गं प्राप्नुवन्ति।[४]

चतुर्वर्गफलप्राप्तिः काव्यात्कथं जायते, तत्त्वस्याऽस्य व्याख्या विश्वनाथेन कृता।[५]

काव्याद्धर्मप्राप्तिः भगवन्नारायणादिचरणारविन्दस्तवेन भवति। "एकःशब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके कामधुग्भवति'' इत्यादीनि वेदवाक्यान्यपि प्रमाणान्यत्र सन्ति। काव्याद्धनप्राप्तिः प्रसिद्धैवाऽस्ति, सा च प्रत्यक्षसिद्धाऽपि वर्तते। धनलाभात् कामप्राप्तिरपि सम्भवति। अर्थोत्थापितधर्मफलं प्रत्यनासक्तिरेव मोक्षहेतुर्वर्तते। काव्ये मोक्षोपयोगिवाक्यप्रयोगादपि मोक्षप्राप्तिः सम्भवति।

---

१. चतुर्वर्गफलां नित्यां जैनीं वाचमुपास्महे।
रूपैर्द्वादशभिर्विश्वं यया नाट्ये धृतं पथि।। नाटयदर्पण १.१

२. धर्मस्य मोक्षहेतुतया मोक्षोऽपि पारम्पर्येण फलम्। नाट्यदर्पण (१.१) वृत्तिः

३. धर्मकामार्थाः व्यस्तसमस्ताः सत् प्रधानं फलं यत्र। मोक्षस्तु धर्मकार्यत्वात् गौणं फलम्।
नाट्यदर्पण (१.५) वृत्तिः

४. चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।
काव्यादेव............................।। साहित्यदर्पण १.२

५. किञ्च काव्याद्धर्मप्राप्तिर्भगवन्नारायणचरणारविन्दस्तवादिना - "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके कामधुग्भवति'' इत्यादिवेदवाक्येभ्यः सुप्रसिद्धैव। अर्थप्राप्तिश्च प्रत्यक्षसिद्धा। कामप्राप्तिश्चार्थद्वारेणैव। मोक्षप्राप्तिश्चैतन्यधर्मफलाननुसन्धानात्। मोक्षोपयोगिवाक्ये व्युत्पत्त्याधायकत्वाच्च। चतुर्वर्गफलप्राप्तिर्हि वेदशास्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते। परमानन्दसन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव। ननु तर्हि परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु किमिति काव्ये यत्नः करणीय इत्यपि न वक्तव्यम्। कटुकौषधशमनीयस्य रोगस्य सितशर्करोपायशमनीयत्वे कस्य वा रोगिणः सितशर्कराप्रवृत्तिः साधीयसी न स्यात्। साहित्यदर्पण (१.२) वृत्तिः

चतुर्वर्गफलप्राप्तिर्वेदादिशास्त्रेभ्योऽपि जायते। परन्तु तानि नीरसानि भवन्ति। तेभ्यः परिपक्वबुद्धय एव चतुर्वर्गं लभन्ते। परन्तु काव्यानां परमानन्ददायकत्वान्मृदुबुद्धयोऽपि सारल्येन चतुर्वर्गं लभन्ते।

अत्रसन्देहः - यदि वेदादिशास्त्रेभ्यः परिपक्वधियः काव्येभ्यश्च मृदुबुद्धयश्चतुर्वर्गं लभन्ते, ततः परिपक्वधियः सत्सु वेदादिशास्त्रेषु काव्यनि प्रति प्रयत्नशीलाः न भवेयुरिति।

अत्रोत्तरम् - यदि कश्चिद् रोगः कटुकौषधसाध्योऽपि श्वेतशर्करासाध्यो वर्तते, ततः कस्य रोगिणः प्रवृत्तिः श्वेतशर्करां प्रति न भविता ? अतः परिपक्वधियामपि मृदुबुद्धीनामपि च प्रवृत्तिः काव्यानि प्रति भवत्येव।

एवं विश्वनाथेन चतुर्वर्गफलप्राप्तिरेव काव्यस्य प्रयोजनं निर्णीतम्।

(xi) **जगन्नाथः -**

पण्डितराजजगन्नाथेन काव्यप्रयोजनानामुल्लेखस्तु विहितः, पर न सुविशदं तानि विममर्श। काव्यप्रयोजनविषयेऽसौ केवलामेकामेव पंक्तिं लिलेख -

**"तत्र कीर्तिपरमाह्लादगुरुराजदेवताप्रसादाद्यनेकप्रयोजनकस्य काव्यस्य।**

काव्यस्याऽनेकानि प्रयोजनानि वर्तन्ते - कीर्तिः, परमाह्लादः, गुरुप्रसादो, राजप्रसादो, देवताप्रसाद इत्यादयः। अत्र गुरुदेवताप्रसादाभ्यामनर्थनिवारणमथ च राजदेवताप्रसादाभ्यामर्थ-साधनमिति प्रयोजनद्वयमपि गृह्यते। आदिपदाद् व्यवहारज्ञानं कान्तासम्मितोपदेशश्च प्रयोजनद्वयं सङ्केत्यते।

रसगङ्गाधरस्याऽनेन विवेचनेन प्रतीयते - काव्यप्रयोजनप्रतिपादनदृष्ट्या पण्डितराजो जगन्नाथो मम्मटाचार्यमेवाऽनुचकार।

## ५. काव्यप्रयोजनानां समीक्षा

काव्यप्रयोजनविषयमुपलक्ष्य समुद्धृतानामाचार्याणां विविधमन्तव्यानां सूक्ष्मावलोकनेन सुस्पष्टमिदं यन्मम्मटाचार्यस्य विचारणा बुद्धिगम्या व्यावहारिकी च वर्तते। अत्र सर्वेषामाचार्याणां मन्तव्यान्यन्तर्भवन्ति।

अत्र प्रसङ्गवशाद् विचारणीयमिदमप्यस्ति - किं प्रयोजनं सकलप्रयोजनमौलिभूतम् ? केचनाऽऽचार्याः कीर्तिमेव प्रधानं प्रयोजनमाचचक्षिरे। परं बहुसंख्यकैराचार्यैः परमाह्लाद एव प्रधानोऽभिमतः, स च सद्यः परनिर्वृतिरूपः। रसास्वादनसमुद्भूतमेव तत्प्रयोजनं प्रधानम्।

मम्मटेनाऽपि प्रयोजनमेतत् प्रधानं सम्मतम्। आनन्दवर्धनाचार्यो ध्वन्यालोके सहृदयमनः-प्रीतिमेव पुनः पुनः मुख्यं प्रयोजनं प्रत्यापादयत्।[१]

काव्यप्रयोजनान्युपलक्ष्याऽन्येनाऽपि प्रकारेण विचारणीयम्। काव्यानां सम्बन्धो यदि काव्यकारेण वर्तते, काव्यस्य पाठकेन, श्रोत्रा, द्रष्ट्रा चाऽप्यस्ति। षट्सु काव्यप्रयोजनेषु केषाञ्चिद् प्रयोजनानां विशिष्टसम्बन्धो यदि काव्यकारेण वर्तते, तदन्येषां सम्बन्धः पाठकादिभिः सहृदयैरस्ति। यशः धनञ्च विशेषरूपेण कविरेव लभते। व्यवहारज्ञानमुपदेशाश्च विशेषतः पाठकादयोऽनुभवन्ति। अथ चाऽनर्थनिवारणं सद्यःपरनिर्वृतित्वञ्च कवयो काव्याध्येतारश्च समानरूपेण प्राप्नुवन्ति।

## ६. काव्यप्रयोजनविषये पाश्चात्यविदुषां मतानि

काव्यप्रयोजनान्यधिकृत्य पाश्चात्यविदुषां समीक्षकाणामपि मन्तव्यान्यप्यवलोकनीयानि। यद्यप्यस्मिन् प्रसङ्गे विस्तृतविवेचनस्य नाऽस्त्यवकाशस्तथाप्यतिसंक्षेपेण तेषां मतानि प्रदर्शनीयान्येव। काव्यप्रयोजनान्यभिलक्ष्य केषाञ्चित् पाश्चात्यसमीक्षकाणां विचाराः डा० राकेशगुप्तमहोदयेन साहित्यानुशीलनग्रन्थे संगृहीताः[२] -

(i) अतिरिक्तमनोवेगविरेचनद्वारेण स्वास्थ्यलाभः। (अरस्तू)

(ii) मानवानां मध्ये सहानुभूत्याः स्नेहभावस्य च आनन्दमयो विस्तारः। (शैले)

(iii) परस्परविरोधिभिर्मनोवेगैः मनस्तोषोत्पादनम्। (रिचर्ड्स)

(iv) आनन्दसर्जनेन जीवनोपयोगिनो नैतिकत्वस्य विस्तारो जीवनस्य वा नूतनव्याख्या-प्रस्तुतीकरणम्। (आर्नल्ड)

(v) मानवेभ्यः शेषजगन्मुक्तिप्रसङ्गे साहाय्यप्रदानम्। (सार्त्र)

(vi) वर्गमुक्त्यान्दोलने साहाय्यम्। (मार्क्स, सार्त्र)

(vii) मानवानां दयितातृप्तिपूर्तये मानसिकरूपेण भोगस्य प्रस्तुतीकरणम्। (फ्रायड)

(viii) मानवानामान्तरिकाणां बाह्यानां वा विकृतीनां विश्लेषणं यथावदङ्कनञ्च। (प्रकृतिवादोऽतियथार्थवादश्च)

---

१. (क) तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्। ध्वन्यालोक १.१

(ख) अथ च रामायणमहाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानामानन्दो मनसि लभतां प्रतिष्ठामिति प्रकाश्यते। ध्वन्यालोक (१.१) वृत्तिः

(ग) सहृदयहृदयाह्लादि शब्दार्थमयत्वमेव काव्यलक्षणम्। ध्वन्यालोक (१.१) वृत्तिः।

२. साहित्यानुशीलन - डा० राकेश गुप्त पृ० २९

(ix) साहित्यस्य प्रमुखः प्रथमश्चोद्देश्यः - कलात्मकसौष्ठवेन सहृदयहृदयाह्लादनम्। जीवनोपयोगिनां वस्तूनां विचाराणां भावानां वाऽप्यभिव्यक्तिस्तत्र प्रयोजनमर्हति।

(वाल्टरप्रेटर, ब्रेडले)

(x) साहित्यं स्वयमेवाऽऽत्मनि सिद्धिर्वर्तते, नाऽपरं किञ्चित्। (वाइल्ड, पो इत्यादयः)

काव्यप्रयोजनविषये पाश्चात्यविदुषां समीक्षकाणामेते विचाराः भारतीयकाव्यशास्त्रकृतामाचार्याणां प्रयोजनेष्वानन्दावाप्त्युपदेशयोरन्तर्भाविताः भवन्ति। काव्यरचना स्वान्तः भवतीति प्रयोजनं निश्चयेन सद्यःपरनिर्वृतिरेव वर्तते।

# काव्यहेतु:

## १. प्रारम्भिककथनम्

काव्यरचनाया: के हेतव: कानि कारणानि कान्युपादानानि वा वर्तन्ते, यैरुपकरणै: कवि: काव्यं रचयतीति विषयं भारतीयकाव्यशास्त्रकृत: प्राचीनकालादेव सुगभीरं व्यमृशन्। विषयोऽयं काव्यरचनया सहैव प्रारभत। आचार्याणां विमर्शस्य निष्कर्षोऽयं यत्काव्यहेतवस्त्रयो भवन्ति - प्रतिभा, व्युत्पत्तिरभ्यासश्च।

भामहेन प्रोक्तम् -

काव्यरचनां प्रतिभावानेव कवि: कर्तुं क्षमते।[१] विविधकाव्यकलाशास्त्राध्ययनेन कवीनां कृतीनामनुशीलनेन काव्यविदां गुरूणाञ्च सेवयैव कवे: काव्यरचना भवति।[२]

महामनीषिणा दण्डिना प्रोक्तम् -

स्वाभाविकी प्रतिभा, प्रचुरमध्ययनमभ्यासनैरन्तर्यञ्चेति त्रीणि तत्त्वानि काव्यहेतवो भवन्ति।[३]

काव्यहेतूनां निर्देशने वामनेन प्रायशो भामहो दण्डी चाऽनुसृत:। परन्त्वसावस्मिन् विषये विस्तृतां व्याख्यां प्रास्तौत्। वामनेन प्रोक्तम् -

लक्ष्यत्वाभियोगवृद्धसेवावेक्षणप्रतिभावधानैर्हेतुभि: काव्यानि विरच्यन्ते। शब्दानामेतेषां व्याख्या निम्नप्रकारेण वर्तते -

---

१. काव्यं तु जायते जातु कस्यचित् प्रतिभावत:। भामह : काव्यालङ्कार १.५

२. शब्दश्छन्दोऽभिधानार्था इतिहासाश्रया: कथा:।
लोको युक्ति: कलाश्चेति मन्तव्या: काव्यगैर्ह्यमी।।
शब्दाभिधेये विज्ञाय कृत्वा तद्विदुपासनम्।
विलोक्याऽन्यप्रबन्धांश्च कार्य: काव्यक्रियादर:।। भामह : काव्यालङ्कार १.९-१०

३. नैसर्गिकी च प्रतिभा श्रुतञ्च बहुनिर्मलम्।
अमन्दश्चाऽभियोगोऽस्या: कारणं काव्यसम्पद:। काव्यादर्श १.१०३

काव्यैः सह परिचयो लक्ष्यत्वं, काव्यरचनायै समुद्योगोऽभियोगः, काव्योपदेष्टुर्गुरोः सेवा वृद्धसेवा, विविधानि शास्त्राण्यधीत्य पदानामाधानमुद्धरणानाञ्च निवेशनमवेक्षणं, कवित्वबीजं प्रतिभा, चित्तस्यैकाग्र्यमवधानं वर्तते। चित्तस्यैकाग्र्यं देशात् कालाच्च प्राप्यते।[१]

रुद्रटः स्पष्टमेव शक्तिव्युत्पत्त्यभ्यासत्रयं काव्यहेतुं प्रचक्षते।[२] वाग्देवतावतारो मम्मटोऽपि शक्तिं (प्रतिभाम्), निपुणतां (व्युत्पत्तिं) अभ्यासञ्च काव्यहेतुं प्रचक्षते।[३] बहुसंख्यकैराचार्यैः प्रतिभाव्युत्पत्त्यभ्यासत्रये काव्यहेतुरूपे प्रतिपादितेऽपि केचनाऽऽचार्याः प्रतिभामेव काव्यहेतुं कल्पयन्ति। राजशेखरोऽत्र प्रथमः। असौ ब्रवीति -

काव्यरचनायाः हेतुः केवलं प्रतिभैव वर्तते।[४]

पण्डितराजो जगन्नाथोऽपि प्रतिभामेवैकां काव्यहेतुत्वेन प्रत्यापादयत्।[५]

एभिराचार्यैर्यद्यपि प्रतिभैव काव्यहेतुः प्रोक्ता, तथापि व्युत्पत्तेरभ्यासस्याऽपि च महत्त्वं काव्यरचनायामङ्गीकृतम्। ते जगदुः - काव्यरचनायाः प्रधानहेतुः प्रतिभा यद्यपि वर्तते, तथापि व्युत्पत्त्यभ्यासावपि सहायकहेतू ध्रुवं मन्तव्ये। राजशेखरेण प्रोक्तम् -

प्रतिभामुन्मीलयितुं समाधिः (चितस्यैकाग्र्यम्) अभ्यासश्चेति द्वयं परमावश्यकम्। समाधिना काव्यरचनाऽभ्यासेन च शक्तिरुत्पद्यते। शक्त्याऽनया समन्वितः कविरेव प्रतिभोद्भासितो भवति। अत्र समाधिरान्तरिकः प्रयासोऽभ्यासश्च बाह्यः। प्रतिभामुद्भासयितुमान्तरिकबाह्ययो-र्द्वयोरप्यनयोरनिवार्यत्वमवगन्तव्यम्।

पण्डितराजेन प्रतिभैव केवलं काव्यहेतुर्मता, तथापि व्युत्पत्त्यभ्यासौ प्रतिभाहेतू प्रोक्तौ। प्रतिभायाः द्वौ हेतू वर्तेते -

(i) देवतायाः महापुरुषस्य च प्रसादेनोत्पन्नमदृष्टम्।

(ii) विलक्षणौ व्युत्पत्त्यभ्यासौ।[६]

---

१. तत्र काव्यपरिचयो लक्ष्यत्वम्। काव्यबन्धोद्यमोऽभियोगः। काव्योपदेशगुरुशुश्रूषणं वृद्धसेवा। पदाधानोद्धरणमवेक्षणम्। कवित्वबीजं प्रतिभानम्। चित्तैकाग्र्यमवधानम्। तद्देशकालाभ्याम्। वामन : काव्यालङ्कारसूत्र १.३.१२-१८

२. त्रितयमिदं व्याप्रियते शक्तिर्व्युत्पत्तिरभ्यासः। रुद्रट : काव्यालङ्कार १.१४

३. शक्तिर्निपुणतालोकशास्त्रकाव्याद्यवेक्षणात्।
काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे।। मम्मट : काव्यप्रकाश १.३

४. सा (शक्तिः) केवलं काव्ये हेतुरिति यायावरीयः। काव्यमीमांसा चतुर्थोऽध्यायः

५. तस्य च कारणं कविगता केवलं प्रतिभा। रसगङ्गाधर प्रथममाननम्

६. तस्याश्च हेतुः क्वचिद्देवतामहापुरुषादिजन्यमदृष्टम्। क्वचिच्च विलक्षणव्युत्पत्ति-काव्यकरणाभ्यासौ। रसगङ्गाधर पृ० ८

वाग्भटस्त्वाह -

प्रतिभैव केवलं काव्यहेतुः व्युत्पत्त्यभ्यासौ तस्याः संस्कारकौ वर्तेते।[१]

जयदेवो वाग्भटमनुमोदयामास। तेन प्रोक्तम् -

काव्यहेतुः केवलं प्रतिभैव, व्युत्पत्त्यभ्यासौ तां पुष्णीतः। यथा लतायाः कारणं बीजमस्ति, जलमृत्स्ने तद्बीजं पुष्णीतः।[२]

आनन्दवर्धनः प्रतिभाव्युत्पत्तिद्वयं काव्यहेतुमाचख्यौ। परमनयोर्द्वयोरपि प्रतिभायाः प्राधान्यम्। व्युत्पत्तिसमुत्पन्नस्तु दोषः कविप्रतिभया संव्रियते। परन्तु प्रतिभाराहित्यसमुत्पन्नदोषो झटित्येव प्रतीयते।[३]

काव्यशास्त्रकृतामनेकेषामाचार्याणां मन्तव्यं वर्तते -

जन्मजातप्रतिभारहितोऽपि कविः विद्यामधीत्य सततञ्चाऽभ्यासेन काव्यरचनायां समर्थो जायते।[४] पण्डितराजेन प्रोक्तम् -

**व्युत्पत्त्यभ्यासाभ्यां प्रतिभोत्पद्यते।**

उपर्युक्तविवेचनेन स्पष्टमेव यद् भारतीयकाव्यशास्त्रकृतः प्रतिभाव्युत्पत्त्यभ्यासत्रयं काव्यहेतुं समाम्नासिषुः। केचनाऽऽचार्याः हेतूनिमान् समसामर्थ्यशालिनः प्रोचुः, परमन्ये प्रतिभाया एव प्राधान्यं प्रतिपाद्य व्युत्पत्त्यभ्यासौ तस्या उपकारकतया जगदुः। मम्मटाचार्यस्येयं सुदृढा धारणा यत् त्रयोऽप्येते काव्यहेतवः समष्टिरूपेण काव्यरचनाकारणानि वर्तन्ते न तु व्यष्टिरूपेण। अत एव तेन हेतुलक्षणे कारिकायामेकवचनस्य प्रयोगो विहितो न तु बहुवचनस्य।[५]

---

१. प्रतिभैव कवीनां काव्यकरणकारणम्। व्युत्पत्त्यभ्यासौ तस्या एव संस्कारकौ न तु काव्यहेतू।
वाग्भट : अलङ्कारतिलक पृ० २

२. प्रतिभैव श्रुताभ्याससहिता कवितां प्रति।
हेतुर्मृदम्बुसम्बद्धा बीजपंक्तिर्लतामिव।। चन्द्रालोक १.६

३. अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।
यस्त्वशक्तिकृतस्तस्य झटित्येवाऽवभासते।। ध्वन्यालोक (३.६) वृत्तिः।

४. न विद्यते यद्यपि पूर्ववासनागुणानुबन्धिप्रतिभानमुत्तमम्।
श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम्।। काव्यादर्श १.१०४

५. इति त्रयः समुदिताः न तु व्यस्तास्तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुर्न तु हेतवः।
काव्यप्रकाश (१.३) वृत्तिः

## २. प्रतिभा

प्रतिभायाः स्वरूपं किमस्ति, कथञ्च कविः प्रतिभाशाली भवतीति विषयः काव्यशास्त्राचार्यैः सविशदं विमृष्टः। आचार्याः प्रायशः प्रतिभां पूर्वजन्मसंस्कारोद्भवां प्राहुः। जन्मजन्मान्तरसंस्कार-विशेषयुता ह्यात्मनि समुदिता प्रतिभा कविमलङ्करोति।

दण्डि[1]वामनौ[2] प्रतिभां नैसर्गिकीं जन्मान्तरगतसंस्कारविशेषां प्रोचतुः। अभिनवगुप्तेन प्रोक्तम् - कवित्वबीजरूपा प्रतिभा जन्मान्तरगतसंस्कारविशेष एव।[3] मम्मटोऽपि प्रतिभां पूर्वजन्मसंस्कारोत्पन्नां न्यरूपयत्। तां विना काव्यं न प्रसरति। यदि प्रसरेत्, सा कृतिरुपहसनीया भवेत्।[4] पण्डितराजोऽप्याह -

प्रतिभा अदृष्टप्रभवा, इति सिद्धान्तो यद्यपि नाऽक्षरशः स्वीकरणीयः तथापि प्रतिभामयपूर्वजन्मसंस्काराः कवीनामान्तरिकगुणाः भवन्त्येव।[5]

अग्निपुराणकारेण प्रतिपादितम् -

काव्यरचनासामर्थ्यं प्रतिभयैव समुद्भवति। अस्मिन् जगति प्रथमं तु मनुष्यशरीरमेव दुर्लभम्। पुनः मनुष्यशरीरे प्राप्ते विद्या सुदुर्लभा। विद्यायां सत्यामपि कवित्वं दुर्लभम्। कवित्वेऽपि प्रतिभा सुदुर्लभा भवति।[6] प्रतिभेयमेव केवलं काव्यस्योत्तमस्य प्रधानकारणम्।

प्राक्तनसंस्कारप्रभवैव केवलं न प्रतिभेति कुन्तकस्याऽवधारणा। प्रतिभायाः विकासः प्राक्तनैरद्यतनैश्चोभयविधैः संस्कारैर्जायते।[7]

काव्यशास्त्राचार्यैः प्रतिभायाः स्वरूपमपि सुविचारितम्। कवित्वबीजं प्रतिभेति वामनस्य मतम्। प्रतिभायाः वैज्ञानिकस्वरूपसमीक्षा प्रथमं तावद् भट्टतौतेन कृता। तेन प्रोक्तम् -

---

१. काव्यादर्श १.१०४
२. जन्मान्तरसंस्कारापेक्षिणी सहजा। काव्यालङ्कारसूत्र १.३.१६
३. कवित्वबीजं जन्मान्तरगतसंस्कारविशेषः कश्चित्।
भरतनाट्यशास्त्र-अभिनवभारतीटीका पृ० ३४६
४. शक्तिः कवित्वबीजरूपः संस्कारविशेषः, यां विना काव्यं न प्रसरेत् प्रसृतं वा उपहसनीयं स्यात्। काव्यप्रकाश (१.३) वृत्तिः।
५. कवेः वर्णनानिपुणस्य योऽन्तर्गतोऽनादिप्राक्तनसंस्कार प्रतिभानमयः। रसगङ्गाधर पृ० ८-९
६. नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा।। अग्निपुराण ३३७.३-४
७. प्राक्तनाऽद्यतनसंस्कारपरिपाकप्रौढा प्रतिभा काचिदेव कविशक्तिः। वक्रोक्तिजीवित पृ० ४९

नवनवार्थोन्मीलनसमर्था प्रज्ञा प्रतिभोच्यते। तयाऽनुप्राणितः कविः वर्णनानिपुणो भवति। तस्य कार्यं काव्यमित्युच्यते।[१] अभिनवगुप्तोऽपि प्रतिभायाः स्वरूपं तदनुरूपमेव व्यावृणोत्।[२]

राजशेखरेण प्रोक्तम् -

प्रतिभासामर्थ्येन कविः परोक्षमपि वस्तु प्रत्यक्षवदवलोकयति। प्रतिभया शब्दसमूहार्थ-समूहालङ्कारोक्तयो हृदयेषु कवीनां प्रतिभासन्ते। प्रतिभाहीनो जनः प्रत्यक्षमपि परोक्षवत् पश्यति। परं प्रतिभावाञ्जनः परोक्षपदार्थानपि प्रत्यक्षवदीक्षते। मेधाविरुदकुमारदासादयः कवयो जन्मान्धा अपि श्रेष्ठकवयोऽभवन्।[३]

रुद्रटाचार्येण प्रतिभास्वरूपं सुस्पष्टं व्याख्यातम्। तेन सा शक्तिरित्यभिहिता। मनस्येकाग्रे सति कविहृदयेऽर्थाः विविधं स्फुरन्ति, कमनीयपदानि च प्रतिभासन्ते। सा शक्तिरित्युच्यते।[४]

काव्यशास्त्राचार्याणां वचनमिदम् -

कविः स्वप्रतिभया काव्यविषयान् रमणीयानीक्षते। अनुभूतसौन्दर्यमसौ समुचितरूपेण भाषानिबद्धं विधाय सहृदयपाठकसमक्षमुपस्थापयति। पाठकानां सुप्तानुभूतीनां जागरणं विधाय तानसौ भावयति। कविः स्वसामर्थ्येन विश्वरूपं स्वकल्पनानुरूपं परिकल्प्य सत्यवत् प्रत्यक्षरूपेण प्रदर्शयितुं क्षमः। यथा तस्मै रोचते, जगत् तथैव परिवर्तते।[५] सिद्धपुरुषः प्रत्यक्षद्रष्टा च कविर्भवति। अदृष्टरूपाण्यपि वस्तूनि पाठकानां समक्षं प्रत्यक्षवत् प्रस्तुतीकरणेऽसौ समर्थः। शालिवाहनस्य श्लोकमिममानन्दवर्धनो यथार्थमेव समुद्धृतवान् -

**अतथास्थितानपि तथा संस्थितानिव हृदये या निवेशयति।**
**अर्थविशेषान् सा जयति विकटकविगोचरा वाणी।[६]**

---

१. प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता।
तदनुप्राणनाज्जीवद् वर्णनानिपुणः कविः।
तस्य कर्म स्मृतं काव्यम्....................।।
हेमचन्द्रस्य काव्यानुशासने भट्टतौतस्य प्रलुप्तग्रन्थकाव्यकौतुकादुद्धृतम्।

२. प्रतिभा अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा। तस्याः विशेषो रसावेशवैशद्यसौन्दर्यकाव्यनिर्माणक्षमत्वम्।
लोचनटीका - पृ० २९

३. या शब्दसामर्थ्यसार्थमलङ्कारतन्त्रमुक्तिमार्गमन्यदपि तथाविधमधिहृदयं प्रतिभासयति सा प्रतिभा। अप्रतिभस्य पदार्थसार्थः परोक्ष इव। प्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव। यतो मेधाविरुदकुमारदासादयो जात्यन्धाः कवयः श्रूयन्ते। काव्यमीमांसा अध्याय - ४ पृ० ११-१२

४. मनसि सदा सुसमाधिनि विस्फुरणमनेकधाभिधेयस्य।
अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः।। रुद्रट : काव्यालङ्कार १.१५

५. अपारे काव्यसंसारे कविरेव प्रजापतिः।
यथाऽस्मै रोचते विश्वं तथेदं परिवर्तते।। ध्वन्यालोक (३.४३) वृत्तिः

६. ध्वन्यालोक (४.३) वृत्तिः

अथ ध्वनिकारः सुस्पष्टं जुघोष -

**सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम्।**
**अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ।**[१] -

काव्यनिर्माणहेतुत्वेन प्रतिभा आचार्येण महिमभट्टेन बहुतरं सम्मता। तेन प्रोक्तम् -

रसानुरूपशब्दार्थचिन्तने कवेः स्वरूपस्पर्शोत्पन्नप्रज्ञैव प्रतिभा वर्तते। प्रतिभेयं भगवतः शिवस्य तृतीयमेव नेत्रम्। प्रतिभया कविस्त्रिकालवर्तिनोऽप्यर्थान् साक्षात्करोति।[२]

प्रतिभास्वरूपं व्याकुर्वद्भिराचार्यैस्तस्याः भेदा अदि विविधं निरूपिताः। रुद्रटाऽऽचार्येण प्रतिभायाः द्वौ भेदौ प्रोक्तौ - सहजा उत्पाद्या च।[३] रुद्रटमनुकुर्वता हेमचन्द्रेणाऽपि प्रतिभायाः द्वौ भेदौ प्रदर्शितौ उत्पाद्या औपाधिकी च।[४]

राजशेखरः प्रतिभायाः भेदान् सुविशदं व्यविक्त। प्रथमं प्रतिभायाः द्वौ भेदौ भवतः - कारयित्री प्रतिभा भावयित्री च पतिभा। काव्यकरणसमर्था कविप्रतिभा कारयित्री प्रतिभोच्यते। यया प्रतिभया काव्यसमीक्षकाः पाठकाः वा कवेरभिप्रायमधिगन्तुं क्षमन्ते, सा भावयित्री प्रतिभोच्यते।

कारयित्री प्रतिभा पुनस्त्रिविधा भवति - सहजा, आहार्या औपदेशिकी च। सहजा प्रतिभा पूर्वजन्मसंस्कारानपेक्षते, स्वल्पेनैव चाऽभ्यासेनोद्बुध्यते। आहार्या प्रतिभा जन्मान्तर-संस्कारांस्त्वपेक्षते, परमुद्बोधनेऽधिकमभ्यासमपेक्षते। औपदोशिकी प्रतिभा मन्त्रतन्त्रादीनामुपदेशे-नोद्भवति।

केचनाऽऽचार्याः विशिष्टप्रज्ञां प्रतिभामाचख्युः। एवञ्च प्रज्ञा च प्रतिभा च समानार्थकौ पर्यायवाचिनौ शब्दावगन्तव्यौ, प्रतिभा वा प्रज्ञा वा कविगता बुद्धिरेव। राजशेखरस्तां बुद्धिं त्रिविधामवर्णयत् - स्मृतिश्च मतिश्च प्रज्ञा च।

व्यतीतार्थस्मारिका बुद्धिः स्मृतिर्वर्तते, वर्तमानार्थबोधिका च बुद्धिर्मतिरुच्यते। भविष्यत्कालार्थदर्शिका च बुद्धिः प्रज्ञा भवति।[५]

---

१. ध्वन्यालोक १.६

२. रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः।
क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः।।
सा हि चक्षुर्भगवतस्तृतीयमिति गीयते।
येन साक्षात् करोत्येष भावांस्त्रैकाल्यवर्तिनः।। व्यक्तिविवेक पृ० १०८

३. प्रतिभेत्यपरैरुदिता सहजोत्पाद्या च सा द्विधा भवति। रुद्रटः काव्यालङ्कार १.१६

४. हेमचन्द्रः काव्यानुशासन पृ० ४-५

५. त्रिधा च सा (बुद्धिः) स्मृतिः मतिः प्रज्ञा चेति। अतिक्रान्तस्यार्थस्य स्मर्त्री स्मृतिः वर्तमानस्य मन्त्री मतिः अनागतस्य प्रज्ञात्री प्रज्ञा। सा कवीनाममुपकर्त्री। काव्यमीमांसा पृ० १०

काव्यप्रकाशस्य सम्प्रदायप्रकाशिन्यां टीकायां (१.३) कारिकाव्याख्याने लेखकेन व्यतीतार्थविषया बुद्धि: स्मृति:, भविष्यदर्थप्रदर्शिका मति: त्रिकालबोधिका च प्रज्ञा कथिता।[1]

पाश्चात्यकाव्यसमीक्षका: प्रतिभां कल्पनाभिधेयां (Imagination) व्याचख्यु:। अस्मिन् विषये कोलरिजप्लेटोकान्टशैलीत्यादीनां विदुषामभिमतानि प्रसिद्धानि। तेषां सविस्तरविवेचनस्य नाऽत्राऽवकाश:। तथापि सारांशोऽत्र प्रस्तूयते। डा० बलदेवोपाध्यायेन पाश्चात्यभारतीयसिद्धान्त-विमर्शने तुलनात्मकं रूपमेवं प्रस्तुतम्[2] -

| | कान्ट | कोलरिज | भारतीय पक्ष |
|---|---|---|---|
| १. | Reproductive imagination | Fancy | स्मृति |
| २. | Productive Imagination | Primary imagination | सविकल्पक प्रत्यक्ष |
| ३. | Aesthetic imagination | Secondary imagination | कविप्रतिभा |

### ३. व्युत्पत्ति:

काव्यस्य द्वितीयहेतुर्वर्तते व्युत्पत्ति:। व्युत्पत्तिपदस्य अभिप्रायो वर्तते -

लोकव्यवहारशास्त्रकाव्यादीनधीत्य तेषां ज्ञाने नैपुण्यम्।

कविभारती सर्वानपि विषयान् वर्णयति। अत: कविना सर्वे विषया: वैविध्येन ज्ञातव्या:। न कोऽपि विषय: कविकृतवर्णनपरिधिबहिर्भूतो वर्तते। तत्तद्विषयविशेषज्ञ एव कविस्तस्य विषयस्य सहजं स्वाभाविकमौचित्यगुणविशिष्टं वर्णनं विधातुं सहृदयमनांसि चाऽऽवर्जयितुं क्षमते। समुचितौचित्यगुणरहितवर्णनप्रसक्त: कवि: लोके ह्युपहासास्पदतां भजते। अत एव राजशेखरेण प्रोक्तम् -

"**औचित्यानौचित्यविवेकबाहुल्यमेव व्युत्पत्ति:।**"

काव्यशास्त्रकृतोऽप्योषिषु: -

ज्ञानविज्ञानशिल्पकलाविद्यादय: सर्वे विषया: काव्याङ्गानि विधीयन्ते।[3] अत: काव्यकर्ता कवि: सर्वेषां विषयाणां ज्ञाता भवेत्। अत्र भामहेन प्रोक्तम् -

---

१. स्मृतिर्व्यतीतविषया मतिरागामिगोचरा।
बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकालिकी मता।।
काव्यप्रकाशस्य (१.३) कारिकाया: सप्प्रदायप्रकाशिनीटीका

२. भारतीय साहित्यशास्त्र - बलदेव उपाध्याय (संवत् २००७) पृ० ४३१

३. न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
न स योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते।।
सर्वशास्त्राणि शिल्पानि कर्माणि विविधानि च।
अस्मिन्नाट्ये समेतानि तस्मादेतन्मया कृतम्।। भरतनाट्यशास्त्र १.११३-११५

काव्यरचनाकारः प्रथमं तावच्छब्दशास्त्रं, छन्दःशास्त्रं, कोषमितिहासं, कथाः, लोकव्यवहारं, दर्शनशास्त्रं कलाश्चाऽधीयात्, तदनन्तरञ्चाऽन्येषां कवीनां काव्यान्यवलोकयताम्।[१]

वामनेन काव्यस्य त्रीण्यङ्गानि प्रोक्तानि - लोको विद्या प्रकीर्णञ्चेति। अत्र लोकव्यवहारो लोकः, शब्दशास्त्रस्मृत्यभिधानकोषविचितिकलाकामशास्त्रदण्डनीत्यादयो विद्याः। कविना एतत्सर्वं ज्ञातव्यम्। वृद्धसेवा, प्रतिभाऽवधानं प्रकीर्णमित्यवगन्तव्यम्।[२]

एवं काव्यशास्त्रकृद्भिः प्रतिपादितानि लोकशास्त्रकाव्याध्ययनादीनि तत्त्वानि वामनेन काव्यहेतुरूपाणि स्वीकृतानि।

मम्मटाचार्येण व्युत्पत्तेरर्थः सुस्पष्टं वर्णितः। असौ व्युत्पत्तिं निपुणतामित्याह। तेन प्रोक्तम् -

"लोकशास्त्रकाव्याद्यवेक्षणान्निपुणता"[३]

कारिकायाः वृत्तौ तेन विस्तृता व्याख्या प्रस्तुता। तत्र लोकस्यार्थः स्थावरजङ्गमात्मकलोक-व्यवहारः। शास्त्राणि वर्तन्ते - छन्दोव्याकरणाभिधानकोषकलाधर्मार्थकाममोक्षगजतुरगखड्गादि-लक्षणग्रन्थाः। महाकविकृतयः काव्यानि सन्ति। आदिपदादितिहासादयो गृह्यन्ते। एषां तत्त्वानां सम्यक् पर्यालोचनेन व्युत्पत्तिरुत्पद्यते। सैव निपुणता ज्ञेया।[४]

विवेचनेनाऽनेन सुस्पष्टमिदं यत् - लोकव्यवहारशास्त्रकाव्येतिहासादीनां समवलोकनेना-ऽध्ययनेन च समुत्पन्नो विवेकः ह्यौचित्यानौचित्यज्ञानञ्च सर्वमपि व्युत्पत्त्यन्तः समाविश्यते।

### ४. अभ्यासः

काव्यरचनायास्तृतीयो हेतुर्विद्यते - अभ्यासः। मम्मटादिभिराचार्यैरभ्यासोऽपि काव्यहेतु-मध्ये समसामर्थ्यशाली प्रोक्तः। परन्तु राजशेखरजगन्नाथौ हेतुमभ्यासं प्रतिभायाः सहायकमुद्भावकञ्चाऽऽचख्यतुः।

---

१. भामह : काव्यालङ्कार २.९-१०

२. लोको विद्या प्रकीर्णञ्च काव्याङ्गानि। लोकवृत्तं लोकः। काव्यालङ्कारसूत्रवृत्तिः १.३.१-२ शब्दस्मृत्यभिधानकोषछन्दोविचितिकलाकामशास्त्रदण्डनीतिपूर्वाः विद्याः।

काव्यालङ्कारसूत्रवृत्तिः १.३.३

लक्ष्यत्वमभियोगो वृद्धसेवाऽवेक्षणं प्रतिभानमवधानञ्च प्रकीर्णम्।

काव्यालङ्कारसूत्रवृत्तिः १.३.११

३. निपुणता - लोकशास्त्रकाव्याद्यवेक्षणात्। काव्यप्रकाश १.३

४. लोकस्य स्थावरजङ्गमात्मकलोकवृत्तस्य शास्त्राणां छन्दोव्याकरणाभिधानकोशकला-चतुर्वर्गगजतुरगखड्गादिलक्षणग्रन्थानां काव्यानां महाकविसम्बन्धिनामादिग्रहणादितिहासादीनां विमर्शनाद् व्युत्पत्तिः। काव्यप्रकाश (१.३) वृत्तिः

अभ्यासस्याऽभिप्रायो वर्तते - काव्यकर्ता प्रशिक्षुः काव्यमर्मज्ञगुरुजनान् सेवन् निर्देशने तेषां काव्यरचनां कुर्यात्। वामनेन वृद्धजनसेवा काव्यशिक्षायै ह्यनिवार्या प्रोक्ता।[१]

अभ्यासपदस्य व्याख्या मम्मटाचार्येण सुस्पष्टं सुविशदं कृता। तेन प्रोक्तम् -

काव्यकरणशिक्षाऽध्ययनाभिलाषी तान् विदुषः समुपगच्छेद् ये काव्यरचनाभिज्ञाः काव्यसमीक्षामर्मज्ञाश्च सन्ति। तेषामुपदेशेनाऽसौ विषयाऽनुकूलं शब्दानर्थांश्च संयोजयति। शब्दानर्थांश्च संयोज्याऽसौ काव्यरचनां प्रारभते। अस्याः प्रक्रियायाः पुनः करणं अभ्यासोऽभिधीयते।[२]

कविशिक्षायै काव्यकरणाभ्यासाय च प्राचीनैः काव्यशास्त्रविद्भिः सविस्तरं निर्दिष्टम्। ते प्रोचुः -

पुरुषोऽष्टविधासु विशेषतासु सतीष्वेव काव्यरचनाकरणे क्षमो भवति। अष्टविधविशेषताश्चेमाः काव्यमातरः प्रोच्यन्ते। तासां नामानि वर्तन्ते[३] -

स्वास्थ्यं प्रतिभाऽभ्यासो गुरुजनसेवाभक्तिर्विद्वद्भिः सह गोष्ठ्यः सततमध्ययनं प्रबला स्मृतिशक्तिः चित्तस्य च प्रसादः।

कविकण्ठाभरणग्रन्थे क्षेमेन्द्रेण काव्यकरणस्य पञ्च सरणयो निर्दिष्टाः -

(i) **अकवेः कवित्वप्राप्तिः -**

अकविः कवित्वं प्राप्नुयात्। तदर्थं द्वावुपायौ वर्तेते -

(क) मन्त्रजपादिभिर्देवपूजनम्।

(ख) पुरुषार्थः

गुरुजनेभ्यो विभिन्नशास्त्राण्यधीत्य काव्यरचनाशिक्षाञ्चाऽधिगम्य अकविरपि स्वस्मिन् कवित्वशक्तिमुद्बोधयति।

(ii) **शिक्षाप्राप्तगिरः कवेः -**

काव्यकरणशिक्षामधीत्य सम्पूर्णरूपेण तदधिगमनम्।

(iii) **चमत्कृतिश्च शब्दाप्तौ -**

काव्यकरणशिक्षां समग्रामधिगम्य स्वरचितकाव्ये चमत्कारस्य रमणीयतायाः वा समापादनं परमावश्यकं वर्तते।

---

१. काव्यालङ्कारसूत्रवृत्तिः १.३.११

२. काव्यं कर्तुं विचारयितुं च ये जानन्ति, तदुपदेशेन करणे योजने च पौनःपुन्येन प्रवृत्तिः। काव्यप्रकाश (१.३) वृत्तिः

३. स्वास्थ्यं प्रतिभाऽभ्यासो भक्तिर्विद्वत्कथा बहुश्रुतता।
स्मृतिर्दार्ढ्यमनिर्वेदश्च मातरोऽष्टौ कथिताः कवित्वस्य।। काव्यमीमांसा

(iv) गुणदोषोद्गातिः -

काव्यरचनां कुर्वन् कविः गुणान् दोषांश्चाऽपि जानीयात्। अत्र क्षेमेन्द्रेण त्रयो दोषास्त्रयश्च गुणाः प्रोक्ताः। शब्दवैमल्यमर्थवैमल्यं रसवैमल्यञ्चेति त्रयो गुणाः वर्तन्ते। शब्दकालुष्यमर्थकालुष्यं रसकालुष्यञ्च त्रयो दोषाः सन्ति। काव्यरचनायां गुणाः ग्रहणीयाः दोषाश्च परित्याज्याः।

(v) परिचयप्राप्तिः -

कविना विविधशास्त्राणि परिचेयानि।

काव्यहेतुसम्बन्धे विवेचनेनोपर्युक्तेन स्पष्टमेवेदं यत् प्रतिभाव्युत्पत्त्यभ्यासास्त्रयोऽपि प्रत्यक्षं वाऽप्रत्यक्षं वा काव्यरचनाहेतवः सन्ति; केचन काव्यशास्त्रकर्तारस्त्रीनपि हेतून् समसामर्थ्यान् प्रतिपादयन्तस्ताननिवार्यहेतून् प्रवदन्ति। परमपरे काव्यशास्त्रकृतः प्रतिभामेव मुख्यहेतुं प्रतिपादयन्तो व्युत्पत्त्यभ्यासौ सहायकहेतुरूपेणोद्भावकरूपेण वा व्याचक्षते।

## ५. हेतुत्रयस्यैकत्वम्

प्रतिभाव्युत्पत्त्यभ्यासेषु त्रिषु हेतुषु परस्परं प्रधानत्वाऽप्रधानत्वविवादोऽनावश्यको न च सुसङ्गतोऽवगन्तव्यः। त्रयोऽपि समसामर्थ्यशालिनो वर्तन्ते। एकस्याऽप्यभावे काव्यरचना सदोषा भवति नोत्तमञ्च काव्यं समुदेति। अत्रौचित्यहीनत्वमपि लक्ष्यते। त्रयोऽपि हेतव एकस्यैव कवेर्व्यक्तित्वस्य त्रिविधाः पक्षाः वर्तन्ते।

प्रतिभायाः अभावे व्युत्पत्त्यभ्यासौ महत्त्वहीनौ स्तः, व्युत्पत्तेरभ्यासस्य चाऽनुपस्थितौ प्रतिभा कुण्ठिता भवति। अत एव मम्मटाचार्येण प्रोक्तम् -

शक्तिनिपुणताभ्यासाः न स्वतन्त्ररूपेण काव्यहेतवः। त्रयाणामपि समष्टिरूपेण हेतुत्वम-वधार्यम्। तेषां सम्मिलितरूपमेव हेतुः। अतो मम्मटाचार्यः हेतुत्रयमुक्त्वाऽपि न बहुवचनमत्र प्रयुयोज, अपि तु तत्रैकवचनस्य प्रयोगञ्चकार।[१]

अत्र निष्कर्षोऽयं यत् प्रतिभाव्युत्पत्त्यभ्यासास्त्रयः काव्यरचनायाः हेतवो वर्तन्ते। अथ च ते त्रयोऽपि सम्मिलितरूपेणैव काव्यरचनायां कारणानि वर्तन्ते। तेषां समष्टिरेव हेतुर्न तु व्यष्टिः।

---

१. त्रयः समुदिताः न तु व्यस्तास्तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुर्न तु हेतवः। काव्यप्रकाश (१.३) वृत्तिः

# काव्यलक्षणम्

## १. प्रारम्भिककथनम्

काव्यसमीक्षां प्रारब्धुं काव्यशास्त्रस्य क्रमबद्धेतिहासञ्चोन्मीलयितुं काव्यलक्षणव्याख्यानं प्रथमं कर्तव्यमस्ति काव्यशास्त्रकृताम्। काव्यस्य कस्मिन्नङ्गेऽवयवे वा काव्यत्वं प्रधानत्वेन निहितमित्यभिलक्ष्य काव्यशास्त्रकृद्भिराचार्यैर्विविधानि लक्षणानि काव्यस्य प्रस्तुतानि। आभरतभामहाभ्यां वर्तमानसमयं यावदाचार्याः काव्यलक्षणकरणे विविधभावानकल्पयन्। यद्यप्यत्र सर्वेषामाचार्याणां मन्तव्यानां प्रस्तुतिर्न सम्भवा, तथापि तेषां विचाराणां कल्पनानाञ्च विश्लेषणं समीक्षणञ्च संक्षेपतः प्रस्तूयते।

## २. मम्मटकृतं काव्यलक्षणम्

प्राचीनकाव्यशास्त्रकृद्भिः प्रस्तुतेषु काव्यलक्षणेषु मम्मटप्रोक्तं काव्यलक्षणमौचित्यसम्भृतं सम्पूर्णगुणशालि केन्द्रभूतमिव संलक्ष्यते। तदेतदेव लक्षणं केन्द्रीकृत्याऽत्राऽन्येषामाचार्याणां मन्तव्यानां तुलनात्मकं विवेचनं समुचितमुपयोगि च परिकल्प्य विश्लेणमेतद्विधीयते। मम्मटस्य काव्यलक्षणं वर्तते -

**तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि। काव्यप्रकाश १.४**
**दोषरहितौ गुणविभूषितौ, क्वाऽप्यलङ्काररहितावपि शब्दार्थौ काव्यं भवतः।**

शब्दार्थयुगलनिर्मितं काव्यशरीरमिति मम्मटेन प्रतिपादितम्। शब्दार्थाविमौ न सामान्यौ लोकप्रसिद्धौ, परं विशिष्टावेव। तौ दोषरहितौ गुणविशिष्टौ च भाव्यौ। काव्यशरीरभूतौ शब्दार्थावितौ सामान्यतोऽलङ्कारैरलङ्कृतौ भवतः, परं कदाचित् क्वचिदलङ्कारेषु स्फुटरूपेणाऽप्रतीयमानेषु सत्स्वपि नाऽकाव्यत्वशङ्का कर्तव्या। अतः स्वकारिकायाः व्याख्याने मम्मटोऽलिखत् -

**क्वापीत्यनेनैतदाह, यत् सर्वत्र सालङ्कारौ, क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः।**[1]

---

१. काव्यप्रकाश (१.४) वृत्तिः

## ३. अन्येषामाचार्याणां काव्यपरिभाषा

मम्मटकृतकाव्यलक्षणपरीक्षापूर्वं केषाञ्चिदन्येषां प्रसिद्धानामाचार्याणां काव्यपरिभाषा अवलोकनीयाः।

(i) शब्दार्थौ सहितौ काव्यम्। भामह : काव्यालङ्कार १.१६

(ii) तैः शरीरं काव्यानामलङ्काराश्च दर्शिताः।
शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावलिः।। दण्डी : काव्यादर्श १.१०

(iii) काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते।
भक्त्या तु शब्दार्थवचनमात्रं गृह्यते।।
वामन : काव्यालङ्कारसूत्रवृत्ति १.१.१ (वृत्तिः)

(iv) संक्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली।
काव्यं स्फुरदलङ्कारं गुणवद्दोषवर्जितम्।। अग्निपुराण ३३७.६-७

(v) शब्दार्थौ काव्यम्। रुद्रट : काव्यालङ्कार २.१

(vi) शब्दार्थौ निर्दोषौ सगुणौ प्रायः सालङ्कारौ काव्यम्।
वाग्भट : काव्यानुशासन ५.१४

(vii) अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम्।
हेमचन्द : काव्यानुशासन पृ० १६

(viii) सहृदयहृदयाह्लादि शब्दार्थमयत्वमेव काव्यलक्षणम्।
आनन्दवर्धन : ध्वन्यालोक (१.१) वृत्तिः

(ix) निर्दोषा लक्षणवती सरीतिर्गुणभूषिता।
सालङ्कारसानेकवृत्तिर्वाक् काव्यनामभाक्।। जयदेव : चन्द्रालोक १.७

(x) गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ।
गद्यपद्योभयमयं काव्यं काव्यविदो विदुः।।
विद्यानाथ : प्रतापरुद्रयशोभूषण काव्यप्रकरणम् - १

(xi) शब्दार्थौ वपुरस्य तत्र विबुधैरात्माऽभ्यधायि ध्वनिः
विद्याधर : एकावली १.१३

(xii) शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।
कुन्तक : वक्रोक्तिजीवित १.७

(xiii) निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति।।
भोज : सरस्वतीकण्ठाभरण १.२

(xiv) अस्वादजीवातु पदसन्दर्भः काव्यम्।
चण्डीदासकृतकाव्यप्रकाशप्रदीपिकाटीका पृ० १३

(xv) काव्यं रसादिमद् वाक्यं श्रुतं सुखविशेषकृत्।
शौद्धोदनि : अलङ्कारशेखर पृ० २

(xvi) वाक्यं रसात्मकं काव्यम्
विश्वनाथ : साहित्यदर्पण १.३

(xvii) जायते परमानन्दो ब्रह्मास्वादसहोदरः।
यस्य श्रवणमात्रेण तद् वाक्यं काव्यमुच्यते।
विश्वनाथ : साहित्यसुधाबिन्दुः १.४

(xviii) रमणीयार्थप्रतिपादकः शब्दः काव्यम्।
जगन्नाथ : रसगङ्गाधर- प्रथमाननम् पृ०२

एवं काव्यशास्त्रकारैः कृतानि काव्यलक्षणानि त्रिषु वर्गेषु विभज्यन्ते -

(i) केषाञ्चिदाचार्याणां मन्तव्यमिदं यद् विशिष्टशब्दार्थयुगलं काव्यम्। यथा भामहवामन-मम्मटादयो वर्तन्ते। विशिष्टशब्दार्थयुगलपदस्याऽभिप्रायो वतति - शब्दार्थौ दोषरहितौ गुणविभूषितौ सालङ्कारौ च स्तः।

(ii) अपरे मनीषिणो विशिष्टार्थसम्पन्नं शब्दमेव काव्यमाहुः। पण्डितराजजगन्नाथा-दिभिराचार्यैरिदमेव मन्तव्यमभिव्यञ्जितम्।

(iii) अन्ये काव्यशास्त्रविदः काव्यपरिभाषायां शब्दार्थपदमुपेक्ष्य रससम्भृतमाह्लादकारि वाक्यं काव्यं जगदुः। यथा भोजराजजयदेवविश्वनाथादीनामाचार्याणामभिमतं विद्यते।

## ४. मम्मटकृतकाव्यलक्षणपरीक्षणम्

मम्मटाचार्यकृतकाव्यलक्षणस्य प्रतिपदं परीक्षणेन प्रायशः सर्वेषामाचार्याणां काव्यलक्षणा-भिमतानां विश्लेषणं सम्भवति। अथ च काव्यस्य स्वरूपमपि विज्ञायते। अतस्तस्य लक्षणस्य परीक्षाऽत्र विधीयते -

(i) **शब्दार्थौ** -

मम्मटाचार्येण प्रोक्तम् - शब्दार्थयुगलमेव काव्यं भवति। शब्दो वाऽर्थो वा पृथग्भूतो न काव्यम्। भामहवामनरुद्रटहेमचन्द्रवाग्भटकुन्तकादिभिराचार्यैः शब्दार्थयुगलमेव काव्यत्वेना-ऽभिहितम्।

परं केचनाऽऽचार्याः न शब्दार्थयुगलं काव्यं समामेनिरे। ते शब्दमेव केवलं काव्यममन्वत। अग्निपुराणकारदण्डिजगन्नाथादिभिरिदमेव मतं समर्थितम्। ते प्रोचुः -

काव्यत्वं न तु शब्दार्थयुगले सन्निहितं नाऽपि च द्वयोरपि पृथग्भूतयोः। तत्तु शब्द एव सन्निहितम्। शब्दार्थयुगले काव्यत्वाभावे पण्डितराजजगन्नाथेन निम्नप्रमाणानि प्रस्तुतानि -

(क) शब्दार्थयुगलमेव काव्यमित्यत्र न लक्ष्यते किमपि प्रमाणम्। काव्यमुच्चैः पठ्यते, काव्यादर्थबोधो जायते, काव्यं श्रुतं, परं नाऽर्थबोधो जात इति व्यवहाराः लोके प्रसिद्धाः। अतः काव्यत्वं शब्द एव सन्निहितम्।[१] सर्वेषु व्यवहारेषु काव्यतत्त्वं शब्दरूपेणैव गृह्यते।

(ख) शब्दार्थयुगले काव्यपदप्रवृत्तिनिवृत्तिनिमित्तरूपेण स्वीकृते पक्षद्वयं सम्भवति - काव्यत्वं तत्र व्यासज्यवृत्त्या (सम्मिलितरूपेण) भवति प्रत्येकवृत्त्या वा। व्यासज्यवृत्त्या शब्दार्थयुगले काव्यत्वं न सम्भवति। यत एकश्च एकश्च द्वौ भवतः। द्वावेककौ सम्मिलितौ द्वौ भवतः। द्वयोरवयवरूप एको न द्वौ। एवं श्लोकवाक्यं न काव्यं वर्तते। वाक्यं तु काव्यस्याऽवयवमात्रमेव। परन्तु व्यवहारतो वाक्यमेव काव्यमित्युच्यते। शब्देऽर्थे च पृथक्पृथग्रूपेण काव्यं सन्निहितमित्यप्यभिधातुं न शक्यते, एकस्मिन्नेव पदे काव्यद्वयव्यवहारापत्तेः। अतः वेदादि-शास्त्राणां शब्दनिष्ठत्ववत् काव्यानामपि शब्दनिष्ठत्वं सिद्धम्।[२]

शब्दार्थयुगले काव्यव्यवहारं खण्डयन् शब्द एव काव्यत्वं पण्डितराजः प्रत्यापादयत्। परन्तु तस्याऽयं शब्दो न सामान्यः, अपितु रमणीयार्थप्रतिपादकः।[३] "पण्डितराजस्य युक्तीनां खण्डनं स्वयमेव तस्य टीकाकारेण नागेशभट्टमहोदयेन कृतम्। नागेशेन प्रोक्तम्[४] -

---

१. यत्तु प्राञ्चः (काव्यप्रकाशकारादयः) शब्दार्थौ काव्यमित्याहुः तत्र विचार्यते। शब्दार्थयुगलं न काव्यशब्दवाच्यम्। मानाभावात्। काव्यमुच्चैः पठ्यते, काव्यादर्थो न गम्यते, काव्यं श्रुतमर्थो न ज्ञात, इत्यादिविश्वजनीनव्यवहारतः। प्रत्युत शब्दविशेषस्यैव काव्यपदार्थत्वप्रतिपत्तेश्च।
रसगङ्गाधर - प्रथम आनन।

२. अपि च काव्यपदप्रवृत्तिनिमितं शब्दार्थयोर्व्यासक्तं प्रत्येकपर्याप्तं वा ? नाऽऽद्यः एको न द्वाविति व्यवहारस्येव श्लोकवाक्यं न काव्यमिति व्यवहारस्याऽऽपत्तेः। तस्माद् वेदशास्त्रपुराणलक्षणस्येव काव्यलक्षणस्याऽपि शब्दनिष्ठतैवोचिता। रसगङ्गाधर - प्रथम आनन।

३. रमणीयार्थप्रतिपादकः शब्दः काव्यम्। रसगङ्गाधर - प्रथम आनन

४. आस्वादव्यञ्जकत्वस्योभयस्याऽत्राऽप्यविरोधात् चमत्कारिबोधजनकज्ञानविषयतावच्छेदक-धर्मस्वरूपस्याऽनुपहसनीयकाव्यलक्षणस्य प्रकाशाद्युक्तलक्ष्यतावच्छेदकस्य उभयवृत्तित्वाच्च काव्यं पठितं श्रुतं, काव्यं बुद्धमित्युभयविधव्यवहारदर्शनाच्च काव्यपदप्रवृत्तिनिमित्तं व्यासज्यवृत्ति। अत एव वेदत्वादेरुभयवृत्तिप्रतिपादकः "तदधीते तद्वेद" (अष्टाध्यायी ५.२.२९) इति सूत्रस्थो भगवान् पतञ्जलिः "एको न द्वौ" इति वत् न तदापत्तिः। तेनाऽनुपहसनीयत्वकाव्यलक्षणं प्रकाशोक्तं निर्बाधम्।
जगन्नाथस्य उचितापदे नागेशस्य टीका।

काव्यप्रयोजनं तु रसास्वादाभिव्यञ्जनमेव। काव्यत्वं शब्देऽर्थे च समानरूपेण सन्निहितं भवति। अतः काव्यत्वं शब्दार्थोभयनिष्ठमेवाऽवगन्तव्यम्। न केवलं शब्दनिष्ठम्। हेतुनाऽनेन काव्यप्रकाशकर्तुः काव्यलक्षणं सर्वथा समुचितम्। नागेशभट्टमहोदयेन पण्डितराजस्य युक्तीनां खण्डनमेवं विहितम् -

(क) काव्यं पठितं वा श्रुतं वेति लोकव्यवहारो यदि लक्ष्यते, काव्यमधिगतमित्यपि लोकव्यवहारोऽवलोक्यते। अतः काव्यपदस्योभयविधव्यवहारात् काव्यत्वमुभयनिष्ठमेव भवति।

(ख) वेदादिशास्त्राणि शब्दनिष्ठान्येव भवन्तीति कथनं न तथ्यसंयुतम्। "तदधीते तद्वेद" (५.२.२९) इति पाणिनीयसूत्रस्य व्याख्यां कुर्वन् महाभाष्यकारः पतञ्जलिर्वेदादिशास्त्राण्युभयनिष्ठानि प्रत्यापादयत्।[1] कस्यचिद्विषयस्याऽध्ययने तदर्थाववोधने चेदं सूत्रं प्रत्ययविधानं करोति। वेदत्वे शब्दार्थोभयनिष्ठत्वे सम्मते सति सूत्रभाष्यस्य सङ्गतिर्भवति। यद्यपि काव्यत्वं मुख्यरूपेण व्यासज्यवृत्ति, तथापि लक्षणया शब्दमात्रे वा अर्थमात्रे वाऽपि काव्यत्वं सम्भवति। अतः "एको न द्वौ" इतिवत् "श्लोकवाक्यं न काव्य" मिति व्यवहारस्याऽवसरो न समुपस्थितो भविष्यति।

वस्तुत आस्वादव्यञ्जकत्वं चमत्कारो वा शब्दे चार्थे च समानरूपेण वसति। काव्यरचनामपि कविः प्रयोजनायाऽस्मै कुरुते। अतः शब्दार्थयुगलमेव काव्यत्वमवगन्तव्यम्। काव्यत्वं न केवलं शब्द एव सीमितं करणीयम्। पण्डितराजः स्वयमेव सर्वेषु शब्देषु काव्यत्वं नाऽमनुत। तस्मिन्नेव शब्देऽसौ काव्यत्वमङ्गीचकार, यो रमणीयार्थप्रतिपादको भवति। इत्थमसौ शब्देन सह अर्थेऽपि काव्यत्वं प्रतिपादयति।

**(ii) अदोषौ -**

काव्यलक्षणं प्रतिपादयता मम्मटेन "शब्दार्थौ" इति पदस्य त्रीणि विशेषणानि प्रस्तुतानि - अदौषौ, सगुणौ, अनलङ्कृती पुनः क्वापि चेति। विश्वनाथस्त्रीण्यपि पदानि सुकठोरं समीक्षाञ्चक्रे। तेन प्रोक्तम् -

मम्मटस्य त्रीण्येतानि विशेषणानि काव्यलक्षणेऽनावश्यकान्यनपेक्षितानि सदोषाणि च वर्तन्ते।

"अदोषौ" इति विशेषणमुपलक्ष्य विश्वनाथेन प्रोक्तम् -

अदोषाविति पदस्याऽभिप्रायो द्विविधः सम्भवति - (१) सर्वथा दोषरहितौ शब्दार्थौ काव्यं भवतः, अथवा (२) ईषद्दोषरहितौ शब्दार्थौ काव्यं भवतः।

---

१. तदधीते तद्वेद। किमर्थमुभावपि अर्थौ निर्देश्येते ? न योऽधीते वेत्त्यप्यसौ। यस्तु वेत्ति अधीतेऽप्यसौ। नैतयोरावश्यकः समावेशः। भवति हि कश्चित् संपाठं पठति न वेत्ति तथा, यथा कश्चिद् वेत्ति न च संपाठं पठति। पाणिनीय (४.२.२९) सूत्रे पातञ्जलभाष्यम्

प्रथमपक्षे "सर्वथा दोषरहितौ" इत्यभिप्रायमङ्गीकृत्य विचारो न समुचितः, सर्वथा दोषरहितस्य काव्यस्याऽभावात्। सर्वथा दोषरहितं काव्यं नोपलभ्यते। यदि चोपलभ्येत एव, न तदन्वेषणं सुकरम्। ध्वनिकारेण निम्नश्लोको ध्वनिकाव्यस्योदाहरणरूपेण प्रस्तुतः -

**न्यक्कारो ह्ययमेव मे यदरयस्तत्राऽप्यसौ तापसः**
**सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।**
**धिक्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा**
**स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः।।**

श्लोकेऽस्मिन् मम्मटेन विधेयाविमर्शदोषः प्रदर्शितः। मम्मटस्य काव्यलक्षणे **"अदोषा"** विति विशेषणस्य **"सर्वथादोषरहिता"** वित्यभिप्राये सति ध्वनिकारेण प्रोक्तेऽस्मिन्नुदाहरणे विधेयाविमर्शदोषत्वादत्र काव्यत्वमेव न भविता, ध्वनिकाव्यत्वस्य तु सम्भावनमेव किम्। यद्यत्र समाधानं क्रियते - श्लोकस्य दोषयुतेंऽशेऽकाव्यत्वं दोषरहिते चांशे ध्वनिकाव्यत्वं वर्तते, तदपि नोचितं भविता। यतोऽस्मिन् विवादेऽत्र काव्यत्वं वा अकाव्यत्वं वा किमपि नाऽवशेक्ष्यति।

यदि "अदोषौ" पदे "नञ्" अव्ययस्यार्थ ईषदिति गृह्यते, स्वल्पदोषयुतोक्तिश्च काव्यमिति प्रोच्यते, अयमर्थोऽपि न समुचितः। अर्थेऽस्मिन्नङ्गीकरणे भयानका स्थितिरुत्पद्यते, अथ च सर्वथादोषरहितोक्तिरपि न काव्यपदव्यवहारं प्राप्स्यति।

अत्रेदमप्यवधेयम् - पदार्थस्य स्वरूपनिर्देशने दोषाभावकथनमनुचितं भवति। कीटैर्विद्धस्याऽपि रत्नस्य रत्नत्वं नैव नश्यति।[1] अतो मम्मटाचार्यस्य काव्यलक्षणे "अदोषा" विति पदस्य प्रयोगोऽनुचित एव सर्वथा।

परन्तु विश्वनाथस्याऽऽक्षेपा अत्र न समुचिताः। तेषां समाधानं करणीयमेव। अत्र विश्वनाथेन काव्यगतदोषस्वरूपमनवगच्छता आक्षेपोऽयं समुपस्थापितः।

काव्यगतदोषाः द्विविधाः भवन्ति - नित्या अनित्याश्च। नित्याः दोषाः सर्वेषु स्थानेषु सर्वासु च परिस्थितिषु दोषाः वर्तन्ते। यथा च्युतसंस्कृतिदोषः (व्याकरणहीनत्वदोषः) सर्वत्र दोषो भवति। अपरे दोषा अनित्याः। ते सर्वत्र न भवन्ति दोषाः। कुत्रचित्ते दोषाः कुत्रचिच्च न दोषाः। यथा श्रुतिकटुत्वादयः दोषाः वर्तन्ते।

श्रुतिकटुत्वदोषः शृङ्गारादिषु कोमलरसाभिव्यञ्जनप्रसङ्गेषु दोषः, परं रौद्रदिकठोर-रसाभिव्यक्तिप्रसङ्गेषु न दोषः। तत्राऽसौ गुण एव। एतादृशेषु प्रसङ्गेषु श्रुतिकटुत्वं न रसानुभूतिबाधकमपितु साधकमेव वर्तते। काव्यलक्षणे "अदोषा" विति पदे मम्मटाचार्य-स्याऽभिप्रायोऽयमेव, यत्काव्यं च्युतसंस्कृत्यादिनित्यदोषरहितं भवनीयम्।

---

१. कीटानुविद्धरत्नादिसाधारण्येन काव्यता।
दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः।। साहित्यदर्पण (१.३) वृत्तिः

मम्मटकृतं दोषलक्षणं वर्तते -

**मुख्यार्थहतिर्दोषो रसश्च मुख्यः।**[1]

अभिप्रायोऽयम् - रसापकर्षकाणि तत्त्वानि दोषा इत्युच्यन्ते। विश्वनाथः स्वयमपि रसापकर्षकतत्त्वान्येव दोषान् गणयति।[2]

मम्मटाचार्यस्य काव्यलक्षणे "अदोषा" विति पदस्य योजनस्योद्देश्योऽवर्तत, यत्तत्र रसानुभूतिबाधकतत्त्वानामभावो भवेत्। यदि च काव्ये केचनाऽन्ये सामान्यदोषाः सन्ति, न च ते रसानुभूतिं व्याघ्नन्ति, सत्स्वपि तेषु दोषेषु काव्ये काव्यत्वं भवत्येव। न तत्राऽकाव्यत्वस्य शङ्का करणीया। सर्वथा गुणसम्पन्नं रसनिष्ठं वाक्यं साधारणदोषयुतमपि नाऽकाव्यं भवति। तेन दोषेण तु तदधिकमेव श्लाघनीयं प्रतिभाति। यथा कालिदासेनोक्तम् -

**मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।**[3]

पण्डितराजो जगन्नाथोऽपि मम्मटकृतकाव्यलक्षणे "अदोषा" विति पदस्योपस्थितिं खण्डिताञ्चकार। तेन प्रोक्तम् -

"दुष्टं काव्यम्" इति वाक्यस्योच्चारणे तत्र काव्यपदप्रयोगो भवत्येव। अतो मम्मटाचार्यस्येदं विशेषणं न समुचितम्।

जगन्नाथस्याऽस्याऽऽक्षेपस्य समाधानमपि ह्युपरि प्रोक्तेन विवेचनेन सञ्जायते।

एवं मम्मटस्य काव्यलक्षणे "अदोषा" विति विशेषणपदप्रयोगौचित्यं सर्वथा सिद्धम्।

**(iii) सगुणौ -**

मम्मटाचार्यः काव्यलक्षणे "सगुणा" विति विशेषणपदमपि प्रायूयुजत्। काव्ये माधुर्यौजःप्रसादा इति त्रयो गुणाः भवन्ति। एभिस्त्रिभिर्गुणैर्युतं शब्दार्थयुगलं काव्यं भवति।

उत्तरवर्तिनो विश्वनाथजगन्नाथादयः काव्यशास्त्रकृतो मम्मटप्रोक्तकाव्यलक्षणे "सगुणा" विति विशेषणपदप्रयोगमनुपयोगि ह्यनुचितञ्च वदन्ति। विश्वनाथेन प्रोक्तम् -

काव्यलक्षणे "सगुणा" विति विशेषणपदप्रयोगः सर्वथाऽनौचित्यं वहति। मम्मटेन स्वयमेव गुणाः रसधर्माः प्रोक्ताः। अतस्तेषां शब्दार्थधर्मप्रतिपादनं कथं समुचितम् ?

यद्यत्रेदमुच्यते -

रसाभिव्यञ्जकत्वादत्रोपचारेण गुणपदप्रयोगो वर्तते, तथापि न योग्यमिदं समाधानम्। अत्र द्वे अवस्थे सम्भाव्येते -

---

१. काव्यप्रकाश ७.४९

२. रसापकर्षकाः दोषाः। साहित्यदर्पण ७.१

३. अभिज्ञानशाकुन्तलम् १.१७

(क) काव्यशरीरनिर्मितिकारकयोः शब्दार्थयोः रसोऽवतिष्ठते न वाऽवतिष्ठते। रसेऽविद्यमाने तथा गुणस्थितिर्न सम्भवा, यतः गुणानां रसैः सहाऽविनाभावसम्बन्धो भवति। रसे वर्तमाने "सगुणा" विति विशेषणपदमप्रयुज्य "सरसा" विति पदं प्रयोजनीयम्।

(ख) काव्यलक्षणे "सरसौ शब्दार्थौ" विति पदयोरभिप्रायोऽयं वर्तति, यद् गुणाभिव्यञ्जकौ शब्दार्थविव काव्योत्कर्षकारकौ भवतः।

वस्तुतो गुणालङ्काराः काव्योत्कर्षाधायका एव भवन्ति, न च काव्यस्वरूपं निर्धारयन्ति। अथ चाऽत्र मम्मटेन काव्यस्वरूपमेव व्याख्यातं, न तु समुत्कर्षम्। अतः काव्यलक्षणे "सगुणा" विति प्रयोगो न समुचितः।

पण्डितराजोऽपि मम्मटकृतकाव्यलक्षणे 'सगुणा" विति विशेषणपदप्रयोगस्य खण्डनञ्चकार। तेन प्रोक्तम् -

अनेकासूक्तिषु गुणरहितास्वपि काव्यत्वमनुभूयते। यथा - "उदितं मण्डलं विधोः" इति वाक्ये गुणेष्वविद्यमानेषु सत्स्वपि काव्यत्वमस्त्येव। अतः काव्यलक्षणे "सगुणा" विति विशेषणपदस्य प्रयोगो न समुचितः।

वस्तुतः काव्यशास्त्रकृद्भिरेतैर्गुणस्वरूपं सम्यगजानद्भिरेव मम्मटकृतकाव्यलक्षणमिदं समीक्षितम्। अत्र "सगुणा" विति विशेषणपदेन काव्ये रसवत्ता स्वयमेव व्याक्रियते। मम्मटकृतं गुणस्वरूपमस्ति -

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।**

**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः।। काव्यप्रकाश ८.६६**

यथा शौर्यादयो गुणाः शरीरे वर्तमानस्याऽङ्गिरूपस्याऽऽत्मनो नित्यगुणाः वर्तन्ते, तथैव काव्येऽङ्गिनो रसस्य माधुर्यादयो नित्यगुणाः भवन्ति। ते रसं नियतमुपकुर्वन्ति। यत्राऽस्ति रसस्तत्र नियतमवतिष्ठन्ते।

एवंस्थिते गुणलक्षणे "सगुणा" विति पदं रसवत्तां स्वयमेव ग्राहयति।

रसं प्रति प्रवर्तमानो कविः प्रथमं तावद् गुणान् प्रति प्रवर्तते। अत्र हेतुरयमस्ति -

रसाः सुसूक्ष्मा अलक्ष्याश्च केवलमनुभूतिविषयाः। परं गुणाः स्थूलतरा लक्ष्याश्च वर्तन्ते। अतो रसाभिव्यक्तये कविः गुणान् प्रदर्शयितुमाग्रहवान् भवति।

गुणानां सम्बन्धः शब्दाभ्यां नेति कथयितुं न शक्यम्। गुणानां नित्यसम्बन्धे रसैः सह वर्तमानेऽप्युपचारेण शब्दार्थाभ्यामपि सम्बन्धोऽसौ प्रतिपाद्यते।[1] अतो मम्मटकृतकाव्यलक्षणे शब्दार्थाविति विशेष्यपदेन सह "सगुणा" विति विशेषणपदयोजनं समुचितमेव। न तत्र किमप्यनौचित्यं दोषोद्घाटनं वा कल्पनीयम्।

---

१. गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता। काव्यप्रकाश ८.७१

**(iv) अनलङ्कृती पुनः क्वापि -**

काव्येष्वलङ्कारसंयोजने मम्मटाचार्यस्याऽभिमतं विद्यते -

काव्ये शब्दार्थौ प्रायः सालङ्कारौ भवतः। परं यदि कुत्रचित् स्फुटरूपेणाऽलङ्काराः न प्रतीयन्ते, परं रसस्थितिर्विद्यते, तत्र काव्यत्वं नाऽस्तीति न।[1] तत्र काव्यत्वमवश्यमेवाऽवगन्तव्यम्। काव्यलक्षणं व्याख्यातुं मम्मटोक्ते ह्युदाहरणे कस्मिंश्चिदलङ्कारेऽविद्यमानेऽपि विप्रलम्भशृङ्गार-रसाभिव्यक्तिहेतोः काव्यत्वं वर्तत एव -

**यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा -**
**स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।**
**सा चैवाऽस्मि तथापि तत्र सुरतव्यापारलीलाविधौ**
**रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते।। काव्यप्रकाश (१.४) वृत्तौ**

ध्वनिवादिनाऽऽचार्येण मम्मटेन काव्येऽलङ्काराः न तथा महत्त्वशालिनो गणिताः, यथाऽलङ्कारवादिभिराचार्यैस्ते गण्यन्ते। अलङ्कारवादिभिराचार्यैरलङ्कारविहीनं काव्यं विधवा सरस्वतीवोपमितम्। यथा सुन्दरनपि कामिनीमुखमलङ्कारविहीनं न शोभते, तथैवाऽलङ्कारविहीनं काव्यमपि सहृदयानां न मनांस्यावर्जयति।[2]

ध्वनिवादिभिराचार्यैः प्रोक्तम् -

काव्यशोभाकरा अप्यलङ्काराः काव्येषु बहिरङ्गभूता एव। मम्मटाचार्योऽलङ्कारलक्षणं जगाद -

यानि तत्त्वानि काव्ये साक्षाद् रसोपकारकानि न वर्तन्ते, शब्दार्थद्वारेणैव यानि कदाचिद् रसमुपकुर्वन्ति, रसे विद्यमानेऽपि भवेयुर्न वा भवेयुः, अविद्यमानेऽपि रसे भवेयुस्तेऽनुप्रासोपमादयोऽलङ्काराः।[3]

विश्वनाथप्रोक्ताऽलङ्कारपरिभाषाऽपि तथाविधा वर्तते[4] -

ध्वनिवादिन आचार्याः काव्येऽलङ्काराणां स्थितिं रसापेक्षया हीनां जगदुः। आनन्द-वर्धनस्येदमेव मतमविद्यत। अथ मम्मटेनाऽपि प्रोक्तम् -

---

१. क्वाऽपीत्यनेनैतदाह यत् सर्वत्र सालङ्कारौ, क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः। काव्यप्रकाश (१.४) वृत्तिः

२. न कान्तमपि निर्भूषं विभाति वनितामुखम्। भामह : काव्यालङ्कार १.१३

३. उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः।। काव्यप्रकाश ८.६७

४. शब्दार्थयोरस्थिराः ये धर्माश्शोभातिशायिनः।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्।। साहित्यदर्पण १०.१

काव्येष्वलङ्कारास्तु भवन्त्येव, परन्तु सदा स्फुटरूपेण तेषामायोजनं भवेदिति नाऽनिवार्यम्।

एवं मम्मटाचार्योऽलङ्कारान् काव्यस्याऽनिवार्यतत्त्वं तु स्वीचकार, परं रसापेक्षयैव तेषां स्थितिं समर्थयामास। तांस्तथा महनीयान्न मेने यथाऽलङ्कारवादिन आचार्या अचकथन्।

काव्यलक्षणे मम्मटाचार्यस्याऽनलङ्कृतीपदविशेषणमवलोक्य काव्येऽलङ्काराणामनिवार्यत्वस्य प्रतिपादका अलङ्कारवादिनो ह्याचार्या अतितरामप्रसन्नाः बभूवुः। चन्द्रालोककारो जयेदवस्तु नितरामप्रसन्नो जगाद -

अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।
असौ न मन्यतेकस्मादनुष्णमनलङ्कृती।। चन्द्रालोक १.८

परन्तु मम्मटाचार्यं प्रति जयदेवस्याऽयमाक्षेपो नोचितः, अथ चाऽमान्यो वर्तते। मम्मटाचार्येण कदापि नोक्तं यत्काव्यमलङ्काररहितं भवति। "सर्वत्र सालङ्कारा" विति कथयित्वा तेन काव्येऽलङ्काराणामनिवार्यत्वं प्रतिपादितम्। तथापि तेनेदमपि प्रोक्तम् - सरसं काव्यमस्फुटालङ्काररहितमपि काव्यगुणयुतं भवति। मम्मटाचार्यस्येदं मतं समीक्ष्य वामनाचार्यझलकीकरमहोदयेन काव्यसम्बन्धे निम्नलिखिताः स्थितयो वर्णिताः -

(१) सरसं स्फुटारलङ्कारसहितम्
(२) सरसमस्फुटालङ्कारसहितम्
(३) सरसमलङ्काररहितम्
(४) नीरसं स्फुटालङ्कारसहितम्
(५) नीरसमस्फुटालङ्कारसहितम्
(६) नीरसमलङ्काररहितम्

वामनाचार्यमहोदयस्य कथनं वर्तते, यन्मम्मटमते, प्रथमासु चतसृषु परिस्थितिष्वेव काव्यत्वं सन्निहितं भवति।

विश्वनाथेनाऽपि अनलङ्कृती पदस्याऽऽलोचना विहिता। तेन प्रोक्तम् -

यत्तु मम्मटाचार्यो काव्यं सर्वत्र सालङ्कारं जगाद, कुत्रचिच्चाऽनलङ्कृतं कथयामास, तन्नोचितम्। काव्यविशेषणरूपेण ह्यलङ्कृतानलङ्कृतपदप्रयोग एव नोपयोगितां वहति। यतोऽलङ्कारैर्न काव्यस्वरूपं निर्धार्यते, अपितु काव्योत्कर्ष एवाऽऽधीयते।

मम्मटचार्यो "यः कौमारहरः स एव हि वर" इति पद्यमस्फुटालङ्कारोदाहरणं प्रास्तौत्। परन्त्वत्राऽनुप्रासालङ्कारः स्फुट एव। यद्यत्र पूर्वपक्षिणः कथयेयुः -

अनुप्रासालङ्कारोऽत्र विप्रलम्भशृङ्गारस्याऽतिकोमलरसस्य नाऽभिव्यञ्जको न चोपकारको भवति, अथ न चाऽस्याऽलङ्कारत्वं काव्यानुगुणं, तथाऽप्यत्र विभावनाविशेषोक्त्योरलङ्कारयोः सौन्दर्यमस्त्येव।

कारणानामभावेऽपि समुत्कण्ठारूपकार्यस्योत्पत्तित्वादत्र विभावनालङ्कारः। उत्कण्ठारूप-कारणे सत्यपि चाऽनुत्कण्ठारूपकार्यस्य विद्यमानत्वादत्र विशेषोक्त्यलङ्कारः।

द्वयोरर्थालङ्कारयोरनयोः साधकबाधकप्रमाणाभावाच्चैकस्याऽलङ्कारस्याऽनिश्चयादत्र सन्देहसङ्करोऽपि वर्तते।

एवं काव्यप्रकाशकारेण प्रस्तुतमिदमुदाहरणमत्राऽस्फुटालङ्कारप्रतीतेरुदाहरणं न वक्तुं शक्यते। सुकुमारविप्रलम्भशृङ्गाररसस्याभिव्यञ्जकत्वादिदं पद्यं रससम्भृतकाव्यस्योदाहरणं विद्यते। रसोऽयं केनचिदप्यलङ्कारेण नोपकृतित्वमपेक्षते।

विश्वनाथस्यैताः युक्तयो न कमपि समीक्षकं प्रभावयन्ति। रससम्भृतेऽप्यस्मिन् काव्येऽलङ्काराणां संयोजनमस्फुटमेव वर्तते। विश्वनाथस्य कथनमिदं - यदत्र विभावनाविशेषोक्त्योः स्फुटरूपेण प्रतीतिः, तयोश्च द्वयोः साधकबाधकप्रमाणाभावाच्च सन्देहसङ्करस्याऽलङ्कारस्य चोपस्थितिर्विद्यते, स्वयमेव विरोधसङ्कुलमस्ति। यद्यत्र विभावनाविशेषोक्त्यलङ्कारौ स्फुटरूपेण प्रत्यैष्यतां, सन्देहसङ्करस्योपस्थितिरेव कथमभविष्यत्? अत्र पूर्वपक्षिभिरलङ्कारा एते न भावरूपेण, अपित्वभावरूपेणैव हठात् प्रदर्श्यन्ते। न च ते स्फुटाः। बलादेव ते प्रतिपाद्यमानाः सन्ति। यथाऽत्र विभावनाविशेषोक्त्यलङ्कारयोरुद्भावना कैश्चिदलङ्कारविद्भिः कृता, तथैव दीपकतुल्ययोगिताद्यलङ्काराणामपि गवेषणा कर्तुं शक्यते।

विवेचनेनाऽनेन स्पष्टमेव, यदस्मिन् पद्ये ये केचनाऽलङ्काराः प्रदर्श्यन्ते, सर्वे तेऽस्फुटाः सन्ति। अतो मम्मटस्य कथनमिदं सर्वथा समुचितम् - स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः। काव्यत्वं तत्र सम्भवति।

पण्डितराजो जगन्नाथोऽपि मम्मटस्य काव्यलक्षणे सालङ्कारत्वप्रतिपादनं व्यरुणत्। तेन प्रोक्तम् -

शरीरस्य कुण्डलादय इव काव्यशरीरस्याऽलङ्काराः शोभाधायकाः सन्ति। अतो यथा कुण्डलादयो न शरीरस्वरूपस्याऽऽधायकास्तथैव काव्यगता अपि अलङ्काराः न काव्यस्वरूपस्या-ऽऽधायकाः भवन्ति। आभूषणविहीना नारी, नारीत्वगुणविशिष्टा न, इति कः कथयितुमुत्सहते? अतोऽलङ्कारविहीने काव्ये न काव्यत्वमित्यपि कथनमनुचितमेव।

मम्मटाचार्यः शब्दार्थौ काव्यशरीरमाह। किन्तु शब्दार्थयोश्चमत्कृत्यभावे तत्र काव्यत्वस्थितिर्न भवति। रूपरसविहीना नारी सत्यपि नारीत्वे, यथा न कस्याऽपि सहृदयस्याऽऽह्लादने समर्था, तथैव रसालङ्कारविहीनं काव्यं न कस्याऽपि सहृदयस्याऽऽह्लादने समर्थम्। काव्यशरीरौ शब्दार्थावुपकृत्याऽलङ्काराः रसमप्युपकुर्वन्त्येव। अत एव मम्मटाचार्यः काव्यलक्षणे शब्दार्थयोः सालङ्कारत्वमपैक्षत।

**(v) तत् शब्दार्थौ काव्यम् -**

काव्यलक्षणं प्रस्तुवन् मम्मटाचार्यस्तदिति पदं "शब्दार्थौ" विति पदस्य विशेषणं प्रत्यौक्षीत्। अत्र सामान्यतो व्याकरणहीनतादोषः प्रतीयते। "शब्दार्थौ" वित्यत्र द्विवचनं, "तद्" इत्यत्र चैकवचनं वर्तते। वाक्यरचनायां विशेषणविशेष्यौ समानाधिकरणौ समानविभक्तिवचनौ भवितव्यौ।

"शब्दार्थौ" वित्यत्र द्विवचनप्रयोगे सत्यपि "तद्" इत्यत्र पदे मम्मटस्यैकवचनप्रयोगः साभिप्रायः। अत्र व्याकरणलक्षणहीनत्वं वाक्यरचनादोषो वा न कल्पनीयः। अत्र मम्मटस्याऽयमभिप्रायः -

शब्दार्थौ सहितावेवैकरूपावेव काव्यशरीरं भवतः। न तु शब्दो न चाऽर्थ एकाकी सन् काव्यं भवति। किन्तु सहितावेव साहित्यवृत्तिना वा तौ काव्यस्वरूपं निर्धारयतः। काव्ये तौ ह्येकवृत्तिगतावेव। अत एव मम्मटाचार्येण काव्यलक्षणे तदित्यत्र एकवचनप्रयोगो विहितः। अस्मादेव कारणात् काव्यं साहित्यमित्यप्यभिधीयते। अत्र साहित्यपदस्याऽर्थोऽप्यवगन्तव्यः।

## ५. साहित्यम्

साहित्यपदस्य रचना शब्दार्थयोर्व्यासज्यभावेन सञ्जाता। शब्दश्चाऽर्थश्च सहितावेव काव्यपदं निर्धारयतः। साहित्यपदस्य निर्वचनं विद्यते

**सहितयोः शब्दार्थयोर्भावः साहित्यम्।**

भामहकुन्तकवाग्भटाद्याचार्यैः काव्यलक्षणे साहित्यपदस्य प्रयोगो विहितः। परं मम्मटाचार्येणाऽयं भावः "शब्दार्थौ" विति विशेष्यपदस्य "तद्" इति विशेषणपदे ह्येकवनं प्रयुज्याऽभिव्यक्ततां नीतः। मम्मटाचार्यस्य भावमिमं प्रायशः सर्वे काव्यशास्त्राचार्याः समर्थयामासुः। शब्दार्थयोर्व्यासज्यवृत्तित्वादियं लेखनविधा साहित्यविधेत्युच्यते।

राजशेखरेण प्रोक्तम् -

लोकस्य व्यवहारनिमित्ताः विद्याश्चतस्रो वर्तन्ते - आन्वीक्षिकी, त्रयी, वार्ता, दण्डनीतिश्चेति। तत्रेयं साहित्यविधा लोकव्यवहारनिमित्तानां चतसृणामपि विद्यानां सारभूता वर्तते।

राजशेखरेण साहित्यविधेति पदस्य निर्वचनं निम्नप्रकारेण कृतम् -

**"शब्दार्थयोर्यथावत् सहभावेन विधा साहित्यविधा"**

उपर्युक्तविवेचनस्य सारांशोऽयमेव वर्तते, यच्छब्दार्थौ परस्परसहितावेव व्यासज्यवृत्तिना साहित्यरचनायाः हेतुरूपेण तिष्ठतः। तौ व्यासज्यवृत्तिना काव्यशरीरं निर्मिमाते।

चतुर्थोऽध्याय:

# काव्यभेदा:

## १. प्रारम्भिककथनम्

काव्यलक्षणं निरूपयद्भि: काव्यशास्त्रकृद्भि: काव्यभेदा अपि प्रदर्शिता: । अथ च तेषां वर्गीकरणमपि कृतम् । वर्गीकरणस्याऽस्य द्वावाधारौ विद्येते -

(१) काव्यस्य बाह्यरूप (विधाम्) मधिकृत्य

(२) काव्यस्यार्थमधिकृत्य

तच्च वर्गीकरणमत्र संक्षेपेण प्रस्तूयते -

## २. विधामधिकृत्य काव्यभेदानां वर्गीकरणम्

प्राचीना: काव्यशास्त्रकृत: काव्यस्वरूपविवेचनेन सह काव्यभेदानामपि वर्गीकरणञ्चक्रु: । भरतेन नाट्यशास्त्रे मुख्यतो दृश्यकाव्यानां वर्गीकरणं विहितम् । तदनन्तरं भामहदण्डिवामन-प्रभृतिभिराचार्यै: स्वग्रन्थेषु काव्यभेदानामिदं वर्गीकरणं विस्तरेण विशदीकृतम् । तदनन्तरं विश्वनाथो कविराज: काव्यभेदान् सुविशदं व्याचख्यौ । अत्र काव्यविधामधिकृत्य वर्गीकरणे प्रधानतो विश्वनाथस्य साहित्यदर्पणग्रन्थ एवाऽऽश्रित: ।

काव्यानां मुख्यतो द्वौ भेदौ स्त: - दृश्यकाव्यानि श्रव्यकाव्यानि च ।[१] एषां पुनरनेके भेदा: विद्यन्ते ।

**(i) दृश्यकाव्यानि -**

दृश्यकाव्यान्यभिनेयानि भवन्ति, रूपकाणि चाऽभिधीयन्ते । रूपकाण्यपि द्विविधानि भवन्ति - रूपकाण्युपरूपकाणि च ।

रूपकभेदान् प्रथमं भरतोऽब्रवीत् । असौ दशविधरूपकाणामेकविधनाटिकायाश्च लक्षणानि व्याचष्ट । भरतेन दशविधरूपकाण्येवं वर्णितानि[२] -

**नाटकप्रकरणाङ्कव्यायोगभाणसमवकारवीथीप्रहसनडिमेहामृगा: ।**

१. दृश्यश्रव्यत्वभेदेन पुन: काव्यं द्विधा मतम् । साहित्यदर्पण ६.१

२. नाटकं सप्रकरणमङ्को व्यायोग एव च ।
भाण: समवकारश्च वीथी प्रहसनं डिम: ।।
ईहामृगश्च विज्ञेयो दशमो नाट्यलक्षणे ।। भरत-नाट्यशास्त्र २०.२-३

भरतानन्तरं रूपकभेदान् विस्तरेण नाट्यदर्पणकारो न्यरूपयत्। असौ द्वादशरूपकभेदान् गणयामास। अत्र नाटिकासहिता एकादशभेदा: भरतोक्ता एव सन्ति, परं द्वादशो भेद: प्रकरणीति नव उद्भावित: ।[१] रूपकाणां द्वादशभेदान् परिगणय्य नाट्यदर्पणकारेण प्रोक्तम् -

अन्यान्यपि च रूप्याणि दृश्यन्ते। तत्र तेन त्रयोविंशतिभेदा: परिगणिता:[२] -

सट्टकं, श्रीगदितं, दुर्मिलितं, प्रस्थानम्, अप्सारो, गोष्ठी, हल्लीसकं, नर्तकं, शम्या, लास्यं, छलितं, प्रेक्षणकं, रासकं, पिण्डी, शृङ्खला, मेद्यकं, नाट्यरासकं, काव्यं, शुद्धं, सङ्कीर्णकं, चित्रं, भाणकं, भाणिका च।

विश्वनाथ: साहित्यदर्पणे रूपकाणि प्रथमं द्वयोर्वर्गयोर्विबभाज रूपकाण्युरूपकाणि च। तत्र तेन रूपकाणां दश भेदा उपरूपकाणाञ्चाऽष्टादश भेदा: प्रदर्शिता: ।[३]

(ii) **श्रव्यकाव्यानि -**

श्रव्यकाव्यानां मुख्यतस्त्रयो भेदा: भवन्ति - गद्यकाव्यं, पद्यकाव्यं, गद्यपद्यकाव्यञ्च। तेषां स्वरूपाणि वर्तन्ते -

(क) **गद्यकाव्यम् -**

छन्दोबन्धनरहिता रचना गद्यमित्यभिधीयते। गद्यबन्धे रचितं काव्यं गद्यकाव्यं वर्तते। प्राचीनाचार्यै: गद्यकाव्यस्य द्वौ भेदौ प्रदर्शितौ - कथा आख्यायिका च। अग्निपुराणकारेण गद्यकाव्यस्य पञ्च भेदा: परिगणिता:। गद्यकाव्यभेदानां विस्तृतं विवेचनमम्बिकादत्तव्यासेन गद्यकाव्यमीमांसायां लिखितम्। गद्यकाव्यमसावुपन्यासविधामकथयत् तस्य च नव मुख्यभेदान् लिलेख -

कथाकथनिकाकथनाऽऽलापाऽऽख्यानाऽऽख्यायिकाखण्डकथापरिकथासङ्कीर्णानि ।[४]

(ख) **पद्यकाव्यम् -**

पद्यकाव्यानां प्राधान्येन द्वौ भेदौ भवत: - अनिबद्धकाव्यानि प्रबन्धकाव्यानि च।

---

१. नाटकं प्रकरणञ्च नाटिका प्रकरण्यथ।
व्यायोग: समवकारो भाण: प्रहसनं डिम:।।
अङ्क ईहामृगो वीथी:............।। नाट्यदर्पण १.३-४

२. नाट्यदर्पण - चतुर्थ विवेक

३. नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमा:।
ईहामृगाङ्कवीथ्य: प्रहसनमिति रूपकाणि दश।।
नाटिकात्रोटके वीथी सट्टकं नाट्यरासकम्।
प्रस्थानोल्लासकाव्यानि प्रेङ्खणं रासकं तथा।।
संल्लापकं श्रीगदितं शिल्पकञ्च विलासिका।
दुर्मल्लिका प्रकरणी हल्लीसो भाणिका चेति।
अष्टादश प्राहुरुपरूपकाणि मनीषिण:।। साहित्यदर्पण ६.३-६

४. पं० अम्बिकादत्त व्यास - एक अध्ययन पृ० ३८

**(अ) अनिबद्धकाव्यानि -**

अनिबद्धकाव्येषु कस्यचित् सुनियोजितस्य कथाबन्धस्य स्थितिर्न भवति। एतादृशेषु काव्येष्वेकस्मिन् द्वयोरधिकेषु वा श्लोकेष्वन्यैः श्लोकैः सम्बन्धं विनैव काव्यत्वं सन्निहितं भवति। एतादृशानि काव्यानि सामान्यतो मुक्तकान्यभिधीयन्ते। परन्तु एकद्वित्रिचतुः-पञ्चश्लोकादिभेदेन परस्परसम्बद्धानि काव्यानि विश्वनाथेन पञ्चसु भेदेषु विभाजितानि[१] -

(१) **मुक्तकम्** - एकस्मिन्नेव पद्ये किञ्चिदन्यं पद्यमनपेक्ष्य काव्यत्वे सन्निहिते मुक्तकं काव्यं भवति।

(२) **युग्मकम्** - द्वयोः परस्परसम्बद्धयोः पद्ययोः रचितं काव्यं युग्मकमुच्यते।

(३) **सन्दानितकम्** - त्रिषु परस्परसम्बद्धेषु गुम्फितं काव्यं सन्दानितकमभिधीयते।

(४) **कलापकम्** - चतुर्षु श्लोकेषु परस्परसम्बद्धेषु निबद्धं काव्यं कलापकं भवति।

(५) **कुलकम्** - पञ्चसु परस्परसम्बद्धेषु श्लोकेषु कृतं काव्यं कुलकमित्यभिधीयते।

**(ब) प्रबन्धकाव्यानिः -**

कस्यचित् सुनियोजितस्य कथानकस्य पद्येष्वायोजने सति प्रबन्धकाव्यं विद्यते। अस्य काव्यस्य त्रयो भेदाः सन्ति - महाकाव्यं खण्डकाव्यं कोषकाव्यञ्च -

(१) **महाकाव्यम्** - महाकाव्यस्य कथानकमतिविस्तृतं भवति। काव्यञ्चैतत् सर्गपरिच्छेदाख्यानादिषु विभज्यते। महाकाव्यस्वरूपस्य सुविस्तृता व्याख्या भामहदण्डिरुद्रट- विश्वनाथादिभिराचार्यैः कृता।

(२) **खण्डकाव्यम्** - खण्डकाव्यस्य स्वरूपं तु महाकाव्यसदृशं भवति, परमस्य कथानकं लघु स्वल्पकायञ्च निबध्यते।

(३) **कोषकाव्यम्** -

विश्वनाथेन एकोऽप्यन्यः पद्यकाव्यभेदो निरूपितः - कोषकाव्यम्। अत्रैकविषय-सम्बद्धानां परस्परमनपेक्षाणां श्लोकानां संग्रहो विधीयते। ''सूक्तिमुक्तावली'' इत्यादयो ग्रन्थाः कोषकाव्यान्येव वर्तन्ते।

**(ग) गद्यपद्यमयकाव्यम् -**

गद्यपद्यमयं काव्यं सामान्यतश्चम्पूरित्यभिधीयते।[२] विश्वनाथेन गद्यपद्यमयकाव्यस्या-ऽन्यावपि द्वौ भेदो प्रोक्तौ - विरुदं करम्भकञ्च। गद्यपद्यविमिश्रे काव्ये यदि राजस्तुतिर्विधीयते, काव्यमिदं विरुदमुच्यते। करम्भककाव्ये विविधभाषाणां प्रयोगोऽपि भवति।[३]

---

१. छन्दोबद्धपदं पद्यं तेन मुक्तेन मुक्तकम्।
द्वाभ्यां तु युग्मकं संदानितकं त्रिभिरिष्यते।।
कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्।। साहित्यदर्पण ६.३१४-३१५

२. गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते। साहित्यदर्पण ६.३३६

३. गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते।
करम्भकं तु भाषाभिर्विविधाभिर्विनिर्मितम्।। साहित्यदर्पण ६.३३७

विधामाश्रित्य संविहितस्य वर्गीकरणस्य भेदाः चित्रद्वारेण प्रदर्श्यन्ते -

## ३. काव्यार्थमाश्रित्य काव्यभेदानां वर्गीकरणम्

ध्वनिवादिभिराचार्यैः काव्यस्यार्थमाश्रित्य काव्यभेदानां वर्गीकरणं विहितम्। आनन्द-वर्धनेन प्रोक्तम् -

काव्ये सहृदयश्लाघ्यो द्विविधोऽर्थो भवति - वाच्यः प्रतीयमानश्च।[१] प्रतीयमानार्थ-प्राधान्यमाश्रित्य काव्यभेदाः विधीयन्ते। एवं काव्यानि त्रिविधानि गण्यन्ते - ध्वनिकाव्यं, गुणीभूतव्यङ्ग्यकाव्यं चित्रकाव्यञ्च।

**(i) ध्वनिकाव्यम् -**

वाच्यार्थापेक्षया व्यङ्ग्यार्थस्य प्राधान्ये ध्वनिकाव्यं भवति। इदमेव काव्यं ह्युत्तमकाव्य-मभिधीयते।[२] ध्वनिकाव्यभेदानां विस्तृतं विवेचनं ध्वन्यालोककाव्यप्रकाशसाहित्यदर्पणरस-गङ्गाधरादिग्रन्थेषु समुपलभ्यते।

---

१. योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।
वाच्यः प्रतीयमानश्च तस्यभेदावुभौ स्मृतौ।। ध्वन्यालोक १.२

२. इदममुतमतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः। काव्यप्रकाश १.४

पारमार्थिकरूपेण ध्वनेरेकत्वेऽपि लोकव्यवहारमाश्रित्याऽऽचार्यैर्ध्वनिवादिभिर्ध्वनिकाव्यस्याऽनेके भेदाः प्रदर्शिताः। ध्वनिसम्प्रदायस्याऽध्यायेऽपि पूर्वं विषयोऽयं प्रदर्शितः।[1]

प्रथमं तावद् ध्वनिकाव्यं द्विविधम् - अविवक्षितवाच्यम् (लक्षणामूलम्) विवक्षितान्यपरवाच्यञ्च (अभिधामूलम्)। अविवक्षितवाच्ये ध्वनौ वाच्यार्थस्य बाधितत्त्वात्तस्य विवक्षा न। विवक्षितान्यपरवाच्ये ध्वनौ वाच्यार्थोऽबाधितोऽपि व्यङ्ग्यार्थपरो भवति।

अविवक्षितवाच्यस्य ध्वनेर्द्वौ भेदौ भवतः - अर्थान्तरेसंक्रमितवाच्यमत्यन्ततिरस्कृतवाच्यञ्च। विविक्षितान्यपरवाच्यस्य ध्वनेरपि द्वौ भेदौ स्तः - संलक्ष्यक्रमव्यङ्ग्योऽसंलक्ष्यव्यङ्ग्यक्रमश्च। संलक्ष्यक्रमव्यङ्ग्यध्वनौ वाच्यार्थव्यङ्ग्यार्थयोः पूर्वापरत्वं संलक्ष्यते। परं असंलक्ष्यव्यङ्ग्यक्रमे ध्वनौ वाच्यव्यङ्ग्ययोरर्थयोर्न क्रमो लक्ष्यते। रसभावादिभेदैरसौ बहुविधो भवति। तस्याऽनन्ताः भेदाः सम्भवन्ति। अतस्तस्यैक एव भेदः सम्मतः।

संलक्ष्यक्रमव्यङ्ग्यध्वनेस्त्रयो भेदाः भवन्ति - शब्दशक्त्युद्भवोऽर्थशक्त्युद्भव उभयशक्त्युद्भवश्च।

शब्दशक्त्युद्भवध्वनेरपि द्वौ भेदौ कल्पितौ - अलङ्काररूपो वस्तुरूपश्च। अर्थशक्त्युद्भवध्वनेः द्वादश भेदाः सम्भवन्ति। प्रथमं तावदयं त्रिषु वर्गेषु विभज्यते - स्वतःसम्भवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धवक्तृप्रौढोक्तिसिद्धश्च। अथ प्रत्येकं द्विधा विभज्यते - वस्तुरूपोऽलङ्काररूपश्च। पुनश्च प्रत्येकं द्विधा विभक्तः - वस्तुरूपव्याङ्ग्यार्थोऽलङ्काररूपव्यङ्ग्यार्थश्च। एवमर्थशक्त्युद्भवध्वनेर्द्वादश भेदा सम्भवन्ति। उभयशक्त्युद्भवध्वनेरेक एव भेदो गण्यते।

एवं मम्मटेन काव्यप्रकाशे ध्वनेरष्टादशभेदाः प्रदर्शिताः -

| | | |
|---|---|---|
| (१) अविवक्षितवाच्यध्वनेर्भेदाः | - | २ |
| (२) असंलक्ष्यव्यङ्ग्यक्रमध्वनेर्भेदाः | - | १ |
| (३) शब्दशक्त्युद्भवध्वनेर्भेदाः | - | २ |
| (४) अर्थशक्त्युद्भवध्वनेर्भेदाः | - | १२ |
| (५) उभयशक्त्युद्भवध्वनेर्भेदाः | - | १ |
| | | १८ |

**(ii) गुणीभूतव्यङ्ग्यकाव्यम् -**

वाच्यार्थापेक्षया व्यङ्ग्यार्थेऽनतिशयिनि गुणीभूतव्यङ्ग्यकाव्यं कल्प्यते। इदमेव काव्यं गुणीभूतव्यङ्ग्यं मध्यमकाव्यमपि प्रोच्यते।[2]

---

१. तृतीयखण्डः सप्तमोऽध्यायः

२. अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्। काव्यप्रकाश १.५

मम्मटेन गुणीभूतव्यङ्ग्यकाव्यस्य भेदा अष्टौ प्रकीर्तिताः ।[1]

(क) **अगूढव्यङ्ग्यम्** - व्यङ्ग्येऽर्थेऽगूढे सति अगूढव्यङ्ग्यं काव्यं भवति। अत्र असहृदयजनानामपि व्यङ्ग्यार्थस्य सद्यः प्रतीतिर्भवति।

(ख) **अपरस्याङ्गम्** - व्यङ्ग्योऽर्थो यत्र वाक्यतात्पर्यरूपस्याऽर्थस्याऽपरस्य प्रधानस्याऽङ्गत्वं प्रतिपद्यते तदपरस्याङ्गं काव्यं वर्तते।

(ग) **वाच्यसिद्ध्यङ्गम्** - यत्र व्यङ्ग्यार्थो वाच्यार्थस्य साधनत्वेन प्रवर्तते, वाच्यार्थस्य प्रतिपादनं व्यङ्ग्यार्थेन सम्भाव्यते, तद् वाच्यसिद्ध्यङ्गं भवति।

(घ) **अस्फुटम्** - व्यङ्ग्यार्थो यत्र सहृदयसामाजिकैरपि काठिन्येनाऽवगम्यते, तदस्फुटं काव्यमस्ति।

(ङ) **सन्दिग्धप्राधान्यम्** - वाच्यव्यङ्ग्ययोरर्थयोः प्राधान्यं यत्र सन्दिग्धं तत्काव्यं सन्दिग्धप्राधान्यमुच्यते।

(च) **तुल्यप्राधान्यम्** - वाक्यव्यङ्ग्योरर्थयोः प्राधान्यं यत्र तुल्यत्वेन लक्ष्यते, तत्काव्यं तुल्यप्राधान्यमिति कथ्यते।

(छ) **काक्वाक्षिप्तव्यङ्ग्यम्** - व्यङ्ग्यार्थो यत्र काकुना स्वरविकारेणाऽवगम्यते, तत्काव्यं काक्वाक्षिप्तं भवति।

(ज) **असुन्दरम्** - व्यङ्ग्यार्थो यत्र वाच्यार्थापेक्षया असुन्दरं न्यूनचमत्कारकारी भवति, तत्काव्यमसुन्दरमभिधीयते।

गुणीभूतकाव्यभेदपरिगणने विश्वनाथो मम्मटमनुचकार।[2]

**(iii) चित्रकाव्यम् -**

यत्र व्यङ्ग्यार्थस्य न विवक्षा, कविरलङ्कृतीनां चमत्कृतिमेव प्रदर्शयितुं काव्यं रचयति, तच्चित्रकाव्यमुच्यते। इदं काव्यमधमं काव्यशास्त्रकृद्भिः कथितम्। चित्रकाव्यं द्विविधं भवति - शब्दचित्रमर्थचित्रञ्च।[3]

(क) **शब्दचित्रम् -**

शब्दालङ्काराणां चमत्कृतिर्यत्र काव्ये संलक्ष्यते, तच्छब्दचित्रं काव्यं भवति।

---

१. अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम्।
सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम्।।
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदः स्मृताः।। काव्यप्रकाश ५.४५-४६

२. तत्र स्यादितराङ्गं काक्वाक्षिप्तञ्च वाच्यसिद्ध्यङ्गम्।
सन्दिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढम्।।
व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ।। साहित्यदर्पण ४.१३-१४

३. शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्। काव्यप्रकाश १.५

(ख) **अर्थचित्रम्** -

अर्थालङ्काराणां चमत्कारो यत्र शोभते, तदर्थचित्रं काव्यमभिधीयते।

(iv) **चित्रकाव्यस्य काव्यत्वाकाव्यत्वनिर्णयः** -

चित्रकाव्ये काव्यत्वं सन्निहितं न वा सन्निहितमिति विवादास्पदो विषयः। चित्रकाव्ये काव्यत्वमङ्गीकृत्याऽपि मम्मटेन काव्यमिदमधमं प्रोक्तम्। ध्वनिगुणीभूतव्यङ्ग्यकाव्ययोर्विवेचनं कृत्वा ध्वनिकारेण चित्रकाव्यस्याऽपि वर्णनं विहितम्। तेन प्रोक्तम् -

ध्वनिगुणीभूतव्यङ्ग्याभ्यां भिन्नं काव्यं चित्रकाव्यं भवति। तच्च द्विविधं शब्दचित्रमर्थचित्रञ्च।[१]

ध्वनिकारश्चित्रकाव्यं वर्णयित्वाऽपि तत्र काव्यत्वस्वीकरणे सञ्चुकोच। असौ ध्वनिकाव्ये गुणीभूतव्यङ्ग्यकाव्ये च प्राधान्येन काव्यत्वममनुत। तेन प्रोक्तम् -

यद् रसभावादितात्पर्यशून्यं विशेषव्यङ्ग्यार्थप्रकाशनशक्तिरहितं, यत्र केवलं शब्दार्थवैचित्र्यचित्रमेवाऽङ्कितं तच्चित्रकाव्यं भवति। न तन्मुख्यं काव्यम्। काव्यानुकृतिरेव तत्।[२]

विश्वनाथश्चित्रकाव्ये न काव्यत्वमङ्गीचकार। तेन काव्यं रसात्मकं प्रोक्तम्। रसस्तु सदा व्यङ्ग्यार्थ एव भवति। अतो व्यङ्ग्यार्थाभावे काव्यत्वं तत्र न सम्भवति। विश्वनाथो मम्मटाचार्यस्य तृतीये काव्यभेदे चित्रकाव्ये काव्यत्वस्थितिं निराचक्रे। तेन प्रोक्तम् -

**चित्रकाव्ये काव्यत्वं न सम्भवति।**

चित्रकाव्यलक्षणे मम्मटोक्तमव्यङ्ग्यमिति पदं समीक्षमाणेन विश्वनाथेनोक्तम् -

अव्यङ्ग्यमिति पदस्य "सर्वथा व्यङ्ग्यार्थरहित" मित्यर्थे सति, व्यङ्ग्यार्थरहितायामुक्तौ काव्यत्वमेव न सम्भवति। यदि चाऽत्राऽर्थो गृह्यते - "**ईषद्व्यङ्ग्यार्थयुतं**", तदा ईषद्व्यङ्ग्यार्थयुतोक्तिर्द्विविधा सम्भवति - आस्वाद्या वा अनास्वाद्या वा। यद्यत्रोक्तिरास्वाद्या, तदा तस्या अन्तर्भावो ध्वनौ गुणीभूतव्यङ्ग्ये वा काव्ये नियतः। उक्तौ चाऽनास्वाद्यायां सत्यां तत्र काव्यत्वमेव न विद्यते।[३]

---

१. ............ततोऽन्यद् यत् तच्चित्रमभिधीयते।
चित्रं शब्दार्थभेदेन द्विविधञ्च व्यवस्थितम्।
तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम्।। ध्वन्यालोक ३.४२-४३

२. ततोऽन्यद् रसभावादितात्पर्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यञ्च काव्यं केवलं वाच्यवाचकवैचित्र्यमात्राश्रयेणोपनिबद्धमालेख्यप्रख्यं यदाभासते, तच्चित्रम्। न तन्मुख्यं काव्यम्। काव्याऽनुकारो ह्यसौ। ध्वन्यालोक (३.४३) वृत्तिः

३. केचिच्चित्राख्यं तृतीयं काव्यभेदमिच्छन्ति। तदाहुः-
"शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्" इति।
तन्न। यदि चाऽव्यङ्ग्यत्वेन व्यङ्ग्याभावस्तदा तस्य काव्यत्वमपि नास्तीति प्रागेवोक्तम्। ईषद्व्यङ्ग्यमिति चेत् किन्नामेषद्व्यङ्ग्यत्वम् ? आस्वाद्यव्यङ्ग्यत्वमनास्वाद्यव्यङ्ग्यत्वं वा। आद्ये प्राचीनभेदयोरेवाऽन्तर्भावः। द्वितीये त्वकाव्यत्वम्। साहित्यदर्पण चतुर्थपरिच्छेद अन्तिमोंऽशः।

### ४. काव्यभेदसम्बन्धे पण्डितराजजगन्नाथस्य मतम्

पण्डितराजो जगन्नाथः काव्यभेदान् परिगणयन् मम्मटप्रोक्तं वर्गीकरणं स्वीकुर्वन्नपि व्यङ्ग्यार्थस्य प्राधान्यमाश्रित्य चतुरः काव्यभेदान् प्रोवाच -

(i) **उत्तमोत्तमं काव्यम्** - मम्मटोक्तं ध्वनिकाव्यम्।

(ii) **उत्तमं काव्यम्** - मम्मटोक्तं गुणीभूतव्यङ्ग्यकाव्यम्।

(iii) **मध्यमं काव्यम्** - मम्मटोक्तमर्थचित्रकाव्यम्।

(iv) **अधमं काव्यम्** - मम्मटोक्तं शब्दचित्रकाव्यम्।

पण्डितराजेनोक्तम् -

अर्थचित्रशब्दचित्रयोर्द्वयोः काव्ययोर्नैकः कोटिरुचितः। न च तयोः समानरूपेणाऽधमत्वम्। शब्दचित्रापेक्षया अर्थचित्रकाव्यं सहृदयजनैर्माननीयतरम्।

### ५. वर्गीकरणस्याऽन्य आधाराः

आचार्यैः काव्यभेदानां वर्गीकरणे प्रायशो द्वावाधारौ यद्यपि स्वीकृतौ - अर्थश्च विधा च, तथापि कैश्चिदाचार्यैरन्येऽप्याधाराः स्वीकृताः। परं न च तेषां मतानि काव्यसमीक्षा-जगत्यधिकं समादृतानि प्रचलितानि बभूवुः। यथा - भाषामधिकृत्य काव्यभेदाः प्रोक्ताः। दण्डिना काव्यानि - संस्कृतकाव्यं प्राकृतकाव्यमपभ्रंशकाव्यमिति त्रिषु वर्गेषु विभाजितानि। रुद्रटेन प्रोक्तम् - भाषामाश्रित्य काव्यानि षट्सु वर्गेषु विभज्यन्ते - संस्कृतकाव्यं, प्राकृतकाव्यं, मागधकाव्यं, पिशाचकाव्यं, शूरसेनकाव्यमपभ्रंशकाव्यञ्च। हेमचन्द्रो भाषामधिकृत्य चतुरः काव्यभेदान् प्रोवाच - संस्कृतकाव्यं प्राकृतकाव्यमपभ्रंशकाव्यं ग्राम्यापभ्रंशकाव्यञ्च।

अनेनैव विधिनाऽन्येषामपि शास्त्रकृतामाचार्याणां मतान्यालोचनीयानि।

---

पञ्चमोऽध्यायः

# गुणाः

## १. काव्यगतगुणविवेचनभूमिका

काव्यसमीक्षायां व्यग्रमनसो मनीषिणः प्राचीनाः काव्यशास्त्रकृतो गुणानां स्वरूपमपि न्यरूपयन्। भरतो मुनिः नाट्यशास्त्रे दशगुणान् कथयामास।[१] माधुर्यौदार्यगुणौ सङ्कीर्त्याऽसौ ओजःस्वरूपमपि न्यरूपयत्।[२] अन्येषां गुणानां नामान्येव तेनोल्लिखितानि। न च विशेषेणाऽसौ तेषां विवेचनं कृतवान्।

भरतानन्तरं भामहकृतं गुणविवेचनं महत्त्वं दधाति। तेन त्रयो गुणाः प्रोक्ताः - माधुर्यौजःप्रसादाः। दण्डिनो गुणविवेचनं सुविशदं सुस्पष्टञ्च विद्यते। गुणानुक्त्वाऽसौ द्वौ काव्यमार्गौ निर्दिदेश - वैदर्भो गौडश्च। गुणास्त्वनयोरेव मार्गयोः प्राणभूताः सन्ति। श्लेषादयो दशगुणाः वैदर्भमार्गस्य प्राणास्तद्विपरीताश्च गौडमार्गस्य।[३]

अग्निपुराणकारस्य गुणविश्लेषणं किञ्चिद् भिन्नमेव वर्तते। तत्र गुणास्त्रिषु वर्गेषु विभक्ताः वर्तन्ते - शब्दगुणा अर्थगुणा उभयगुणाश्च।

श्लेषलालित्यगाम्भीर्यसौकुमार्योदारतासतीयौगिक्यश्चेति सप्त शब्दगुणाः वर्तन्ते।[४]

---

१. श्लेषः प्रसादः समता समाधिर्माधुर्यमोजः पदसौकुमार्यम्।
अर्थस्य च व्यक्तिरुदारता च कान्तिश्च काव्यार्थगुणा दशैते।। भरतनाट्यशास्त्र १७.९६

२. समासवद्भिर्विविधैर्विचित्रैश्च पदैर्युतम्।
सा तु स्वरैरुदारैश्च तदोजः परिकीर्त्यते।। नाट्यशास्त्र १७.१०९

३. श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदात्वमोजः कान्तिः समाधयः।।
इति वैदर्भमार्गस्य प्राणाः दश गुणाः स्मृताः।
एषां विपर्ययः प्रायो दृश्यते गौडवर्त्मनि।। काव्यादर्श १.४१-४२

४. शब्दमाश्रयते काव्यं शरीरं यः स तद्गुणः।
श्लेषो लालित्यगाम्भीर्यसौकुमार्यमुदारता।।
सत्येव यौगिकी चेति गुणाः शब्दस्य सप्तधा।। अग्निपुराण ३४६.५-६

माधुर्यसंविधानकोमलत्वोदारताप्रौढिसामयिकत्वाः षडर्थगुणाः भवन्ति।[1]

प्रसादसौभाग्ययथासंख्यप्रशस्ततापाकरागा इति षडुभयगुणाः सन्ति।[2]

गुणस्वरूपविषयेऽग्निपुराणकारेण लिखितम् -

यानि तत्त्वानि काव्ये महतीं छायामुत्पादयन्ति, तानि गुणाः वर्तन्ते।[3]

गुणसंख्याविषये भोजराजस्य मतं भिन्नमेव वर्तते। तेन गुणानां संख्या चतुर्विंशतिर्निर्धारिता। सर्वे च गुणाः शब्दगुणाः सन्ति। तेषां नामान्यधोलिखितानि सन्ति -

श्लेषः प्रसादः समता माधुर्यं सुकुमारताऽर्थव्यक्तिः कान्तिरुदारत्वमुदात्तत्वमोज औचित्यं प्रेयान् सुशब्दता समाधिः सूक्ष्मता गाम्भीर्यं विस्तरः संक्षेपः सम्मितता भाविकत्वं गती रीतिरुक्तिः प्रौढिश्च।[4]

गुणानां संख्यास्वरूपविषये कुन्तकस्याऽभिमतमन्येभ्य आचार्येभ्यः किञ्चिद् भिन्नमेव वर्तते। कुन्तकेन प्रोक्तम् -

काव्यानां त्रयो मार्गाः - सुकुमारो विचित्रो मध्यमश्च। त्रयाणामपि मार्गाणां द्विविधाः गुणाः भवन्ति - विशिष्टाः सामान्याश्च। विशिष्टाः गुणाश्चत्वारः सन्ति - माधुर्यप्रसादलावण्याभिजात्याः। सामान्यगुणाश्च द्वौ स्तः - औचित्यं सौभाग्यञ्च।

गुणनिरूपणे काव्यशास्त्रकृतां द्वौ वर्गौ भवतः - प्राचीनाः नवीनाश्च। प्राचीनाचार्येषु ह्यलङ्कारवादिनो रीतिवादिनश्च गण्यन्ते। ध्वनिवादिनो नवीनाचार्याः वर्तन्ते। प्राचीनाचार्यैर्विहिते गुणालङ्कारस्वरूपसंविधाने नैकत्वं नैश्चित्यञ्चाऽवतोक्यते। भामहदण्डिवामनादिभिराचार्यैर्गुणानां संख्या स्वरूपञ्च नैकरूपत्वेन समासाधितम्। परं नवीनाः ध्वनिवादिन आचार्याः गुणानां संख्यास्वरूपविषयसंविधाने निश्चितमभिमतं प्रतिपादयामासुः। गुणास्त्रयो वर्तन्ते माधुर्यौजःप्रसादाः। तेषां विवेचनं युक्तियुक्तं बुद्धिगम्यञ्चाऽस्ति।

---

१. उच्यमानस्य शब्देन येन केनाऽपि वस्तुनः।
उत्कर्षमावहन्नर्थो गुण इत्यभिधीयते।।
माधुर्यं संविधानञ्च कोमलत्वमुदारता।
प्रौढिः सामयिकत्वञ्च तद्भेदाः षट् चकासति।। अग्निपुराण ३४६.१०-११

२. शब्दार्थावुपकुर्वाणो नाम्नोभयगुणः स्मृतः।
तस्य प्रसादः सौभाग्यं यथासंख्यं प्रशस्तता।।
पाको राग इति प्राज्ञैः षट् प्रपञ्चविपञ्चिताः।। अग्निपुराण ३४६.१८-१९

३. यः काव्ये महतीं छायामनुगृह्णात्यसौ गुणः। अग्निपुराण ३४६.३

४. श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिस्तथा कान्तिरुदारत्वमुदारता।।
ओजस्तथान्यदौर्जित्यं प्रेयानथ सुशब्दता।
तद्वत् समाधिः सौक्ष्म्यञ्च गाम्भीर्यमथ विस्तरः।
रीतिरुक्तिस्तथा प्रौढिरथैषां लक्ष्यलक्षणे।। सरस्वतीकण्ठाभरण १.५८-६०

## २. वामनकृतं गुणविवेचनम्

प्राचीनाचार्येषु वामनकृतं गुणविवेचनं सुसङ्गतं सुससम्बद्धं तर्कपूर्णञ्च प्रतीयते। रीतीनां गुणैः सह साक्षात् सम्बन्धस्तेन प्रतिपादितः। तेन प्रोक्तम् - रीतिरात्मा काव्यस्य, गुणश्च रीतेरात्मा।[1]

ध्वनिवादिभ्यः पूर्वं गुणविषये वामनाचार्यस्यैव मतं सर्वसम्मतरूपेण स्वीकृतमासीत्। पश्चाद्वर्तिभिराचार्यैरपि स्वकृतिषु गुणसंख्यास्वरूपादिकं निरूपयद्भिः प्राचीनाचार्येषु वामनस्याऽभिमतं महनीयतरमनुमतम्।

गुणसंख्यास्वरूपादिकं निरूपयता वामनाचार्येण गुणालङ्कारयोर्भेदोऽपि व्याख्यातः। तेन प्रतिपादितम् -

गुणाः काव्यस्यान्तरङ्गतत्त्वानि वर्तन्ते, परमलङ्काराः बाह्याङ्गनि सन्ति। तेन व्याख्यातम् -

काव्यशोभायाः कर्तारो गुणा वर्तन्ते। अलङ्काराश्च तदतिशयहेतवो धर्माः सन्ति। ओजःप्रसादादयो गुणाः काव्येषु शोभाधायकाः धर्मा एव। यमकोपमादयोऽलङ्काराः स्वयं काव्येषु न शोभाधायकाः, परं ते गुणकृतशोभायामतिशयमापादयन्ति। कामिनीवपुषि सौन्दर्यादिगुणेषु सत्स्वेव यथा अलङ्कारास्तस्य शोभां वर्धयन्ति, सौन्दर्यादिगुणेष्वसत्सु च धार्यमाणा अप्यलङ्काराः व्यर्थाः भवन्ति, सैव स्थितिः काव्येष्वप्यस्ति। काव्येष्वोजःप्रसादादिगुणेषु सत्स्वेवोपमादयोऽलङ्काराः काव्यशोभां वर्धयन्ति। एवञ्चौजःप्रसादादयो गुणाः काव्यस्य नित्यधर्माः। तैर्विना न काव्ये शोभोत्पत्तिः।[2]

---

१. रीतिरात्मा काव्यस्य। विशिष्टा पदसंघटना रीतिः। विशेषो गुणात्मा।

काव्यालङ्कारसूत्र १.२.६-८

२. काव्यशोभायाः कर्तारो धर्माः गुणाः। ये खलु शब्दार्थयोः धर्माः काव्यशोभां कुर्वन्ति ते गुणाः। ते चौजःप्रसादादयः। न यमकोपमादयः। कैवल्येन तेषामकाव्यशोभाकरत्वात्। ओजःप्रसादादीनान्तु केवलानामस्ति काव्यशोभाकरत्वमिति। तदतिशयहेतवस्त्वलङ्काराः। तस्याः काव्यशोभाया अतिशयस्तदतिशयस्तस्य हेतवः। तु शब्दो व्यतिरेके। अलङ्काराश्च यमकोपमादयः। तत्र श्लोकौ -

युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव।
विहितप्रणयं निरन्तराभिः सदलङ्करणविकल्पकल्पनाभिः।।
अपि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः।
अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते।।

पूर्वे नित्याः। पूर्वे गुणाः नित्याः। तैर्विना काव्यशोभाऽनुपपत्तेः।

काव्यालङ्कारसूत्रवृत्तिः ३.१.१-३ तथा वृत्तिश्च

वामनेन गुणानां संख्या विंशतिर्निर्धारिता। दश शब्दगुणाः सन्ति दश चाऽर्थगुणाः। शब्दगुणानामर्थगुणानाञ्च नामानि न भिन्नानि, परं लक्षणानि पृथक्-पृथगवलोक्यन्ते।[१] गुणलक्षणं वामनकृतमधोलिखितरूपेण वर्ण्यते -

**शब्दगुणाः** - गाढबन्धत्वमोजः। शैथिल्यं प्रसादः। मसृणत्वं श्लेषः। मार्गाभेदः समता। आरोहावरोहक्रमः समाधिः। पृथक्पदत्वं माधुर्यम्। अजरठत्वं सौकुमार्यम्। विकटत्व- मुदारता। अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः। औज्ज्वल्यं कान्तिः।[२]

**अर्थगुणाः** - अर्थस्य प्रौढिरोजः। अर्थवैमल्यं प्रसादः। घटना श्लेषः। अवैषम्यं समता। अर्थदृष्टिः समाधिः। उक्तिवैचित्र्यं माधुर्यम्। अपारुष्यं सौकुमार्यम्। अग्राम्यत्वमुदारता। वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः। दीप्तरसत्वं कान्तिः।[३]

### ३. ध्वनिवादिनामाचार्याणां गुणनिरूपणम्

नवीनैर्ध्वनिवादिभिराचार्यैर्गुणानां विवेचना प्राचीनाचार्याणामपेक्षया भिन्नप्रकारेणैव कृता। गुणसंख्यादिविषये भामहमनुसरन्तस्ते त्रीन् गुणान् प्रत्यापादयन् - माधुर्यौजःप्रसादान्। परं गुणस्वरूपविषये न भामहमतं तेऽन्वमूमुदन्। गुणानां स्वरूपं तैर्भामहापेक्षया विलक्षणरूपेणैव साधितम्। काव्ये ह्यङ्गिनो रसस्याङ्गरूपाः गुणाः नियतं निवसन्ति। ध्वनिसिद्धान्तं प्रतिपाद्याऽऽ-नन्दवर्धनो गुणानां नियतं रसधर्मत्वं सिषेध अलङ्काराश्च काव्यशरीरं शब्दार्थयुगलमाश्रयन्ते।[४]

ध्वनिवादिनामाचार्याणां गुणविवेचनं तर्कसङ्गतं सुसंगठितं सुस्पष्टञ्च विद्यते। अत आचार्याणामेतेषां गुणविवेचनानुसरणमन्यैरप्युचितमेव। अत्र गुणविवेचनेऽस्माभिर्मम्मटाचार्यकृत-काव्यप्रकाशसंविहितविवेचनमाश्रितम्। मम्मटेन काव्यप्रकाशे सर्वेषामेव मतानां संक्षिप्तसारगर्भितसमीक्षा तत्र विहिता। गुणविवेचनप्रसङ्गे विषयोऽयं पञ्चसु भागेषु विभक्तः -

(i) गुणलक्षणं काव्ये च तेषां स्थानम्
(ii) गुणालङ्कारयोर्भेदः
(iii) गुणानां संख्या
(iv) गुणस्वरूपं गुणानाञ्च रसविशेषैः सह सम्बन्धः
(v) गुणानां व्यञ्जनहेतवः

---

१. (क) ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणाः। काव्यालङ्कारसूत्रवृत्तिः ३.१.४

(ख) त एवाऽर्थगुणाः। काव्यालङ्कारसूत्रवृत्तिः ३.२.१

२. काव्यालङ्कारसूत्रवृत्तिः ३.१.५-२५

३. काव्यालङ्कारसूत्रवृत्तिः ३.२.२-१५

४. तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।
अङ्गाश्रितास्त्वलङ्काराः मन्तव्याः कटकादिवत्।। ध्वन्यालोक २.६

(i) **गुणलक्षणं काव्ये च तेषां स्थानम् -**

गुणलक्षणं निदर्शयता मम्मटाचार्येण काव्ये गुणानां स्थानमपि निर्दिष्टम्। तेन प्रोक्तम् -

काव्ये रसा अङ्गीरूपेण भवन्ति, गुणाश्च तेषां नियतधर्माः सन्तो ह्युपकारकाः विद्यन्ते। काव्येऽङ्गीभूतेषु रसेषु गुणास्तथैव निवसन्ति, यथा शरीरेऽङ्गीभूते ह्यात्मनि शौर्यादयो गुणाः निवसन्ति।[1]

रसवादिना विश्वनाथेनाऽपि काव्ये गुणानामेतदेव लक्षणं स्थानञ्च स्वीकृतम्।[2]

पण्डितराजो जगन्नाथोऽपि गुणनिरूपणेऽभिमतमेतदेवाऽन्वमूमुदत्।

(ii) **गुणालङ्कारयोर्भेदः -**

गुणानां लक्षणं स्थानञ्च निर्धार्य मम्मटाचार्योऽलङ्काराणां स्वरूपं स्थानञ्च निरदिशत्। असौ गुणालङ्कारयोर्भेदमपि निर्णिनाय। मम्मटेन प्रोक्तम् -

उपमादयोऽलङ्काराः काव्ये विद्यमानं रसं वाच्यवाचकरूपाङ्गद्वारेण कदाचित् (न नैरन्तर्येण) तथैवोपकुर्वन्ति यथा हारादयोऽलङ्काराः शरीरशोभां वर्धयित्वा तदुपकुर्वन्ति।[3]

गुणालङ्कारस्वरूपविवेचनेन तत्स्थाननिर्धारणेन च तयोः परस्परभेदोऽपि सुस्पष्टो भवति। तयोर्भेद एवं वर्ण्यते -

(क) गुणाः काव्यस्याऽऽत्मभूतस्य रसस्य धर्मास्तमुपकुर्वन्ति, परमलङ्काराः काव्यशरीरभूतौ शब्दार्थावुपकुर्वन्ति।

(ख) गुणाः रसं साक्षाद्रूपेणोपकुर्वन्ति, परमलङ्काराः शब्दार्थद्वारेण रसमुपकुर्वन्ति।

(ग) गुणानां रसैः सह स्थितिरविनाभावसम्बन्धेन भवति। रसेषु विद्यमानेषु गुणास्तत्र नियतरूपेण तिष्ठन्ति। रसेष्वविद्यमानेषु गुणा अपि नाऽवतिष्ठन्ते। ते रसानां नियतधर्माः। परमलङ्कारेषु नैषा स्थितिः। रसेष्वविद्यमानेषु जातुचिदलङ्काराः भवन्ति, न वा भवन्ति। अलङ्कारेषु स्थितेषु रसाः भवन्ति न वा भवन्ति।

(घ) विद्यमानं रसं गुणाः नियतमुपकुर्वन्ति। परमलङ्काराः सन्तं रसं जातुचिदुपकुर्वन्ति, न वोपकुर्वन्ति।

---

१. ये रसस्याऽङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः।। काव्यप्रकाश ८.६६

२. रसस्याऽङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा।
गुणा ......................।। साहित्यदर्पण ८.१

३. उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवलङ्कारास्तेऽनुप्रासोपमादयः।। काव्यप्रकाश ८.६७

गुणालङ्कारभेदप्रदर्शने मम्मटाचार्यः प्राचीनाचार्याणां मतान्यपि विशिश्लेष। भामहकृत-काव्यालङ्कारस्य टीकाकार उद्भटो भामहविवरणे गुणालङ्कारयोरभेदं प्रत्यापादयत्। तेन प्रोक्तम् -

काव्यगतगुणालङ्कारयोर्न कोऽपि भेदः। लौकिकेषु शौर्यादिगुणेषु कटकाद्यलङ्कारेषु च विभेदोऽस्त्येव, यतः शौर्यादिगुणानामात्मना समवायसम्बन्धः कुण्डलाद्यलङ्काराणाञ्च शरीरेण संयोगसम्बन्धश्च वर्तते। परन्तु काव्ये ह्योजःप्रभृतयो गुणा अनुप्रासोपमादयश्चाऽलङ्काराः सर्वेऽपि समवायसम्बन्धेन तिष्ठन्ति। अतः काव्यगतगुणालङ्कारयोर्न कोऽपि विभेदः कर्तुं शक्यते। गुणालङ्कारयोर्भेदकरणं परम्पराप्राप्तमेव। अतो गड्डलिकाप्रवाहेणैवैषां भेदः समीक्षकैः परिकल्प्यते।[1]

परं मम्मटादय आचार्याः वचनमेतदुद्भटोक्तं न स्वीचक्रुः। मम्मटेनोक्तम् -

गुणानां रसनिष्ठधर्मत्वादलङ्काराणाञ्च शब्दार्थनिष्ठधर्मत्वाद् गुणालङ्कारयो-र्भेदोऽङ्गीकरणीय एव।

वामनोक्तं गुणालङ्कारभेदमपि मम्मटो नाऽङ्गीचकार। वामनो गुणान् शोभाधायक-धर्मानलङ्कारांश्च तदतिशयहेतन् परिकल्प्य तान् शब्दार्थनिष्ठानेव न्यरूपयत्। परन्तु मम्मटो रीतिवादिनो वामनाचार्यस्य रीतिसिद्धान्तमेवाऽऽश्रित्य तस्य कथनं न्यसेधीत्।

मम्मटेनोक्तम् -

रीतिवादिन आचार्याः गुणान् शब्दार्थनिष्ठान् परिकल्प्य गुणैः काव्यव्यवहारं सेधयन्ति। तत्र द्वौ विकल्पौ स्तः -

(क) गुणाः समस्तरूपेण रीतेरात्मानः
(ख) गुणविशेषो वा कस्यचिद् रीतिविशेषस्याऽऽत्मा

रीतिवादिनो यदि काव्यव्यवहारं समस्तगुणैः सेधयेयुस्तदा वैदर्भीरीतिरेव काव्यस्याऽऽत्मा काव्यव्यवहारप्रवर्तिका। यतः सैव रीतिः समस्तगुणयुता भवति। गौडी वा पाञ्चाली वा रीतिर्न समस्तगुणयुता, अपितु कतिपयगुणविशिष्टा वर्तते। अतः सकलकाव्यव्यवहारप्रवर्तनाभावाद् गौडी वा पाञ्चाली वा रीतिर्न काव्यस्याऽऽत्मा।

यदि च पूर्वपक्षिणः कतिपयैरेव विशिष्टगुणैः काव्यव्यवहारप्रवर्तनं कथयेयुः, तदा -

**"अद्रावत्र प्रज्ज्वलत्यग्निरुच्चैः**
**प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः।**

---

१. एवञ्च समवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः। ओजः-प्रभृतीनामनुप्रासोपमादीनाञ्चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैवैषां भेदः।
काव्यप्रकाशे (८.६७) वृत्तौ मम्मटोद्धृतं भट्टोद्भटाभिमतम्

इत्यादिवाक्येष्वोजोगुणस्थितिसम्भवात् काव्यत्वं कल्पनीयं, यद्यप्यत्र न काव्यत्वं वर्तते। अथ च केषुचित् काव्येषु गुणाऽभावेऽपि केवलमलङ्कारैरेव काव्यत्वं निष्पद्यते। यथा -

**स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनि।**
**अस्याः रदच्छदरसो न्यक्करोतितरां सुधाम्।।**

अस्मिन् पद्ये गुणाभावेऽपि विशेषोक्तिव्यतिरेकालङ्कारौ काव्यव्यवहारस्य प्रवर्तकौ वर्तेते। अतो गुणानां काव्यस्याऽनिवार्याङ्गत्वाभावात् "रीतिः काव्यस्याऽऽत्मा" इति न प्रतिपादयितुं शक्यते। अथ च गुणानामपि नियतत्वेन काव्यशोभाधायकधर्मत्वं न सम्भवति।

विमर्शेणैतेन सिद्धमेव यत् - गुणाः काव्यस्य शोभाधायकधर्मा अलङ्काराश्च तदतिशयहेतव इति गुणालङ्कारभेदप्रतिपादनं नोचितम्। गुणालङ्कारयोस्तु भेदः पूर्वोक्तेनैव प्रकारेण प्रतिपादनीयः। काव्ये गुणाः रसनिष्ठधर्मा अलङ्काराश्च शब्दार्थनिष्ठा एव भवन्ति। अथ च गुणान् रसनिष्ठान् प्रतिपाद्याऽपि मम्मटेन प्रोक्तम् -

काव्यशरीरे चैव गुणानां स्थितिः। अतो गुणा उपचारेण शब्दार्थनिष्ठा अपि भवन्ति।[१]

**(iii) गुणानां संख्या -**

प्राचीनैराचार्यैः गुणसंख्याविषये विभिन्नान्यभिमतानि प्रदर्शितानि। यथा पूर्वोक्तम् - भरतेन दश, भामहेन त्रयः, दण्डिना दश, अग्निपुराणकारेणैकोनविंशतिः, वामनेन विंशतिः, कुन्तकेन षड्, भोजराजेन चतुर्विंशतिः गुणाः प्रोक्ताः। ध्वनिवादिन आचार्याः गुणानां संख्यां नियम्य त्रीन् प्रत्यापादयन्। ते वर्तन्ते - माधुर्यौजःप्रसादाः। उत्तरवर्तिभिः काव्यशास्त्र-कृद्भिर्ध्वनिवादिनामाचार्याणामेव मतं समर्थितम्। गुणास्त्रय एव भवन्तीति।[२]

मम्मटाचार्यात् पूर्वं गुणसंख्यास्वरूपविषये वामनाचार्यस्याऽभिमतमेव विद्वद्भिः सम्मानितमासीत्। वामनेन दश शब्दगुणाः दश चाऽर्थगुणाः प्रोक्ताः अत्र मम्मटस्य वचनं वर्तते -

वामनोक्ताः दश शब्दगुणाः माधुर्यौजःप्रसादेषु त्रिष्वेव गुणेष्वन्तर्भवन्ति। दश चाऽर्थगुणाः गुणा एव न सन्ति। वामनोक्तान् दश शब्दगुणान् विश्लेषयता मम्मटेन प्रोक्तम् -

वामनोक्तानां केषाञ्चन गुणानामन्तर्भावस्त्रिष्वेतेषु गुणेषु भवति, केचन दोषाऽभावरूपाः केचन च दोषरूपाः लक्ष्यन्ते।[३]

वामनोक्तानां दश शब्दगुणानां दशाऽर्थगुणानां समीक्षा निम्नप्रकारेण मम्मटेन कृता, येन माधुर्यौजःप्रसादानामेव त्रयाणां गुणानामस्तित्वं सिध्यति यथा -

---

१. गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता। काव्यप्रकाश ८.७१

२. माधुर्यौजःप्रदासाख्यास्त्रयस्ते न पुनर्दश। काव्यप्रकाश ८.६८

३. केचिदन्तर्भवन्त्येषु दोषत्यागात्परे श्रिताः।
अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश।। काव्यप्रकाश ८.७२

(क) शब्दगुणाः

| सं० | गुणाः | गुणलक्षणानि | अन्तर्भावः |
| --- | --- | --- | --- |
| (१) | श्लेषः | बहूनामपि पदानामेक-पदवद्भासमानात्मा | ओजसि |
| (२) | समाधिः | आरोहावरोहक्रमरूपः | ओजसि |
| (३) | उदारता | विकटत्वलक्षणा | ओजसि |
| (४) | प्रसादः | ओजोमिश्रितशैथिल्यात्मा | ओजसि |
| (५) | ओजः | बन्धवैकट्यम् | ओजसि |
| (६) | माधुर्यम् | पृथक्पदत्वरूपम् | माधुर्ये |
| (७) | अर्थव्यक्तिः | झटित्यर्थज्ञानम् | प्रसादे |
| (८) | समता | मार्गाभेदरूपा | दोषरूपा |
| (९) | सुकुमारता | कष्टत्वग्राम्यत्वयो-र्निराकरणात् तन्निरा-करणेनाऽपारुष्यरूपम् | दोषाऽभावः |
| (१०) | कान्तिः | औज्ज्वल्यरूपा | दोषाऽभावः |

(ख) अर्थगुणाः

| सं० | गुणाः | लक्षणानि | समाधानम् |
| --- | --- | --- | --- |
| (१) | ओजः | पञ्चविधमोजः | |
| | | (i) पदार्थे वाक्यरचनम् | वैचित्र्यमात्रम् |
| | | (ii) वाक्यार्थे पदाभिधा | " |
| | | (iii) व्यासः | " |
| | | (iv) समासः | " |
| | | (v) साभिप्रायत्वम् | " |
| (२) | प्रसादः | अर्थवैमल्यात्मा | अधिकपदत्व-दोषाभावमात्रम् |
| (३) | माधुर्यम् | उक्तिवैचित्र्यरूपम् | अनवीकृतत्व-दोषाभावमात्रम् |

| | | | |
|---|---|---|---|
| (४) | सौकुमार्यम् | अपारुष्यरूपम् | अमङ्गलरूप-दोषाभावमात्रम् |
| (५) | उदारता | अग्राम्यत्वरूपा | अश्लीलतारूप-दोषाभावमात्रम् |
| (६) | अर्थव्यक्तिः | वस्तुस्वभावस्फुटत्वरूपा | स्वभावोक्त्य-लङ्कारेऽन्तर्भावः |
| (७) | कान्तिः | दीप्तरसत्वरूपा | रसध्वनिगुणीभूत-व्यङ्ग्ययोरन्तर्भावः |
| (८) | श्लेषः | क्रमकौटिल्यानुल्वणोपपत्ति-योगरूपघटनात्मा | विचित्रतामात्रम् |
| (९) | समता | अवैषम्यरूपा | विषमतारूपदोषा-भावमात्रम् |
| (१०) | समाधिः | अयोनिरन्यच्छायायोनिर्वेति द्विविधोऽर्थदृष्टिरूपः (i) कविप्रतिभया स्वयमुद्भूतः प्राचीनकविभिर्नोक्तः (ii) प्राचीनकविभावोऽन्यप्रकारेणोक्तः | अर्थदर्शनमात्रम् |

एवं मम्मटाचार्यो वामनोक्तविंशतिगुणान् विश्लेष्य कांश्चन गुणान् त्रिष्वेतेषु माधुर्यौजःप्रसादेषु समाहृत्य, कांश्चन दोषाभावमात्रं प्रतिपाद्य, केषुचिच्च दोषान् प्रदर्श्य शब्दगुणान् त्रिसंख्यकान् सिषेध, अथ च दशाऽर्थगुणान् निषिषेध।

विश्वनाथेन पण्डितराजजगन्नाथेन चाऽपि मम्मटप्रोक्तमार्गोऽनुसृतः, वामनोक्ताः विंशतिगुणाश्च त्रिषु गुणेषु समाहृताः। यद्यप्यत्र विस्तरेण तद्वर्णनस्याऽवकाशो न विद्यते, तथापि विश्वनाथवचनानि संक्षेपेण प्रस्तूयन्ते।

विश्वनाथेन प्रोक्तम्

प्राचीनाचार्यप्रोक्तेषु शब्दगुणेषु ओजःश्लेषसमाध्युदारताप्रसादानामन्तर्भाव ओजसि जायते। समासरहितपदरचनया माधुर्यगुणाभिव्यक्तिहेतोः प्राचीनाचार्याणामपृथक्त्वरूपं माधुर्यं गृह्यते। सद्योऽर्थप्रतीतिबोधनरूपाऽर्थव्यक्तिः प्रसादरूपा गृह्यते। कान्तिसुकुमारगुणौ ग्राम्यत्वदुःश्रवत्वदोष-निराकरणेन दोषपरिहारमात्रमेव। समतागुणः क्वचिद्दोष एव। क्वचिद् गुणत्वेन प्रतीयमानो-ऽप्यन्येषु गुणेष्वन्तर्भवति।[1]

चिरन्तनैराचार्यैः प्रोक्तेषु अर्थगुणेषु दशसु ओजःप्रसादमाधुर्यसुकुमारतोदारतासु दोषाभाव-मात्रत्वमेव। अर्थव्यक्तिः स्वभावोक्तिरलङ्कारः। कान्तिगुणो ध्वनिगुणीभूतव्यङ्ग्ययोरन्तर्भवति। श्लेषो विचित्रतामात्रं समता च दोषाभावमात्रमेव भवति। समाधिरपि न गुणः। अतोऽर्थगुणाः वस्तुतो न गुणाः।[2]

एवं नवीनाः ध्वनिवादिन आचार्याः काव्ये केवलं त्रीन् शब्दगुणान् माधुर्यौजःप्रसादान् स्वीकुर्वन्ति।

### (iv) गुणस्वरूपं गुणानाञ्च रसविशेषैः सह सम्बन्धः -

गुणानां लक्षणस्य संख्यायाश्च निर्णये सञ्जाते प्रतिगुणस्वरूपं विज्ञातव्यम्। अथ च गुणानां रसविशेषेण सह सम्बन्धोऽप्यवगन्तव्यः। अस्मिन् प्रसङ्गे ध्वनिकारस्याऽऽनन्दवर्धनस्य मतमेवोत्तरवर्तिभिराचार्यैरङ्गीकृतम्। अत्र प्रतिगुणविवेचनं प्रस्तूयते।

---

१. श्लेषः समाधिरौदार्यं प्रसाद इति ये पुनः।
गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते।।
माधुर्यव्यञ्जकत्वं यदसमासस्य दर्शितम्।
पृथक्पदत्वं माधुर्यं तेनैवाङ्गीकृतं पुनः।।
अर्थव्यक्तेः प्रसादाख्यगुणेनैव परिग्रहः।
अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणम्।।
ग्राम्यदुःश्रवतात्यागात् कान्तिश्च सुकुमारता।
क्वचिद् दोषस्तु समता मार्गाभेदस्वरूपिणी।।
अन्यथोक्तगुणेष्वस्या अन्तःपातो यथायथम्।। साहित्यदर्पण ८.९-१३

२. ओजः प्रसादो माधुर्यं सौकुमार्यमुदारता।
तदभावस्य दोषत्वात् स्वीकृता अर्थगाः गुणाः।।
अर्थव्यक्तिः स्वभावोक्त्यलङ्कारेण तथा पुनः।
रसध्वनिः गुणीभूतव्यङ्ग्यानां कान्तिनामकः।।
श्लेषो विचित्रतामात्रमदोषः समता परम्।
न गुणत्वं समाधेश्च तेन नाऽर्थगुणाः पृथक्।। साहित्यदर्पण ८.१४-१६

(क) माधुर्यम् -

आह्लादरूपं माधुर्यं द्रुतिकारणं भवति। सहृदयहृदयद्रवीभवनमेव द्रुतिः। माधुर्यगुणः सम्भोगशृङ्गारे, करुणे, विप्रलम्भशृङ्गारे, शान्तरसे चाऽवतिष्ठते। क्रमशश्चोत्तरोत्तरमतिशयेन वर्धते। सहृदयमनांसि तत्र सर्वाधिकं रमन्ते।[१]

(ख) ओजः -

ओजोगुणः दीप्तिं परमामुज्ज्वलतां समुद्भावयति। अस्य स्वरूपं विद्यते चित्तस्याऽतिविस्तृतिः। वीरे बीभत्से रौद्रे च रसे गुणोऽयमवतिष्ठते। क्रमशश्चोत्तरोत्तर-मस्याऽतिशयो भवति।[२]

(ग) प्रसादः -

अग्निः शुष्कमिन्धनमिव, जलं स्वच्छवस्त्रमिव प्रसादो गुणः चित्तं सहसा व्याप्नोति। गुणोऽयं सर्वेषु रसेषु सर्वासु च रचनासु व्याप्तो भवति।[३]

---

१. (i) शृङ्गार एव मधुरः परः प्रह्लादनो रसः।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति।
शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्।
माधुर्यमार्द्रतां याति यतस्तत्राऽधिकं मनः।। ध्वन्यालोक २.७-८

(ii) आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्।
करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्।। काव्यप्रकाश ८.६८-६९

(iii) चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते।
सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात्।। साहित्यदर्पण ८.२

२. (i) रौद्रादयो रसाः दीप्त्या लक्ष्यन्ते काव्यवर्तिनः।
तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम्। ध्वन्यालोक २.९

(ii) दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थितिः।
बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च।। काव्यप्रकाश ८.६८-७०

(iii) ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते।
वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु।। साहित्यदर्पण ८.४-५

३. (i) समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः।। ध्वन्यालोक २.९

(ii) शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः।
व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वसाधारणक्रियः।। काव्यप्रकाश ८.७०-७१

(iii) चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः।
स प्रसादः समस्तेषु रसेषु रचनासु च।। साहित्यदर्पण ८.७

**(v) गुणानां व्यञ्जनहेतवः -**

आनन्दवर्धनेन विशिष्टवर्णसमाससंघटनाप्रबन्धाः विशिष्टरसाभिव्यञ्जनहेतवः प्रोक्ताः।[१] उत्तरवर्तिन आचार्यास्तत्त्वानीमानि गुणाभिव्यञ्जनहेतुत्वेन प्रतुष्टुवुः। गुणानां रसधर्मत्वाद् वर्णादिहेतुभिरभिव्यक्ताः गुणाः रसाभिव्यञ्जकाः सन्त्येव। अत आचार्यैरेभिः वर्णानां गुणाभिव्यञ्जनहेतुरूपेण प्रस्तवनमुचितमेव।

आचार्याणामिदमपि मन्तव्यमवर्तत -

यद्यपि विशिष्टवर्णसमाससंघटनादयो विशिष्टगुणाभिव्यञ्जनहेतवो भवन्तीति नियमस्तथापि नियमोऽयं नैकान्तिकः। वक्तृवाच्यप्रबन्धानामौचित्येनाऽपेक्षया चाऽन्येनैव प्रकारेण तेषां प्रयोगो विधीयते।[२]

अत्र क्रमशः प्रतिगुणमभिव्यञ्जकवर्णादीनामुल्लेखो विधीयते -

(क) **माधुर्यम्-**

टठडढवर्णरहिताः कादयो मान्ताः (कवर्गचवर्गतवर्गपवर्गाः) सर्वे वर्णाः ह्रस्वव्यवहितौ रेफणकारौ, स्पर्शवर्णाः (यरलववर्णाः), अल्पसमासा समासरहिता वा मधुररचनाः माधुर्य-गुणाभिव्यञ्जकाः भवन्ति।[३]

(ख) **ओजः -**

वर्गाणां प्रथमतृतीयवर्णानां द्वितीयचतुर्थवर्णैः सह संयोगः (क-ग-च-ज-त-द-प-ब -वर्णानां ख-घ-छ-झ-थ-ध-फ-भ-वर्णैः सह संयोगः), तुल्यवर्णानां परस्परं संयोगः, टवर्गस्याऽऽद्याश्चत्वारो वर्णाः (ट-ठ-ड-ढ वर्णाः), श-ष वर्णौ, वर्णानां रेफेण सह संयोगः, दीर्घसमासा उद्धता च रचना ओजोगुणाभिव्यञ्जकाःभवन्ति।[४]

---

१. ध्वन्यालोक - तृतीयोद्योतः

२. वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित्।
रचनावृत्तिवर्णानामन्यथात्वमपीष्यते।। काव्यप्रकाश ८.७७

३ (i) मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा।। काव्यप्रकाश ८.७४

(ii) मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना।
रणौ लघू च तद्व्यक्तौ वर्णाः कातरता तथा।
अवृतिरल्पवृत्तिर्वा मधुरा रचना तथा।। साहित्यदर्पण ८.३-४

४. (i) योग आद्यतृतीयाभ्यामन्त्ययोः रेणतुल्ययोः।
टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि।। काव्यप्रकाश ८.७५

(ii) वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ।
उपर्यधो द्वयोर्वा सरेफौ टठडढैः सह।।
शकारश्च षकारश्च तस्य व्यञ्जकतां गताः।
तथा समासो बहुलो घटनौद्धत्यशालिनी।। साहित्यदर्पण ८.५-७

(ग) **प्रसादः -**

येषां वर्णानां समासानां रचनानाञ्च श्रवणमात्रेणार्थप्रतीतिभर्वति, ते सर्वे प्रसादगुणाभिव्यञ्जकाः भवन्ति।[1]

माधुर्यौजःप्रसादानां विवेचनविषये प्रश्नोऽत्रैकः समुद्भवति। यदि गुणाः रसधर्मा उच्यन्ते, तत्कथं ते शब्दगुणाः प्रोच्यन्ते ? प्रश्नस्याऽस्य समाधानमनेन प्रकारेण विधीयते -

यथा शौर्यादयो गुणा आत्मनो धर्माः सन्तोऽप्युपचारेण शरीरधर्माः ज्ञायन्ते, तथैव माधुर्यादयो गुणाः रसधर्माः सन्तोऽप्युपचारेण शब्दाश्रितत्वात् शब्दधर्मरूपेण वर्ण्यन्ते।[2]

---

१. (i) श्रुतिमात्रेण यस्मात्तु येनार्थप्रत्ययो भवेत्।
साधारणः समग्राणां स प्रसादो गुणो मतः।। काव्यप्रकाश ८.७६

(ii) शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रतः। साहित्यदर्पण ८.८

२. एषां शब्दगुणत्वञ्च गुणवृत्त्योच्यते बुधैः।। साहित्यदर्पण ८.९

# दोषा:

## १. काव्यगतदोषविवेचनभूमिका

काव्यशास्त्रस्य विवेच्यविषयेषु दोषप्रकरणमप्यतितरां महत्त्वशालि विद्यते। काव्यशास्त्राचार्या: काव्यं निर्दोषमाहु:। काव्यस्य निर्दोषितां प्रतिपादयद्भिस्तै: प्रोक्तम् -

काव्यरचना दोषरहिता कर्तव्या। दोषा: काव्यस्यापकर्षका: विघटनकारिणश्च भवन्ति। अत: काव्यं रचयता कविना विषयेऽस्मिन् सावधानेन भाव्यम्।

काव्यदोषान् प्रथमं भरतो मुनिरुल्लिलेख। नाट्यशास्त्रस्य षोडशेऽध्यायेऽसौ दश दोषान् निर्दिश्य[1] तेषां लक्षणान्यप्यलिखत्।[2] परन्तु भरतेन तेषां व्याख्या सुविशदं न कृता।

भरतान्तरं भामहेन काव्यदोषा: प्रदर्शिता:। तेन प्रोक्तम् -

काव्यं विरचयता कविनाऽवधेयं यत्काव्ये शब्दस्यैकस्याऽपि प्रयोग: सदोषो न भवेत्। दोषयुतं काव्यं कुत्सितपुत्र इव निन्दनीयं भवति। यदि कश्चित् कविर्न भवति, अकविरेव वर्तते, तदसावधर्मस्य, पापस्य, रोगस्य, दण्डस्य वा पात्रमेव सम्भवति। परं कुकवित्वं पुन: मृत्युतुल्यमेव भवतीति ज्ञानिन: प्राहु:।[3]

भामह: काव्यालङ्कारग्रन्थे काव्यदोषानेकादश व्याचख्यौ।

दण्डिनाऽपि काव्यनिर्माणे दोषपरिहारो नितरामनिवार्योऽभिमत:। तेन प्रोक्तम् -

---

१. गूढार्थमर्थान्तरमर्थहीनं भिन्नार्थमेकार्थमभिप्लुतार्थम्।
न्यायादपेतं विषमं विसन्धि शब्दच्युतं वै दश काव्यदोषा:।।

भरत-नाट्यशास्त्र १६.८८

२. भरतनाट्यशास्त्र १६.८९-९४

३. सर्वथा पदमप्येकं न निगद्यमदुष्टवत्।
विलक्ष्मणा हि काव्येन दु:सुतेनेव निन्द्यते।।
नाकवित्वमधर्माय व्याधये दण्डनाय वा।
कुकवित्वं पुन: साक्षान्मृतिमाहुर्मनीषिण:।। भामह : काव्यालङ्कार १.११-१२

काव्यस्य सुसूक्ष्मोऽपि दोषोऽक्षम्य एवाऽवगन्तव्यः। स तु दोषः कान्ते वपुषि कुष्ठरोगश्वित्रमिव प्रतीयते जुगुप्साञ्च जनयति।[1]

दण्डिना दश दोषाः प्रोक्ताः।[2]

प्राचीनैराचार्यैर्दोषाणां वर्णनं सामान्यरूपेण कृतं न तु वैशिष्ट्येन। न च ते दोषान् महत्त्वपूर्णविषयरूपेण व्याचख्युः। तेषां वर्गीकरणमपि न तथा पूर्णतामुपैति। उत्तरवर्तिभिराचार्यैः दोषाणां वर्गीकरणं पदपदांशवाक्यार्थरसादिकमपेक्ष्य कृतम्।

दोषविवेचने दोषाणाञ्च वर्गीकरणे प्रथमः प्रयासो वामनस्यैव वर्तते। अस्मिन् वर्गीकरणे दोषाश्चतुर्विधाः सन्ति - पदगाः, पदार्थगाः, वाक्यगाः वाक्यार्थगाश्च। वामनेनाऽलङ्कारदोषा अपि व्याख्याताः।

मम्मटादिभिराचार्यैर्वामनकृतं वर्गीकरणं स्वल्पांशेन स्वीकृतमपि न पूर्णरूपेणाऽभिमतम्। मम्मटाचार्येण वामनोक्तानामलङ्कारदोषाणां पृथगस्तित्वं नाऽङ्गीकृतम्। तेषामन्तर्भावः पददोषेष्वेव सञ्जायते।

आभरताद् विश्वनाथसमयं यावद् बहुभिर्मनीषिभिराचार्यैर्दोषाः प्रदर्शितास्तेषां स्वरूपाणि च व्याख्यातानि। परन्त्वत्र मम्मटाचार्यस्य विश्वनाथस्य च कविराजस्य दोषविवेचनं पूर्णत्वमुपैति। प्रायशः ताभ्यामेव व्याख्यातं विवेचनं सन्तुलितं विद्यते। अनयोः काव्यशास्त्रकारयोर्दोषविवेचने प्रायशः सर्वेषामेवाऽऽचार्याणां दोषवर्णनानि समाह्रियन्ते। अत्र दोषविवेचनं मम्मटविश्वनाथयोः ग्रन्थयोः साहाय्येन वर्ण्यते।

## २. दोषाणां स्वरूपम्

काव्ये दोषाः कथं सम्भवन्ति, काव्यदोषस्वरूपं कीदृशं भवतीति, विचारणीयोऽयं विषयः प्रथमः। मम्मटेन दोषस्वरूपमेवं निरूपितम् -

मुख्यार्थस्यापकर्षकाणि तत्त्वानि दोषा ह्युच्यन्ते। काव्ये रस एव मुख्योऽर्थः। अतो रसस्याऽपकर्षकाणि तत्त्वानि दोषाः सन्ति। यतो रसस्याभिव्यक्तिः शब्दार्थाश्रयेण सञ्जायते, अतो दोषाः शब्दार्थगता अपि भवन्ति।[3]

---

१. तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन।
स्याद् वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्।। दण्डी : काव्यादर्श १.७

२. अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम्।
शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धिकम्।।
देशकालकलालोकन्यायागमविरोधि च।
इति दोषाः दशैवैते वर्ज्याः काव्येषु सूरिभिः।। काव्यादर्श ३.१२५-१२६

३. मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयत्वाद् वाच्यः।।
उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः। काव्यप्रकाश ७.४९

विश्वनाथेनोद्घाटितं दोषस्वरूपं न मम्मटादधिकं विभिद्यते। तेन प्रोक्तम् -

रसस्यापकर्षकाणि तत्त्वानि दोषाः सन्ति।[1] ते च दोषाः पदगताः पदांशगताः वाक्यगता अर्थगताः रसगताश्च भवन्ति।

अलङ्कारवादिना जयदेवेन दोषाणां स्थितिः शब्देऽर्थे च स्वीकृता। तेन दोषलक्षणमेवं विहितम् -

दोषः सो भवति यो मनः समुद्वेजयति काव्यस्य च रामणीयकं हिनस्ति। दोषोऽयं शब्देऽर्थे चाऽवतिष्ठते।[2]

दोषस्वरूपनिर्णयप्रसङ्गे तेषां नित्यत्वमनित्यत्वञ्चाऽपि विचारणीयम्। दोषाः द्विविधाः प्रकीर्त्यन्ते - नित्यदोषा अनित्यदोषाश्च।

रसाभिव्यक्तिमपेक्ष्य विभाजनमेतदाचार्यैर्विहितम्। केचन दोषाः सर्वास्वस्थासु दोषाः भवन्ति। ते नित्यदोषाः। यथा, च्युतसंस्कृत्यादयो दोषाः सन्ति। परन्तु केचन दोषा अनित्या अपि सन्ति। ते केषाञ्चिद् रसानामभिव्यक्तिप्रसङ्गे दोषाः वर्तन्ते, परमन्यरसानामभिव्यक्तिकाले ते न दोषा, अपितु गुणा एव संलक्ष्यन्ते। यथा, श्रुतिकटुत्वादयो दोषाः। श्रुतिकटुत्वं शृङ्गाररसप्रसङ्गे तु दोषः, परं रौद्रदिरसप्रसङ्गे गुण एव।[3] विषयोऽयमग्रे विस्तरेण वक्ष्यते।

### ३. दोषाणां वर्गीकरणं लक्षणानि च

दोषं परिभाषमाणेन मम्मटाचार्येण त्रिविधाः दोषाः प्रकीर्तिताः - रसदोषाः, पददोषा अर्थदोषाश्च। तदनन्तरं पददोषा अपि त्रिविधाः प्रोक्ताः - पददोषाः, पदांशदोषाः वाक्यदोषाश्च। एवञ्च मम्मटोक्ताः दोषाः पञ्चसु वर्गेषु विभक्ताः -

पददोषाः, पदांशदोषाः, वाक्यदोषा अर्थदोषाः रसदोषाश्च।

विश्वनाथः, साक्षादेव दोषान् पञ्चसु वर्गेसु विबभाज[4] - पददोषाः, पदांशदोषाः, वाक्यदोषाः, अर्थदोषाः रसदोषाश्च।

अलङ्कारदोषाः पदगताः दोषा सन्तीति प्रतिपादयद्भिरप्याचार्यैस्ते पृथग् वर्णिताः। अतोऽस्मिन् प्रकरणे दोषाणां वर्णनं षट्सु वर्गेषु कीर्तितम्। ते च सन्ति -

पददोषाः, पदांशदोषाः, वाक्यदोषाः, अर्थदोषाः, रसदोषा अलङ्कारदोषाश्च।

---

१. रसापकर्षकाः दोषाः। साहित्यदर्पण ७.१

२. स्याच्चेतो विशता येन साक्षता रमणीयता।
शब्देऽर्थे न कृतोन्मेषं दोषमुद्घोषयन्ति तम्।। चन्द्रालोक २.१

३. श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः।। ध्वन्यालोक २.११

४. ................ ते पुनः पञ्चधा मताः।
पदे तदंशे वाक्येऽर्थे सम्भवन्ति रसेऽपि यत्।। साहित्यदर्पण ७.१

(i) पददोषाः -

मम्मटाचार्येण[1] विश्वनाथेन[2] च पददोषाणां षोडश भेदाः प्रकाशिताः। तेषाञ्च विवेचनमत्र क्रमशः प्रदर्श्यते -

(१) श्रुतिकटु -

कठोरवर्णविन्यासात् कर्णयोः कटुत्वेन प्रतीयमाने पदे श्रुतिकटुदोषः सम्पद्यते।

(२) च्युतसंस्कृति -

व्याकरणनियमहीने प्रयुज्यमाने पदे च्युतसंस्कृतिदोषो भवति।

(३) अप्रयुक्तम् -

व्याकरणादिनियमशुद्धमपि पदं यदा कविरप्रचलितार्थं बोधयितुं प्रयुनक्ति तदा अप्रयुक्तदोषो निगद्यते।

(४) असमर्थम् -

अभीष्टार्थवाचकमपि पदं यदि प्रसङ्गविशेषे स्वाभीष्टमर्थं प्रतिपादयितुमसमर्थं भवति, तदा तत्पदमसमर्थदोषयुतं भवति।

(५) निहतार्थम् -

कस्यचित् पदस्य द्वावर्थौ भवतः। एकोऽर्थस्तु प्रसिद्धोऽपरश्चाऽर्थोऽप्रसिद्धः। यदि तत्पदमप्रसिद्धेऽर्थे प्रयुज्यते, तदा तत्र निहतार्थदोषो विद्यते।

(६) अनुचितार्थम् -

यदि कस्मादपि पदादनुचितार्थस्य प्रतीतिर्भवति, तदा तत्पदमनुचितार्थदोषयुतमस्ति।

---

१. दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम्।
निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम्।।
सन्दिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम्।
अविमृष्टविधेयांशं विरुद्धमतिकृत् समासगतमेव।। काव्यप्रकाश ७.५०-५१

२. दुःश्रवत्रिविधाऽश्लीलानुचितार्थाप्रयुक्तताः।
ग्राम्याप्रतीतसन्दिग्धनेयार्थनिहतार्थताः।।
अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता।
अविमृष्टविधेयांशभावश्च पदवाक्ययोः।।
दोषाः केचित् भवन्त्येषु पदांशेऽपि पदे पदे।
निरर्थकासमर्थकत्वं च्युतसंस्कारता तथा। साहित्यदर्पण ७.२-४

(७) निरर्थकम् -

केवलं पदपूर्त्यै प्रयुक्तं कमप्यर्थविशेषमप्रतिपादयत् पदं निरर्थकदोषयुतं वर्तते।

(८) अवाचकम् -

यदि पदं कञ्चित्तथाविधमर्थं बोधयितुं प्रयुज्यते, यत् कोशग्रन्थेषु तदर्थबोधकं न विद्यते, तदा तत्पदमवाचकदोषयुतं निगद्यते।

(९) अश्लीलम् -

अश्लीलत्वदोषस्त्रिधा भवति -

(अ) व्रीडाव्यञ्जकः

(ब) जुगुप्साव्यञ्जकः

(स) अमङ्गलव्यञ्जकः

अनुचितव्रीडाभिव्यञ्जने, अनुचितजुगुप्सावबोधने, अनुचितामङ्गलप्रतीतौ चाऽश्लीलत्व-दोषः सञ्जायते।

(१०) सन्दिग्धम् -

यदि कस्यचित् पदत्य द्वयोरर्थयोः सङ्गतिर्भवति, सन्देहश्च तत्र प्रवर्तते, कस्मिन्नर्थे पदस्य प्रयोगः कृतः, तदा सन्दिग्धदोषोः विद्यते।

(११) अप्रतीतम् -

केवलं शास्त्रेषु प्रयुक्ते पारिभाषिकपदे प्रयुज्यमानेऽप्रतीतत्वदोषो निगद्यते।

(१२) ग्राम्यम् -

ग्राम्यजनैरेव प्रयुक्तस्य शिष्टजनैरप्रयुज्यमानस्य पदस्य प्रयोगे सति ग्राम्यदोषो सञ्जायते।

(१३) नेयार्थम् -

तथाविधस्य पदस्य प्रयोगे, यत्र बलाल्लक्षणयाऽभीष्टार्थस्य सङ्गतिः क्रियते, परं न तत्र रूढा लक्षणा, नाऽपि च प्रयोजनवती लक्षणा सङ्गता भवति, नेयार्थदोषो भवति।

(१४) क्लिष्टम् -

प्रयुज्यमानात् पदादभीष्टस्यार्थस्य प्रतीतौ क्लिष्टायां सत्यां किल्ष्टदोषो निगद्यते।

(१५) अविमृष्टविधेयांशः -

यत्र वाक्यस्य विधेयांशः प्राधान्येन न निर्दिश्यते, अप्रधानत्वेन चाऽवतिष्ठते, तत्राऽविमृष्टविधेयांशो दोषो भवति।

(१६) विरुद्धमतिकृत् -

यस्मिन् पदप्रयोगे विवक्षितार्थविरुद्धार्थप्रतीतिर्भवति, तत्पदं विरुद्धमतिकृद्दोषयुतमस्ति।

अत्र षोडशभेदेषु दोषेषु क्लिष्टाविमृष्टविधेयांशविरुद्धमतिकृद्दोषाः केवलं समासगताः भवन्ति। समासाभावे न ते पददोषा अपितु वाक्यदोषाः प्रोच्यन्ते।

**(ii) पदांशदोषाः -**

उपरिलिखितेषु पदेषु केचन पदांशदोषा अपि भवन्ति।[१] विश्वनाथेन पञ्च पदांशदोषाः प्रोक्ताः -

**दुःश्रवनिहतार्थावाचकाश्लीलनेयार्थाः।**

परं मम्मटाचार्यः सप्त पदांशदोषान् व्याजहार -

**श्रुतिकटुनिहतार्थनिरर्थकावाचकाश्लीलसन्दिग्धनेयार्थाः।**

पदांशदोषाणामेतेषां स्वरूपादिकं पददोषतुल्यमेवाऽवगन्तव्यम्।

**(iii) वाक्यदोषाः -**

वाक्यदोषाः द्विविधाः सन्ति। केचन वाक्यदोषास्त एव सन्ति, ये पददोषेषु प्रोक्ताः परं केचन वाक्यदोषाः वाक्येष्वेव भवन्ति। पूर्वं प्रोक्तेषु षोडशसु पददोषेषु च्युतसंस्कृतिमसमर्थं निरर्थकमपास्य शेषास्त्रयोदश दोषाः वाक्येष्वपि भवन्ति।[२] एषां त्रयोदशवाक्यदोषाणां स्वरूपादिकानि पददोषतुल्यानि सन्ति।

त्रयोदश वाक्यदोषाः निम्नप्रकारेण सन्ति -

(१) श्रुतिकटु (२) अप्रयुक्तम् (३) निहतार्थम् (४) अनुचितार्थम् (५) अवाचकम् (६) त्रिधाऽश्लीलम् (७) सन्दिग्धम् (८) अप्रतीतम् (९) ग्राम्यम् (१०) नेयार्थम् (११) क्लिष्टम् (१२) अविमृष्टविधेयांशम् (१३) विरुद्धमतिकृम् -

एतदतिरिक्तमेकविंशतिवाक्यदोषाणामन्येषामपि वर्णनं मम्मटाचार्येण कृतं, ये केवलं वाक्येषु भवन्ति।[३] विश्वनाथेन त्रयोविंशतिः वाक्यदोषाः प्रोक्ताः।[४] वाक्यदोषाणां स्वरूपाण्यत्र वर्ण्यन्ते -

---

१. पदस्यांशेऽपि केचन। काव्यप्रकाश ७.५२

२. अपास्य च्युतसंस्कारमसमर्थं निरर्थकम्।
वाक्येऽपि दोषाः सन्त्येते ...............।। काव्यप्रकाश ७.५२

३. प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धि हतवृत्तम्
न्यूनाधिकथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम्।।
अर्धान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम्।
अपदस्थपदसमासं सङ्कीर्णं गर्भितं प्रसिद्धिहतम्।।
भग्नप्रक्रममक्रमममतपरार्थञ्च वाक्यमेव तथा।। काव्यप्रकाश ७.५३--५५

४. वर्णानां प्रतिकूलत्वं लुप्ताहतविसर्गति।
अधिकन्यूनकथितपदताहतवृत्तताः।।
पतत्प्रकर्षता सन्धौ विश्लेषाश्लीलकष्टताः।
अर्धान्तरैकपदता समाप्तपुनरात्तता।।
अभवन्मतसम्बन्धाक्रमामतपरार्थता।
वाच्यस्याऽनभिधानञ्च भग्नप्रक्रमता तथा।।
त्यागः प्रसिद्धेरस्थाने न्यासः पदसमासयोः।
सङ्कीर्णता गर्भितता दोषाः स्युर्वाक्यमात्रगाः।। साहित्यदर्पण ७.५-८

(१) **प्रतिकूलवर्णम् -**

प्रकृतरसाभिव्यञ्जकप्रतिकूलवर्णयुतं वाक्यं प्रतिकूलवर्णदोषयुतं भवति।

(२) **उपहतविसर्गम् -**

यस्मिन् वाक्ये विसर्गाः बाहुल्येनोत्वं प्राप्यन्ते, तद्वाक्यमुपहतविसर्गदोषयुतं कथ्यते।

(३) **लुप्तविसर्गम् -**

यस्मिन् वाक्ये विसर्गाः बाहुल्येन लुप्यन्ते, तद्वाक्यं लुप्तविसर्गदोषयुतं भवति।

(४) **विसन्धिः -**

सन्धिवैरूप्येण युतं वाक्यं विसन्धिदोषयुतं भवति। वैरूप्यमिदं त्रिविधं सम्भवति -

(अ) विश्लेषः - सन्धिकरणीये स्थानेऽसन्धिः विसन्धिदोषः।

(ब) अश्लीलत्वम् - सन्धिहेतोरश्लीलत्वप्रतीतिरश्लीलत्वदोषः।

(स) कष्टत्वम् - सन्धिहेतोः श्रुतिकटुदोषोत्पत्तिः कष्टत्वदोषः।

(५) **हतवृत्तम् -**

छन्दसो हननं निन्दास्पदत्वं हतवृत्तदोषः। दोषोऽप्ययं त्रिविधो भवति -

(अ) छन्दःशास्त्रविधानेन शुद्धस्याऽपि वृत्तस्य अप्रीतिजननम्

(ब) छन्दसो रसाऽननुकूलत्वम्

(स) पादान्ते लघुवर्णस्य गुरुभावस्याऽभावः।

(६) **न्यूनपदम् -**

अभीप्सितार्थवाचकस्य कस्यचित् पदस्याऽभावो यत्र तथाविधं वाक्यं न्यूनपददोषयुतं भवति।

(७) **अधिकपदम् -**

अभीप्सितवाचकेषु पदेषु सकलेषु सत्स्वप्यनावश्यकपदप्रयोगे वाक्यमधिकपददोषयुतं कथ्यते।

(८) **कथितपदम् -**

एकस्यैव पदस्य वाक्येऽनावश्यकरूपेण पुनः पुनः प्रयोगः कथितपददोषः। तादृशं वाक्यं कथितपददोषयुतं भवति।

(९) **पतत्प्रकर्षम् -**

आरम्भादन्तपर्यन्तं चमत्कारस्यानिबर्हणं चमत्कृतेरुत्तरोत्तरं हीनत्वं पतत्प्रकर्षो दोषः। तथाविधं वाक्यं पतत्प्रकर्षदोषयुतमुच्यते।

**(१०) समाप्तपुनरात्तम् -**

विवक्षितार्थद्योतकवाक्ये पूर्णताङ्गतेऽपि पुनः किञ्चित्कथने वाक्यं समाप्तपुनरात्तदोषयुतं जायते।

**(११) अर्धान्तरैकवाचकम् -**

वाक्यस्य प्रथमार्धो यदोत्तरार्धगतपदमाकांक्षते, उत्तरार्धो वा पूर्वार्धगतपदमाकांक्षते, तदा वाक्यमर्धान्तरैकवाचकदोषयुतं सञ्जायते।

**(१२) अभवन्मतयोगम् -**

अभीष्टपरस्परसम्बन्धरहितं वाक्यमभवन्मतयोगदोषोपहितमभिधीयते।

**(१३) अनभिहितवाच्यम् -**

अवश्यकथनीयपदकथनरहितवाक्यमनभिहितवाच्यदोषयुतमुच्यते।

**(१४) अपदस्थपदम् -**

उचितस्थाने पदमप्रयुज्याऽयोग्यस्थाने प्रयोजनमपदस्थपददोषो विद्यते। तथाविधं वाक्यमपदस्थपददोषयुतं भवति।

**(१५) अपदस्थसमासम् -**

उचितस्थाने समासमप्रयुज्याऽन्यस्थाने समासप्रयोगोऽपदस्थपदसमासदोषः। तथाविधं वाक्यमपदस्थसमासदोषयुतमभिधीयते।

**(१६) सङ्कीर्णम् -**

एकस्य वाक्यस्य पदानामन्यवाक्यस्य पदेषु प्रवेशः सङ्कीर्णदोषः। तथाविधं वाक्यं सङ्कीर्णदोषोपहितमुच्यते।

**(१७) गर्भितम् -**

एकस्य वाक्यस्याऽन्यस्मिन् वाक्ये प्रवेशो यत्र तद्वाक्यं गर्भितदोषयुतं कथ्यते।

**(१८) प्रसिद्धिहतम् -**

कविप्रसिद्धीनां सामान्येनोल्लंघनं तद्विरुद्धकथनं वा प्रसिद्धिहतदोषः। तथाविधं वाक्यं प्रसिद्धिहतं विद्यते।

**(१९) भग्नप्रक्रमम् -**

विशेषहेतुं विना प्रकरणस्य क्रमस्य वा भङ्गो भग्नप्रक्रमदोषः। तथाविधं वाक्यं भग्नप्रक्रमदोषोपहितं जायते।

(२०) अक्रमम् -

पदानां क्रमस्याऽभावः। वाक्ये पदानि येन क्रमेणोपस्थानीयानि, तस्मिन् क्रमेऽविद्यमाने तद् वाक्यमक्रमदोषयुतं ज्ञातव्यम्।

(२१) अमतपरार्थम् -

यदि वाक्याद् द्वावर्थौ प्रतीयेते, द्वितीयस्याऽर्थस्य प्रकृतार्थविरुद्धत्वममतपरार्थदोषः। तादृशं वाक्यममतपरार्थदोषोपहितमवधेयम्।

एवं मम्मटाचार्य एकविंशतिवाक्यदोषानुद्घाटयामास। एते दोषाः केवलं वाक्ये सम्भवन्ति। विश्वनाथेन त्रयोविंशतिदोषाः प्रोक्ताः। मम्मटेन विसन्धिरेको दोषः प्रोक्तः। तस्य त्रयो भेदाः भवन्ति - विश्लेषोऽश्लीलत्वं कष्टत्वञ्च। पंर विश्वनाथेनैतेषां त्रयाणां दोषाणां गणना पृथक् कृता। अतस्तेन परिगणितानां दोषाणां संख्या त्रयोविंशतिः सञ्जाता।

(iv) अर्थदोषाः -

काव्ये वाच्यार्थे सदोषे सत्यर्थदोषाः भवन्ति। मम्मटेन[१] विश्वनाथेन[२] च त्रयोविंशत्यर्थदोषाः निरूपिताः। मम्मटनिरूपितानां दोषाणामिह स्वरूपं प्रस्तूयते -

(१) अपुष्टः -

मुख्यार्थस्याऽनुपकारकस्याऽर्थस्य योजनमपुष्टो दोषो भवति।

(२) कष्टः -

अर्थे दुरूहे कष्टबोध्ये सहृदयैरप्यगम्ये कष्टो दोषः सम्भाव्यते।

---

१. अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः।
सन्दिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च।।
अनवीकृतसनियमानियमविशेषाविशेषपरिवृत्ताः।
साकांक्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धश्च।।
विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः।। काव्यप्रकाश ७.५५-५७

२. अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टताः।
अनवीकृतनिर्हेतुप्रकाशितविरुद्धताः।।
सन्दिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते।
साकांक्षता सहचरभिन्नताऽस्थानयुक्तता।।
अविशेषे विशेषश्चानियमे नियमस्तथा।
तयोर्विपर्ययौ विध्यनुवादयुक्तते तथा।।
निर्मुक्तपुनरुक्तत्वमर्थदोषाः प्रकीर्तिताः।। साहित्यदर्पण ७.९-१२

**(३) व्याहतः -**

प्रथमं वस्तुन उत्कर्षं प्रदर्श्य तदनन्तरमपकर्षप्रतिपादनम् अपकर्षं वा प्रदर्श्योत्कर्ष-प्रतिपादनं व्याहतो दोषो वर्तते।

**(४) पुनरुक्तः -**

प्रतिपादितस्याऽर्थस्य प्रकारान्तरेण पुनः प्रतिपादनं पुनरुक्तदोषोऽभिधीयते।

**(५) दुष्क्रमः -**

वस्तूनां वर्णनक्रम औचित्यस्याभावो दुष्क्रमदोषो वर्तते।

**(६) ग्राम्यः -**

ग्राम्यजनसदृशवार्तानां कथनं ग्राम्यदोषो जायते।

**(७) सन्दिग्धः -**

द्वयोरर्थयोः प्रतीतौ, कोऽर्थः समुचित इति सन्देहे सति सन्दिग्धदोषोऽभिधीयते।

**(८) निर्हेतुः -**

हेतुरहितस्याऽर्थस्य प्रस्तवने निर्हेतुदोषोऽभिजायते।

**(९) प्रसिद्धिविरुद्धः -**

लोकप्रसिद्धिविरुद्धस्य कविप्रसिद्धिविरुद्धस्य वाऽर्थस्य प्रस्तुतिः प्रसिद्धिविरुद्धदोषो-ऽभिधीयते।

**(१०) विद्याविरुद्धः -**

शास्त्रविरुद्धस्याऽर्थस्य प्रस्तुतिर्विद्याविरुद्धो दोषो सम्मतः।

**(११) अनवीकृतः -**

एकस्यैव पदस्य नवीनतां वा चमत्कृतिं वा पुनः प्रस्तुतीकरणमनवीकृतदोषो भवति।

**(१२) सनियमपरिवृत्तः -**

नियमबन्धनेऽनावश्यकेऽपि नियमसीमाबन्धनं सनियमपरिवृत्तदोषो गण्यते।

**(१३) अनियमपरिवृत्तः -**

नियमबन्धनेऽनिवार्ये सत्यपि नियमसीमाबन्धनाऽभावोऽनियमपरिवृत्तदोषो भवति।

**(१४) विशेषपरिवृत्तः -**

विशेषवाचकपदप्रयोगेऽनिवार्ये सत्यपि सामान्यवाचकपदप्रयोगो विशेषपरिवृत्तदोषः कथ्यते।

(१५) **अविशेषपरिवृत्तः -**

सामान्यवाचकपदप्रयोगेऽनिवार्ये सत्यपि विशेषवाचकपदप्रयोगोऽविशेषपरिवृत्तदोषो गण्यते।

(१६) **साकांक्षः -**

तथाविधस्य पदस्य प्रयोगाऽभावो येनाऽर्थविशेषस्याऽऽकांक्षाऽवतिष्ठते, स साकांक्षदोषो वर्तते।

(१७) **अपदयुक्तः -**

अस्थानेऽनुचितस्थाने वाऽनावश्यकपदसंयोजनमपदयुक्तदोषो गण्यते।

(१८) **सहचरभिन्नः -**

विशिष्टपदार्थैः सह तत्प्रकृतिविरुद्धपदार्थानां वर्णनम्, उत्कृष्टपदार्थैः सह निकृष्टपदार्थानां वर्णनम्, निकृष्टपदार्थैर्वा सह उत्कृष्टपदार्थानां वर्णनं सहचरभिन्नो दोषो भवति।

(१९) **प्रकाशितविरुद्धः -**

कवेरभीष्टार्थविरुद्धस्य प्रतीतिः प्रकाशितविरुद्धो दोषोऽस्ति।

(२०) **विध्ययुक्तः -**

विधेयार्थस्य समुचितप्रकारेण न प्रस्तुतिर्विध्ययुक्तो दोषो गण्यते।

(२१) **अनुवादयुक्तः -**

उद्देश्यस्य कथने तदनुकूलप्रतीतिप्रतिपादकार्थस्याऽप्रस्तुतिरनुवादयुक्तदोषो भवति।

(२२) **त्यक्तपुनःस्वीकृतः -**

वाक्यस्य निराकांक्षरूपेण पूर्णतां गतेऽपि केनाऽप्युपायेन तस्यार्थस्य पुनः प्रस्तुतिस्त्यक्तपुनः-स्वीकृतदोषो विद्यते।

(२३) **अश्लीलः -**

व्रीडाजुगुप्साऽमङ्गलसूचकानामर्थानां प्रतीतिरश्लीलदोषो गण्यते।

(v) **रसदोषाः -**

रसदोषाणां प्रथमं निरूपणमानन्दवर्धनेन ध्वन्यालोके विहितम्।[1] परं तन्निरूपणं न तथा व्यवस्थितं सुसन्धितं वाऽवर्तत। मम्मटस्य काव्यप्रकाशे विश्वनाथस्य च साहित्यदर्पणे रसदोषविवेचनं व्यवस्थिततरं संधिततरं सुस्पष्टं तर्कसङ्गतञ्च विद्यते।

---

१. विरोधिरससम्बन्धिविभावादिपरिग्रहः।
विस्तरेणाऽन्वितस्याऽपि वस्तुनोऽन्यस्य वर्णनम्।।
अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम्।
परिपोषं गतस्याऽपि पौनःपुन्येन दीपनम्।
रसस्य स्याद् विरोधाय वृत्त्यनौचित्यमेव च।। ध्वन्यालोक ३.१८-१९

मम्मटस्त्रयोदश रसदोषान् स्वकारिकासु न्यरूपयत्।[१] परं विश्वनाथेन ततोऽधिकाः दोषाः प्रोक्ताः। विश्वनाथेन चतुर्दश रसदोषाः प्रकीर्तिताः।[२] तस्य चतुर्दशो रसदोषोऽर्थानौचित्यं वर्तते। ध्वन्यालोककारस्त्वनौचित्यं रसदोषाणां (रसभङ्गस्य) ह्येकमात्रकारणमाह।[३] मम्मटस्त्रयोदश रसदोषानुद्धृत्य ध्वन्यालोककारस्य अर्थानौचित्यसम्बन्धिनीमुक्तिञ्च प्रस्तूयाऽनौचित्यमेव रसभङ्गहेतुत्वेन जगाद।

**रसदोषाणां स्वरूपाण्यत्र निरूप्यन्ते।**

**(१) व्यभिचारिभावानां स्वशब्दवाच्यता -**

निर्वेदग्लानिशङ्कादयो व्यभिचारिभावाः रसाभिव्यक्तौ सहकारिकारणानि भवन्ति। न च ते स्वशब्दवाच्याः प्रयोजनीयाः। अभिव्यङ्ग्या एव ते रसाभिव्यक्तिहेतवो भवन्ति। तेषां स्वशब्दवाच्यत्वं दोष एव।

**(२) रसस्य स्वशब्दवाच्यता -**

काव्ये रसोऽभिव्यङ्ग्यो भवति। रसपदस्य शृङ्गारादिपदस्य वा कथनं स्वशब्दवाच्यत्वं दोष एव।

**(३) स्थायिभावानां स्वशब्दवाच्यता -**

काव्ये रत्यादयः स्थायिभावा अप्यभिव्यङ्ग्या एव भवन्ति। तेषां स्वशब्दवाच्यत्वं दोषः।

**(४) अनुभावानां कष्टकल्पना -**

रसविशेषस्याऽभिव्यक्तौ, अनुभावोऽयं कस्य रसस्येति निश्चयो यदि न भवेत्, कष्टेन वा भवेत्, तदा तत्राऽनुभावानां कष्टकल्पना दोषः।

---

१. व्यभिचारिरसस्थायिभावानां शब्दवाच्यता।
कष्टकल्पनया व्यक्तिरनुभावविभावयोः।।
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः।
अकाण्डे प्रथनच्छेदावङ्गस्याऽप्यतिविस्तृतिः।।
अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः।
अनङ्गस्याऽभिधानं स्याद् रसे दोषाः स्युरीदृशाः।। काव्यप्रकाश ७.६०-६२

२. रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि।
परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः।।
आक्षेपः कल्पितः कृच्छ्रादनुभावविभावयोः।
अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनः पुनः।।
अङ्गिनोऽननुसन्धानमनङ्गस्य च कीर्तनम्।।
अतिविस्तृतिरङ्गस्य प्रकृतीनां विपर्ययः।
अर्थानौचित्यमन्यच्च दोषाः रसगताः मताः।। साहित्यदर्पण ७.१२-१५

३. अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा।। ध्वन्यालोक (३.१४) वृत्तिः

**(५) विभावानां कष्टकल्पना -**

रसविशेषस्याऽभिव्यक्तौ विभावोऽयं कस्य रसविशेषस्येति निश्चयो कष्टेन यदि कल्प्यते, तदा तत्र विभावानां कष्टकल्पनादोषः।

**(६) प्रतिकूलविभावादिग्रहणम् -**

प्रकृतरसविपरीतानां विभावादीनां वर्णनमपि दोषः।

**(७) पुनः पुनः दीप्तिः -**

रसविशेषस्य प्रसङ्गे पूर्णताङ्गतेऽपि तस्याऽनावश्यकरूपेण पुनःपुनरुद्दीपनं दोषः।

**(८) अकाण्डे प्रथनम् -**

रसविशेषस्याऽभिव्यञ्जनस्याऽनवसरेऽपि तस्यैव रसस्य संयोजनं दोषः।

**(९) अकाण्डे छेदः -**

रसविशेषस्याऽभिव्यञ्जनस्याऽवसरे विद्यमानेऽपि तस्य विच्छेदकरणं दोष एव।

**(१०) अङ्गस्याऽतिविस्तृतिः -**

काव्येऽङ्गभूतस्याऽप्रधानस्य रसस्याऽतिविस्तरेण वर्णनं दोषो, यतोऽनेन प्रधानो रसस्तिरोभूत इव प्रतीयते।

**(११) अङ्गिनोऽननुसन्धानम् -**

अन्यवर्णनेषु तथा प्रसक्तिर्यथा प्रधानरसनिर्वहणमुपेक्षितमिव भवेत् तदङ्गिनो-ऽननुसन्धानम् दोषः।

**(१२) प्रकृतीनां विपर्ययः -**

प्रकृतयः काव्यकथानकपात्राणि दिव्या अदिव्याः दिव्यादिव्याश्च भवन्ति। तथा च वीररौद्रशृङ्गारशान्तरसप्रधानाः धीरोदात्तधीरोद्धतधीरललितधीरशान्ता उत्तमाधममध्यमाश्च नायकाः वर्तन्ते। तत्र प्रकृत्यौचित्यमनुसृत्य तेषां व्यवहाराः वर्णनीयाः। विपर्यये त्वनौचित्यमेव भवति। स च महान् दोषः। देशकालवयोजात्यादीनां वेशव्यवहारादिकमुचितमेव कविभिरुपनि-बद्धव्यम्।

**(१३) अनङ्गस्याऽभिधानम् -**

वर्णनं यदि प्रकृतरसस्योपकारकं तदुत्कर्षसहायकञ्च न भवति, तद्दोष एव।

इति त्रयोदशरसदोषाणां वर्णनं कृत्वा मम्मटोऽर्थानौचित्यरूपं रसदोषमपि व्याचख्यौ। मुख्यरूपेणाऽयमेव रसभङ्गस्य कारणं विद्यते। विश्वनाथोऽर्थानौचित्यं चतुर्दशदोषं प्रोवाच। सोऽप्यत्र वर्ण्यते।

(१४) **अर्थानौचित्यम्** -

देशकालपरम्परादिप्रतिकूलवर्णनमर्थानौचित्यदोषो वर्तते। अनेन रसस्याऽनौचित्यमभिव्यज्यते।

(vi) **अलङ्कारदोषाः** -

प्राचीनैराचार्यैः केषाञ्चनाऽलङ्कारदोषाणां स्वरूपमपि प्रदर्शितम्। तैरुक्तम् -

अलङ्काराणां संयोजने दोषानेतान् प्रति कवयोऽवहिताः भवेयुः। परं मम्मटविश्वनाथादिभिराचार्यैरुद्घोषितम् -

अलङ्कारदोषाणां पृथग्वर्णनमनावश्यकम्, यतस्तेषामन्तर्भावः पूर्वोक्तेषु। दोषेषु सञ्जायते[1]। तथापि तैः केचनाऽलङ्कारदोषाः वर्णिताः। तैरिदमप्युद्घोषितं यदेतेषामलङ्कारदोषाणामन्तर्भावोऽपि पूर्वोक्तेषु दोषेष्वेव सम्भवति। केचनाऽलङ्कारदोषा अत्रोदाहरणरूपेण प्रस्तूयन्ते -

(१) **अनुप्रासदोषाः** -

अनुप्रासालङ्कारे त्रयो दोषाः सम्भवन्ति - प्रसिद्ध्यभावः, वैफल्यं वृत्तिविरोधश्च। एतेषां दोषाणामन्तर्भावः क्रमशः प्रसिद्धिविरुद्धे अपुष्टार्थे प्रतिकूलवर्णे दोषे च भवति।

(२) **यमकदोषाः** -

यमकालङ्कारस्य त्रिषु चरणेषु स्थापनमयुक्तत्वदोषो वर्तते। दोषोऽयमप्रयुक्तदोषेऽन्तर्भवति।

(३) **उपमादोषाः** -

आचार्यैरुपमालङ्कारेऽनेके दोषाः प्रकीर्तिताः -

(क) उपमायामुपमानस्य जातिप्रमाणगतं न्यूनत्वमाधिक्यं वा दोषो वस्तुतोऽनुचितार्थत्वदोषः।

(ख) साधारणधर्मस्थन्यूनत्वमाधिक्यं वा क्रमशोः न्यूनपदत्वाधिकपदत्वं वा दोषः।

(ग) उपमानोपमेययोर्लिङ्गभेदो वचनभेदो वा दोषो भग्नप्रक्रमदोषेऽन्तर्भवति।

(घ) उपमायां कालभेदपुरुषभेदविधिभेदादिदोषाणामन्तर्भावोऽपि भग्नप्रक्रमदोषे भवति।

(ङ) उपमायामसादृश्यासम्भवदोषौ ह्यनुचितार्थदोष एव वर्तते।

(४) **उत्प्रेक्षादोषाः** -

उत्प्रेक्षायां निम्नलिखितौ द्वौ दोषौ सम्भवतः -

---

१. (क) एषां दोषा यथायोगं सम्भवन्तोऽपि केचन।
उक्तेष्वन्तर्भवन्तीति न पृथक् प्रतिपादिताः।। काव्यप्रकाश १०.१४२
(ख) एभ्यः पृथगलङ्कारदोषाणां नैव सम्भवः। साहित्यदर्पण ७.१५

(क) उत्प्रेक्षावाचकाः शब्दाः मन्ये, शङ्के, ध्रुवं, प्राय इवेत्यादयः विद्यन्ते। यथादिभिः पदैस्तस्याः वाचकत्वं वस्तुतोऽवाचकत्वदोषः।

(ख) उत्प्रेक्षायामुत्प्रेक्षितस्य निर्विषयत्वदोषोऽनुचितार्थदोषोऽवगन्तव्यः।

**(५) समासोक्तिदोषाः -**

समासोक्त्यलङ्कारे साधारणविशेषणपदैरुपमाने प्रतीयमानेऽपि तस्य शब्दैरुपादानेऽनुपादेयत्वदोषः। दोषोऽसौ पुनरुक्तत्वदोषेऽन्तर्भवति।

**(६) अप्रस्तुतप्रशंसादोषाः -**

अप्रस्तुतप्रशंसायां साधारणविशेषसामर्थ्याद् व्यञ्जनयोपमेस्य प्रतीतिर्भवति। पुनस्तस्य शब्दैरुपादानमनुपादेयत्वं दोषः। दोषोऽयं पुनः पुनरुक्तत्वदोषेऽन्तर्भवति।

एवं प्राचीनैराचार्यैर्येऽलङ्कारदोषाः निरूपिताः मम्मटादिभिराचार्यैस्ते दोषाः पूर्वोक्तेषु पदादिदोषेष्वन्तर्भाविताः। अतोऽलङ्कारदोषाणां पृथग्विवेचनं ते न समुचितं मेनिरे। परं दिशानिर्देशरूपेण केचनाऽलङ्कारदोषास्तैः समुदाहृताः।

## ४. दोषाणां नित्यत्वमनित्यत्वञ्च केषाञ्चिद्दोषाणाञ्च दोषाभावत्वम्

प्राचीनाचार्यैर्दोषेषु नित्यत्वानित्यत्वव्यवस्था प्रतिपादिता। नित्यदोषाः सदा दोषा भवन्ति, परमनित्यदोषाः कासुचिदवस्थासु न दोषाः भवन्ति। अस्य विषयस्य संक्षेपेण निर्देशः करणीयः। अत्र केचन बिन्दवोऽधो निर्दिश्यन्ते -

**(i) सर्वेषां दोषाणां निर्दोषत्वम् -**

यदि कविर्वक्ता वा कस्यचिद्दोषयुतपदस्य प्रयोगमनुकरणरूपेण करोति, तदाऽसौ प्रयोगो न दुष्यति।[1]

**(ii) दुःश्रवत्वदोषस्याऽदोषत्वम् -**

कोपावेशविवशस्य वक्तुर्वचने वर्ण्यविषयस्यौद्धत्वे रौद्रादिकठोररसाभिव्यञ्जनप्रसङ्गे च दुःश्रवत्वं (श्रुतिकटु) दोषो न दोषो भवति। स तु गुण एवाऽवगन्तव्यः।[2]

**(iii) अश्लीलदोषस्याऽदोषत्वम् -**

कामरसादिगोष्ठीष्वश्लीलत्वदोषोऽपि गुणत्वमापद्यते।[3]

---

१. (क) अनुकरणे तु सर्वेषाम् (निर्दोषिता)। काव्यप्रकाश ७.५९
(ख) अनुकारे च सर्वेषां दोषाणां नैव दोषता। साहित्यदर्पण ७.३१

२. वक्तरि क्रोधसंयुक्ते तथा वाक्ये समुद्धते।
रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत्।। साहित्यदर्पण ७.१६

३. सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः। साहित्यदर्पण ७.१७

(iv) **अप्रयुक्तदोषस्याऽदोषत्वम् -**

श्लेषादिपरिस्थितिष्वप्रयुक्तदोषोऽपि न दोषत्वं वहति।[१]

(v) **निहतार्थदोषस्याऽदोषत्वम् -**

श्लेषाद्यवस्थासु निहतार्थदोषोऽपि न दोषो भवति।[२]

(vi) **अप्रतीतदोषस्याऽदोषत्वम् -**

वक्तरि श्रोतरि च विषयज्ञानसम्पन्ने वक्तुश्च स्वयं परामर्शकरणेऽप्रतीतदोषोऽपि न दोषः। स तु गुण एव।[३]

(vii) **कथितपदस्याऽदोषत्वम् -**

निम्नपरिस्थितिषु कथितपददोषोऽपि न दोषो गण्यते[४] -

(क) उद्देश्यस्य निर्देशकरणे
(ख) विषादे
(ग) विस्मये
(घ) क्रोधे
(ङ) दैन्ये
(च) लाटानुप्रासे
(घ) अनुकम्पायाम्
(ज) कस्यापि प्रसादने
(झ) अर्थान्तरसङ्क्रमितवाच्ये
(ञ) हर्षे
(ट) विषयनिश्चये

(viii) **सन्दिग्धदोषस्याऽदोषत्वम् -**

वाक्यस्य व्याजस्तुतौ पर्यवसायित्वे सन्दिग्धदोषोऽपि गुणो भवति।[५]

---

१. स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते। साहित्यदर्पण ७.१७

२. वही

३. गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद् वक्तृवाच्ययोः।
स्वयं वाऽपि परामर्शे ........................।। साहित्यदर्पण ७.१८

४. ......................, कथितं च पदं पुनः।
विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि।
दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने।।
अर्थान्तरसङ्क्रमितवाच्ये हर्षेऽवधारणे।। साहित्यदर्पण ७.१८-२०

५. सन्दिग्धत्वं तथा व्याजस्तुतिपर्यवसायि चेत्। साहित्यदर्पण ७.२०

**(ix) कष्टत्वदोषस्याऽदोषत्वम् -**

वक्तृश्रोतारौ यदि व्याकरण ज्ञानाभिमानिनौ स्यातां कष्टत्वं दुःश्रवत्वं वा दोषस्तदा न दोषो भवति।[1]

**(x) ग्राम्यत्वदोषस्याऽदोषत्वम् -**

अधमपुरुषोक्तिषु ग्राम्यत्वदोषोऽपि दोषो न मन्तव्यः।[2]

**(xi) निर्हेतुदोषस्याऽदोषत्वम् -**

प्रसिद्धेऽर्थे निर्हेतुदोषो न दोषः।[3]

**(xii) ख्यातविरुद्धदोषस्याऽदोषत्वम् -**

कविसमयप्रसिद्धिप्रसङ्गे ख्यातविरुद्धदोषोऽपि न दोषः। गुण एवाऽसौ।[4] कविप्रसिद्धीनां विस्तरेण वर्णनं ग्रन्थेष्वनेकेषु प्राचीनेषु समुपलभ्यते।[5] स च कविसमयश्चतुर्विधो भवति।[6]

---

१. वैयाकरणमुख्ये तु प्रतिपाद्येऽथ वक्तरि।
कष्टत्वं दुःश्रवत्वं वा ............।। साहित्यदर्पण ७.२२

२. ग्राम्यत्वमधमोक्तिषु। साहित्यदर्पण ७.२१

३. निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति। साहित्यदर्पण ७.२२

४. कवीनां समये ख्याते गुणः स्यादविरुद्धता। साहित्यदर्पण ७.२२

५. (क) मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्योः
रक्तौ च क्रोधरागौ सरिदुदधिगतं पङ्कजेन्दीवरादि।
तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसंघो
ज्योत्स्ना पेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः।।
पादाघातादशोको विकसति बकुलं योषितामास्यमद्यै-
र्यूनामङ्गेषु हारा स्फुटति च हृदयं विप्रयोगस्य तापैः।
मौर्वी रोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतो-
र्भिन्नं स्यादस्य बाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वत्।।
अहन्यम्भोजं निशायां विकसति कुमुदं चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां नाऽप्यशोके फलं स्यात्।
न स्याज्जाती वसन्ते न च कुसुमफले गन्धसारद्रुमाणा-
मित्याद्युन्नेयमन्यत् कविसमयगतं सत्कवीनां प्रबन्धे।। साहित्यदर्पण ७.२३-२५

(ख) स्त्रीणां स्पर्शात् प्रियङ्गुर्विकसति बकुलः सीधुगण्डूषसेकात्
पादाघातादशोकस्तिलककुरबकौ वीक्षणालिङ्गनाभ्याम्।
मन्दारो नर्मवाक्यात् पटुमधुहसनाच्चम्पको वक्त्रवाता-
च्चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात् कर्णिकारः।। कश्चित् कविः

६. सतोऽपि चानिबन्धः स्यादसतोऽपि निबन्धनम्।
नियमेन निबन्धश्च विकल्पेन निबन्धनम्।। कश्चित् कविः।

**(xiii) पुनरुक्तदोषस्याऽदोषत्वम् -**

कतिपयानां पदानां पुनः प्रयोगे न पुनरुक्तदोषत्वमवगम्यते। यथा - ज्यादिपदेभ्यो धनुर्ज्यादिपदप्रयोगो न दुष्यते।[१]

**(xiv) न्यूनपददोषस्याऽदोषत्वम् -**

आनन्दमग्नानां शोकातुराणां वा जनानामुक्तिषु न्यूनपददोषो न दोषो भवति। स तु गुण एव।[२]

**(xv) अधिकपददोषस्याऽदोषत्वम् -**

अनेकेषु स्थलेष्वधिकपददोषोऽपि न दोषो भवति। गुण एवाऽसौ जायते।[३]

**(xvi) समाप्तपुनरात्तदोषस्याऽदोषत्वम् -**

समाप्तपुनरात्तदोषो न क्वचिद्दोषो न च क्वचिद् गुणो भवति।[४]

**(xvii) गर्भितदोषस्याऽदोषत्वम् -**

गर्भितदोषोऽपि क्वचित् गुणो भवति।[५]

**(xviii) पतत्प्रकर्षदोषस्याऽदोषत्वम् -**

पतत्प्रकर्षदोषोऽपि क्वचित् क्वचिद् गुणो भवति।[६]

## ५. रसगतदोषाणामनित्यत्वं दोषपरिहारश्च

अत्र ये रसदोषाः प्रकीर्तितास्ते सर्वास्ववस्थासु दोषाः न सम्मताः। कासुचित् परिस्थितिष्वदोषत्वमापन्नाः गुणा एव भवन्ति। अनौचित्यं रसभङ्गस्य मुख्यं कारणमिति पूर्वमेव प्रतिपादितम्। यदि विशिष्टास्ववस्थासु रसभङ्गो न जायते, रसदोषस्थितिरपि न भवति। निम्नलिखितास्ववस्थासु रसदोषेषु दोषत्वं नैवाऽवतिष्ठते -

(i) विभावैरनुभावैश्च कस्यचिद् व्यभिचारिभावस्य यद्यौचित्येन (विशदरूपेण) प्रतीतिर्न भवेत् व्यभिचारिणः स्वशब्दवाच्यत्वेऽपि न तत्र रसदोषः।[७]

---

१. धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः।
आरुढत्वादिबोधाय प्रयोक्तव्याः स्थिता अमी।। साहित्यदर्पण ७.२६

२. उक्तावानन्दमग्नादेः स्यान्न्यूनपदतागुणः। साहित्यदर्पण ७.२७

३. गुणाः क्वचिदप्यधिकं पदम्। साहित्यदर्पण ७.२७

४. समाप्तपुनरात्तत्वं न दोषो न गुणः क्वचित्। साहित्यदर्पण ७.२८

५. गर्भितत्वं गुणः क्वचित्। साहित्यदर्पण ७.२८

६. पतत्प्रकर्षता तथा। साहित्यदर्पण ७.२८

७. क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः।
अनुभावविभावाभ्यां रचना यत्र नोचिता।। साहित्यदर्पण ७.२९

(ii) प्रकृतरसविरुद्धं विभावानुभावव्यभिचारिभावानां बाध्यत्वेन कथनं न दोषः, गुण एव तत् ।[१]

(iii) अधोलिखितास्ववस्थासु परस्परविरोधिनां रसानामभिव्यञ्जने न दोषः[२] -

(क) प्रकृतरसविरोधिनो रसस्य स्मर्यमाणत्वेन वर्णनम् ।

(ख) विरोधिनो रसस्य साम्यत्वेन विवक्षा ।

(ग) कस्यचिदन्यस्य रसस्याऽङ्गिभावं प्राप्तस्य विरोधिरसानामङ्गभावेन वर्णनम् ।

(iv) अधोलिखितैरुपायैः रसविरोधरूपदोषाणां परिहारो जायते[३] -

(क) आश्रयैक्ये विरोधिनो रसाः भिन्नाश्रयत्वेन व्यवस्थापनीयाः ।

(ख) नैरन्तर्येण विरोधिनो रसा अविरोधिना रसेन व्यवहिताः कर्तव्याः ।

मम्मटादिभिराचार्यैः प्रोक्तम् -

काव्यदोषाः न नियताः । न कोऽपि दोषः सर्वास्ववस्थासु दोषत्वेनाऽवतिष्ठते । कविः स्वप्रतिभासामर्थ्येन दोषानपि गुणत्वेन व्यवस्थापयितुं क्षमते ।

मम्मटाचार्येण विश्वनाथेन चाऽनेकेषां दोषाणां तथाविधं रूपं वर्णितं, यथा दोषा अपि गुणत्वेन परिवर्तन्ते । अनेकास्ववस्थासु दोषा अदोषत्वमापन्नाः गुणाः भवन्ति । विश्वनाथेनोक्तम् -

मनीषिण औचित्यापेक्षया दोषेष्वप्यदोषत्वं वा गुणत्वं वा दोषगुणत्वं वाऽऽपादयन्ति ।[४]

---

१. सन्न्यायदिर्विरुद्धस्य बाध्यत्वेन गुणो वचः । साहित्यदर्पण ७.३०

२. स्मर्यमाणो विरुद्धोऽपि साम्येनाऽथ विवक्षितः ।
अङ्गिन्यङ्गत्वमापन्नौ तौ न दुष्टौ परस्परम् ।। काव्यप्रकाश ७.६५

३. आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ।
रसान्तरेणान्तरितो नैरन्तर्येण यो रसः ।। काव्यप्रकाश ७.६४

४. अन्येषामपि दोषाणामित्यौचित्यान्मनीषिभिः ।
अदोषता च गुणता ज्ञेया चाऽनुभयात्मता ।। साहित्यदर्पण ७.३२

## परिशिष्टम् - १

### ग्रन्थे वर्णिताः प्राचीनप्रसिद्धाचार्यास्तेषां कृतयः प्रसिद्धटीकाश्च

१. अग्निपुराणकारः — पृ० ६४ - ७०

अग्निपुराणम्

२. अप्पयो दीक्षितः — पृ० ३१० - ३१६

(क) वेदान्तविषयकग्रन्थाः

(१) श्रीपरिमलम्

(२) श्रीसिद्धान्तलेशसंग्रहः

(३) वेदान्तनक्षत्रावली

(४) मध्वतन्त्रमुखदर्शनम्

(५) मध्वमतविध्वंसनम्

(६) न्यायरक्षामणिः

(ख) रामानुजमतविषयकग्रन्थाः

(७) नखमयूखमालिका

(८) नखमयूखमालिकाव्याख्या

(९) श्रीवेदान्तदेशिकविरचितयादवाभ्युदयव्याख्या

(१०) श्रीवेदान्तदेशिकविरचितपादुकासहस्रव्याख्या

(११) वरदराजस्तवः

(ग) माध्वसिद्धान्तानुसारिग्रन्थाः

(१२) न्यायरत्नावली

(१३) न्यायरत्नावलीव्याख्या

(घ) पूर्वमीमांसाविषयकग्रन्थाः

(१४) नक्षत्रवादावली

(१५) विधिरसायनम्

(ङ) व्याकरणविषयकग्रन्थाः

(१६) नक्षत्रवादावली

(च)भक्तिविषयकग्रन्थाः

(१७) शिखरिणीमाला
(१८) शिवतत्त्वविवेकः
(१९) ब्रह्मतर्कस्तवः
(२०) आदित्यस्तवरत्नम्
(२१) आदित्यस्तवरत्नव्याख्या
(२२) शिवाद्वैतनिर्णयः
(२३) शिवध्यानपद्धतिः
(२४) पञ्चरत्नम्
(२५) पञ्चरत्नव्याख्या
(२६) आत्मार्पणम्
(२७) मानसोल्लासः
(२८) शिवकर्णामृतम्
(२९) आनन्दलहरी
(३०) चन्द्रिका
(३१) शिवमहिमकालिकास्तुति
(३२) रत्नत्रयपरीक्षा
(३३) रत्नत्रयपरीक्षाव्याख्या
(३४) अरुणाचलेश्वरस्तुतिः
(३५) अपीतकुचाम्बास्तवः
(३६) चन्द्रकलास्तवः
(३७) शिवार्कमणिदीपिका
(३८) शिवपूजाविधिः
(३९) नयमणिमाला
(४०) नयमणिमालाव्याख्या

(छ) अलङ्कारविषयकग्रन्थाः

(४१) वृत्तिवार्तिकम्
(४२) चित्रमीमांसा
(४३) कुवलयानन्दः

(ज) अलङ्कारग्रन्थटीकाः

(i) कुवलयानन्दस्य टीकाः

(१) अलङ्कारचन्द्रिका - वैद्यनाथ तत्सत्
(२) अलङ्कारसुधा - नागेशभट्ट

(३) कारिकादीपिका - आशाधर भट्ट
(४) रसिकरञ्जनी - गङ्गाधर
(५) विषयपदव्याख्याषट्पदानन्द - नागेश भट्ट
(६) काव्यमञ्जरी - न्यायवागीश भट्टाचार्य
(७) मथुरानाथकृतटीका
(८) रामचरण तर्कवागीशकृतटीका
(९) प्रभाटीका - गोपीनाथ
(१०) लघ्वलङ्कारचन्द्रिकाटीका - देवीदत्त

(ii) चित्रमीमांसाटीका :
(१) गूढार्थप्रकाशिका - बालकृष्ण पायगुण्ड
(२) दोषधिक्कारः - अतिरात्रयज्वन्
(३) सुधाटीका - परानन्द
(४) चित्रालोकटीका

३. अभिनवगुप्तः - पृ० १६९ -१७४
(१) ध्वन्यालोकलोचनम्
(२) भरतनाट्यशास्त्र - अभिनवभारती
(३) काव्यकौतुकविवरणम्
(४) तन्त्रालोकः
(५) मालिनीविजयवार्तिकम्
(६) परात्रिंशिकाविवरणम्
(७) तन्त्रालोकसारः
(८) ईश्वरप्रत्यभिज्ञाविमर्शिणी
(९) ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिणी
(१०) स्तोत्राणि -
भैरवस्तोत्रम्, कर्मस्तोत्रम्, बोधपञ्चाशिकेत्यादीनि

४. अमरचन्द्रः पृ० २४१ -२४२
(१) काव्यकल्पलता
(२) काव्यकल्पलतावृत्तिः
(३) जिनेन्द्रचरितम्
(४) बालभारतम्
(५) स्यादिशब्दसमुच्चयः
(६) छन्दोरत्नावली
(७) काव्यकल्पलतापरिमलम्

(८) अलङ्कारप्रबोधः

५. आनन्दवर्धनः - पृ० १३६ - १५१

(१) ध्वन्यालोकः
(२) देवीशतकम्
(३) विषमबाणलीला
(४) अर्जुनचरितम्
(५) तत्त्वालोकः
(६) प्रमाणविनिश्चयटीकायाष्टीका

ध्वन्यालोकस्य प्राचीनटीकाः

(१) लोचनटीका - अभिनवगुप्तः
(२) चन्द्रिकाटीका
(३) कौमुदीटीका - उदयोत्तुङ्ग
(४) रत्नाकर व्याख्या

६. आशाधरो भट्टः पृ० ३१७ - ३२१

(१) कोविदानन्दः
(२) अद्वैतवेदान्तम्
(३) प्रभापटलम्
(४) त्रिवेणिका
(५) कारिकादीपिका (कुवलयानन्दस्य टीका)

७. उद्भटः - पृ० १११ - ११८

(१) अलङ्कारसारसङ्ग्रहः
(२) भामहविवरणम्
(३) कुमारसम्भवम्
(४) भरतनाट्यशास्त्र - टीका

अलङ्कारसारसङ्ग्रहटीकाः

(१) अलङ्कारसारसङ्ग्रहः - लघुविवृतिः प्रतिहारेन्दुराजः
(२) उद्भटविवेकः - राजानकतिलकः

८. कर्णपूरः - पृ० ३०७ - ३०८

(१) अलङ्कारकौस्तुभम्
(२) चैतन्यचन्द्रोदयम्

अलङ्कारकौस्तुभटीकाः

(१) सारबोधिनी - विश्वनाथ चक्रवर्ती
(२) दीधितिप्रकाशिका - वृन्दावन

(३) लोकनाथचक्रवर्तिकृतटीका

९. कविचन्द्रः - पृ० ३०९

(१) काव्यचन्द्रिका

(२) सारलहरी

(३) धातुचन्द्रिका

१०. कुन्तकः - पृ०१७५ -१७९

(१) वक्रोक्तिजीवितम्

११. केशवमिश्रः - पृ०२७४-२७६

(१) अलङ्कारशेखरः

१२. क्षेमेन्द्रः - पृ०१९७ -२०२

(१) अमृतरङ्गकाव्यम्

(२) अवसरसारः

(३) औचित्यविचारचर्चा

(४) कनकजानकी

(५) कविकण्ठाभरणम्

(६) कविविलासः

(७) कविकर्णिका

(८) चतुर्वर्गसङ्ग्रहः

(९) चारुचर्या

(१०) चित्रभारतनाटकम्

(११) दर्पदलनम्

(१२) दशावतारचरितम्

(१३) देशोपदेशः

(१४) नीतिकल्पतरुः

(१५) नीतिलता

(१६) पद्यकादम्बरी

(१७) पवनपञ्चाशिका

(१८) बृहत्कथामञ्जरी

(१९) बोधिसत्त्वावदानकल्पलता

(२०) भारतमञ्जरी

(२१) मुक्तावली

(२२) मुनिमतमीमांसा

(२३) रामायणमञ्जरी

(२४) ललितरत्नमाला
(२५) लावण्यवती
(२६) वात्सायनसूत्रकारः
(२७) विनयवल्ली
(२८) व्यासाष्टकम्
(२९) शशिवंशमहाकाव्यम्
(३०) समयमातृका
(३१) सुवृत्ततिलकम्
(३२) सेव्यसेवकोपदेशः
(३३) नृपावलिः

१३. जगन्नाथः पृ०३२२ - ३३१

(१) अमृतलहरी (यमुनालहरी)
(२) लक्ष्मीलहरी
(३) करुणालहरी
(४) पीयूषलहरी (गङ्गालहरी)
(५) जगदाभरणम्
(६) आसफविलासः
(७) भामिनीविलासः
(८) प्राणाभरणम्
(९) यमुनावर्णनचम्पूः
(१०) चित्रमीमांसाखण्डनम्
(११) मनोरमाकुचमर्दनम्
(१२) रसगङ्गाधरः

रसगङ्गाधरस्य प्राचीनटीकाः

(१) विषमपदीटीका
(२) गुरुमर्मप्रकाशिकाटीका - नागेश भट्ट

१४. जयदेवः - पृ०२५४ -२५८

(१) चन्द्रालोकः
(२) अनर्घराघवम्
(३) भाष्यालोकः

चन्द्रालोकस्य टीकाः

(१) शारदागम - प्रद्योतन भट्ट
(२) रमा - वैद्यनाथ पायगुण्ड

(३) राकागम टीका सुधागमटीका वा विश्वेश्वरभट्ट (गागाभट्ट)
(४) प्रदीपिका
(५) शारदशर्वरी
(६) वाजचन्द्रकृतटीका

१५. दण्डी - पृ० ९५ - ११०

(१) काव्यादर्श:
(२) दशकुमारचरितम्
(३) अवन्तिसुन्दरीकथा

काव्यादर्शटीका: -

(१) तरुणवाचस्पतिकृतटीका
(२) हृदयङ्गमाटीका
(३) मार्जनटीका - हरिनाथ
(४) काव्यतत्त्वविवेककौमुदी - कृष्णकिङ्कर
(५) श्रुतानुपालिनी - वादिजंघाल
(६) वैमल्यविधायिनी मल्लिनाथ
(७) विजयानन्दकृतटीका
(८) यामुनकृतटीका
(९) रत्नश्रीटीका - रत्नश्रीज्ञान

१६. देवेश्वर: - पृ०२४३

(१) कविकल्पलता

कविकल्पलताटीका:

(१) देवेश्वरकृतटीका
(२) सार्वभौमटीका - वेचाराम
(३) रामगोपालकविरत्नकृतटीका
(४) बालबोधिका - सूर्यकवि
(५) विवेकटीका

१७. धनञ्जय: पृ० २४४ - २४८

(१)दशरूपकम्

दशरूपकटीका: -

(१) अवलोकटीका - धनिक
(२) नृसिंहभट्टकृतटीका
(३) देवपाणिकृतटीका
(४) कुरविरामकृतटीका

(५) बहुमिश्रकृतटीका

१८. धर्मकीर्तिः पृ० ६२ - ६३

१९. नरसिंहकविः पृ० ३३९ -३४२

(१) नञ्जराजभूषणम्

२०. नागेशभट्टः - पृ० ३३२ - ३३३

(१) गुरुमर्मप्रकाशिकाटीका (रसगङ्गाधरस्य)

(२) लघु - उद्योतटीका बृहदुद्योतटीका - गोविन्द-
ठक्करकृतकाव्यप्रकाशसङ्केतटीकायाष्टीका

(३) उदाहरणदीपिका (काव्यमप्रकाशनिहि-
तोदाहरणानां स्पष्टीकरणम्)

(४) भानुदत्तकृतरसतरङ्गिण्याष्टीका

(५) भानुदत्तकृतरसमञ्जर्याष्टीका

(६) अलङ्कारसुधाविषयपदव्याख्यान

(७) षट्पदानन्द

२१. भट्टतौतः - पृ०१५४ - १५६

(१) काव्यकौतुकम्

टीका

(१) अभिनवगुप्तकृता विवरणटीका

२२. भट्टनायकः - पृ०१५७ - १६०

(१) सहृदयदर्पणं हृदयदर्पणं वा

२३. भट्टिः पृ० ७६ - ७९

(१) भट्टिकाव्यम्

भट्टिकाव्यस्य टीकाः

(१) जयमङ्गलाटीका

(२) मल्लिनाथकृतटीका

२४. भरतो मुनिः - पृ० ३६ - ५८

(१) नाट्यशास्त्रम्

नाट्यशास्त्रस्य टीकाः

(१) उद्भटः

(२) भट्टलोल्लटः

(३) शङ्कुकः

(४) भट्टनायकः

(५) राहुलः

(६) भट्टयन्त्र:
(७) अभिनवगुप्तकृतनवभारतीटीका
(८) कीर्तिधर:
(९) हर्षवार्तिकम्
(१०) मातृगुप्त:

२५. भानुदत्त: पृ०२८९ -२९५

(१) रसतरङ्गिणी
(२) रसमञ्जरी
(३) अलङ्कारतिलकम्
(४) गीतगौरीपति:
(५) कुमारभार्गवीयम्
(६) रसपारिजातम्

रसमञ्जर्याष्टीका:

(१) व्यङ्ग्यार्थकौमुदी - अनन्तभट्ट:
(२) प्रकाशटीका - नागेशभट्ट:
(३) परिमलटीका - शेषचिन्तामणि:
(४) विकासटीका - गोपालाचार्य:
(५) रसिकरञ्जनी - द्रविडगोपालभट्ट:
(६) समञ्जसा (व्यङ्ग्यार्थकौमुदी)- विश्वेश्वर: पाण्डेय:
(७) आमोदटीका - रङ्गशालिन्
(८) व्यङ्ग्यार्थदीपिका - आनन्दशर्मा
(९) भानुभावप्रकाशिनी - महादेव
(१०) रसिकरञ्जनटीका - व्रजराजदीक्षित
(११) रसमञ्जरीस्थूलतात्पर्य टीका

रसतरङ्गिण्याष्टीका: -

(१) गङ्गारामजडिकृतटीका
(२) दिनकरकृतटीका
(३) अयोध्याप्रसादकृतटीका
(४) नूतनतरि - भगवद्भट्ट
(५) रसोदधिटीका - गणेश:
(६) सेतुटीका - जीवराज:
(७) रसिकरञ्जनी - गोपालभट्ट:
(८) रसिकरञ्जनी - वेणीदत्तभट्टाचार्य:

(९) रसोदधिटीका - महादेवः
(१०) साहित्यसुधाटीका - नेमिसाहः
(११) नागेशभट्टकृतटीका

२६. भामहः - पृ० ८० - ९४

(१) काव्यालङ्कारः

काव्यालङ्कारस्य टीका

(१) भामहविवरणम् - उद्भट

२७. भोजराजः पृ० १८६ - १९६

(१) सरस्वतीकण्ठाभरणम् (काव्यशास्त्र)
(२) शृङ्गारप्रकाशः
(३) आदित्यप्रतापसिद्धान्तः
(४) आयुर्वेदसर्वस्वम्
(५) चम्पूरामायणम्
(६) चाणक्यनीतिः
(७) चारुचर्या
(८) तत्त्वप्रकाशः
(९) नाममालिका
(१०) भुजबलभीमः
(११) युक्तिकल्पतरुः
(१२) राजमार्तण्डः (पातञ्जलयोगसूत्रटीका)
(१३) राजमार्तण्डः (विदान्तदर्शनविषयकः)
(१४) राजमार्तण्डः (ज्योतिषविषयकः)
(१५) राजमृगाङ्कः
(१६) विद्याविनोदकाव्यम्
(१७) विद्वज्जनबल्लभः
(१८) विश्रान्तविद्याविनोदः
(१९) व्यवहारसमुच्चयः
(२०) शब्दानुशासनम्
(२१) शालिहोत्रम्
(२२) शिवतत्त्वरत्नकलिका
(२३) शृङ्गारमञ्जरी
(२४) समराङ्गणसूत्रधारः
(२५) सरस्वतीकण्ठाभरणम् (व्याकरण)

(२६) सिद्धान्तसङ्ग्रहः
(२७) सुभाषितप्रबन्धः

सरस्वतीकण्ठाभरणटीका

(१) रत्नदर्पणम् - रत्नेश्वरः

२८. **मम्मटः** - पृ० २०३ - २१६

(१) काव्यप्रकाशः
(२) शब्दव्यापारविचारः

काव्यप्रकाशटीकाः

(१) सङ्केतटीका - रुय्यकः (रुचकः)
(२) सङ्केतटीका - माणिक्यचन्द्रः
(३) चित्तानुरञ्जनी - नरहरिः
(४) दीपिका - जयन्तभट्टः
(५) काव्यादर्शः - सोमेश्वरः
(६) वाचस्पतिकृतटीका
(७) दीपिका - चण्डीदास
(८) काव्यप्रकाशदर्पणम् - विश्वनाथः
(९) काव्यप्रदीपः - गोविन्दठक्करः
(१०) सुबोधिनी (सुधासागरः) - भीमसेनः
(११) सुबोधिनी - वामनाचार्यझलकीकरः
(१२) विस्तारिका - परमानन्दभट्टः
(१३) निदर्शना - आनन्दकविः
(१४) सारबोधिनी - श्रीवत्सलाञ्छनः
(१५) विस्तृताटीका - कमलाकरभट्टः
(१६) नरसिंहमनीषा - नरसिंहः
(१७) आदर्शटीका - महेश्वरः
(१८) तात्पर्यविवृतिटीका - महेशचन्द्रः
(१९) लघूद्योत-बृहदुद्योतटीका - नागेशभट्टः
(२०) उदाहरणदीपिका - नागेशभट्टः
(२१) उदाहरणचन्द्रिका - वैद्यनाथः
(२२) अवचूरिटीका - राघवः
(२३) श्रीधरकृतटीका
(२४) देवनाथकृतटीका
(२५) साहित्यदीपिका - भास्करः

(२६) सुबुद्धिमिश्रकृतटीका
(२७) पद्मनाभकृतटीका
(२८) अच्युतकृतटीका
(२९) रत्नपाणिकृतटीका
(३०) काव्यदर्पणम् - भट्टाचार्यः
(३१) तत्त्वबोधिनीटीका
(३२) कौमुदीटीका
(३३) आलोकटीका
(३४) प्रकाशतिलकटीका - जयराम
(३५) यशोधरकृतटीकाः
(३६) विद्यासागरकृतटीका
(३७) मुरारिमिश्रकृतटीका
(३८) पक्षधरकृतटीका
(३९) मणिसारटीका
(४०) रहस्यप्रकाशिकाटीका - सूरिः
(४१) रहस्यनिबन्धटीका - भास्करः
(४२) काव्यप्रकाशभावार्थटीका - रामकृष्णः

२९. **महिमभट्टः** - पृ० १८० -१८५
(१) व्यक्तिविवेकः
(२) तत्त्वोक्तिकोषः
व्यक्तिविवेकस्य टीकाः
(१) रुय्यककृतटीका
(२) तिलकरत्नाटीका

३०. **मुकुलभट्टः** - पृ०१५२-१५३
(१) अभिधामातृकावृत्तिः

३१. **मेधाविन्** पृ० ५९ - ६१

३२. **राजशेखरः** - पृ० १६१ -१६८
(१) काव्यमीमांसा
(२) विद्धसालभञ्जिका
(३) कर्पूरमञ्जरी
(४) बालरामायणम्
(५) बालभारतम्

३३. रामचन्द्र-गुणचन्द्रौ पृ०२४९ -२५३

(१) नाट्यदर्पणम्
(२) कौमुदीमित्रानन्दप्रकरणम्
(३) नलविलासनाटकम्
(४) निर्भयभीमव्यायोग:
(५) मल्लिकामकरन्दप्रकरणम्
(६) यादवाभ्युदयनाटकम्
(७) रघुविलासनाटकम्
(८) राघवाभ्युदयनाटकम्
(९) रोहिणीमृगाङ्कप्रकरणम्
(१०) वनमालानाटिका
(११) सत्यहरिश्चन्द्रनाटकम्
(१२) सुधाकलशनाटकम्

३४. रुद्रट: - पृ०१२५ -१३२

(१) काव्यालङ्कार:

काव्यालङ्कारस्य टीका:

(१) रुद्रटालङ्कार: - बल्लभदेव:
(२) नेमिसाधुकृतटीका
(३) आशाधरभट्टकृतटीका

३५. रुद्रभट्ट: पृ०१३३ -१३५

(१) शृङ्गारतिलकम्

शृङ्गारतिलकटीका

(१) रसतरङ्गिणी - गोपालभट्ट:

३६. रुय्यक: - पृ०२१७ -२२९

(१) अलङ्कारसर्वस्वम्
(२) काव्यप्रकाशसङ्केतटीका
(३) सहृदयलीला
(४) नाटकमीमांसा
(५) व्यक्तिविवेकविचार:
(६) हर्षचरितवार्तिकम्
(७) साहित्यमीमांसा
(८) श्रीकण्ठस्तव:
(९) अलङ्कारानुसारिणी

(१०) अलङ्कारमञ्जरी
(११) अलङ्कारवार्तिकम्

अलङ्कारसर्वस्वटीकाः

(१) राजानकालककृतटीका
(२) विवरणटीका - समुद्रबन्धः
(३) सञ्जीवनीटीका - विद्याधरचक्रवर्ती
(४) अलङ्कारविमर्शिणी - जयरथः

३७. **रूपगोस्वामी** पृ०३०२ -३०६

(क) काव्यशास्त्रग्रन्थाः -

(१) नाटकचन्द्रिका
(२) भक्तिरसामृतसिन्धुः
(३) उज्ज्वलनीलमणिः

(ख) रूपकाणि -

(४) दानकेलिकौमुदी
(५) ललितमाघवम्
(६) विदग्धमाधवम्

(ग) खण्डकाव्यानि -

(७) हंसदूतम्
(८) उद्धवसन्देशः

(घ) अन्यकृतयः -

(९) लघुभागवतामृतम्
(१०) पद्यावली
(११) स्तवमाला
(१२) उत्कलिकामञ्जरी
(१३) आनन्दमहोदधिः
(१४) मथुरामहिमा
(१५) गोविन्दविरुदावली
(१६) मुकुन्दमुक्तावली
(१७) अष्टादशछन्दांसि
(१८) गौराङ्गस्तवकल्पतरुः
(१९) कुसुमस्तबकः
(२०) यमुनास्तोत्रम्

(२१) चतुःपुष्पाञ्जलिस्तवः

उज्ज्वलनीलमणिटीकाः

(१) लोचनारोचनी - जीवगोस्वामी

(२) आनन्दचन्द्रिका - विश्वनाथ चक्रवर्ती

३८. वाग्भटः प्रथमः पृ०२३२ -२३४

(१) वाग्भटालङ्कारः (काव्यालङ्कारः)

वाग्भटालङ्कारटीकाः -

(१) जिनवर्धमानसूरिकृतटीका

(२) सिंहदेवगणिकृतटीका

(३) समासान्वयटिप्पणी - क्षेमहंसगणि

(४) विवरणटीका - गणेशः

(५) राजहंसोपाध्यायकृतटीका

(६) समयसुन्दरकृतटीका

(७) अवचूरिटीका

(८) कृष्णशर्मकृतटीका

(९) ज्ञानप्रमोदिका

(१०) वामनाचार्यज्ञानप्रमोदगणिकृतटीका

३९. वाग्भटो द्वितीयः - पृ०२३५ -२३६

(१) काव्यानुशासनम्

काव्यानुशासनस्य टीका

(१) शृङ्गारतिलकवृत्तिः

४०. वामनः - पृ० ११९ -१२४

(१) काव्यालङ्कारसूत्रम्

(२) काव्यालङ्कारसूत्रवृत्तिः

काव्यालङ्कारसूत्रवृत्तिटीकाः

(१) सहदेवकृतटीका

(२) कामधेनुटीका - योगेन्द्रतिप्पभूपालः

(३) भट्टगोपालकृतटीका

(४) महेश्वरकृतटीका

४१. विद्याधरः - पृ०२५९ - २६१

(१) एकावली

(२) केलिरहस्यम्

एकावलीटीका
(१) सरलाटीका - मल्लिनाथ
४२. विद्यानाथः पृ०२६२ - २६३
(१) प्रतापरुद्रयशोभषणम्
प्रतापरुद्रयशोभूषणटीकाः
(१) रत्नापणटीका - कुमारस्वामी
(२) रत्नशाणटीका
४३. विष्णुधर्मोत्तरपुराणकारः पृ० ७१ - ७५
(१) विष्णुधर्मोत्तरपुराणम्
४४. विश्वनाथः - पृ०२६४ -२७३
(१) साहित्यदर्पणम्
(२) काव्यप्रकाशदर्पणम्
(३) राघवविलासमहाकाव्यम्
(४) कुवलयाश्वचरितम्
(५) प्रभावतीपरिणयः
(६) चन्द्रकलानाटिका
(७) प्रशस्तिरत्नावली
(८) नसिंहविजयम्
साहित्यदर्पणस्य टीकाः -
(१) लोचनटीका - अनन्तदासः
(२) विवृतिटीका - रामचरणस्तर्कवागीशः
(३) टिप्पणीटीका - मथुरानाथशुक्लः
(४) प्रभाटीका - गोपीनाथः
(५) विज्ञप्रिया - महेश्वरभट्टः
४५. विश्वनाथदेवः - पृ०२९६ - ३०१
(१) साहित्यसुधाबिन्दुः
(२) मृगाङ्कलेखा
(३) चित्रमीमांसा
४६. विश्वेश्वरकविचन्द्रः पृ०२८३ -२८८
(१) आनन्दकोशप्रहसनम्
(२) करुणाकन्दलम्
(३) अभिरामराघवम्
(४) वीरनादः

(५) वीरभद्रविजृम्भणम्
(६) महेश्वरानन्दम्
(७) अमोघराघवम्
(८) कन्दर्पसम्भवम्
(९) रत्नपञ्चालिका
(१०) चमत्कारचन्द्रिका

४७. विश्वेश्वरपाण्डेयः - पृ०३३४ - ३३८

(१) अलङ्कारकौस्तुभम्
(२) अलङ्कारमुक्तावली
(३) आर्यासप्तशती
(४) कवीन्द्रकण्ठाभरणम्
(५) काव्यतिलकम्
(६) काव्यरत्नम्
(७) तर्ककुतूहलम्
(८) दीधितिप्रवेशः
(९) नवमालिका
(१०) नैषधीयकाव्यटीका
(११) मन्दारमञ्जरी
(१२) रसचन्द्रिका
(१३) रसमञ्जरी
(१४) रोमावलीशतकम्
(१५) लक्ष्मीविलासः
(१६) वक्षौजःशतकम्
(१७) शृङ्गारमञ्जरीसट्टकम्
(१८) षड्तुवर्णनम्
(१९) सिद्धान्तसुधानिधिः (वैयाकरणसिद्धान्तसुधानिधिः)
(२०) होलिकाशतकम्
(२१) केचन तान्त्रिकग्रन्थाः

४८. शारदातनयः पृ०२७७ - २७९

(१) भावप्रकाशनम्

४९. सागरनन्दी पृ० २३० - २३१

(१) नाटकलक्षणरत्नकोषः

५०. **सिंहभूपालः** पृ० २८० -२८२

(१) रसार्णवसुधाकरः

(२) सङ्गीतसुधाकरः

५१. **हेमचन्द्रः** - पृ०२३७ -२४०

(१) काव्यानुशासनम्

(२) अनेकार्थकोषः

(३) अनेकार्थशेषः

(४) अभिधानचूडामणिः

(५) अलङ्कारचूडामणिः

(६) उणादिसूत्रवृत्तिः

(७) छन्दोऽनुशासनम्

(८) धातुपारायणम्

(९) छन्दोऽनुशासनवृत्तिः

(१०) देशीनाममाला

(११) द्व्याश्रयकाव्यम्

(१२) धातुपाठः

(१३) धातुमाला

(१४) नाममाला

(१५) नाममालाशेषः

(१६) निघण्टुशेषः

(१७) प्रमाणमीमांसा

(१८) बालभाषाव्याकरणसूत्रवृत्तिः

(१९) बलाबलसूत्रबृहद्वृत्तिः

(२०) योगशास्त्रम्

(२१) विभ्रमसूत्रम्

(२२) लिङ्गानुशासनम्

(२३) शेषसङ्ग्रहः

(२४) शेषसङ्ग्रहसारोद्धारः

काव्यानुशासनटीकाः

(१) अलङ्कारचूडामणिः

(२) विवेकटीका

# परिशिष्टम् - २
## उद्धृतानां कारिकाणामनुक्रमणिका


अकवित्वमधर्माय ५५१
अकाण्ड एव विच्छित्ति ५६१
अक्षरं परमं ब्रह्म ६६
अगूढमपरस्याङ्गम् ५३५
अङ्क ईहामृगो वीथी ५३१
अङ्गिनोऽननुसन्धानम् ५६२
अङ्गीकरोति यः काव्यम् २५५, ३८६, ३९२, ५२७
अच्युताय नमस्तस्मै ४५३
अणहिल्लपाटलं पुरम् २३२
अतः प्रेमविलासाः स्युः ३०६
अतथास्थितानपि तथा ५१२
अतस्तज्जन्यता तेषाम् ३६६
अतादृशि गुणीभूत ४३४, ४७०, ५३४
अतिलोकैः पदार्थैः स्याद् ३६९
अत्रोपवर्षवर्षाविह १६८
अथ भोजनृपादीनाम् १९५
अथवा नेदृशी चर्चा १३८
अदेशजो हि वेशस्तु ४४७
अधमप्रकृतिश्चापि २६८
अनभ्रवृष्टिः श्रवणामृतस्य ४२२
अनवीकृतः सनियमानियम ५५९
अनित्यवादिना शेष ३६०
अनुकरणे तु सर्वेषाम् ५६५
अनुकारे च सर्वेषाम् ५६५
अनुग्रहाय लोकानाम् १५२
अनुप्रासः सयमको ७१
अनुभावो विकारस्तु ३५९
अनुमानेऽन्तर्भावं सर्वस्यैव १८०, ४७६, ४८८
अनौचित्यादृते नान्यद् १४५, २०२, ४५०, ४५८, ४६०, ४७८, ४९५, ५६२
अन्यथोक्तगुणेष्वस्या ५४७
अन्यापोहेन शब्दोऽर्थ ८३
अन्येषामपि दोषाणाम् ५६९
अपरं तु गुणीभूतव्यङ्ग्यम् ४७१
अपारे काव्यसंसारे ६६, ५१२,
अपार्थं व्यर्थमेकार्थम् ८९, ५५२
अपास्य च्युतसंस्कार ५५६
अपि भवति वचश्च्युतं गुणेभ्यो ५४०
अपुष्टदुष्क्रमग्राम्य ५५९
अप्पयदीक्षितमीमांसा ३१५
अभवन्मतसम्बन्धा ५५६
अभिधा भावना चान्या १५८
अभिधावृत्तिगम्यार्थो २८६
अभिधेयाविनाभूत ३३
अभिमानाद् रतिः सा च ६६
अमुं कुवलयानन्दमकरोद् ३१०
अयुक्तिमद् यथा दूता ८५
अर्थविशेषवशाद्वा सम्प्येऽपि ४४८
अर्थव्यक्तिः स्वभावोक्त्य ५४७
अर्थव्यक्तेः प्रसादाख्य ५४७
अर्थस्य विशिष्टत्वं शब्दः १८३
अर्थस्यालङ्कारा वास्तवमौ ४०२
अर्थस्वभावस्योक्तिर्वा ४३६

अर्थानौचित्यमन्यच्च ५६२
अर्थालङ्काररहिता ३८९
अर्थोऽपुष्टः कष्टो व्याहत ५५९
अर्थो वाच्यश्च लक्ष्यश्च २८६
अर्थौचित्यवता सूक्ति ४५५
अर्थान्तरैकवाचकमभवन् ५५६
अलङ्कारकृतां येषाम् १७८, ४३६
अलङ्कारशिरोरत्नम् ४०२
अलङ्कारान्तराणाम ४०१, ४२७
अलङ्कारास्त्वलङ्कारा २००, ४४५, ४५४
अलङ्कारो न रसवद् ४३७
अलङ्कृतिरलङ्कार्य ३९०
अल्पाविधानेनाऽर्थो यः ४१
अवर्णात् सम्पत्तिर्भवति ९२
अवलोक्य मतानि सत्कवीनाम् २२, २७, ८२
अवाचकत्वं क्लिष्टत्वं ५५४
अवाचो व्यक्तवाचश्च ८५
अविशेषे विशेषश्चा ५५९
अवृत्तिरल्पवृत्तिर्वा ५४९
अव्युत्पत्तिकृतो दोषः ४४८, ५१०
अष्टादश प्राहुः रूपकाणि ५३१
अष्टौ नाट्ये रसाः स्मृताः २५२
अष्टौ रसाः शृङ्गार ४८
असमासा समासेन ४९३
अस्ति काचिदवस्था सा ४४८
अस्त्यनेको गिरां मार्गः १०५, ४१०
अस्फुटस्फुरितं काव्य १२०, ४२५, ४६४, ४९४
अहन्यम्भोजं निशायां ५६७
अहो साहित्यसौभाग्यम् २८४
आक्षेपः कल्पितः कृच्छ्रा ५६२
आक्षेपोऽर्थान्तरन्यासो ८९
आञ्जसेन स्वभावस्य ४३९, ४५२
आदिः स्वादुषु या परा कवयताम् ४२२
आद्यस्तस्य विकारो यः ६६
आधातुं व्युत्पत्तिम् १८०
आधारकर्मविहिते ३१
आनन्दपुरवास्तव्य २०५
आनन्दवर्धनविवेक १५०
आनन्दः सहजस्तस्य ६६
आलम्बनो नायकादिः ३५८
आश्रयैक्ये विरुद्धो यः ५६९
आहूतो न निवर्तेय ८३
आह्लादकत्वं माधुर्यं ५४८
इति काव्यार्थविवेको योऽयम् १४७
इति नवतितमेऽस्मिन् वत्सरे १७०
इति मंखुको वितने २२४
इति मार्गद्वयं भिन्नम् ४१०
इति यमकविशेषं सम्यगा ४४८
इतिवृत्तवशायाताम् ४५०
इति वैदर्भमार्गस्य ४११, ४२१, ५३८
इत्थं कलाचतुःषष्टि १०१
इत्थं भूम्ना रुचकवचसाम् २२६
इत्यक्लिष्टरसाश्रयोचित ४६५
इत्याद्यशेषमिह वस्तु ८
इत्येष मार्गो विदुषां विभिन्नो २०९
इत्येष विष्णोरवतारमूर्ते १९७
इदमुत्तममतिशयिनि व्यङ्ग्ये २३, २३३, ४३३

इष्टनाशार्दनिष्टाप्तौ ३६८
इह कालिदासमेण्ठावत्र १६८
इह त्वष्टरसायत्ता ४०५
इह वैदर्भी रीतिः पाञ्चाली ४१२
ईहामृगश्च विज्ञेयो ५३०
उक्तावानन्दमग्नादेः ५६८
उचितं प्राहुराचार्याः २००, ४५३, ४७९
उचितस्थानविन्यासा ४४५, ४५४, ४५९, ४७९,
उच्यमानस्य शब्देन ५३९
उत्तमपात्रगतत्वे ३७४
उत्तमप्रकृतिर्वीर ३६८
उत्तमाधममध्यानाम् ५०१
उदात्तः शक्तिमान् रामो ८३
उद्दीपनविभावास्ते ३५९
उद्दीपनादितच्चेष्टा ३७०
उद्धृत्योद्धृत्य सारम् २४४
उद्बुद्धैः कारणैः स्वैः स्वैः ३५९
उद्यानकान्ताचन्द्राद्या १५५
उपकुर्वन्ति तं सन्तम् ३९१, ३९२, ५२६, ५४२
उपनायकसंस्थायाम् ३७४
उपमा कालिदासस्य ९५
उपमा दीपकञ्चैव ७१
उपमानाधिकत्वञ्च ५९
उपमानोपमेयत्वे २५७
उपमा यत्र सादृश्यम् २५७
उपमारूपके चैव ३८९
उपमैका शैलूषी सम्प्राप्ता ३१४, ४०२
उपसर्गे निपाते च २००, ४५४
उपासनीयं यत्नेन ४६७
उभावेतावलङ्कार्यौ ४३८
ऋतुमाल्यालङ्कारै ३६७
एकदेशं गतास्सर्वम् २८८
एकादश्यां गुरौ स्वीयः २९७
एकाश्रयत्वे निर्दोषां ३७३
एको रसः करुण एव ३६६
एताः प्रयत्नादधिगम्य ४४८
एतानि दर्शयेनाऽङ्के ७३
एतासामेव साङ्कर्याद् ४१४
एतेन शब्दसामर्थ्यमहिम्ना १३८
एते पृथगलङ्कारा २२१
एतैरर्थैः प्रबन्धोऽयम् २७९
एभिः निदर्शनैः स्वीयैः १२१
एभ्यः पृथगलङ्कारा ५६४
एवं द्वादशसाहस्रैः ४४
एवं हि नाट्यवेदेऽस्मिन् ४४
एवमप्यनवस्था स्याद् ४८७
एवमेते रसाः ज्ञेया २५२
एवमेषोऽर्थसूत्रार्थो ४१
एष विद्याधरस्तेषु २५९
एषां दोषा यथायोगम् ५६४
एषां शब्दगुणत्वञ्च ५५०
एषामेकतमस्यैव ६६
ओजः प्रसादो माधुर्यम् ५४७
ओजः समासभूयस्त्वम् १०४
ओजश्चित्तस्य विस्तारः ५४८
ओजस्तथान्यदौर्जित्यं ५३९
औचित्यं रससिद्धस्य ४६०
औचित्यमनुधावन्ति ४४६

औचित्यमेकमेकत्र ४४८
औचित्यस्य चमत्कार ४५२
कः खो गो घश्च लक्ष्मीम् ९२
कटुकौषधवच्छास्त्र ५०३
कण्ठे मेखलया नितम्बफलके २००, ४४५
कथितञ्च पुनः पुनः ५६६
कदाचिन्मंखुकोपज्ञम् २२४
कन्याहरणसंग्राम ८९
कन्ये कामयमानं मां १०३
करम्भकं तु भाषाभि २७०
करुणप्रेक्षणीयेषु ३७९
करुणादावपि रसे ३७५
कलापकं चतुर्भिश्च ५३२
कविर्बुधमनाः सिन्धु ५५
कविर्भारद्वाजो जगदवधि २८४
कविव्यापारवक्रत्व १७७, ४३२
कवीनां समये ख्याते ५६७
कस्तस्य स्तुतिमाचरेत् कविरहो २०४
कामं सर्वोऽप्यलङ्कारो १०६
कामावस्था न शृङ्गारो १५५
कारणान्यथ कार्याणि ३५१
काव्यं तु जायते जातु ५०८
काव्यं यशसे अर्थकृते ४९९
काव्यं रसादिमद् वाक्यं ५२०
काव्यं शास्त्रेतिहासौ च २८
काव्यं सद्दृष्टार्थम् ५०२
काव्यकाञ्चनकशाश्मवमानिना १७५
काव्यप्रकाशस्य कृता गृहे गृहे २१३
काव्यमिदं विहितं मया वलभ्याम् ७६
काव्यशोभाकरान् धर्मान् २१, २३, १३६, १९६, ३८२, ३८७, ३८९, ३९०
काव्यस्य वक्रभावोऽन्या ४३२
काव्यस्यात्मा ध्वनिरिति बुधै ३६२, ४७४
काव्यस्यात्मा स एवाऽर्थः ९, ३५०, ४६३
काव्यस्यायमलङ्कारैः ४५४
काव्यान्यपि यदीमानि ८८
काव्यालङ्कारशास्त्रं यत् १२३
काश्चिन्मार्गविभागार्थम् १९६
काश्मीरेषु बभूव सिन्धुरधिकः १९७
किं लोचनं विनाऽऽलोको १५०, १७२
किञ्च तेषु यदा दुःखम् ३७५
किञ्चिच्च तद्रचितम् २४१
किञ्चिदाश्रयसौन्दर्याद् ४४७
किन्तु द्विरूप एवाऽसौ ११८
कीटानुविद्धरत्नादि ५२३
कीर्तिं स्वर्गफलामाहुः ५०२
कीर्तिशेषं गते तैस्तै २९७
कृतः श्रीमम्मटाचार्य २१०
कुन्देन्दुसुन्दरस्वच्छ ३७१
कुर्वन् सर्वाश्रये व्याप्ति ४५५
कृशानुरेताः सर्वज्ञो ८३
केचिदन्तर्भजन्त्येषु ५४४
केचिद्वाचां स्थितमविषये १५९
केषाञ्चिदेता वैदर्भी ४१४, ४२५
क्रोधो मत्सरवैरिवैकृतमयैः ३६८
क्वचित्कारणमात्रं तु ५७
क्वचिदुक्तौ स्वशब्देन ५६८
क्षेमं सर्वगुरुर्दत्ते ९१
गद्यं पद्यञ्च मिश्रञ्च ४५१
गद्यपद्यमयं काव्यम् ५३२

गद्यपद्यमयी राज ५३२
गद्ये पद्येऽथवा मिश्रे १६५
गम्भीरं नस्तितीर्षूणाम् २२४
गर्भितत्वं गुण: क्वचित् ५६८
गर्वो विषाद औत्सुक्यं ३६०
गिरामलङ्कारविधि: सविस्तर: ६६
गुण: क्वाऽप्यधिकं पदम् ५६८
गुण: स्यादप्रतीतत्वम् ५६६
गुणवृत्त्या पुनस्तेषाम् ५२५, ५४४
गुणानाश्रित्य तिष्ठन्ती ४१४, ४४९, ४८३
गुणालङ्कारसहितौ ५१९
गूढार्थमर्थान्तरमर्थहीनम् ५५१
गृह्णद्भि: परया भक्त्या २२९
गौरो वीरस्तु विज्ञेय: ३७१
ग्राम्यत्वदु:श्रवतात्यागात् ५४७
ग्राम्यत्वमधमोक्तिषु ५६७
ग्राम्यत्वमनौचित्यम् ४४८
चतुर्वर्गफलप्राप्ति: ५०४
चतुर्वर्गफलां नित्यम् ५०४
चतुर्वर्गफलास्वाद ४३७, ५०२
चतुर्विधा प्रवृत्तिश्च ४२०
चन्द्रालोकममुं स्वयम् २५४
चन्द्रालोको विजयताम् २५७
चमत्कारस्तु विदुषा २८३, २८५
चमत्कृतिस्तु शब्दाप्तौ २०१
चित्तं व्याप्नोति य: क्षिप्रम् ५४८
चित्तद्रवीभावमयो ५४८
चित्रसूत्रविधानेन ७२
चित्रे शब्दार्थभेदेन ५३६
छन्दोबद्धपदं पद्यं ५३२
छन्दोविचित्या सकल: १०१
जग्राह पाठ्यमृग्वेदात् ७, ३४९
जायते परमानन्दो ५२०
ज्ञात्वा श्रीतिलकात् २२६
ज्येष्ठानां स्मितहसिते ३६८
ड: शोभां ढो विशोभां ९२
त एते सप्त दोषा: ५९
तत: पुरस्तात् कवयो १६५
तत: शब्दार्थसम्बन्ध २७९
ततोऽन्यद् यत् तच्चित्रम् ५३६
तत्कथाख्यायिकेत्येका ९०
तत्तद्देशोचिता भाषा ४२०
तत्त्वस्पृशस्ते कवयो पुराणा: ४२२
तत्परावेव शब्दार्थौ १४९
तत्र किञ्चिच्छब्दचित्र ५३६
तत्र वैदर्भपाञ्चाल ४१४
तत्र स्यादितराङ्गं काक्वा ५३५
तत्राऽकवे: कवित्वप्राप्ति: २०१
तत्सूनुर्भुवनैकभूषणमभूद् १८८
तत्स्वरूपमिति प्रोक्तम् १३४
तथा भरतवृद्धेन ४४
तथा हि दर्शने स्वच्छे १५६
तथा ह्येच: सौख्यम् ९२
तददोषौ शब्दार्थौ २५५, ४१८
तदनुप्राणनाज्जीवद् १५६
तदल्पमपि नोपेक्ष्यम् १०३, ५५२
तदवान्तरभेदाश्च २७८
तदाभासा अनौचित्य १०३, ३७३
तद्दृष्टि संसृतिच्छेदि १७२, १७४
तद्भाविकमिति प्राहु: ८९

